# भास्करराय-ग्रन्थावली

[ प्रथमो भागः ]

# श्रीललितासहस्रनामस्तोत्रम्

( व्याख्याद्वयोपेतम् )

कुलपतेः प्रो. राजेन्द्रमिश्रस्य प्रस्तावनया विभूषितम्

सम्पादकः

आचार्यश्रीबटुकनाथशास्त्रिखिस्ते

सह-सम्पादकः

डॉ. शीतलाप्रसाद उपाध्यायः

सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः

वाराणसी

योगतन्त्र-ग्रन्थमाला
[ २४ ]

# भास्करराय-ग्रन्थावली
[ प्रथमो भागः ]

# श्रीललितासहस्रनामस्तोत्रम्
( व्याख्याद्वयोपेतम् )

कुलपतेः प्रो. राजेन्द्रमिश्रस्य प्रस्तावनया विभूषितम्

सम्पादकः
आचार्यश्रीबटुकनाथशास्त्रिखिस्ते
सह-सम्पादकः
डॉ. शीतलाप्रसाद उपाध्यायः



सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयः
वाराणसी

योगतन्त्र-ग्रन्थमाला

[ २४ ]

भास्करराय-ग्रन्थावली

[ प्रथमो भागः ]

# श्रीललितासहस्रनामस्तोत्रम्

भास्कररायप्रणीतया

'सौभाग्यभास्कर'व्याख्यया

शम्भुनाथप्रणीतया

'बालातपा'टीकया च

संवलितम्

**कुलपतेः प्रो. राजेन्द्रमिश्रस्य प्रस्तावनया विभूषितम्**


सम्पादकः

**स्व. आचार्यश्रीबटुकनाथशास्त्रिखिस्ते**

आचार्यचरोऽध्यक्षचरश्च, साहित्यविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी

सह-सम्पादकः

**डॉ. शीतलाप्रसाद उपाध्यायः**

उपाचार्यः, सांख्ययोगतन्त्रागमविभागस्य

सम्पूर्णानन्दसंस्कृतविश्वविद्यालये, वाराणसी






**वाराणस्याम्**

२०६० तमे वैक्रमाब्दे    १९२५ तमे शकाब्दे    २००३ तमे ख्रैस्ताब्दे

*अनुसन्धानप्रकाशनपर्यवेक्षकः —*
**निदेशकः, अनुसन्धानसंस्थानस्य**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालये
वाराणसी ।

ISBN : 81-7270-109-8 (Part-1)
ISBN : 81-7270-110-1 (Set)



*प्रकाशकः —*
**डॉ. हरिश्चन्द्रमणित्रिपाठी**
***निदेशकः, प्रकाशन-संस्थानस्य***
सम्पूर्णानन्दसंस्कृतिविश्वविद्यालये
वाराणसी—२२१ ००२



*प्राप्तिस्थानम् :—*
**विक्रय-विभागः,**
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी—२२१ ००२



**प्रथमं संस्करणम्,** १००० प्रतिरूपाणि
**मूल्यम्—**२००-०० रूप्यकाणि



*मूद्रकः —*
**रत्ना ऑफसेट्स लिमिटेड,**
बी. २१/४२ ए, कमच्छा,
वाराणसी - २२१ ०१०

YOGATANTRA-GRANTHAMĀLĀ
[ Vol.24 ]

BHĀSKARARĀYA-GRANTHĀVALĪ
[PART ONE]

# ŚRĪLALITĀSAHASRANĀMASTOTRAM

With Two Commentaries
'SAUBHĀGYABHĀSKARA'

*BY*

BHĀSKARARĀYA
'BĀLĀTAPĀ'

*BY*

ŚAMBHUNĀTHA

FOREWORD BY
**PROF. RAJENDRA MISHRA**
VICE-CHANCELLOR

EDITED BY
**Late PROF. BATUKANATHASHASTRI KHISTE**
Ex-Professor & Head, Sāhitya-Department
Sampurananand Sanskrit University, Varanasi.

ASSISTED BY
**DR. SHITALA PRASADA UPADHYAYA**
Reader, Sāṅkhya-Yoga-Tantrāgama Dept.
Sampurnanand Sanskrit University
Varanasi



V A R A N A S I
2 0 0 3

*Research Publication Supervisor—*
**Director, Research Institute,**
Sampurananand Sanskrit University
Varanasi.

ISBN : 81-7270-109-8 (Part-1)
ISBN : 81-7270-110-1 (Set)



*Published by—*
**Dr. Harish Chandra Mani Tripathi**
***Director, Publication Institute***
Sampurnanand Sanskrit University
Varanasi-221 002



*Available at—*
**Sales Department,**
Sampurnanand Sanskrit University
Varanasi-221 002



**First Edition,** 1000 Copies
**Price-**Rs. 200-00



*Printed by—*
**Ratna Offsets Limited**
B.21/42 A, Kamachha,
Varanasi-221 010

# नान्दीवाक्

ललितासहस्रनामस्तोत्रमाधृत्य सिद्धिदम् ।
प्रणीतं येन सश्रद्धं भाष्यं सौभाग्यभास्करम् ॥
भारतीदीक्षिताख्यं तं भास्कररायकोविदम् ।
कर्णाटाभिजनं वन्दे श्रीगम्भीररायजम् ॥

वेदे वेदाङ्गषट्के व्यतिकरजटिलेऽप्यागमे सत्प्रपञ्चे
पौराणे वाङ्मयेऽथ द्व्यधिकदशमिते दर्शनानां निकाये ।
यद्धीश्चिक्रीड नित्यं प्रतननरुचिरा तन्त्रमन्त्रार्थसिद्धा
लोकेऽसौ यायजूको जयति बुधवरो भास्करश्शारदेयः ॥

तेषां ग्रन्थावलीं सर्वामष्टखण्डैर्विभाजिताम् ।
प्रकाशयितुमातेने श्रमं यो जीवनावधौ ॥
गुरुकल्पमहं नौमि तं कवीन्द्रमनुत्तमम् ।
खिस्तेबटुकनाथाख्यं शास्त्रिणं तन्त्रपारगम् ॥
गृहीतशिवसङ्कल्पं ग्रन्थावल्याः प्रकाशने ।
पूर्वकुलपतिं वन्दे बुधेन्द्रं वेङ्कटाचलम् ॥
मिश्रोऽभिराजराजेन्द्रस्सोऽहं प्रस्तौमि वाचिकम् ।
प्रत्नप्रकरणे नूत्नं कृत्वा सर्वं समञ्जसम् ॥

अयि भोः सुरभारतीरसिकाः सहृदयाः ! जानन्त्येव भवन्तस्सर्वे सुगृहीतनामधेयं पुण्यश्लोकमाचार्यप्रवरं पं. **बटुकनाथशास्त्रिखिस्ते**महाभागं सम्पूर्णानन्दसंस्कृत-विश्वविद्यालयीयसाहित्यविभागाध्यक्षचरम् । एकतस्तु खिस्तेमहाभाग आसीत् सरसकविताकामिनीकण्ठहारायमाणः कविसमज्यामुकुटमणिकल्पोऽपरतश्च शैवशाक्तोपासनावर्त्मन्यपि सम्प्राप्तदीक्षस्सन्नसौ ख्यातेः परां काष्ठामधिरूढ आसीत् । आचार्यश्रीबटुकनाथशास्त्रिणां पितृचरणा महामहोपाध्यायपदवीमण्डिता **आचार्यश्रीनारायणशास्त्रिखिस्ते**महाभागा अपि पूर्वावस्थस्य विश्वविद्यालयस्यास्य गवर्नमेण्ट-संस्कृत-कालेजनाम्ना प्रत्यभिज्ञातस्य स्वनामधन्याः प्राचार्या आसन् ।

**नैतावदेव,** चिरं यावत्ते विश्वविद्यालयेऽस्मिन् पुस्तकालयाध्यक्षपददायित्वमपि **निर्व्यूढवन्तः** । एवं हि पितृपुत्रावुभावपि विद्याधिष्ठानेऽस्मिन् बहुमानभाजौ **लोकप्रियौ** चाऽऽस्ताम् ।

इमे खलु नारायणशास्त्रिणः सम्प्रदायदीक्षाक्रमेण भास्कररायानन्तरं नवमपदवाच्या आसन् । तत्पुत्रत्वाद् बटुकनाथोऽपि दीक्षादृशा दशमस्सञ्जातः ।

भारतीदीक्षितोपाह्वानां श्रीमद्भास्कररायाणां पितृचरणाः **श्रीगम्भीरराय-महोदयाः** कर्णाटधरास्थिते बीजापुरपत्तने तत्रत्यतुरुष्कशासकस्य सचिवा आसन् । **सुरभारतीरसिकस्य** निजान्नदातुः प्रीत्यर्थमेवाऽसौ महाभारतमपि पारसीक-भाषयाऽनूदितवान् । ततः प्रभृत्येव तद्वंशोत्पन्ना भारतीपदवाच्याः सञ्जाताः । कोनमाम्बाऽऽसीत्तदीया भार्या ।

अनयोरेव दम्पत्योस्तनय आसीद् भारतीदीक्षितोपाह्वो **भास्कररायः** । स खलु सर्वाण्यपि शास्त्राणि बृहस्पतिकल्पेभ्यः स्वपितृचरणेभ्य एव, हैयङ्गवीनमसृणे बाल्ये जग्राह । सप्तवर्षीयस्सन्नप्यसौ स्वप्रतिभया सभासदो विपश्चित्तल्लजान् विस्मा-पितवान् । तथा चोपलभ्यते प्रमाणमदसीयं तदुपज्ञे भास्करविलासे—

**सप्तवर्षोऽपि यो युक्त्या सभेश्वरपतेर्मनः ।**
**सभेशभक्तो भूपालसभे कस्मिञ्जयी न सः ॥**

पुरहरनगर्यां वाराणस्यां निर्व्यूढयज्ञोपवीतसंस्कारः, लोकापल्लीवासिनां श्रीनृसिंहाध्वरिचरणानां सन्निधौ समवाप्ताखिलविद्यः शिवशक्त्युपासनयोर्गृहीतदीक्षः स्थले स्थले च भ्रान्त्वा विहितशास्त्रार्थः स्वायत्तीकृतविजयवैजयन्तीकः समुपायनीकृतसम्मानश्चायं भास्कररायो विविधविषयसम्बद्धान् षट्सप्ततिमितान् ग्रन्थान् जग्रन्थ । तत्प्ररोचनाप्रसङ्गे सदयं भणति पण्डितजगन्नाथः—

**यस्याऽदृष्टो नास्ति भूमण्डलांशो**
**यस्याऽदासो विद्यते न क्षितीशः ।**
**यस्याऽज्ञातं नैव शास्त्रं किमन्यै-**
**र्यस्याऽकारः सा पराशक्तिरेव ॥**

एवंगुणविशिष्टानां सर्वशास्त्रमर्मोद्घाटने धृतप्रागल्भीनां विरचितापार-सत्साहितीनां समवाप्तविलक्षणचतुरस्रपाण्डितीनां वैदिकसनातनधर्मोद्धरणप्रोद्धुरा-

णामाचार्यश्रीभास्कररायाणां जीवनावधिः १६७५ खैस्ताब्दात् १७६८ मितख्रिस्ताब्दं यावदासीदिति निश्चीयतेऽन्तःसाक्ष्यैस्तद्ग्रन्थेष्वेवोपलब्धैः । मुगलशहंशाहस्यौरङ्ग-जेबस्य शासनकालोऽयमासीद् भारते ।

परमश्रद्धेयैः **प्रो. वी. वेङ्कटाचल**महोदयैः स्वोपज्ञे शिवसङ्कल्पे भास्कर-रायग्रन्थावल्या यत्स्वरूपं प्रस्तुतं तेन खलु ज्ञायते यदधुनाऽपि समग्रवाङ्मयं भास्कररायाणामप्रकाशितमेव तिष्ठति । किञ्च, विंशतिमिता एव ग्रन्था इदानीं यावत्प्राकाश्यमानीताः कौलोपनिषद्भाष्य-खद्योत-तृचभास्कर-त्रिपुरोपनिषद्भाष्य-भाट्टचन्द्रिका - वरिवस्यारहस्य - शिवदण्डक- शिवाष्टक - सेतुबन्ध-(नित्याषोड-शिकार्णवटीका) सौभाग्यभास्कर-(ललितासहस्रनामस्तोत्रभाष्यम्) प्रभृतयः ।

तावन्त एव ग्रन्था इदानीमप्यमुद्रिता वर्तन्ते; परन्तु सौभाग्यवशाद्धस्तलिखित-ग्रन्थरूपेणोपलब्धास्ते सर्वेऽपि । अत्रापि महीयन्ते नाम तैत्तिरीयोपनिषद्भाष्य-तान्त्रिकीहोमपद्धति- प्रदोषार्चनभास्कर - त्रिपुरसुन्दरीपूजाविधान - वादकौतूहल-मालामन्त्रोद्धार - भागीरथीनवरत्नमालिका - ललितार्चनविधि - शाहजिप्रशस्ति-महात्रिपुरसुन्दरीवरिवस्याविधि-संविच्छोधनविधिप्रभृतयो रचनाः । एवमेव प्रायेण पञ्चत्रिंशन्मिता भास्कररायोपज्ञा ग्रन्था ग्रन्थान्तरेषु सम्प्राप्तोल्लेखाः समुद्धृतमूलां-शाश्चापि समुपलभ्यन्ते ।

गगनाभोगपरिमितं पाण्डित्यं प्रतीयते भास्कररायाणाम् । **क्वागमिका** ग्रन्थाः श्रीसूक्तभाष्य-श्रीविद्यार्चनचन्द्रिका-वरिवस्यारहस्यादयः । क्व चापि कोमलकान्त-पदावलिरम्या नवरसरुचिराः **काव्यकृतयो** मधुराम्लसुभाषितशिवदण्डकभागीरथी-नवरत्नमालिका-शाहजिप्रशस्तिप्रभृतयः । क्व चापि **व्याकरणग्रन्थाः** सिद्धान्त-परुषाः शब्दकौस्तुभदूषण-सिद्धान्तकौमुदीविलास-रसिकरञ्जनी-(मध्यसिद्धान्त-कौमुदीटीका) वार्तिकराजादयः । न केवलमेतदेव! **दर्शन**क्षेत्रेऽपि चण्डभास्कर-(वेदान्तः) न्यायमण्डन-(न्यायः) वादकुतूहल-(मीमांसा) कौलोपनिषद्भाष्य-(तन्त्रम्) प्रभृतीनि ग्रन्थरत्नानि प्रणीतानि भारतीदीक्षितवर्यैः । का खलु कथा पूजोपासनापुरश्चरणकर्मानुष्ठानादिपराणां रचनानाम् ! अलौकिक्येवासीत् कारयित्री-प्रतिभा भास्कररायाणाम् ।

भवतु । इदमपि सुमहत् सौभाग्यं श्रीसम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य यदत्र श्रीभास्कररायग्रन्थावलीप्रकाशनस्य काऽपि सुचिन्तिता योजना विपश्चित्तल्लजैस्तदर्थ-नियोजितैः सोत्साहमुपनता यदधुना चरितार्थतामुपनीयतेऽस्मत्प्रकाशनसंस्थानेन ।

अस्याः प्रकाशनयोजनायाः शुभारम्भो विधीयतेऽस्माभिः **सौभाग्यभास्करस्य** प्रकाशनेन । योजनायाः प्रथमखण्डात्मकोऽयं ग्रन्थो भुवनविदितस्य शाक्तोपासना-मणिरत्नभूतस्य ललितासहस्रनामाभिधस्य भाष्यकल्प इत्यवधेयम् । ततश्चागामिनि प्रकाशनक्रमे सेतुबन्धा(नित्याषोडशिकार्णवटीका)दयो ग्रन्था भास्कररायोपज्ञा ग्रहीष्यन्ते ।

अष्टखण्डात्मकेऽस्मिन् प्रकाशनप्रकल्पे **प्रथम**खण्डः सौभाग्यभास्करमात्र-प्रकाशनेऽवसितः । **द्वितीय**खण्डः सेतुबन्धप्रकाशनलक्ष्यः । **तृतीयो** ग्रन्थत्रयात्मकः (तृचभास्करः, गुप्तवती, वरिवस्यारहस्यं प्रकाशटीकायुतम्), **चतुर्थ**खण्डो दश-ग्रन्थात्मकः (त्रिपुरसुन्दरीपूजाविधानम्, त्रिपुरसुन्दरीवरिवस्याविधिः, मालामन्त्रो-द्धारः, ललितार्चनविधिः, श्रीसूक्तविद्याचन्द्रिका, तान्त्रिकी होमपद्धतिः, संविच्छो-धनविधिः, आम्नायपद्धतिः, उत्तरवरिवस्या, सामराधगानप्रयोगः), **पञ्चम**खण्डस्तु षड्ग्रन्थात्मकः (वैदिककोशः, त्रिपुरोपनिषद्भाष्यम्, भावनोपनिषद्भाष्यम्, कौलोप-निषद्भाष्यम्, तैत्तिरीयोपनिषट्टीका, सौभाग्यचन्द्रातपः), **षष्ठ**खण्डः पञ्चग्रन्थात्मकः (वादकुतूहलम्, भाट्टचन्द्रिका, प्रदोषार्चनभास्करः, यशवन्तभास्करः, सहस्रभोजन-सूत्रव्याख्या), **सप्तम**खण्डोऽपि चतुर्ग्रन्थात्मकः (वृत्तचन्द्रोदयः, मृतसञ्जीवनी, मधुराम्लकाव्यम्, शाहजिप्रशस्तिः), **अष्टम**खण्डश्च सप्तग्रन्थात्मकः (खद्योतः गणेशसहस्रनामव्याख्यारूपः, शिवनामकल्पलतालवालः, नाथनवरत्नमाला, शिवाष्टकम्, शिवदण्डकः, बिल्वसमर्पणाष्टकम्, भागीरथीनवरत्नमालिका), किञ्च, **नवम**खण्डोऽपि कश्चित्परिकल्पितः परिशिष्टात्मकः ।

निश्चप्रचं प्रकाशनपरियोजनेयं सुमहद्व्ययसाध्या प्रभूतकालापेक्षिणी च प्रतीयते । एतत्प्रकाशनस्वप्नदर्शिनौ पण्डितबटुकनाथशास्त्रि-वेङ्कटाचलमहाभागौ सम्प्रति यशश्शेषौ । असारेऽस्मिन् संसारे जन्ममृत्युप्रवाहसन्तते न कोऽपि बलि-व्यासपरशुरामादिवच्चिरजीवी । जीवेम शरदश्शतमिति रटन्नपि जीवो यथावसरं प्रसह्य नीयत एव । एवं सति जगन्निसर्गे न भेतव्यमस्माभिः । यतो हि नामशेषे सत्यपि कलेवरे गणयिष्यन्त एवाऽस्माकं सुचरितानि, सत्कर्माणि वा । ततो हि सत्कर्मस्वेव श्रद्धेयम् ।

तयैव धिया, मयाऽपि नाम **राजेन्द्रमिश्रेण** विश्वविद्यालयकुलपतिपद-गरिमसमवाप्ताधिकारेण पूर्वकुलपतिवर्येण यथाकथञ्चिदनिर्व्यूढं सारस्वतदायित्व-मिदानीं पूरयितुमिष्यते । विद्यमाने सति मदाकाङ्क्षापूर्तिचिन्तामणिकल्पे प्रकाशनसंस्थाननिदेशके **डॉ. हरिश्चन्द्रमणित्रिपाठिवर्ये** ममोपक्रमोऽयं निष्प्रत्यवायं पूर्तिमुपैष्यतीति दृढमहं विश्वसिमि । एभिरेव विनतवचनैः स्वमनोभावान् प्रकाश्य विरमामि ।

**वाराणस्याम्**
वैशाखपूर्णिमायाम्,
वि. सं. २०६०

विद्वद्वशंवदो
मिश्रोऽभिराजराजेन्द्रः
कुलपतिः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

# शिवसङ्कल्पः

**महो लम्बोदरं मध्ये लम्बकर्णं च पार्श्वयोः ।**
**उपरिष्टाल्लम्बशुण्डमालम्बेऽहं विलम्बहम् ॥**

अथ प्रस्तूयते भगवत्याः श्रीललिताम्बिकायाः सहस्रनामस्तोत्ररत्नस्य भास्कररायोपज्ञं सौभाग्यभास्कराभिधमपूर्वं व्याख्यानं बालातपाख्यसरलसङ्ग्रहात्मकलघुटीकोपेतम् । सोऽयं श्रीभास्कररायः श्रीललितादेव्या भक्ताग्रणीस्तान्त्रिकमूर्धन्यः सिद्धमन्त्र आसेतुहिमाचलं विख्यातो भारते स्वजीवनस्य भूयांसं भागमत्यवाहयद् असौ काश्यामेव । एतत्प्रणीता ग्रन्थास्तत्तच्छास्त्रेषु श्रेष्ठं स्थानं भजन्त्यधुनापि । अत एव सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयेनेत्थं निरणायि यदस्य सर्वे ग्रन्था देशस्य विभिन्नेषु स्थानेषु प्रकाशिताः, तथैव क्वचिदप्यप्रकाशिताश्च कतिपये सर्वे सङ्गृह्य समग्रतया पुनरपि प्राकाश्यमुपनेतव्याः । तमेनं निर्णयमनुसृत्य भास्कररायग्रन्थावल्याः प्रथमभागरूपेणेदं सौभाग्यभास्करभाष्यं सम्प्रति समर्प्यते पाठकहस्तेष्विति नः प्रमोदो महान् ।

अथायमवश्यं ज्ञातव्यः श्रीभास्कररायकृतसमग्रग्रन्थावलीप्रकाशनोपक्रमस्यास्य संक्षिप्त इतिहासः । आसीत् खलु वाराणस्यां संस्कृतसाहित्ये नदीष्णः पण्डितः **"खिस्ते"** इत्युपनामभाक् **बटुकनाथशास्त्री,** यः किल अस्य विश्वविद्यालयस्य साहित्यविभागे अध्यक्षपदं चिराय समभूषयत् । अस्य पिता **म. म. श्रीनारायणशास्त्रिखिस्ते** अपि पुस्तकालयाध्यक्षपदं परस्तात् कञ्चित् कालम् अस्य विश्वविद्यालयस्य प्राक्तने गवर्नमेन्ट संस्कृत कालेज-रूपे प्राचार्यपदमपि निरवहदिति विदितमेव पूर्ववृत्तज्ञानात् । सोऽयं **श्रीबटुकनाथशास्त्री** साहित्येन सह विशेषतः शैव-शाक्ततन्त्रे आगमशास्त्रे चाप्यासीत् प्रौढपण्डितः । अयमासीदपरो विशेषः खिस्तेमहाशयस्य यदसौ शैवशाक्तोपासनामार्गे पारम्पर्यक्रमेण प्राप्तदीक्षो जनेषु विख्यातोऽप्यासीत् । दीक्षाक्रमेऽसौ प्रातःस्मरणीयस्य विद्वद्धुरन्धरस्य तन्त्रेषु परमसिद्धस्य श्रीभास्कररायस्य दीक्षापरम्पराक्रमेंण नवम इति नातिप्रकटं लोके । यावताहमस्य विश्वविद्यालयस्य कुलपतिरूपेण वाराणसीं समागतस्तदैव प्रथमकौलपत्यावधौ चिराय मम पूर्वपरिचितोऽसौ खिस्ते शास्त्रिमहाभागः **'इण्डियन कौंसिल आफ फिलासोफिकल रिसर्च'**—संस्थानस्य साहाय्यं प्राप्य भास्कररायस्य जीवितं तत्प्रणीतान् ग्रन्थांश्चावलम्ब्य व्यापकम् अनुसन्धानं विधातुं स्वयोजनां विश्वविद्यालयमुखेन सम्प्रेष्य स्वकार्यम् अपूरयत् । महदिदं भागधेयमभूदस्य विश्वविद्यालयस्य यदस्यानुसन्धानस्य

परिणामरूपेण प्रकाशितस्य भास्कररायतत्प्रणीतग्रन्थादिविषयकस्य ग्रन्थस्य लोकार्पणमपि मदीयद्वितीयकौलपत्यकाल एव समपद्यत । वाराणस्याः परमप्रतिष्ठानां पद्मभूषणराष्ट्रियसम्मानभूषितानां **पं. बलदेवोपाध्याय**महाभागानां करकमलेन लोकार्पणमङ्गलमिदञ्च समपद्यत सम्पूर्णानन्दजन्मशताब्दिमहोत्सवकार्यक्रमप्रसङ्गेषु ।

श्रीमान् भास्कररायो भारतवर्षस्य श्रेष्ठविभूतिष्वन्यतमः । तत्प्रणीता ग्रन्था अस्मद्देशीयसनातनधर्मस्य मूलस्तम्भायमाना बहुबहुविधाश्च । तेषां मध्ये केचित् लुप्ताः केवलं नामतो विज्ञायन्ते, अन्यत्र तत्कृतेरेवोल्लेखैरथवाऽन्यदीयग्रन्थेषु प्राप्तैर्निर्देशैः । परं यावन्तः प्राप्यन्ते ग्रन्था अस्य महात्मनः पुरुषधौरेयस्य तेभ्य एव सुखानुमेयं भवत्यस्य विपुलं कूलङ्कषं वैदुष्यं न्याय-वैशेषिक-सांख्य-योग-बौद्ध-जैन-मीमांसा-वेदान्तादिनानाशास्त्रेषु, शैव-शाक्त-वैष्णवादिसर्वतन्त्रेषु श्रुति-स्मृतिपुराणागमप्रस्थानेषु, गान्धर्व-चित्र-शिल्प-वास्तु-प्रभृतिषु कलासु, ज्योतिष-आयुर्वेदवृक्षायुर्वेद-हस्त्यायुर्वेद-अश्वायुर्वेदादिभैषज्यविद्यासु च । पदवाक्यप्रमाणज्ञः सर्वतन्त्रस्वतन्त्रः श्रीमान् भास्कररायो वाराणसीमध्यवात्सीद् बहुकालमिति तथा काशीस्थेषु तत्कालपण्डितधुरन्धरेषु अग्रणीरासीदिति नितरां युक्तरूपम् एतत्प्रणीतानां सर्वेषां ग्रन्थानामेकत्र प्रकाशनमनेन विश्वविद्यालयेन । एतन्मनसि निधाय तस्मिन् महत्यवसरेऽस्माभिरुद्घोषितं भास्कररायीया समग्रग्रन्थावली विश्वविद्यालयेन क्रमशः प्रकाश्यमुपनेष्यत इति । तस्यास्य सङ्कल्पस्यैव प्रथमं पुष्पम् अयं ग्रन्थः श्रीललितासहस्रनामस्तोत्रस्य भास्कररायप्रणीतव्याख्यानभूतः **सौभाग्यभास्करः** । सङ्कल्पितस्यास्य प्रकल्पस्य स्वरूपमिह निर्दिश्यते–

## श्रीभास्करराय-ग्रन्थावली

Volume I — सौभाग्यभास्करः (ललितासहस्रनामस्तोत्रभाष्यम्)

Volume II — सेतुबन्धः (नित्याषोडशिकार्णवटीका)

Volume III
1. तृचभास्करः,
2. गुप्तवती,
3. वरिवस्यारहस्यं प्रकाशटीकासहितम्

Volume IV — पूजापद्धतिः –
1. त्रिपुरसुन्दरीपूजाविधानम्,
2. त्रिपुरसुन्दरीवरिवस्याविधिः,
3. मालामन्त्रोद्धारः,
4. ललितार्चनविधिः,
5. श्रीसूक्तविद्याचन्द्रिका,

6.तान्त्रिकी होमपद्धतिः,
7. संविच्छोधनविधिः,
8. आम्नायपद्धतिः,
9. उत्तरवरिवस्या,
10. सामराधगानप्रयोगः

Volume V

1. वैदिककोशः,
2. त्रिपुरोपनिषद्भाष्यम्,
3. भावनोपनिषद्भाष्यं प्रयोगविधिश्च,
4. कौलोपनिषद्भाष्यम्,
5. तैत्तिरीयोपनिषट्टीका,
6. सौभाग्यचन्द्रातपः

Volume VI

1. वादकुतूहलम् (मीमांसा),
2. भाट्टचन्द्रिका (संकर्षकाण्डमात्रम्),
3. प्रदोषार्चनभास्करः,
4. यशवन्तभास्करः
5. सहस्रभोजनसूत्रव्याख्या

Volume VII

वृत्तचन्द्रोदयः
मृतसञ्जीवनी
मधुराम्लकाव्यम्
शाहजिप्रशस्तिः

Volume VIII

1. खद्योतः –गणेशसहस्रनामव्याख्या
2. शिवनामकल्पलतालवालः
3. नाथनवरत्नमाला–'मंजूषा'टीकासहिता
4. शिवाष्टकम् (लघुस्तोत्रम्)
5. शिवदण्डकः (")
6. बिल्वसमर्पणाष्टकम् (")
7. भागीरथिनवरत्नमालिका (")

Volume IX

परिशिष्टखण्डः

अयं प्रातःस्मरणीयः श्रीमान् भास्कररायः कर्नाटकेषु लब्धजन्मा तत्रैव कुलपरम्पराक्रमेण पितृसकाशात् प्राप्तसर्वविद्यो विद्याधिराजधानीं काशीं समागतः स्वपाण्डित्यप्रतिष्ठापनार्थम् । चिराय काश्यां जीवन् पण्डितमण्डलेषु लेभे महद्यशः । अत्रैव काश्यां प्राणैषीद् बहून् ग्रन्थान् । अयं सौभाग्यभास्करोऽपि काश्यामेव निरमीयत इति स्पष्टमेव स्वयमुल्लिखति ग्रन्थान्ते पुष्पिकायाम् । अस्य पिता **गम्भीररायः** पुत्रेणानेन सह काशीमागत्य चिरं न्यवात्सीदिति विज्ञायते श्लोकेनानेन–

**"श्रीविश्वामित्रवंश्यः शिवभजनपरो भारती सोमपीथी**
**काश्यां गम्भीरराजो बुधमणिरभवद्भास्करस्तस्य सूनुः ।**
**मोदच्छायामितायां शरदि शरदृतावाश्विने कालयुक्ते**
**शुक्ले सौम्ये नवम्यामतनुत ललितानामसाहस्रभाष्यम् ॥**

सम्प्रदायक्रमेण स्ववेदशाखां प्रख्याताः सर्वाः स्मृतीः, श्रौत-गृह्य-धर्मादिसूत्राणि, व्याकरण-न्याय-मीमांसादीनि सर्वाणि दर्शनानि, विशिष्य च नानाविधान् तन्त्रशास्त्र-ग्रन्थान् तन्मूलभूतान् आगमांश्च सम्यगधीत्य भगवत्याः पराशक्तेर्विविधेषु उपासना-मार्गेषु प्राप्तसिद्धिः सर्वविद्यापारगत्वप्रतिष्ठामारूढो देशे सर्वत्र अनन्यसुलभां कीर्तिं प्राप । सर्वत्र देशे सत्कारानेकान् विद्वद्भ्यः, तत्र तत्र राज्यं कुर्वद्भ्यो लघुभ्यो महद्भ्यश्च शासकेभ्यः प्राप्तैः सम्मानैर्विभूषित आयुषोऽन्ते दक्षिणभारते कावेरी-नदीतीरे कालमतिवाहयन् अन्ते परमपदमियायेति जनश्रुतिः । पारम्परिकेषु चतुर्दशविद्यास्थानेषु चित्र-शिल्प-सङ्गीतनाट्यादिबहुविधासु कलासु अप्रतिमेन स्वेन वैदुष्येन **पदवाक्यप्रमाणपारीणे**ति **सर्वतन्त्रस्वतन्त्र** इति च लोके पप्रथे । एतेन प्रणीताः साम्प्रतं ज्ञाता ग्रन्थाः प्रकाशिता हस्तलिखितसूचीषु चर्चिताश्च सन्तीमे –

## प्रकाशिता ग्रन्थाः

1. कौलोपनिषद्भाष्यम्
2. खद्योतः (गणेशसहस्रनामस्तोत्रटीका)
3. गुप्तवती (दुर्गासप्तशतीटीका)
4. तृचभास्करः
5. त्रिपुरोपनिषद्भाष्यम्
6. नाथनवरत्नमाला मञ्जूषाटीकासहिता
7. बाह्यवरिवस्याविधिः (उपोद्घातप्रकरणमात्रम्)
8. बिल्वसमर्पणाष्टकम् (लघुस्तोत्रम्)
9. भाट्टचन्द्रिका (संकर्षकाण्डमात्रम्)
10. भावनोपनिषद्भाष्यं तत्प्रयोगविधिश्च

11 मधुराम्लसुभाषितम्
12. वरिवस्यारहस्यं प्रकाशटीकासहितम्
13 वैदिककोषः
14 शिवदण्डकः (लघुस्तोत्रम्)
15 शिवनामकल्पलतालवालः
16. शिवाष्टकम् (लघुस्तोत्रम्)
17. श्रीगुरुस्तवारार्तिकम् ( " )
18. श्रीत्रिपुरसुन्दर्या आरार्तिकम् ( " )
19. सेतुबन्धः (नित्याषोडशिकार्णवटीका)
20. सौभाग्यभास्करः (ललितासहस्रनामस्तोत्रभाष्यम्)

## हस्तलिखितग्रन्थरूपेणाद्यावधि उपलब्धाः, अमुद्रिताश्च ग्रन्थाः

1. आम्नायपद्धतिः
2. उत्तरवरी(रि)वस्या
3. तान्त्रिकी होमपद्धतिः
4. तैत्तिरीयोपनिषद्भाष्यम्
5. त्रिपुरसुन्दरीपूजाविधानम्
6. त्रिपुरसुन्दरीवरिवस्याविधिः
7. प्रदोषार्चनभास्करः
8. भागीरथिनवरत्नमालिका (लघुस्तोत्रम्)
9. महात्रिपुरसुन्दरीवरिवस्याविधिः
10. मालामन्त्रोद्धारः
11. मृतसञ्जीवनी (वृत्तरत्नाकरटीका)
12. ललितार्चनविधिः
13. वादकौतूहलम्
14. वृत्तचन्द्रोदयः (अभिनववृत्तरत्नाकरटीका)
15. शाहजिप्रशस्तिः
16. सहस्रभोजनसूत्रव्याख्या
17. सामराधगानप्रयोगः
18. सौभाग्यचन्द्रोदयः (सौभाग्यरत्नाकरटीका)
19. संक्षिप्ततृचार्घ्यपद्धतिः
20. संविच्छोधनविधिः

## ग्रन्थान्तरेषु प्राप्तोल्लेखा अपि क्वाप्यनुबद्धा ग्रन्थाः

1. अवधूतगीताव्याख्या
2. अष्टावक्रगीताव्याख्या
3. आत्मबोधव्याख्या
4. ईश्वरगीताव्याख्या
5. एकादशीनिर्णयः
6. कन्यकापुराणम्
7. कठोपनिषद्भाष्यम्
8. कुण्डभास्करः
9. केनोपनिषद्भाष्यम्
10. चण्डभास्करः (वेदान्तः)
11. चन्द्रलामाहात्म्यटीका
12. चन्द्रशाला (काव्यम्)
13. छन्दःकौस्तुभः
14. छन्दोभाष्यराजः
15. छन्दोभास्करः
16. छांटीवृत्तिः
17. जाबालोपनिषद्भाष्यम्
18. त्रिपुरामहिमटीका
19. देवीस्तवः
20. नीलाचलचपेटिका (वेदान्तः)
21. न्यायमण्डनम्
22. भास्करसुभाषितम्
23. मन्त्ररत्नावली
24. मुण्डकोपनिषद्भाष्यम्
25. मृत्युलाङ्गूलोपनिषद्भाष्यम्
26. रत्नालोकः (परशुरामकल्पसूत्रटीका)
27. रसिकरञ्जनी (मध्यकौमुदीटीका)
28. वार्तिकराजः
29. शंखचक्राङ्कनप्रायश्चित्तम्
30. शब्दकौस्तुभदूषणम्

31. शिवस्तवः
32. श्रीविद्यार्चनचन्द्रिका
33. श्रीसूक्तभाष्यम्
34. सिद्धान्तकौमुदीविलासः
35. स्मृतितत्त्वम्

एतेषां ग्रन्थानां प्रणेता भास्कररायो बहुषु शास्त्रेषु पारङ्गतोऽभूत् । अस्य महाभागस्य पाण्डित्यम् एकतः परमगम्भीरम् अपरतोऽपरिमितविस्तारञ्च । यस्य कस्यापि एतत्प्रणीतस्य ग्रन्थस्य आपातविलोकनमात्रेणैव एतत् सुपरिज्ञेयं भविष्यति । कतिशास्त्रीयाः कतिविधाः कत्याचार्योपज्ञाः कतियुगेषु प्रकटीभूता अस्य सर्वङ्कषायां मेधायां प्रतिष्ठिता यथाप्रसङ्गं यथापेक्षं समुद्धृता अस्य व्याख्यानेषु इत्येतद्विलोक्य स्तब्धो भवति पण्डितलोकोऽपि । व्याख्येयमूलग्रन्थगतवाक्य-पद-वर्णरससमाहित-चेतसोऽस्य महापण्डितस्य सिद्धसारस्वतस्य प्रज्ञातः कथङ्कारं परापतन्त्यह-महमिकया बहुशो बहुधा ग्रन्थसन्दर्भाः श्रौताः स्मार्ता आगमिकाः पौराणिका-स्तान्त्रिकाः सौत्रा दार्शनिकाः साहित्यिकाश्चिकित्सा-ज्योतिषकलाशिल्पाद्यनन्त-विद्यास्थानविप्रकीर्णा इति विस्मयते निखिलमपि विद्वत्कुलमधुनापि । अद्यापि विस्मयन्ते पाश्चात्त्याः पौरस्त्या वा विद्वांस आधुनिकं गणकयन्त्रमप्यतिशेते अस्य ग्रन्थ-ग्रन्थार्थग्रहणधारणवैभवम् । **"अनन्ता वै वेदाः"** इति प्रख्यातविस्तरा भगवती श्रुतिः, सर्वाणि महापुराणानि उपपुराणानि न्याय-वैशेषिक-सांख्य-योग-मीमांसा-वेदान्तादिशास्त्रमूला ललितसरलाः प्रकरणग्रन्थाः, प्रौढगभीरा वादग्रन्थाः साहित्य-सङ्गीतनाट्यधनुर्वेदायुर्वेदादिनानाविद्यासम्बद्धा आकरग्रन्था धर्मशास्त्रार्थशास्त्र-वास्तुशास्त्रज्योतिःशास्त्रादिलोकयात्रासाधका विशिष्टा ग्रन्थाः पदे पदे पदं लभन्ते अस्य सर्वेषु व्याख्याग्रन्थेषु । एतादृशी लोकोत्तरा प्रज्ञा क्वचित्क्वचिदेव युगान्तरेषु दृश्यते जगति । सर्वतन्त्रस्वतन्त्रोऽयं क्वचित्प्रतिभाति वैयाकरणतल्लज इव, क्वचित् सन्निधत्ते मीमांसकमूर्धन्य इव, क्वचिदुपतिष्ठते तान्त्रिकसिद्धिपथेषु, वेदान्त-गहनोपासनवीथीषु श्रद्धाभक्तिबलेन प्रज्ञाप्रतिभाबलेन च निष्प्रत्यूहं स्वैरं सञ्चरमाण इव च पुरतः समुपैति पाठकानां सर्वज्ञकल्पोऽयं महापुरुषस्सिद्धशिखामणिः । महासमुद्रं वर्णयता महाकविना कालिदासेन यदाभाणि–

**"विष्णोरिवास्यानवधारणीयमिदृक्तया रूपमियत्तया वा"** ।

इति । तदेतद् विज्ञानवैदुष्यसागरस्य ब्रह्मश्रीभास्वरस्य भास्कररायस्य विषयेऽपि शक्यते वक्तुमक्षरशः । अस्य शिष्येण **उमानन्दनाथेन** प्रणीते **भास्करविलास**नाम्नि लघु-काव्ये बहुधा प्रशंसितमस्य सर्वङ्कषं परमगम्भीरं पाण्डित्यं सर्वविद्यास्थानेषु । तथा हि –

**"शृण्वन्नेत्रस्य वीप्सा खलु पदविषये पश्यदङ्घ्रेर्विभाषा**
**न्याये नव्येऽप्यनव्येऽप्यथ च परिणतिर्जैमिनेर्वाक्यजाते ।**
**छन्दोंऽशे पिङ्गलोऽन्यः, श्रुतिशिखरमते सत्यवत्यास्तनूज-**
**स्तन्त्रेष्वेष स्वतन्त्रा गिरिशगुणनिका कीर्त्यते कीर्तनीयैः ॥**

**त्यक्तन्यग्रोधमूलः किमु शशिमुकुटः, किंस्विदेकास्यशेषो**
**नागः शेषोऽयमाहो गुरुरमृतभुजामादृतक्ष्माविहारः ।**
**किं विद्यानां समष्टिर्जगति विविधतां भेजुषीणामुदञ्च-**
**त्तुंभावा भारती वेत्यखिलबुधजनैर्भावितो भारतीन्दुः ॥**

**महः कापिलं सांख्यतन्त्रे, फणिभ्यामनन्यं च योगे, विधौ छन्दसां च ।**
**कृतं संख्यया सर्वविद्यानिषद्यां यमाहुर्महीमण्डले पण्डितेन्द्राः ॥"** इति ।

(श्लो. १०-१२)

तदेतदखिलं वस्तु एतदीयग्रन्थेषु बहुधा भूयिष्ठं परिव्याप्तं विराजत इति कथं नाम संगृह्यतां लघु-लघुषु केषुचित् प्रस्तावनापदेषु ? तत्– दिङ्मात्रम् उदाहरामः ।

## भास्कररायात्प्राक्तनान्यर्वाग्भवानि च ललितासहस्रनामस्तोत्रव्याख्यानानि

श्रीविद्यामन्त्रराजसाधनपरम्परायां नितरां महत्त्वमासीदस्ति च ललितादेव्या वरिवस्यायाः । अत एवास्य ललितासहस्रनामस्तोत्रं श्रीविद्योपासनापरेषु साधकेषु प्राथम्यं भजते । मनुष्येषु श्रीविद्यामन्त्रोपासनावसरप्राप्तिरेव नितरां दुर्लभेति व्याहरन्ति तद्विदः । तदिदमभिहितं कण्ठोक्तैरक्षरैः अस्य स्तोत्रस्य पूर्वपीठिकायामपीत्थम्–

**"उपासकाय शुद्धाय देयं नामसहस्रकम् ।"** (श्लो. १६)
**"तन्त्रेषु ललितादेव्यास्तेषु मुख्यमिदं मुने ।"** (श्लो. १७)

**"श्रीविद्योपासकानां च यथा देवो वरः शिवः ।**
**तथा नामसहस्रेषु वरमेतत्प्रकीर्तितम् ॥**
**यथास्य पठनाद्देवी प्रीयते ललिताम्बिका ।**
**अन्यनामसहस्रस्य पाठान्न प्रीयते तथा ॥"** (श्लो. १८-२०)

तस्मिन् संवादे भगवती ललितादेवी स्वयमेवाह–

**"मामर्चयतु वा मा वा विद्यां जपतु वा न वा ।**
**कीर्तयेन्नामसाहस्रमिदं मत्प्रीतये सदा ॥"** (श्लो. ४५-४६)

एतत्तु परमं स्वाभाविकं यद् एतादृशलोकोत्तरमाहात्म्यशालिनः स्तोत्रस्यार्थ-विवरण-विवेचनपराणि व्याख्यानानि भूयांसि काले काले देवीभक्ता विद्वांसः प्रणिन्युः । यद्यपि भास्कररायव्याख्यानोद्भवानन्तरम् अमूनि पूर्वव्याख्यानानि सकलान्यपि तत्तेजसा तिरोहितप्रायाणि लुप्तप्रचाराणि लोकव्यवहारे न सन्त्येव, तथापि तत्र तत्र देशे हस्तलिखितग्रन्थागारेषु एतेषां प्रतिलिपय उपलभ्यन्ते । ईदृशानां व्याख्यानानां लघुविवरणमिह प्रदीयते, येन अनुसन्धित्सवो विद्वांस एतेषु विद्यमानानां पाठानां नामव्याख्यानां च भास्कररायधृतपाठैस्तत्कृतैर्व्याख्यानैश्च तोलनं विधातुं शक्नुयुः ।

आसीत् ललितासहस्रनामस्तोत्रस्य आङ्ग्लभाषानुवादेन संक्षिप्ताभिष्टिप्पणीभिश्च सह संस्करणमेकं क्रैस्तवीये १८९९-वर्षे तत्र प्रथमतया प्राकाश्यमुपनीतं केरलाभि-जनेन **अनन्तकृष्णशास्त्रिणा** (लोके प्रायः आर. ए. शास्त्रीति विदितेन) । तदिदं संस्करणमचिरात् पुनर्मुद्रितं साम्प्रतमुपलभ्यते मद्रपुरीस्थित– "अड्यारलाइब्रेरी"-ग्रन्थावल्याम् । अनेन विदुषा भास्कररायप्रणीतसौभाग्यभास्करमेवावलम्ब्य अत्रानुवादो विवरणानि च कृतानीति स स्वयमेवाह । अनेन शास्त्रिणा भारतस्थितानां मुख्यानां बहूनां हस्तलिखितग्रन्थालयानां कृत तत्र तत्र प्रदेशेषु भ्रामं भ्रामं ग्रन्थसङ्ग्रहकर्मणि बहु व्यापृतम् । तेन सङ्गृहीता हस्तलिखितग्रन्था अड्यारसङ्ग्रहे वटोदरपत्तन-महीशूरपत्तनस्थे च ग्रन्थालये स्थापिता इति च आह स्वयं सः । अनेन स्वकृतव्याख्याने सौभाग्यभास्कराद्भिन्नाश्चतस्रो व्याख्या उपायुज्यन्त इति तद्वचनादेव अध्यवसातुं शक्यते । एतासां चतसृणां व्याख्यानां नामकर्त्रादिविवरणं तदुक्तमनुसृत्यैव अधस्तात् प्रदीयते–

१. विमलानन्दनाथशिष्यविमर्शानन्दनाथप्रणीता नातिविस्तृता काञ्चीपुरात् सङ्गृहीता शास्त्रिणा । सङ्ग्रहणकाल एव कीटदंष्ट्रावस्थायां स्थितेयं साम्प्रतमड्यारसङ्ग्रहालये विद्यते ।

२. विद्यारण्यप्रणीता शास्त्रिणानेनादृष्टस्वरूपा केवलं जनश्रुतिमात्रमवलम्ब्य तेन वर्णिता । अस्य विद्यारण्यस्य दीक्षागुरुरभूद् अनन्तारण्यनामा कश्चिदिति विज्ञायते ग्रन्थादेव । यद्यपि आर. ए. शास्त्रिणा व्याख्येयं सम्पूर्णा नास्वादिता तथापि सम्प्रतीयं प्रमाणीकृतं यद् अस्यापि टीकायाः सम्पूर्णा प्रतिलिपि-र्बटोदरपत्तनस्थे बृहति सङ्ग्रहालये सम्प्रति सम्यक् संरक्षिता ।

३. भट्टनारायणप्रणीता अनन्तकृष्णशास्त्रिणा स्वीये अनुवादिलेखने भूयसा उपयुक्ता । यत्र यत्र भट्टनारायणस्य व्याख्यातो भास्कररायव्याख्या भिन्ना तादृशा अंशास्तत्र तत्र भास्कररायेण स्वयं दर्शिता इति चाह अनन्तकृष्णशास्त्री ।

४. शङ्करप्रणीतायां व्याख्यायामस्यां नास्ति कोऽपि विशेषः, अत एवेयं न धारयति महत्त्वं किमपीति मन्यते शास्त्री ।

तदेवम् अनन्तकृष्णशास्त्रिणा विवृतानि व्याख्यानानि अतिरिच्य यानि व्याख्यानानि देशे तत्र तत्र विभिन्नेषु स्थानेषूपलभ्यन्ते पाण्डुलिपिग्रन्थागारेषु तेषां सर्वेषाम् अनिर्णीतकालानां व्याख्यानानां पाण्डुलिपिग्रन्थबृहत्तरसूच्यां 'न्यू कैटलागस कैटलागारम्' इति ग्रन्थे अग्रे प्रकाशयिष्यमाणानां व्याख्यानां विवरणं किञ्चित् प्रस्तूयते । यद्यप्ययं ग्रन्थभागः अद्ययावन्न प्राकाश्यमुपगतः, तथापि मद्रपुरी-विश्वविद्यालय-संस्कृतविभागाध्यक्षेण डॉ. सि. अनिरुद्धदासनाम्ना विदुषा महता सौजन्येनास्मत्कृते उपहृतेषु मूलपत्रजातेषु यावत्संगृहीतं तावत् लम्भिभिस्तेषु पत्रेषु निर्दिष्टेषु व्याख्यानेषु सर्वथा उल्लेखानर्हं वस्तु परित्यज्य शेषाणि प्रधानत्वेन प्रतिभासमानानि व्याख्यानान्येवात्र सङ्गृहीतानि–

**१. श्रीमाधवाचार्य(?)प्रणीतम्–**

एतन्नामककर्ता महीशूर-सूच्यामुल्लिखितः श्रीमध्वाचार्य इति लेखः प्रामादिक एव । अत एव श्रीमाधवाचार्य इति तस्य संशोधनं युक्तरूपं भाति । अत्र वस्तुस्थितिर्मूलाभिलेखदर्शनेनैव निश्चेतुं पार्यते । इदञ्च सम्भाव्यते विद्यारण्यस्यैव माधवाचार्य इत्युल्लेखः स्यात् ।

**२. अप्पादीक्षितप्रणीतम्–**

एतन्नाम्ना पाण्डुलिपिद्वयम् अड्यारग्रन्थागारे उपलभ्यते । अनयोर्मध्ये एक-स्मिन् व्याख्याने ताण्डवशिवनाम्ना विदुषा प्रणीतमस्योपव्याख्यानमपि लभ्यते ।

**३. नृसिंहभट्टप्रणीतम्–**

महीशूर-ग्रन्थागारे महाराष्ट्रप्रदेशस्थ- 'वाई'–ग्रन्थागारे च एकैकास्य पाण्डुलिपि-र्विज्ञायते । अनयोर्मध्ये वाईग्रन्थागारस्थे पाण्डुग्रन्थे अस्य उपव्याख्यानमिति विद्यत इति प्रतिभाति । व्याख्यानस्यास्य कर्ता परिभाषामण्डलाख्यस्य ग्रन्थस्य छलार्णवसूत्र-सदृशस्य लघुग्रन्थस्य कर्तुर्भास्कररायगुरोर्भिन्नो वा स एव वेति निश्चेतुं न शक्यते, यावद् इमे त्रयोऽपि ग्रन्थाः प्रत्यक्षं न परीक्ष्यन्ते । यद्यप्यत्र नृसिंहयज्वस्थाने नृसिंहभट्ट इत्युल्लिखितं नाम तथापि एतन्मात्रप्रमाणेन भिन्नता न साधयितुं शक्यते ।

**४. नृसिंहाचार्यप्रणीतम्–**

महीशूर-प्राच्यग्रन्थालय एव नृसिंहभट्टप्रणीतव्याख्यानाद् अपरम् ईदृशनाम्ना प्रणीतं व्याख्यानमप्यस्ति सङ्गृहीतम् । मूलग्रन्थपरीक्षणमेव एतादृशसंशयनिराकरणाय साधनं भवेन्नान्यत् ।

**५. शङ्कराचार्यप्रणीतम्—**

मद्रपुरी-प्राच्यग्रन्थालय एतन्नाम्नाप्यस्ति ग्रन्थ एकः । शङ्करनाम्ना पूर्वविवृता-द्व्याख्यानाद् भिन्नो वा न.वा इति ग्रन्थपरीक्षणेनैव निर्णेयं भवेत् ।

**६. आनन्दनाथप्रणीतम्—**

बहुकालात्प्राक् 'गफ'नामकपाश्चात्त्यविदुषा संदृब्धायां सूच्यामेतदुल्लेखः प्राप्यते । इदमपि सम्भाव्यते, ईदृङ्नामा कोऽपि टीकाकारः पृथगासीत् । अथवा भासुरानन्द-उमानन्द-नृसिंहानन्द-विमर्शानन्द इत्यादिदीक्षानामभाजां मध्य एव कश्चिद् अस्य व्याख्यानस्य कर्ता स्यादिति लिपिकारप्रमादेनैव एतादृशी विकृतिर्जाता स्यादित्यपि सम्भाव्यते ।

**७. नृसिंहयज्वप्रणीतं परिभाषामण्डनम्—**

ग्रन्थोऽयं न साक्षात् ललितासहस्रनामव्याख्यानपरः, तथापि सूचीकारै-र्व्याख्यानेष्वयमपि प्रायशो गण्यते । ग्रन्थोऽयं भास्कररायगुरुणा नृसिंहानन्दनाथेन प्रणीतस्य छलार्णवसूत्रसदृशस्य लघुग्रन्थस्य व्याख्यानरूपः स्यादिति प्रतिभाति । अस्य ग्रन्थस्य अस्त्येकं प्रतिरूपम् अड्यारसङ्ग्रहे ।

श्रीमतो भास्कररायात्पूर्वतनानामर्वाचीनानाञ्च व्याख्यानग्रन्थानामध्ययनमिदं महदुपयुज्यते भास्कररायग्रन्थाध्ययनेऽपि । स्वपूर्वभवेभ्यो व्याख्यानेभ्यो भास्कर-रायेण कियानंशः स्वीकृतः, कियान्वाऽप्रामाणिक इति खण्डित इति समीक्षणं तथैव अर्वाचीनैः कैः कैर्व्याख्यातृभिः कियान् कियान् अंशो वा अधमर्णीकृत इति सविस्तरं समालोचनं कर्तव्यमेव ललितासहस्रनामस्तोत्रगतानां नाम्नां याथार्थ्यावगाहने प्रसितैर्विद्वद्भिः । अस्मिन्नेव याथार्थ्यपरीक्षणे उपयोक्ष्यते पूर्वापरव्याख्यान- परम्परेय-मिति ध्येयम् ।

प्रसिद्धं ह्येतद् यदिदंस्तोत्ररत्ने श्रीललिताम्बिकाया आदेशेन वाग्देवताभि-र्विरचितं प्रथमं तस्या एव श्रीललितादेव्याः श्रावितम्, ततश्च हयग्रीवेण अगस्त्यमुनये उपदिष्टमिति पौराणिकमितिवृत्तम् । तदिदं स्तोत्ररत्नं सर्वशास्त्रेषु पारङ्गतेन सर्वतन्त्रस्वतन्त्रेण सर्वज्ञकल्पेन देवीप्रसादसमासादितसर्वज्ञानविभवेन श्रीभास्कररायेण प्रणीतेन भाष्येन विभूषितं प्रकाशं नयन्तः परमप्रमोदमनुभवामः । भाष्यस्यास्य नितरां चारुतरमनेकार्थगर्भं नाम कृतं तत्रभवता ग्रन्थकर्त्रा सौभाग्यभास्करेति । भाष्यमिदं सहस्रस्य नाम्नां सौभाग्यं प्रकाशयतीति स्पष्टमेव तात्पर्यमेकत्र, अपरतश्च भाष्यकर्त्तुः स्वयं भास्कररायस्य च महत्सौभाग्यमभिव्यनक्ति, तथैव भाष्यपठितृ-

णामस्मादृशानां भक्तानाञ्च सौभाग्यस्यापि भास्करः । एकैकस्य नाम्नो यादृश्यर्थ-सौभाग्यसुषमा प्रकाशिता भाष्यकारेण तत्सौन्दर्यमखिलं कणशः कणशः समास्वादयतां पाठकानां सौभाग्यन्तु सत्यम् अनिर्वचनीयमेव ।

तत्रापि हेम्नः परमामोदो यदस्य भाष्यस्य सम्पादनं **"परमं नः सौभाग्य"** मिति बुद्ध्या स्वीकृतं श्रीभास्कररायस्यैव तान्त्रिकपरम्परायां समागतैः काश्यां प्राप्तप्रतिष्ठैः साहित्य-तन्त्रागमादिबहुशास्त्रनिष्णातैः पूज्यैः स्व. **पं. बटुकनाथशास्त्रिभिः** खिस्ते-उपाह्वयैः । श्रीखिस्तेशास्त्रिणां वैदुष्यविषये नाधिकं वक्तव्यमुत्पश्यामो यत्ते तन्त्रशास्त्रे मनागपि रुचिमावहतः कस्यापि नापरिचिता आसन्निति, नापि कार्तज्ञ्यज्ञापनमात्रे-णोत्तमर्णतामात्मनोऽङ्गीकर्तुमिच्छामः ।

महनीयेऽस्मिन्ननुष्ठाने शास्त्रिवर्याणां सर्वविधसहयोगसपर्यामनुतिष्ठन् इदंविश्व-विद्यालयीययोगतन्त्रविभागप्राध्यापकः श्रीमान् **शीतलाप्रसाद उपाध्यायो**ऽवश्यमेवा-स्माकमाशिषोऽर्हति । अयमेवमेव स्वगुरोर्वर्त्मनि तिष्ठन् तत्सदृशयशः समासाद्य श्रेयोभाजनं भूयादिति प्रार्थ्यते भूतभावनो भगवान् विश्वनाथः ।

ग्रन्थमुद्रणादिषु बहुकार्येषु निसर्गशूराः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य प्रकाशननिदेशकाः **डॉ. हरिश्चन्द्रमणित्रिपाठिन**स्तत्सहकारिणः, रत्नामुद्रणालयस्वामिनः **डॉ. विपुलशङ्करपण्ड्या**श्चेति सर्वेऽप्यस्माकं साधुवादानामभिनन्दनवादानामाधमर्ण्य-वादानाञ्च पात्रमिति सर्वं शिवम् ।

**वाराणस्याम्**
वैशाखशुक्लैकादश्याम्
वि. सं. २०५९

**वि. वेङ्कटाचलम्**
कुलपतिचरः
सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

●

॥ श्रीगुरुगणेशः ॥

# पुरोवाक्

श्रीसाम्बशिवगुर्वाद्यां शङ्कराचार्यमध्यगाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥
स्वोपासनासिद्धिरहस्यसारसत्सम्प्रदायप्रथनाय नूनम् ।
आविर्भवन्ती गुरुभास्कराख्या पायादपायात्परदेवता माम् ॥

अथेदमुपक्रम्यते प्रातःस्मरणीयानां श्रीभास्कररायभारतीदीक्षितानां ललितासहस्रनामस्तोत्रमधिकृत्य प्रणीतं सौभाग्यभास्कराख्यं भाष्यं नवमुद्रितं विदुषां जिज्ञासूनाञ्च करेष्वर्पयितुम् ।

इतः प्राक् मुम्बईनगरस्थितनिर्णयसागरमुद्रणालयतो भाष्यमिदं चतुर्वारं मुद्रितम् । प्रथमं संस्करण १९१४ ख्रीस्ताब्दे प्रकाशितमासीत् । प्रथमभाष्यभूमिकायां यथाश्रुतो वृत्तान्तः किञ्चिदसम्बद्ध इवाऽऽसीत्, ततश्चतुर्थसंस्करणस्य भूमिकायां श्रीभास्कररायसम्प्रदायाभिज्ञैः परिशोधितो वृत्तान्त एव सन्निवेशितः ।

प्रथमसंस्करणभूमिकायां वाममार्गसम्बद्धमितिवृत्तं सर्वथाऽसम्बद्धमश्रद्धेयञ्चाऽऽसीत् । न हि श्रीभास्कररायचरणानां शाङ्करसम्प्रदायसमुन्नायकानां विषये तादृशं वृत्तं कदापि सङ्गच्छते । मुद्रितमपीदं भाष्यं कालवशादापणेषु प्रायेण दुर्लभतामापन्नमिति साम्प्रतिकेन प्रयासेन जिज्ञासुजनपरितोषः सम्पद्येत । अस्मिन् संस्करणे निर्णयसागरमुद्रितपाठं सरस्वतीभवनस्थहस्तलिखितपुस्तकद्वयस्य (मातृका सं.२०४७०, ८५९४८) पाठमपि परामृश्य ग्रन्थसन्दर्भो निवेशितः ।

श्रीभास्कररायभारतीदीक्षितानामैतिह्यविषये शास्त्रीयग्रन्थरचनाऽवदाने च यावान् विस्तरः स यथामति यथोपलब्धि च मया **'श्रीभास्करराय भारती दीक्षित—व्यक्तित्व एवं कृतित्व'** इत्यभिधाने हिन्दीभाषामये प्रबन्धे संगृहीतो विवेचितश्च । स च प्रबन्धः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयतः १९९४ ख्रीस्ताब्दे प्राकाश्यमलभत । अस्मिन् प्रबन्धे गायकवाड-ओरियण्टल-सीरीज-बडोदरातः प्रकाशिते तृचभास्कराख्ये ग्रन्थे च सर्वोऽपि जीवनवृत्तान्तः सप्रमाणं सन्निवेशित इति जिज्ञासुभिस्तत एवाऽऽकलयितुं शक्यते ।

एतस्मिन् भाष्यप्रकाशने प्रारब्धे वाराणसीस्थसरस्वतीभवनतः (मातृका सं. १९४८१, ८५९५३) **'बालातपा'** नाम समुपलब्धा स्वल्पा काचन टीकाऽपि भाष्यस्याधस्तात्सन्निवेशिता । अस्यां टीकायां नाम्नामर्थमात्रस्य व्याख्या विद्यते, न

पुनः शास्त्रीयविषयस्य । मन्ये, विस्तरपरिहाराय नामार्थमात्रजिज्ञासूनां सौकर्याय च तेनायं प्रकारः स्वीकृतः । एतस्या लेखको वाराणसेयः श्रीमाधव-श्रीअमृताख्य-गुरूणामाज्ञया टीकां लिखितवान् । लेखकोऽयं नागरब्राह्मणजातीयः शिवनाथात्मजः शम्भुनाथनामा कश्चित्साधकः । टीकाद्वयसंवलितं पुस्तकमिदं सर्वेषामुपकारकं भवेदिति नूनं विश्वसिमः ।

**श्रीभास्कररायभारतीदीक्षितः**

अत्र संक्षिप्त एवाऽऽचार्याणां परिचयो लिख्यते । एतेषां पितृचरणाः श्रीगम्भीररायभारतीदीक्षिताः कर्णाटकप्रान्तवर्तिनि बीजापूरनगरे तत्रत्ययवनाधिपस्य सचिवपदे प्रतिष्ठिता आसन् । स राजा भारतीयपुराणादिविषये जिज्ञासुरासीत्, अतस्तदनुरोधेन श्रीगम्भीररायदीक्षितैर्महाभारतस्य पारसीकभाषायामनुवादो विहितः । ततः प्रभृति तद्वंशीयानां 'भारती'त्युपनाम प्रसिद्धिमगात् । श्रीगम्भीररायदीक्षिता विद्वांसो यायजूका ग्रन्थनिर्मातारश्चाभूवन् । एतेषां विष्णुसहस्रनामस्तोत्रे 'पद्यप्रसून-पुष्पाञ्जलि'र्नाम काऽपि टीका वर्तते । एतेषां पत्नी कोनमाम्बा नामांऽऽसीत् ।

दम्पत्योरनयोः पुण्यपरिपाकप्रभावात् श्रीभास्करराया यात्राप्रसङ्गाद् भागानगरे (साम्प्रतिके हैदराबादनगरे) जनिमलभन्त । आबाल्यात्पित्रा प्रयुक्तेन सारस्वत-कल्पेन एतेषां बुद्धिः समेधमाना शास्त्रेषु कलासु च परमुत्कर्षमाससाद । सप्त-वर्षात्मके वयस्यपि राजसभायामुत्तरप्रदानचातुर्येण वैशिष्ट्यमेतेषां विद्वज्जन-प्रशस्तिपात्रतामयासीत् । तथा च 'भास्करविलासे' श्लोकः –

**स[illegible]वर्षोऽपि यो युक्त्या सभेश्वरपतेर्मनः ।**
**सभेशभक्तो भूपालसभे कस्मिन् जयी न सः ॥**

एतदीयशिष्येण 'नित्योत्सवनिबन्ध'कारेण श्रीजगन्नाथपण्डितेन 'भास्कर-विलास-काव्ये' सर्वाऽपि जीवनरेखा संक्षिप्य समुल्लिखिता समुपलभ्यते । तत्रैव चान्यः श्लोकः –

**स बालभावे जनकोपदिष्टसारस्वतोपासनया नयाढ्यः ।**
**विद्याः समस्ताः सकलाः कलाश्च विनाऽपि यत्नेन वशीचकार ॥**

एतेषामुपनयनसंस्कारो वाराणस्यां सम्पन्नः । अध्ययनन्तु 'लोकापल्ली'-स्थानवासिनामशेषशास्त्रविदुषां श्रीनृसिंहाध्वरिचरणानां सन्निधौ सम्पन्नम् । एतेषां गुरुपुत्रः श्रीस्वामिशास्त्रिनामाऽऽसीत् । अनयोः सहैव विद्याध्ययनं जातमिति श्रूयते । उभाभ्यां सहाध्यायिभ्यां सम्भूय 'पूर्वमीमांसावादकुतूहल'नामा ग्रन्थोऽपि रचितः, यस्य हस्तलेखः सरस्वतीभवने वर्तते । अन्येभ्योऽपि विद्वद्भ्यः श्रीभास्कररायैरध्ययनं

कृतमिति ज्ञायते। तत्र नव्यन्यायशास्त्राध्ययनं गङ्गाधरवाजपेयिसकाशाद् रुक्मणणा-पण्डिताच्च छन्दोऽलङ्कारज्ञानं सविशेषमधिगतम्।

श्रीशङ्करभगवत्पादानां कार्येषु किमप्यवशिष्टमासीत्, यथा—शिवोपासनाप्रसारः, शक्त्युपासनाप्रसारश्च। एतदुभयं तदीयसम्प्रदायानुगामिभिः क्रमशः अप्पय्य-दीक्षितैस्तथा श्रीभास्कररायदीक्षितैरनुष्ठितमिति परम्परायां प्रसिद्धिः। तत्र श्रीविद्या-सम्प्रदायमवलम्ब्य श्रीभास्कररायैः सौभाग्यभास्करभाष्यम्, वामकेश्वरतन्त्रस्य सेतु-बन्धटीका, वरिवस्यारहस्यम्, कौल-त्रिपुरा-भावनोपनिषदां भाष्याणि एवमादयः प्रबन्धाः, तृचभास्करप्रभृतयोऽपि निरमायिषत। तेषां ग्रन्थसूची हिन्दीभाषामये प्रबन्धे समुल्लिखिता वर्तते। अन्येऽपि बहवो ग्रन्थाः सन्तीति तत्र तत्र सन्दर्भादवगम्यते। विविधसूचीपत्रेभ्यः षट्सप्ततिग्रन्थानां तत्प्रणीतानां नामानि ज्ञायन्ते।

**'विद्याऽष्टादशकस्य मर्मविदभूद्यः श्रीनृसिंहाद्गुरोः'**

इति तेषां भणितिः सर्वथा सत्या समीचीना चानुभूयते ग्रन्थपरिशीलनेन। प्रसङ्ग-वशात् सर्वा अपि विद्याः कलाश्च स्थले स्थले परामृष्टा विवृताश्च आचार्यचरणैः। श्रीनृसिंहाध्वरिगुरुभिः प्रेषिता एते सुरतनगरमुपेत्य स्वगुणातिशयेन प्रसन्नेभ्यः परमो-पासकेभ्यः श्रीशिवदत्तशुक्लचरणेभ्यः पूर्णाभिषेकसंस्कारमवापुः। स्थले स्थले शास्त्रार्थः, राजसम्मानः, सर्वत्र विजयश्रीश्च सुलभाऽऽसीदेतेषामित्यत्र पण्डितजग-न्नाथस्य पद्यं प्रमाणम्—

**'यस्याऽदृष्टो नास्ति भूमण्डलांशो**
**यस्याऽदासो विद्यते न क्षितीशः।**
**यस्याऽज्ञातं नैव शास्त्रं किमन्यै-**
**र्यस्याऽऽकारः सा पराशक्तिरेव॥'**

शास्त्रार्थे माध्वयतेर्वल्लभाचार्यस्य च विजयः समुल्लिखितो जगन्नाथेन। एतेषां तपःसिद्धिरप्यनन्यसाधारणी श्रूयते तृचभास्करग्रन्थसन्दर्भे। तपःप्रभावादेभिः कावेर्याः प्रवाहगतिरपि परिवर्तितेति श्रूयते। एवमादीनि लोकोत्तराणि कार्याणि कुर्वाणा अपि सर्वथा सत्सम्प्रदायरक्षायां जागरूकाः, वैदिकसनातनधर्मसंवर्द्धने तत्पराश्च लोकानुग्रहं चक्रुः। एतेषां जीवनावधिकालः प्रायेण १६७५ ख्रीस्ताब्दादारभ्य १७६८ पर्यन्त आसीदिति प्रमाणयन्ति विद्वांसः। कालनिर्णयविषये ग्रन्थरचनापुष्पिकाः साहाय्य-माचरन्ति। तथा हि—

सौभाग्यभास्करस्य लेखनकालः १७२८ ईशवीयाब्दः, सेतुबन्धटीकायाः १७३३ ई., सप्तशतीटीकाया गुप्तवत्याश्च निर्मितिकालः १७४१ ई. इत्यादिसीमावधिभिः कालनिर्णयः सम्भवति।

आचार्या अखिले भारतवर्षे परिभ्रमन्तः स्थले स्थले यागादिकर्माणि विदधानाः समागतान् योग्यान् शिष्यांश्च सन्मार्गमुपनयन्तो धर्मस्थापनं सम्प्रदायरक्षणञ्चान्वतिष्ठन् । जलाशयमन्दिराऽऽरामादिनिर्माणमपि विहितं विविधप्रदेशेषु तैः । एतेषां विविधाः कथा अलौकिकसामर्थ्यबोधिकाः परम्परासु प्रसिद्धाः सन्ति । अद्यापि तेषां परम्परा महाराष्ट्रे, द्रविडदेशे, अन्यत्र च जागर्ति । मध्यार्जुनक्षेत्रे तेषां निर्वाणं जातमिति च ज्ञायते ।

**सौभाग्यभास्करः**

ब्रह्माण्डपुराणे ललितोपाख्याने भगवत्यास्तदिदं सहस्रनामस्तोत्रं सन्निविष्टमस्ति । भण्डासुरवधानन्तरं भगवत्याराधनाय सभामण्डपे समुपविष्टेष्वशेषदेवतागणेषु देव्या अनुशासनात् अष्टवाग्देवताभिः सहस्रनामस्तोत्रमिदं प्रणीय पठितम् । येन च प्रसन्ना ललिताम्बिका स्तोत्रपाठकेभ्यः सर्वविधं सौभाग्यप्रदानमन्वशात् । संस्कृतवाङ्मये विशेषतः स्तोत्रसाहित्ये नैतादृशं किमपि स्तोत्रमन्यदस्ति यत्सौन्दर्य-माधुर्य-गाम्भीर्यादिगुणातिशयैरितोऽप्यधिकं स्यात् । संस्कृतवाङ्मयेतिहासलेखकस्य एम्. कृष्णमा- चारियरमहोदयस्य स्पष्टमिदं मतम् ।

एतदीयव्याख्याननिर्माणमपि न साधारणं कार्यम् । अस्मिन् स्तोत्रे सर्वेषां वेदपुराणागमादीनां सन्दर्भो रहस्यार्थश्च स्थले स्थले निगूढो नापातबुद्ध्याऽवगन्तुं शक्यः । श्रीभास्कररायैः करतलामलकीकृतसर्ववाङ्मयैरस्य स्तोत्रस्य निगूढोऽप्यर्थः प्राञ्जलया प्रमाणशतपरिपुष्टया च वाचा व्यधायि । सहस्रनामव्याख्याने नृसिंहाध्वरिगुरूणां प्राक् परिभाषा उल्लिख्यन्ते, यासु नाम्नां सन्निवेशक्रमः संख्यासङ्केतश्च छलाक्षरसूत्रविधया परिदर्शितः । येन न्यूनाधिकपरिच्छेदपूर्वकं व्याख्येयविषयनियमनं सम्भवेत् । यदुक्तम्—

**'ललितानामसहस्रे छलार्णसूत्रानुयायिन्यः ।**
**परिभाषा भाष्यन्ते संक्षेपात्कौलिकप्रमोदाय ॥**
**पञ्चाशदेक आदौ नामसु सार्थद्व्यशीतिशतम् ।**
**षडशीतिः सार्धान्ते सर्वे विंशतिशतत्रयं श्लोकाः ॥'**

'सौभाग्यभास्करः' इति नामापि साभिप्रायम् । आगमशास्त्रे तपिनी-तापिन्याद्या द्वादशभास्करकलाः पूजादावुपयुज्यन्ते, तदनुसारेण द्वादशकलासु प्रविभक्तमिदं भाष्यं सर्वथा अवभासकमर्थसमुदायस्य । प्रकाशस्य सूर्यधर्मत्वात् । किञ्च, शैवशास्त्रेषु प्रमातृ-प्रमाण-प्रमेयात्मा त्रिपुटीति पठ्यते । तत्र प्रमाताऽग्निः, प्रमाणं सूर्यः, प्रमेयश्च चन्द्रः । मध्यवर्तिनः प्रमाणस्योभयावभासकत्वं सिद्ध्यति । अन्यच्च—

**'त्रिखण्डो मातृकामन्त्रः सोमसूर्यानलात्मकः'**

इत्यादिभिर्मातृकाया मन्त्रस्य वा सूर्यात्मकत्वे न सन्देहः । एवं भाष्यस्य नामापि सार्थकीभवति । आचार्यैरुपोद्घातश्लोकेष्विदमुच्यते यदष्टाभिर्वाङ्मयाधीशाभिः प्रणीते दिव्यनाम्नां सहस्रे ब्रह्मादिविस्मयाधायके मादृशस्य का नाम गतिः ? तथापि दहराकाशवर्तिन्या श्रीमात्रेव प्रेरिता तास्वेका वाग्देवी गुरुचरणनिर्णेजनपवित्रिते मदीये जिह्वाग्रे नटति, सैव व्याख्याक्रमं निर्वक्ष्यतीति । इदञ्च भाष्यं श्रुतिस्मृतिन्याय-पुराणसूत्रकोशागमश्रीगुरुसम्प्रदायाननुरुध्यैव लिखितमित्यन्ते निरूपितम् । अस्य रचना आश्विनशुक्लनवम्यां काश्यां परिपूर्तिमगात् ।

आचार्याणां व्याख्यायां सर्वत्र प्रमाणसाक्ष्यं तत्तच्छास्त्रप्रमेयविचारः पदे पदे सन्निधत्ते मीमांसान्यायव्याकरणकोशादिभिरर्थो निर्णीयते । एतेषां सहजाऽपि भाषा निगूढपरिभाषास्वरूपं धारयति । दिङ्मात्रेण यथा–

**'इतरवैलक्षण्यं प्रकर्षः'** । **'सर्वोत्तमत्वमुत्कर्षः'** । **'इह हि शास्त्रं चतुर्धा–पदशास्त्रम्, पदार्थशास्त्रम्, वाक्यशास्त्रम्, वाक्यार्थशास्त्रञ्चेति । अन्येषामत्रैवान्तर्भावः'** । **'अस्ति विमर्शरूपा स्वसंविद्विषयान्तराऽनवभासिना'** इत्यादि ।

नामसु लिङ्गविचारोऽप्यौपचारिकः, ब्रह्मणि लिङ्गाभावात्–**'न स्त्री न षण्ढो न पुमान् न जन्तुः'** इति भागवतात् । तथापि विशेषणविशेष्यभावे लिङ्गसाम्यस्य कल्पनीयत्वात्तथैव व्याख्यानं क्रियत इत्युक्तम् । क्वचित्पुनरुक्ततयाऽऽभासमानेषु नामसु **'अर्थभेदेन शब्दभेदः'** इति नियममनुसृत्य, अथवा **'शब्दभेदेनाप्यर्थभेदः'** इत्युक्तम् । विष्णु-सहस्रनामव्याख्यासु शङ्करभगवत्पादैरप्येषा रीतिरङ्गीकृता । क्वचिदेकस्यापि नाम्नो बहु- विधा अर्थाः प्रस्तूयन्ते । तत्र सर्वेषां प्रसङ्गानुसारित्वं प्रमाणप्रतिपन्नत्वमाचार्यैरुप-पाद्यते । एवमस्य भाष्यस्य वैशिष्ट्यं वैचित्र्यञ्च विदुषामपि विस्मयावहमस्ति ।

**'मिथ्या जगदधिष्ठाना'** इत्यत्र काचन दार्शनिकी दृष्टिः मिथ्यारूपस्य जगतोऽ-धिष्ठानं भानाधिकरणं रजतस्येव शुक्तिः । वस्तुतस्तु जगतो ब्रह्मपरिणामकत्वं स्वीकुर्वतां तान्त्रिकाणां मते जगतः सत्यत्वमेव मृद्घटयोरिव ब्रह्मजगतोरत्यन्ताभेदेन ब्रह्मणः सत्यत्वेन जगतोऽपि सत्यत्वाऽवश्यम्भावात् । भेदमात्रस्य मिथ्यात्वस्वी-कारेणाद्वैतश्रुतीनामखिलानां निर्वाहः । ततश्च मिथ्याभूतं जगतोऽधिष्ठानं भेदघटित-सम्बन्धेनावस्थितिर्यस्यामिति विग्रहात् स्त्रीलिङ्गतोपपत्तिः ।

सोऽयं परिणामवादः सेतुबन्धटीकायां वरिवस्यारहस्ये च वितत्य व्याख्यात आचार्यपादैः । एतन्मते व्याससूत्रम्– **'आत्मकृतेः परिणामात्'** इति । भगवत्पादानां सौन्दर्यलहर्यामुक्तिः –**'त्वयि परिणतायां न हि परम्'** इति चानुकूलैव । क्वचिदुत्प्रेक्षि-तार्थविवरणेऽपि शास्त्रानुकूल्यं यथा **'भक्तिमत्कल्पलतिका'** इत्यत्र भक्तिमतां जनानां कल्पलतिकेव अभिमतार्थदातृत्वात् । अथवा ईषदसमाप्तौ कल्पप्प्रत्ययेनापूर्णभक्ताः भक्तिमत्कल्पाः । तेषां लतेव विस्तारकारिणी कस्तूरिकेवाऽऽमोदयित्री वा । **'ज्योति-**

**ष्मत्यां च कस्तूर्यां माधवीदूर्वयोर्लता'** इति रभसः । अर्धभक्तानां भक्तिपूर्तिदानद्वारा सन्तोषिकेति यावत् । तदुक्तं शक्तिरहस्ये–

**'अक्रमेणार्धभक्त्या वा भवान्याः कृतमर्चनम् ।**
**जन्मान्तरे क्रमप्राप्त्यै पूर्वभक्त्यै च कल्पते ॥'**

एवं यथा यथा नाम्नां विमर्शः क्रियेत नवनवा विचारपद्धतिर्दृग्गोचरीभवतीति विस्मयावहं वैदुष्यम् ।

ग्रन्थस्यास्य सर्वोऽपि प्रकाशनोपक्रमस्तत्पूर्तिश्च सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य कुलपतीनां प्रो. वि. वेङ्कटाचलम्महाभागानामध्यवसायेन प्रेरणया समुत्साहेन च सम्पन्नेति तेभ्यः साधुवाददानमौपचारिकं भवति । केवलं जगन्मातुश्चरणकमलयोस्तेषामनामयं सौभाग्यञ्च भूयोभूयः प्रार्थयामहे ।

एतस्मिन् प्रकाशनकर्मणि निरन्तरं परिश्राम्यतो योगतन्त्रागमविभागाध्यापकस्य डॉ. शीतलाप्रसादोपाध्यायस्य योगदानमप्यविस्मरणीयं वर्तते । सोऽपि विद्यापान्थो भूत्वा जगन्मातुः कृपया वर्धतामित्याशासे । एतत्प्रकाशने कृतसाहाय्यः प्रकाशनाधिकारी डॉ. हरिश्चन्द्रमणित्रिपाठिमहोदयोऽपि भृशं साधुवादमर्हतीति ।

**वाराणस्याम्**
कार्तिकपूर्णिमायाम्,
वि. सं. २०५१

विद्वज्जनानुचरः
**बटुकनाथशास्त्रि खिस्ते**

# श्रीललितासहस्रनामस्तोत्रम्

–भास्कररायकृतं सौभाग्यभास्करभाष्यम्

–शम्भुनाथकृता बालातपाटीका

# उपोद्धाताख्या प्रथमा कला

॥ श्रीललिताम्बायै नमः ॥

श्रीगम्भीरविपश्चितः पितुरभूद्यः कोनमाम्बोदरे
विद्याष्टादशकस्य मर्मभिदभूद्यः श्रीनृसिंहाद्गुरोः ।
यश्च श्रीशिवदत्तशुक्लचरणैः पूर्णाभिषिक्तोऽभव-
त्स त्रेता त्रिपुरा त्रयीति मनुते तामेव नाथत्रयीम् ॥ १ ॥

गुरुचरणसनाथो भासुरानन्दनाथो विवृतिमतिरहस्यां वीरवृन्दैर्नमस्याम् ।
रचयति ललिताया नामसाहस्रिकाया गुरुकृतपरिभाषाः संविवृण्वन्नशेषाः ॥ २ ॥

अष्टाभिर्वाङ्मयानामधिपतिभिरमोघोक्तिभिर्देवताभि-
र्मात्राज्ञप्ताभिरग्र्यं यदरचि ललितादिव्यनाम्नां सहस्रम् ।
यद्ब्रह्माणीरमेशप्रभृतिदिविषदां विस्मयाधानदक्षं
तत्रैकस्यापि नाम्नः कथमिव विवृतिं मादृशः कर्तुमीष्टे ॥ ३ ॥

तथापि श्रीमात्रा दहरकुहरे सूत्रधरया
समादिष्टा वाचामधिपतिषु काप्यन्यतमिका ।
मदीड्यश्रीनाथत्रयचरणनिर्णेजनजलैः
पवित्रे जिह्वाग्रे नटति ममता सा मम मता ॥ ४ ॥

आप्राचः कामरूपाद्द्रुहिणसुतनदप्लाविताादाप्रतीचो
गान्धारात्सिन्धुसार्द्राद्रघुवररचितादा च सेतोरवाचः ।
आकेदारादुदीचस्तुहिनगहनतः सन्ति विद्वत्समाजा
ये ये तानेष यत्नः सुखयतु समजान्कश्चमत्कर्तुमीष्टे ॥ ५ ॥

*इह खलु निखिलपुरुषार्थसाधने भगवत्याराधनेऽभ्यर्हिततमस्य रहस्यनामसहस्र-कीर्तनस्य रहस्यतरसद्गुरुसम्प्रदायैकवेद्यस्वरूपत्वेन तान्सम्प्रदायान् शिष्यानुजिघृक्षया दिदर्शयिषवः श्रीमन्नृसिंहानन्दनाथनामानोऽस्मद्गुरुचरणाः निरन्तरनिरन्तराया अपि शिष्यशिक्षायै मङ्गलमाचरन्ति—*

*त्रिपुरां कुलनिधिमीडेऽरुणश्रियं कामराजविद्धाङ्गीम् ।*

त्रिपुरेति । त्र्यात्मकं पुरं भूपुरं मण्डलकोणरेखामन्त्रादिसमूहो वा यस्याः सा त्रिपुरा । तदुक्तं **कालिकापुराणे**–

**'त्रिकोणं मण्डलं चास्या भूपुरं च त्रिरेखकम् ।**
**मन्त्रोऽपि त्र्यक्षरः प्रोक्तस्तथा रूपत्रयं पुनः ॥**
**त्रिविधा कुण्डलीशक्तिस्त्रिदेवानां च सृष्टये ।**
**सर्वं त्रयं त्रयं यस्मात्तस्मात्तु त्रिपुरा मता ॥'**

इति । कुलस्य सजातीयसमूहस्य निधिं मातृमानमेयरूपत्रिपुट्या एकज्ञानविषयत्वेन साजात्यात् । घटमहं जानामीत्येव ज्ञानाकारात् **"जानामीति तमेव भान्तमनुभात्येतत्समस्तं जगत'** इति श्रीमदाचार्यभगवत्पादोक्तेः । तदेव हि कुलम् । **'सजातीयैः कुलं यूथम्'** इति **कोशात्** । परमशिवादिस्वगुरुपर्यन्तो वंशो वा कुलम् । **'संख्या वंश्येने'**ति **पाणिनिसूत्रे** । **'वंशो द्विधा विद्यया जन्मना चे'**ति महाभाष्यादाचारो वा कुलम् ।

**'न कुलं कुलमित्याहुराचारः कुलमुच्यते ।**
**आचाररहितो राजन्नेह नामुत्र नन्दति ॥'**

इति **भविष्योत्तरपुराणात्** । सुषुम्नामार्गो वा कुलम् । कुः पृथिवीतत्त्वं लीयते यस्मिंस्तदाधारचक्रं तस्य शक्यस्य सम्बन्धात् ।

अरुणा रक्ता श्रीः कान्तिर्यस्यास्ताम् । कामराजेन कामेश्वराख्यपरमशिवेन विद्धं सामरस्यापन्नमङ्गं यस्याः । त्रिगुणैः सत्त्वरजस्तमोमयैर्देवैर्विष्णुब्रह्मरुद्रैः नितरां नुतां स्तुतां एकान्तां रहोदेवताम्, एकां मुख्यां तां प्रसिद्धां वा अश्चासाविश्चेति कर्मधारये शिवकाम इत्यर्थात्तत्सुन्दरीं वा । **'अकारो ब्रह्मविष्णवीशकमठेषु'** इति **विश्वः** । **'इकारो मन्मथः प्रोक्त'** **इत्यनेकार्थध्वनिमञ्जरी** च । बिन्दुं सर्वानन्दमयं चक्रं गच्छतीति तथा । महान्ब्रह्माण्डादिरूप आरम्भो यस्यास्तामीडे स्तौमीत्यर्थः ।

अथात्रैवं नामोद्धारः प्रदर्श्यते । त्रिपुरेत्यत्र पकार एकसंख्याया वाचको रेफस्तु द्वित्वसंख्यायाः । यदाह **वररुचिः** –

**'कटपयवर्गभवैरिह पिण्डान्त्यैरक्षरैरङ्कः ।**
**नेत्रे शून्यं ज्ञेयं तथा स्वरे केवले कथिता ॥**

इति । पिण्डान्त्यैरित्यस्य व्यञ्जनसमूहे चरम एव सांकेतिक इत्यर्थः । **'अङ्कानां वामतो गति'**रिति न्यायात्पुरेत्यनेनैकविंशतिसंख्या कथिता भवति । एवमुत्तरत्रापि । तेन त्रि इत्याकारकपदारब्धानि नामानि त्रिनयनेत्यारभ्य त्रिकोणगेत्यन्तान्येकविंशतिरेवेत्यर्थः । निधयो नव **'नव ग्रहद्वारनिधिप्रजेशा'** इति **छान्दसीयवचनात्** । कुलपदारब्धानि नामानि नव **'कुलामृतैकरसिका'** इत्यारभ्य **'कुलरूपिणी'** इत्यन्तानि । अरुणाः सूर्या द्वादश । श्रीपदारब्धानि **'श्रीमाता'** इत्यारभ्य **'श्रीशिवा'** इत्यन्तानि । कामपदारब्धानि

राजसंख्याकानि षोडश **'कामेशबद्धमाङ्गल्य'** इत्यारभ्य **कामकेलितरङ्गिता'** इत्यन्तानि । विद्धाङ्गीं विइत्यक्षरारब्धान्येकोनचत्वारिंशत् **'विशुक्रप्राणहरणा'** इत्यारभ्य **'विरागिणी'** इत्यन्तानि ।

**त्रिगुणैर्देवैर्निनुतामेकान्तां बिन्दुगां महारम्भाम् ॥ १ ॥**

त्रिगुणै'**र्गुणनिधिर्गुणप्रिया गुणातीते**'ति त्रीणि । निनुतां निकारारब्धानि षष्टिः **'निजारुणा'** इत्यारभ्य **'निरालम्बा'** अन्तानि । एकान्तां **'ताम्बूलपूरितमुखी'**त्येकं नाम । बिन्दुगां बिन्दुमण्डलवासिनी, बैन्दवासना, बिन्दुतर्पणसन्तुष्टेति त्रीणि । महारम्भां महापदारब्धानि द्विचत्वारिंशत् **'महालावण्ये'**त्यारभ्य **'महेश्'**यन्तानि ॥ १ ॥

**ललितानामसहस्रे छलार्णसूत्रानुयायिन्यः ।**
**परिभाषा भाष्यन्ते संक्षेपात्कौलिकप्रमोदाय ॥ २ ॥**

छलाक्षरनामसूत्रेभ्यो नामविभागादेर्विलम्बेन क्लिष्टतया ज्ञायमानत्वात्तत्रत्या एव परिभाषाः सुलभोपायेन सुबोधा इति विद्योपासकानां तोषाय कथ्यन्त इत्यर्थः । छलाक्षरसूत्राणां विलम्बितार्थबोधजनकत्वं तत्र तत्र प्रकटीकरिष्यामः ॥ २ ॥

**पञ्चाशदेक आदौ नामसु सार्धद्व्यशीतिशतम् ।**
**षडशीतिः सार्धान्ते सर्वे विंशतिशतत्रयं श्लोकाः ॥ ३ ॥**

आदौ प्रथमभागे पञ्चाशदेकश्च । एकपञ्चाशच्छ्लोका इत्यर्थः । वक्ष्यमाणस्य सहस्रभोजनप्रयोगस्य बहुदिनक्रियमाणत्वपक्षे प्रथमदिन एकपञ्चाशच्छ्लोकपाठः । ध्यानश्लोकस्तु प्रत्यहं पठनीय इति वैषम्यध्वननाय विभज्य कथनम् । नामसु विषये द्व्यशीत्युत्तरं शतमर्धश्लोकश्च अन्ते फलश्रुत्यादिप्रकरणे । संहत्य तु त्रीणि शतानि विंशतिश्च श्लोका इत्यर्थः ॥ ३ ॥

**दशभूः सार्धनृपाला अध्युष्टं सार्धनवषडध्युष्टम् ।**
**मुनिसूतहयाम्बाश्वाम्बाश्वोक्तिर्ध्यानमेकेन ॥ ४ ॥**

अथ प्रथमभागं विभज्य दर्शयति—भूः एकः । नृपालाः षोडश । अध्युष्टं सार्धत्रयम् । मुनिरगस्त्यः । हयाश्वपदानि हयग्रीवपराणि । दशश्लोका अगस्त्योक्तिरूपा इत्यादिरीत्या यथाक्रममन्वयः । अगस्त्याख्यो हि महामुनिः श्रीविद्योपासकाग्रेसरस्तत्रभगवतो हयग्रीवस्य देशिकेन्द्रस्य मुखाद्ब्रह्माण्डपुराणीयैर्मन्त्रन्यासपूजापुरश्चरणहोमरहस्यस्तोत्राख्यैः सप्तभिः खण्डैः श्रीमातुः प्रादुर्भावादिरहस्यजातमाकर्ण्येतोऽपि परमरहस्यं नामसहस्रमस्तीति तपोबलादेव निश्चित्य तद्भक्तायापि मह्यं किमिति गुरुभिर्न दत्तमित्यनुपदेशनिमित्तांशे संदिहानः पृच्छतीत्याह भगवान् सूतः ॥ ४ ॥

**अगस्त्य उवाच**

**अश्वानन महाबुद्धे सर्वशास्त्रविशारद ।**
**कथितं ललितादेव्याश्चरितं परमाद्भुतम् ॥ १ ॥**

न गच्छतीत्यगः पर्वतस्तं विन्ध्यनामानं स्त्यायतीत्यगस्त्यः । स्त्यानं स्तम्भनम् । सा च कथा **काशीखण्डे** द्रष्टव्या । असंगतत्वापनोदाय पूर्वकथाप्रसङ्गं सामान्येन स्मारयति–अश्वेति । **देवीभागवते** प्रथमस्कन्धे तावदियं कथा स्मर्यते । पुरा किल भगवान् विष्णुर्यज्ञसंरक्षणादिघनतरकार्यार्थं कृतबहुजागरः श्रान्तः शार्ङ्गधनुषः कोटिं ग्रीवयावलम्ब्य निद्राणोऽभूत् । तदा ब्रह्मरुद्रादयः कार्यविशेषसिषाधयिषया तज्जागरणाय वन्निनामककृमिभ्यो यज्ञभागमिच्छद्भ्यो दत्त्वा तन्मुखात्प्रत्यञ्चामत्रोटयन् । तेन कोटेरुच्चलनाच्छिरोत्युड्डीनं क्वापि गतमभूत् । ततः शोकाविष्टाः सुरास्तच्छीर्षमलभमानास्त्रिपुरसुन्दरीं तुष्टुवुः । सा तुष्टा सती हयशिरोयोजनेनैनं जीवयतेत्याज्ञाप्य भगवत्यन्तरधत्त । ततस्तथा जीवितो विष्णुर्हयग्रीवो भूत्वा हयग्रीवाख्यं दैत्यं हतवान् । रहस्यजातमखिलं देवीमुखादेव लब्धवानित्यादि । सोऽयमश्वाननो विष्णुरेव । तदिदं विशेष्यमुक्तवृत्तान्तस्मारणेन देव्यनुगृहीतत्वाभिप्रायगर्भम् । अतएव महाबुद्ध इत्यादिविशेषणद्वयं न स्तुतिमात्रम् । ललितेति । **पद्मपुराणे** हि **'लोकानतीत्य ललते ललिता तेन चोच्यते'** इति निर्वचनश्लोके चकारादन्यदपि सम्भवं निर्वचनमनुमतम् । पराशक्तिसदाशिवादिरूपाणि शक्तिशिवयोरुत्तरोत्तरापकर्षवन्ति बहूनि सन्ति । तेषां च लोका अपि बहुविधाः । परशिवाभिन्नमहाशक्तिस्तु सर्वलोकातीता महाकैलासापराजितादिपदवाच्ये सर्वलोकोत्तमे लोके तिष्ठति । तस्याश्च शरीरं घनीभूतघृतवद्रजस्तमःसम्पर्कशून्यशुद्धसत्त्वघनीभावरूपम् । अन्यासां शिवशक्तीनां कतिपयानां सात्त्विकशरीराण्यपि सत्त्वाधिक्यगुणान्तराल्पत्वयुक्तानि न पुनः शुद्धसत्त्वानि । अतः सर्वोत्तमैवैषा परब्रह्ममूर्तिः । अस्या अपि सन्ति रहस्यभूता बहवो भेदास्तेषु कामेश्वर्यात्मकमूर्तिरेवेह ग्रन्थे प्रतिपाद्येति ललितापदेन सूचितम् । ललितं शृङ्गारहावजन्यः क्रियाविशेषः तद्वती ललिता । तेन शृङ्गाररसप्रधानेयं मूर्तिरिति सूचितम् । सैव देवी क्रीडाविजिगीषादिशीलत्वात् । तस्याश्चरितं प्रादुर्भावादिस्तोत्रसमुदायान्तं कथितं भवतेति शेषः । परमाद्भुतं अत्युत्तमत्वात्पूर्वमश्रुतचरत्वादनुपमत्वाच्चेत्यर्थः ॥ १ ॥

**पूर्वं प्रादुर्भवो मातुस्ततः पट्टाभिषेचनम् ।**
**भण्डासुरवधश्चैव विस्तरेण त्वयोदितः ॥ २ ॥**

अथैतदेव विशिनष्टि सप्तभिः पूर्वमित्यादिभिः । प्रादुर्भावः । **'असद्वा इदमग्र आसीत्', 'सदेव सोम्येदमग्र आसीत्', 'नासदासीन्नो सदासीत्'** इत्यादिश्रुत्येकवाक्यतया

निर्णीतस्य सृष्टिप्राक्कालिकस्य निर्विशेषचिन्मात्रस्य प्राथमिकः कामकलारूपपरिणामो गुरुमुखैकवेद्यः । स च पूर्वं इतः प्राक्, पट्टाभिषेकादिभ्यः प्रथमं वा । त्वयोदित इति सर्वत्रान्वेति । अग्निकुण्डात्समुद्भवरूपो वाऽवतारविशेषात्मा प्रादुर्भावः । पट्टं सकलभुवनसाम्राज्याधिकारस्तस्य विषयेऽभिषेचनं स्वायत्तीकरणेतिकर्तव्यतारूपोऽङ्ग-विशेषः । उदितमिति तु नपुंसकत्वेन परिणमनीयम् । भण्डाख्योऽसुरो **ललितोपाख्याने** यो विस्तरेण वर्णितस्तस्य वधो युद्धे हननं विस्तरेण बहुना शब्दराशिना । **'प्रथनेवावशब्दे'** इति पर्युदासाच्छब्दभिन्न एव विस्तार इति रूपम् ॥ २ ॥

**वर्णितं श्रीपुरं चापि महाविभवविस्तरम् ।**
**श्रीमत्पञ्चदशाक्षर्या महिमा वर्णितस्तथा ॥ ३ ॥**

निरुपपदस्य पुरपदस्य । प्रवृत्तिनिमित्तभूतधर्माणां पौष्कल्याद्देव्याः पुरमेव मुख्यं पुरपदवाच्यम् । अभियुक्तानां नाम श्रीपदपूर्वं प्रयुञ्जीतेति वचनाच्छ्रीकारपूर्वकमिह प्रयुक्तम् । तच्च **रुद्रयामले**–**'अनन्तकोटिब्रह्माण्डकोटीनां बहिरूर्ध्वतः'** इत्यादिना पञ्च-विंशतिप्राकारैरनन्तयोजनविस्तृतैः परिवेष्टितत्वेन वर्णितमेकम् । मेरोरुपरि तत्समान-योगक्षेमं संक्षिप्तं **ललितास्तवरत्ने** भगवता **दुर्वाससा** देशिकेन्द्रेण वर्णितमपरम् । क्षीरसमुद्रमध्ये तृतीयमिति तु **विद्यारत्नभाष्यकाराः** । महाविभवविषयकः शब्द-राशिर्यत्रेति तु वर्णनक्रियाया विशेषणम् । श्रीबीजयुक्ता या पञ्चदशाक्षरी पञ्चदशानां स्वराणां समाहारः कादिविद्या हादिविद्या वा तस्याः । तस्यां श्रीबीजयोगस्तु **'चत्वार ईं बिभ्रति क्षेमयन्तः'** इति **श्रुतिसिद्धो** रहस्यतरः साम्प्रदायिकैकवेद्योऽस्तीति कश्चित् । तत्तन्त्रेषु क्वाप्यदर्शनात्प्रामाणिका न मन्यन्ते । उक्तश्रुतिस्तु–

**'कामराजाख्यमन्त्रान्ते श्रीबीजेन समन्विता ।**
**षोडशाक्षरविद्येयं श्रीविद्येति प्रकीर्तित ॥**

इति हयग्रीवोद्धृतमन्त्रान्तरपरेत्यप्याहुः । तेन श्रीशब्दः शोभादिपरः ; वक्ष्यमाण-**व्याडिकोशेन** बह्वर्थत्वावगमात् ॥ ३ ॥

**षोढान्यासादयो न्यासा न्यासखण्डे समीरिताः ।**
**अन्तर्यागक्रमश्चैव बहिर्यागक्रमस्तथा ॥ ४ ॥**

षोढेति । गणेशग्रहनक्षत्रयोगिनीराशिपीठाख्यन्यासषट्कजन्यावान्तरापूर्वषट्कै-कपरमापूर्वसाधनीभूतो न्यासः षोढान्यास उच्यते । स च भूषणमालिन्यादिभेदादने-कविधः । आदिना चक्रन्यासादिपरिग्रहः । न्यासखण्डे समस्तन्यासैकप्रतिपादके ग्रन्थशकले । न्यासो नाम तत्तद्देवतानां तत्तदवयवेष्ववस्थापनम् । अवस्थितत्वेन भावनेति यावत् । अन्तरिति । अन्तर्यागो नामाधाराद्राजदन्तान्तं तेजस्तन्तो-

र्विभावनम्, मानसी देवपूजा वा तस्य क्रम इतिकर्तव्यता । बहिर्यागः पात्रासादनादिशान्तिस्तवान्तः कर्मसमूहः ॥ ४ ॥

**महायागक्रमश्चैव पूजाखण्डे प्रकीर्तितः ।**
**पुरश्चरणखण्डे तु जपलक्षणमीरितम् ॥ ५ ॥**

स एवाष्टाष्टकादिघटितो महायागः । एते **चास्माभिर्वरिवस्याप्रकाशे** पूजाप्रकरण एव निरूपिताः। पुरश्चरणेति । पुरः मन्त्रोपास्तेरादौ दीक्षोत्तरकालं चरणं परिचर्या । जपस्य लक्षणमवस्थापञ्चक-शून्यषट्क-विषुवत्सप्तक-चक्रनवकविभावनादिरूपं चिह्नम्। तच्चा**स्माभिर्वरिवस्यारहस्ये** प्रथमेंऽश एवोक्तम् ॥ ५ ॥

**होमखण्डे त्वया प्रोक्तो होमद्रव्यविधिक्रमः ।**
**चक्रराजस्य विद्यायाः श्रीदेव्या देशिकात्मनोः ॥ ६ ॥**

**रहस्यखण्डे तादात्म्यं परस्परमुदीरितम् ।**
**स्तोत्रखण्डे बहुविधाः स्तुतयः परिकीर्तिताः ॥ ७ ॥**

होमेति । होमानां तद्द्रव्याणां च तद्विधीनां द्रव्यपरिमाणादिरूपाणां च क्रमः शब्दमध्ये पादविक्षेपो निबन्धनमिति यावत् । चक्रराजस्येति टच्प्रत्ययान्तम् । बिन्द्वादिनवचक्रात्मकस्येति तदर्थः । विद्यायाः पञ्चदश्याः षोडश्या वा । श्रीदेव्याः त्रिपुरसुन्दर्याः । देशिकात्मनोः गुरुशिष्ययोः तादात्म्यं तद्ब्रह्मैव आत्मा स्वरूपं यस्य तत्तदात्म '**ॐतत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः**' इति वचनात् । तस्य भाव इत्यर्थे ब्राह्मणादित्वात्ष्यञ् । सर्वेषामेकब्रह्मरूपता । अभेद इति यावत् । मन्त्रस्य निगर्भार्थवर्णनावसरे **वरिवस्यारहस्येऽ**स्माभिरुक्तोऽस्य प्रकारः । स्तोत्रेति । बहुविधाः पञ्चमीस्तवराजादिरूपाः ॥ ६-७ ॥

**मन्त्रिणीदण्डिनीदेव्योः प्रोक्ते नामसहस्रके ।**
**न तु श्रीललितादेव्याः प्रोक्तं नामसहस्रकम् ॥ ८ ॥**

मन्त्रिणी मन्त्रो राजाधिकारोपयोगिनी मननक्रिया सास्यास्तीत्यर्थे इनिः । नान्तत्वान्ङीप् । अमात्येत्यर्थः । सा च तन्त्रेषु राजश्यामलेत्युच्यते । दण्डिनी दण्डो दमनसाधनं तद्वती । सा च तन्त्रेषु वाराहीति प्रसिद्धा, ते च ते देव्यौ च तयोः ॥ ८ ॥

**तत्र मे संशयो जातो हयग्रीव दयानिधे ।**
**किंवा त्वया विस्मृतं तज्ज्ञात्वा वा समुपेक्षितम् ॥ ९ ॥**

तत्रेति । तत्र अनुक्तौ धर्मीभूतायाम् । ललितासहस्रनामोक्त्यभावविशेष्यकः संशय इत्यर्थः । स च चतुष्कोटिक इत्याह—किंवेत्यादिना सार्धेन । विस्मृतिप्रयुक्तत्वमेकः प्रकारः । सर्वज्ञस्य विस्मरणासम्भवात्प्रकारान्तरमाह—ज्ञात्वा वेति । उपेक्षा इष्टानिष्टोभयविषयकप्रवृत्तिनिवृत्त्यौदासीन्येनावस्थानम् ॥ ९ ॥

**मम वा योग्यता नास्ति श्रोतुं नामसहस्रकम् ।**
**किमर्थं भवता नोक्तं तत्र मे कारणं वद ॥ १० ॥**

मित्रशत्रुभृत्योदासीनभेदेन चतुर्विधेषु जीवेषु भृत्यकोटिप्रविष्टस्य शिष्यस्योदासीनत्वायोगो भक्तिजिज्ञासितार्थोपेक्षायां देशिकेन्द्रस्य कृपालुत्वहानिश्चेत्यतस्तृतीयं प्रकारमाह—मम वेति । नास्तीत्यनेन सामयिकाभाव उक्तो नात्यन्ताभावः । तथात्वे चतुर्थकोटेरुत्थानायोगात् । अनधिकारिणं प्रत्यनुक्तेर्भृत्यत्वविघटकतायाः कृपालुत्वविघटकत्वस्य चायोगादिति भावः । तदुक्तं **बोधसारे**—

**'तत्त्वविवेकवैराग्ययुक्तवेदान्तयुक्तिभिः ।**
**श्रीगुरुः प्रापयत्येव नपद्ममपि पद्मताम् ।**
**प्रापय्य पद्मतामेनं प्रबोधयति तत्क्षणात् ।**
**तस्मात्सर्वप्रयत्नेन सेव्यः श्रीगुरुभास्करः ॥'**

इत्युक्तम् । तत्र नपद्ममित्येकं पदम् । नकारेणायं समासः । अयोग्येऽपि योग्यतामापाद्य श्रीगुरुसूर्यो बोधयतीति समुदायार्थः । अतो योग्यतायामपि गुरुर्दद्यादेवेत्याशयेन कोटित्रयं स्वयमेव निरस्य का पुनश्चतुर्थी कोटिरित्यनवधार्य पृच्छति—किमर्थमिति । भवत्कर्तृकोक्त्यभावः किंप्रयुक्त इत्यर्थः । कारणं चतुर्थीं कोटिम् । इतरकोटीनां स्वेनैव निरस्तत्वादिति भावः ॥ १० ॥

**सूत उवाच**

**इति पृष्टो हयग्रीवो मुनिना कुम्भजन्मना ।**
**प्रहृष्टो वचनं प्राह तापसं कुम्भसंभवम् ॥ ११ ।**

अथैकश्लोकः सूतोक्तिरूपः । **भारते**— '**नापृष्टः कस्यचिद् ब्रूयादिति वेदानुशासन**'मिति निषेधादपृच्छकाय किमपि न वक्तव्यम् । यत्तु '**अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभव**'मिति तदुत्तरार्धं तदपि श्रद्धालुप्रश्नासमर्थशिष्यपरम् । श्रद्धाभावे हानिस्मरणात् । यदाह **बोधायनः**—

**'अश्रद्धा परमः पाप्मा श्रद्धा हि परमं तपः ।**
**तस्मादश्रद्धया दत्तं हविर्नाश्नन्ति देवताः ॥**
**इष्ट्वा दत्त्वापि वा मूर्खः स्वर्गं नहि स गच्छति ।**
**शङ्काविहितचारित्रो यः स्वाभिप्रायमाश्रितः ॥**
**शास्त्रातिगः स्मृतो मूर्खो धर्मतन्त्रोपरोधनात् ।'**

इति । श्रुतिरपि **'श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः'** इत्यादि । ततश्च श्रद्धाभावे पृच्छकायापि न वक्तव्यं किमुतापृच्छकाय । तत्सत्त्वे तु यदि शिष्यः प्रश्ने न समर्थः तदा प्रश्नमप्रतीक्ष्यैव गुरुर्वदेदिति स्थितिः । प्रकृते त्वगस्त्यः श्रद्धालुः प्रश्ने समर्थश्च अथापि किमिति न पृच्छतीति चिन्तयानो नापृष्ट इति निषेधाद्भीतो देशिकसार्वभौमो भगवान् हयग्रीवः शिष्यकृतशुश्रूषया वशीकृतो विवक्षुरपि भक्तिपूर्वकप्रश्नाभावकृत-विलम्बादियन्तं कालं दुःखित इवाभूत् । अधुना तु न तथेत्याह सूतः — **इति पृष्ट इति** । चतुर्थकोटिविषयकप्रश्नकर्मीभूत इत्यर्थः । प्रच्छधातोर्द्विकर्मकतया कोटिवद्गुरोरपि कर्मत्वात् । प्रहृष्टः विलम्बापगमादिति शेषः । तपोभिर्यज्ञादिभिः पापक्षये सत्यङ्कुरितविविदिषाकत्वादस्ति श्रद्धेति योग्यतां प्रदर्शयति– **तापसमिति** । चित्तवृत्ति-निरोधकारणीभूतवायुवृत्तिनिरोधशीलत्वादपि योग्यतामाह– **कुम्भसंभवमिति** । कुम्भस्य कुम्भकस्य सम्यक् चिरकालं भवः स्थितिर्यस्मिंस्तमित्यर्थः । रेचकपूरकयोः सार्वजनीनतया सुलभत्वान्निरोधपदवाच्यत्वाभावाच्च तत्परित्यागेन कुम्भकस्यैव ग्रहणम् ॥ ११ ॥

**लोपामुद्रापतेऽगस्त्य सावधानमनाः शृणु ।**
**नाम्नां सहस्रं यन्नोक्तं कारणं तद्वदामि ते ॥ १२ ॥**

अथ सार्धैः षोडशभिः श्लोकैर्हयग्रीवोक्तिः । पूर्वश्लोक एव हयग्रीवः प्राहेत्युक्तत्वान्नैतदारम्भे हयग्रीव उवाचेत्युक्तिः । एवमम्बावचनेऽप्युत्तरत्र ज्ञेयम् । भर्त्रभिमतदेव्याराधनं गृहिण्या क्रियमाणमप्यनुकूलदाम्पत्यघटकं सत्पत्न्या उपास्ति-योग्यतापादकमिति व्यञ्जयन् विवक्षितमर्थं प्रतिजानीते– लोपामुद्रापत इति । अत एव भगवत्यैव **त्रिशत्यां** वक्ष्यते–

**पत्न्यस्य लोपामुद्राख्या मामुपास्तेऽतिभक्तितः ।**
**अयं च नितरां भक्तस्तस्मादस्य वदस्व तत् ॥'**

इति । अत्र भर्तृनिष्ठभक्तेः पत्न्यानुकूल्यस्य समुच्चयार्थकश्चकार इति तत्रैव वक्ष्यामः । अथवा न केवलं भक्तिप्रश्नावेव योग्यतावच्छेदकौ । विद्योपास्तिविरहे तयोः सत्त्वेऽपि उपदेष्टुर्योगिनीशापाम्नानात् । अतस्तत्साहित्यद्योतनायेदं विशेषणम् । अथवा लोपामुद्राशब्दस्तद्विद्यापरस्त्रिपुरसुन्दरीपरो वा । सैव पतिरुपास्या यस्येत्यर्थः । न चागस्त्यविद्योपासकस्य कथं तथात्वव्यपदेशः । शाखान्तराधिकरणन्यायेन विद्ययोर-भेदाभिप्रायेणोपपत्तेः । न च विद्यापदवाच्ययोरुपास्त्योरभेदेऽप्यगस्त्यलोपामुद्रा-संज्ञयोर्मन्त्रयोर्भेद एवेति वाच्यम् । अगस्त्योपासितेत्यादियौगिकशब्दैकदेशानां तेषां संज्ञात्वाभावेन भेदकत्वायोगात् । न चाक्षरन्यूनाधिकभावाभ्यां सुषिसुषिरयोरिव भेदः । तयोः पदभेदकत्वेऽपि मन्त्रभेदकत्वाभावात । अत एव **'अप्स्वन्तरमृत'** मिति मन्त्रस्य

**याजुषाथर्वणबह्वृचै**र्भिन्नछन्दस्कत्वेन पाठेऽपि भेदानङ्गीकारस्तान्त्रिकाणां संगच्छते । अतएव च भूतशुद्ध्यन्तर्गतजलमण्डलशोधने विकल्पेन विनियोगो न्यायसिद्धः । तदुक्तम्—

**'अप्स्वन्तरिति मन्त्रेण शोधयेदम्बुमण्डलम् ।**
**आर्च्योष्णिहा पुरस्ताच्च बृहत्या पुर उष्णिह ॥'**

इति । एवं '**युञ्जन्ति हरी इषिरस्ये**'ति मन्त्रो बह्वृचछन्दोगाभ्यां छन्दोभेदेन पठ्यमानोऽपि न भिद्यते । अनेनैवाशयेन नार्मेधाख्यसामाधिकारे '**अथ पुर उष्णिगनुष्टुप्तेनानुष्टुभो नयन्ती**'ति **श्रुतौ** द्वयोरपि छन्दसोरुल्लेखः । तेन **तन्त्रराज**हादिविद्याधिकारे पठितानां कालनित्यामन्त्राणां पारायणानां च कादिविद्याङ्गत्वेनापि लेखः पद्धतिकाराणां संगच्छत इति दिक् । अवधानं विषयान्तरसञ्चाराभावस्तत्सहितं मनो यस्य तादृशः सन् । इतरकोटीनां तेष्वरसानां च तवैव स्फुरितत्वेऽपि तद्विलक्षणायाः कोटेर्विवक्षिताया झटिति त्वद्बुद्धौ स्फुरणायोग्यत्वादिति भावः । यत् येन कारणेन '**निमित्तपर्यायप्रयोगे सर्वासां प्रायदर्शन**'मिति **वार्तिके** सर्वविभक्तीनां साधुत्वाभिधानात् ॥ १२ ॥

**रहस्यमिति मत्वाहं नोक्तवांस्ते न चान्यथा ।**
**पुनश्च पृच्छसे भक्त्या तस्मात्तत्ते वदाम्यहम् ॥ १३ ॥**

प्रकटार्थस्योक्तौ प्रश्नभक्तिसदसद्भावापेक्षा नावश्यकी । किन्तु रहस्यविषय एवोक्तरूपा वस्तुस्थितिरित्युपसंहारं द्योतयन् भक्तिपूर्वकप्रश्नस्योपदेशस्य चान्वयव्यतिरेकावुपदिशति—रहस्यमितीति । ते तुभ्यं अपृष्टवते इति शेषः । अन्यथा न त्वदुत्प्रेक्षितनिमित्तानि न भवन्ति । अस्वरसानां तवैव स्फुरितत्वादिति भावः । भक्त्या भक्तिपूर्वकम् । तस्मात् भक्तियुक्तप्रश्नाभावकृतप्रतिबन्धस्यापगमात् । तत् ललितानामसहस्रम् ॥ १३ ॥

**ब्रूयाच्छिष्याय भक्ताय रहस्यमपि देशिकः ।**
**भवता न प्रदेयं स्यादभक्ताय कदाचन ॥ १४ ॥**

उक्तार्थे संमतिमाह—ब्रूयादिति । वक्त्रा पृच्छकेन श्रोतृभिश्च तत्त्वबुभुत्सूनां सभा भवति तत्र वक्तृभिन्नाः सर्वेऽपि यद्यपि शिष्यास्तथापि रहस्यपदार्थस्य रहसि जनबाहुल्याभावे सत्येव वक्तव्यत्वादत्र शिष्यशब्देन पृच्छक एवावशिष्यत इत्याशयेन शिष्यायेत्युक्तम् । त्वयाप्येवं वर्तितव्यमित्याशयेनाह—शिष्यायेत्यनुवर्तते । अभक्ताय पृच्छकायापि न देयमित्यर्थः । तेनापृच्छकायापि प्रश्नासमर्थाय भक्ताय देयमिति सिद्ध्यति ॥ १४ ॥

**न शठाय न दुष्टाय नाविश्वासाय कर्हिचित् ।**
**श्रीमातृभक्तियुक्ताय श्रीविद्याराजवेदिने ॥ १५ ॥**

अभक्तताविवरणार्थां **श्रुतिमर्थतोनुवदति**–न शठायेति ।

**'विद्या ह वै ब्राह्मणमाजगाम गोपाय मा शेवधिष्टेहमस्मि ।**
**असूयकायानृजवेऽयताय न मा ब्रूया वीर्यवती तथा स्याम्'**

इति हि **श्रुतिः**। तत्र गुरूक्तिसमनन्तरमेव जातनिश्चयोपि यः पूर्वमेवैतदज्ञातचरमिति वा इदानीमपि न ज्ञातमिति वा प्रदर्शयितुं यतते स शठोऽयतश्च जातं निश्चयं गुरवे प्रदर्श्य तद्दूषणार्थमेवैदंपर्येण यतमानो हेत्वाभासोपन्यासशीलो दुष्टोऽसूयकश्च । गुरुभक्तिः सर्वापि यथार्थैवेति ज्ञानं विश्वासः स नास्ति यस्य सोऽविश्वासोऽनृजुश्च । यद्वा अयतोऽन्तःशुद्धिहीनः स चेह दुष्टपदेन संगृहीतः । एवंसति सम्प्रदायो माविच्छेदीत्यत आह– **श्रीमात्रिति । भक्तितन्त्रे– 'सा परानुरक्तिरीश्वर'** इत्यधिकरणादिषु निर्णीतलक्षणश्चित्तवृत्तिविशेषो भक्तिः तया युक्तायेत्यनेनाभक्तनिरासः । न केवलं भक्तिमात्रमधिकारितावच्छेदकमिति द्योतनाय विशेषणद्वयम् । विद्याराजः पञ्चदशी तद्वेदनं गुरुमुखादुपदेशः ॥ १५ ।

**उपासकाय शुद्धाय देयं नामसहस्रकम् ।**
**यानि नामसहस्राणि सद्यःसिद्धिप्रदानि वै ॥ १६ ॥**

नित्यनैमित्तिककर्माचरणपूर्वकं सर्वत्र देव्यभेदभावनाख्या मानसी क्रियोपास्तिः तद्वानुपासकः । शुद्ध इति शाठ्यादिदोषराहित्याय । अथैतदुपदेशे ईदृशो निर्बन्धोऽस्य रहस्यत्वात्तच्च मुख्यत्वात्तच्च देवताप्रीतिकरत्वेनावश्यकत्वादिति प्रदर्शयितुमुत्तरो ग्रन्थसन्दर्भो नामारम्भावधिकः – यानीति । यानि कोटिसंख्याकानि तेषु यानि सद्यःसिद्धिप्रदानि दशसंख्याकानि **'एते दश स्तवा गङ्गाश्यालकावालरासभे'**ति संगृहीतानि ॥ १६ ॥

**तन्त्रेषु ललितादेव्यास्तेषु मुख्यमिदं मुने ।**
**श्रीविद्यैव तु मन्त्राणां तत्र कादिर्यथापरा ॥ १७ ॥**

ललितादेव्या नामसहस्राणि तन्त्रेषु चतुःषष्टिसंख्याकेषु पुराणेषु च कथितानि तेष्वपीदं ललितानामसहस्रं मुख्यतममिति योजनयार्थः । **'देवीनामसहस्राणि कोटिशः सन्ति कुम्भजे'**त्युत्तरग्रन्थानुसारात् । पुंदेवत्या मन्त्राः स्त्रीदेवत्या विद्या इति मन्त्रविद्ययोर्लक्षणभेदेऽप्यस्याः शिवशक्तिसामरस्यरूपत्वादुभयात्मतेति द्योतनाय मन्त्राणां मध्ये विद्येत्युक्तम् । अतएव देवताध्याने ऐच्छिको विकल्पः स्मर्यते ।

**'पुंरूपं वा स्मरेद्देवि स्त्रीरूपं वा विचिन्तयेत् ।**
**अथवा निष्कलं ध्यायेत्सच्चिदानन्दलक्षणम् ॥'**

इति **मालामन्त्रे**ऽपि स्त्रीपुंसभेदेन भेदः । एतदभिप्रायेणैव गुणनिधिः श्रीमाता परंज्योतिरित्यादीनि नामानि त्रिलिङ्गकानि सम्भवन्त्स्यन्ते । अथवा कूटत्रयात्मकत्वेऽपि पञ्चदशस्वरघटितत्वात्पञ्चदशाक्षरशालित्वसूचनाय मन्त्राणामित्युक्तम् । पिण्डकर्तरीबीजमन्त्रमालाभेदेन पञ्चविधेषु मन्त्रेषु पञ्चदशाक्षराणां मन्त्ररूपत्वात् । तदुक्तं **नित्यातन्त्रे**–

**'मन्त्रा एकाक्षराः पिण्डाः कर्तर्यो द्व्यक्षरा मताः ।**
**वर्णत्रयं समारभ्य नवार्णा विधिबीजकाः ॥**
**ततो दशार्णमारभ्य यावद्विंशति मन्त्रकाः ।**
**तत ऊर्ध्वं गता मालास्तासु भेदो न विद्यते ॥'**

इत्यादि । कादिः ककार आदिर्यस्यां सा कादिः कालीशक्तिः । त इति **तन्त्रराज**प्रसिद्धकादिनामकशक्त्यभिन्ना वा । अतएव **'कादिसंज्ञा भवद्रूपा सा शक्तिः सर्वसिद्धये'** इत्यादि । तत्रैव देवींप्रति शिववाक्यम् । सा च–

**'कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः ।**
**पुनर्गुहा सकला मायया च पुरूच्येषा विश्वमातादिविद्या ॥'**

इत्याथर्वणैः पठ्यमानत्रैपुरसूक्तस्थायामृच्युद्धृता । तन्त्रभेदेनोद्धृतानां विद्यानां सर्ववेदान्तप्रत्ययन्यायेनैक्येप्युपासकरुच्यनुसारेण कल्पितं तारतम्यमप्यस्तीत्याह– परेति । भावार्थप्रभृत्यर्थानां सर्वेषां तत्रैव सामञ्जस्यात् । सप्तत्रिंशदक्षरैः षट्त्रिंशत्तत्त्वातीतरूपायाः कादिविद्यातिरिक्तास्वसम्भवाच्चेति भावः । तदिदम**स्माभिर्वरिवस्यारहस्य** एव विद्यान्तरेषु तदसामञ्जस्यप्रदर्शनपूर्वं निरूपितम्–

**'अज्व्यञ्जनबिन्दुत्रयनादत्रितयैर्विभाविताकारा।**
**षट्त्रिंशत्तत्त्वात्मा तत्त्वातीता च केवला विद्या ॥'**

इति । किञ्च–

**'यदक्षरैकमात्रेऽपि संसिद्धे स्पर्धते नरः ।**
**रवितार्क्ष्येन्दुकन्दर्पशङ्करानलविष्णुभिः ॥**
**यदेकादशमाधारं बीजं कोणत्रयात्मकम् ।**
**ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते ॥'**

इत्यादेर्गुरुमुखैकवेद्यो रहस्यार्थो न हादिविद्यासु समञ्जसः । **'चत्वार ईं बिभ्रति क्षेमयन्त'** इत्यत्रापि कादिपक्ष एव स्वरसेत्येके । हादिपक्षेपि तुल्येति तु रहस्यम् । किञ्च । **त्रिपुरोपनिषद्यपि 'अथैतस्य परं गह्वरं व्याख्यास्यामः'** इत्यादिना गायत्रीपञ्चदश्योरेकरूपत्वं वक्तुं तत्पदककारयोरेवैकार्थत्वमुक्तम् । तन्मूलकत्वेनैवान्या उद्धृताः । **त्रिशत्यां** कामेश्वराभ्यामप्यस्या एवादरः क्रियमाणो दृश्यते । **तन्त्रराजे** तु तृतीयकूटस्यैव प्रथममुद्धारेण तत्रैवैकाक्षरनिवेशेनान्ययोः कूटयोर्लाघवेनोद्धाराय हादिविद्यैवादृतेति ज्ञेयम् । अतएव **त्रैपुरसूक्ते–'षष्ठं सप्तममथ वह्निसारथिम्'** इत्यृचा कादेः पश्चादेव हादेरुद्धारः कृतः । **'शिवः शक्तिः कामः'** इति **सौन्दर्यलहरीस्थ**श्लोकद्वयं द्वेधापि व्याख्यायत इति दिक् ॥ १७ ॥

**पुराणां श्रीपुरमिव शक्तीनां ललिता यथा ।**
**श्रीविद्योपासकानां च यथा देवो वरः शिवः ॥ १८ ॥**

उपासकानामित्यन्ताश्चतस्रो निर्धारणे षष्ठ्यः । उपास्तेः परमं फलमुपास्याभेदः । स च परशिवे सार्वकालिक एवास्तीत्युपासकत्वं तस्याप्यविशिष्टम् । कथमन्यथा तस्यादिनाथत्वं तदभेदानुसन्धानमस्मदादीनां च संगच्छते । देव्यभेदानुसन्धानदार्ढ्यबललब्धाभेदेन गुरुणा सह शिष्यस्याप्यभेदानुसन्धानाद्देव्यभेदलाभस्य नाथैकद्वारकतायाः सिद्धान्तरहस्यत्वादित्याशयेनाह–वरः शिव इति । परमशिव इत्यर्थः । तेन गुणिरुद्रादिनिरासः ॥ १८ ॥

**तथा नामसहस्रेषु वरमेतत्प्रकीर्तितम् ॥ १९ ॥**

स्पष्टम् । अर्धश्लोकोऽयम् ॥ १९ ॥

**यथास्य पठनाद्देवी प्रीयते ललिताम्बिका ।**
**अन्यनामसहस्रस्य पाठान्न प्रीयते तथा ।**
**श्रीमातुः प्रीतये तस्मादनिशं कीर्तयेदिदम् ॥ २० ॥**

मुख्यत्वे हेतुमाह–यथास्येति । यथा निरवधिकमित्यर्थः । अन्येषां शिवविष्ण्वादीनां नामसहस्रमन्यच्च तन्नामसहस्रं च तस्येति वा । अथैतत्पाठं विधत्ते । प्रीतय इति तादर्थ्यचतुर्थ्या सर्वेभ्यः कामेभ्य इत्यादाविव कीर्तनकरणकभावनाभाव्यत्वप्रतीतिः । इदमिति तु धात्वर्थकर्म सक्तूनितिवत् । अतएव तेन न्यायेनैव विनियोगभङ्गेन मत्वर्थलक्षणया नामसहस्रकीर्तनेन श्रीमातृप्रीतिं भावयेदिति विधेः पर्यवसितोऽर्थः । अथवा सोमादिद्रव्याणां यागसाधनत्वेन तृतीयाश्रुतेः प्रत्यक्षत्वाच्च तत्र तथा वाक्यार्थवर्णनेऽपि प्रकृते नाम्नां वर्णानित्यत्ववादे ताल्वोष्ठपुटव्यापाररूपकीर्तनजन्यत्वात्तन्नित्यत्ववादेऽपि ध्वनेरनित्यत्वेन कीर्तनजन्यध्वन्यभिव्यङ्ग्यताया

वर्णात्मकद्रव्येषु स्वीकारादनुत्पन्नस्यानभिव्यक्तस्य वा कीर्तनजनकत्वायोगान्नामाभिव्यञ्जककीर्तनेनेष्टं भावयेदित्येवार्थः । कीर्तनं चेह वाचिकमानसोभयसाधारणम् । नामपठनवन्नामस्मरणस्यापि वचनान्तरेषु फलश्रवणात् । तस्मादिति हेत्वधिकरणन्यायेनार्थवादः । अनिशं यावज्जीवम् । तेनाग्निहोत्रवन्नित्यकाम्योभयरूपमिदं कर्मेति सिध्यति ॥ २० ॥

**बिल्वपत्रैश्चक्रराजे योऽर्चयेल्ललिताम्बिकाम् ।**
**पद्मैर्वा तुलसीपत्रैरेभिर्नामसहस्रकैः ॥ २१ ॥**

अथ कीर्तनस्यान्याश्रयेणापि फलसम्बन्धमाह—बिल्वपत्रैरिति सार्धेन । वचनान्तरेण प्राप्तमन्तर्यागबहिर्यागभेदेन द्विविधमपि पूजनं बिल्वपत्राद्यन्यतमकरणकं चक्रराजाधिकरणकमर्चयेदित्येकेन पदेन यच्छब्दयोगादनूद्यते । तत्र तात्पर्यग्राहकाणि पदान्तराणीति य इष्ट्येत्यादिवाक्य इव नोद्देश्यानेकत्वप्रयुक्तो वाक्यभेदः । नामसहस्रकैरिति तु कीर्त्यमानाभिप्रायं कीर्तनपर्यवसायि । तेनार्चनविशेषाश्रितेन नामकीर्तनेन, यद्यपि **रुद्रयामले—**

**'तुलसीबिल्बपत्राणि धात्रीपत्राणी पार्वति ।**
**अर्चने चक्रराजस्य नोचितान्येव सर्वथा ॥'**

इति निषेधः प्रतीयते तथापि सहस्रनामकरणकार्चने विशिष्य बिल्वपत्राणां विधानान्निषेधस्तदितकरणकार्चनपरो व्यवतिष्ठते ॥ २१ ॥

**सद्यः प्रसादं कुरुते तत्र सिंहासनेश्वरी ।**
**चक्राधिराजमभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ॥ २२ ॥**

सद्यः प्रसादं भावयेदित्यर्थः । अथ यावज्जीववाक्येन प्राप्तं जीवनावच्छिन्नं कालसामान्यं विशेषेणोपसंहरति—चक्राधिराजमिति । अर्चनोत्तरं यः क्रियमाणो नित्यजपस्तदुत्तरकाले नित्यं सकृत्कीर्तयेदित्यर्थः । **'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'**तिवदयं कालार्थः संयोगः । अर्चनजपकीर्तनानां प्रत्येकं विधिभिः फले विनियोगेन कृतार्थत्वात् । अतएव जपपूजादेः कालोपलक्षणार्थत्वात् **'अनपायो हि कालस्य लक्षणं हि पुरोडाशा'**विति न्यायेन तदभावेऽपि कर्तव्यतां प्राप्तामनुवदति—जपेति । आदिना न्यासादिपरिग्रहः ॥ २२ ॥

**जपान्ते कीर्तयेन्नित्यमिदं नामसहस्रकम् ।**
**जपपूजाद्यशक्तोऽपि पठेन्नामसहस्रकम् ॥ २३ ॥**

उपास्तिं प्रति जपादीनां सर्वेषामङ्गत्वान्नित्यकर्माङ्गेषु यथाशक्त्युपबन्धस्य सिद्धान्तसिद्धत्वादशक्त्या जपाद्यकरणे तदुत्तरकालत्वाभावेऽपि तदुपलक्षितकालस्यानपायादेकपुरोडाशायामिष्टावुपांशुयाजवन्नामसहस्रकीर्तनं कर्तव्यमेवेत्यर्थः ॥ २३ ॥

**साङ्गार्चने साङ्गजपे यत्फलं तदवाप्नुयात् ।**
**उपासने स्तुतीरन्याः पठेदभ्युदयो हि सः ॥ २४ ॥**

ननु किमिदं कीर्तनं शक्तस्योच्यते तदशक्तस्य वा । नाद्य । नित्यकर्मत्वादेव शक्तं प्रति तत्प्राप्तेः पुनरनुवादवैयर्थ्यात्, नान्त्यः । अशक्तं प्रति विधेरप्ययोगात् किमुतानुवादस्य । '**आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी**'तिन्यायादित्यत आह— साङ्गेति । अङ्गैः सहितं साङ्गम् । आवरणपूजनसहितप्रधानदेवतापूजनस्य कुल्लुकासेतुमहासेतुजपसहितविद्याजपस्य च न्यासादेश्च यत्फलं तदुद्देशेनापि पठेदित्यर्थः । अयं भावः । यदि न्यासार्चनजपकीर्तनेष्वन्यतमस्यैकस्यैव करणे शक्तिस्तदा न्यायतो विकल्पे प्राप्ते तदपवादेन कीर्तनमेव विधीयते । तेन '**यदि सत्राय दीक्षितानां साम्युत्तिष्ठासेत्सोममपभज्य विश्वजिता यजेते**'त्यत्र सत्राभावे विहितविश्वजिद्यागवदस्य प्रतिनिधित्वम्, परन्तु वचनबलात्पूजादिफलमपि । विश्वजितस्तु न सत्रफलं मानाभावादिति । इदानीमुपासनां प्रत्यवैकल्पिकमङ्गत्वं कीर्तनस्येत्याह—उपासन इति । सप्तम्या '**तत्र जयान् जुहुया**'दित्यत्रेवाङ्गित्वबोधः । तदङ्गत्वेनेतरेषां त्रैलोक्यमोहनकवचादिरूपाणां स्तोत्राणां पाठेऽभ्युदयः फले विशेषः । अपाठे तु नाङ्गन्यूनत्वकृतो दोषः । तेन तेषां क्रत्वङ्गत्वबोधकानां तत्तत्प्रकरणस्थवचनानां विकल्पे पर्यवसायकमिदं वाक्यम् । तेन षोडशिग्रहवदितरेषामङ्गत्वं '**नवलक्षप्रजप्तापि तस्य विद्या न सिध्यती**'त्यादितत्तत्प्रकरणस्थवाक्येषु सिद्धिपदं तत्तत्पाठजन्याभ्युदयविशिष्टविद्याफलमपरमित्यदोषः ॥ २४ ॥

**इदं नामसहस्रं तु कीर्तयेन्नित्यकर्मवत् ।**
**चक्रराजार्चनं देव्या जपो नाम्नां च कीर्तनम् ॥ २५ ॥**

इदं तु न तादृशमङ्गम् अपितु नित्यकर्मवत् सन्ध्यावन्दनवत् । स्वाभाविकप्रतियोगिकविकल्पासहत्वमात्रार्थकोयं वतिः । ततश्च संयोगपृथक्त्वन्यायेन कीर्तनं क्रत्वर्थपुरुषार्थोभयरूपमिति मन्तव्यम् । अर्चनादिप्रायपाठेनाप्युपासनाङ्गत्वमेव द्रढयति । देव्या विद्यायाः । काकाक्षिन्यायेनोभयत्रान्वेति ॥ २५ ॥

**भक्तस्य कृत्यमेतावदन्यदभ्युदयं विदुः ।**
**भक्तस्यावश्यकमिदं नामसाहस्रकीर्तनम् ॥ २६ ॥**

भक्तस्य उपासकस्य । अभ्युदयं अभ्युदयकरम् । मत्वर्थीयोऽच् । श्रेयस्करमित्यर्थः । अर्चनादिप्रायपाठादर्चनादितुल्यत्वं मा प्रसांक्षीदत आह—भक्तस्येति । जपपूजापेक्षयापीति शेषः । तत्फलजनकस्योक्तत्वादिति भावः ॥ २६ ॥

**तत्र हेतुं प्रवक्ष्यामि शृणु त्वं कुम्भसम्भव ।**
**पुरा श्रीललितादेवी भक्तानां हितकाम्यया ॥ २७ ॥**

तत्फलजनकत्वमस्य कथमित्याशङ्क्य तत्र निमित्तं वक्तुं स्तोत्रप्रतिपाद्याया देवताया निखिलशिवशक्तिगणोपास्यत्वमुखेन सर्वोत्तमत्वद्योतिकां कथामुपक्रमते—तत्रेत्यादिना । न ह्यत्र '**अनूयाजान्यक्ष्यन्भवती**'ति हेतुवादवत्स्वार्थतात्पर्यकत्वद्योतनाय प्रकर्षेण वक्ष्यामीति प्रतिज्ञा । अत एवार्तवादधिया नोपेक्षस्वेति द्योतयितुं शृणुत्वमिति स्वाभिमुखीकरणम् । अवाप्तसकलकामत्वेन देव्याः स्वार्थकामनाभावादाह—भक्तानामिति ॥ २७ ॥

**वाग्देवीर्वशिनीमुख्याः समाहूयेदमब्रवीत् ।**
**वाग्देवता वशिन्याद्याः शृणुध्वं वचनं मम ॥ २८ ॥**

मुखे आदौ गणनीया मुख्या वशिन्येव मुख्या यासां ता वशिन्याद्याः । आदिना कामेश्वर्यादिकौलिन्यन्तसप्तकपरिग्रहः । तासामेवाह्वाने परिकरालङ्कारेण हेतुगर्भं विशेषणं वाग्देवीरिति । क्रीडाविजिगीषाद्युतिस्तुतिव्यवहारमोदमदकान्तिगतयोऽत्र सर्वे दीव्यतेरर्थाः नतु स्वप्नः । देवतानामस्वप्नत्वात् । वाचा क्रीडन्ति विजिगीषन्ति द्योतन्ते स्तुवन्तीत्यादिरीत्या वा वाग्देव्यः । वाङ्मयमात्रे स्वातन्त्र्यात्तासामेव चिकारयिषितस्तोत्रार्थमाह्वानमिति भावः । इदं वक्ष्यमाणवृत्तान्तरूपम् । अथाध्युष्टश्लोकैरम्बावचनम् । हे वशिन्याद्याः ! यतो यूयं वाग्देवतास्ततो मम वचनं शृणुध्वमिति योजना । युष्माकं वागीश्वरत्वान्मद्वचनश्रवणेपि भवतीनामेवाधिकार इति प्रोत्साहनं व्यङ्ग्यम् ॥ २८ ॥

**भवत्यो मत्प्रसादेन प्रोल्लसद्वाग्विभूतयः ।**
**मद्भक्तानां वाग्विभूतिप्रदाने विनियोजिताः ॥ २९ ॥**

ननु वशिन्याद्युपासका देवता अपि वागीश्वर्यः संपतिताः किं त्वदाज्ञावाक्यश्रवणेनाधिकारिण्य इत्याशङ्क्याह—भवत्य इति । ततश्चेति शेषः सर्वत्राध्याहृत्य योज्यः । प्रकर्षेणोत्कर्षेण लसन्त्यो वाचां विभूतय ऐश्वर्यं यासां ताः । इतरवैलक्षण्यं प्रकर्षः । सर्वोत्तमत्वमुत्कर्षः । तेन सर्वोत्तमदेवताप्रसादलब्धाया विद्याया एव सर्वविद्योत्तमत्वात्तद्वत्य एवं सर्वोत्तमस्तोत्रकरणेऽधिकारिण्य इति ध्वनिः । ननु नकुलीदेव्यादयोऽपि भगवतीप्रसादलब्धवागैश्वर्यशीला एवेति ता एव स्तोत्रकरणाय

विनियुज्यन्तामत आह—मद्भक्तानामिति । नकुलीवागीश्वर्यादयस्तु ललिताभक्तैः सह विवदमानानां परेषां वाचस्तम्भनादिषु विनियुक्ताः । ततश्च सहस्रनामस्तोत्रस्यापि वाग्विभूतिरूपत्वेन तस्य ललिताम्बाभक्तेभ्य एव दित्सितत्वेन नकुल्यादेस्तत्करणे विनियोजने वशिन्याद्यधिकारभङ्गापत्तिरिति ध्वन्यम् ॥ २९ ॥

**मच्चक्रस्य रहस्यज्ञा मम नामपरायणाः ।**
**मम स्तोत्रविधानाय तस्मादाज्ञापयामि वः ॥ ३० ॥**

ननु वशिन्यादिभिरपि स्तोत्राणि कृतानि सन्त्येव किमनेन नूतनेनेत्यत आह—मच्चक्रस्य रहस्यज्ञा इति । चक्रस्य बिन्द्वादिभूपुरान्तस्य रहस्यं वासनामयं शरीरं जानन्तीति तथा । अथवा । अस्ति विमर्शरूपा स्वसंविद्विषयान्तरानवभासिनी । तस्या झटित्युच्चलनाकारप्रतिभोन्मज्जनात्मकोऽन्तःपरिस्पन्दः पूर्णाहंभावनामकस्तुर्यावस्थानामकश्च । तस्य च शक्तयोऽनन्तविधास्तासां समूहश्चक्रं तस्यानुसन्धानं गुरुमुखैकलभ्यं रहस्यं तस्मिन् सति स्वभिन्नस्य सर्वस्यापि स्वस्मिन्नेवोपसंहारो भवति । तथा च **शिवसूत्रम्—'शक्तिचक्रानुसन्धाने विश्वसंहारः'** इति । **'गुरुरूपाय'** इति च । तदिदं जानन्तीति तथा । ततश्चेतरेषु स्तोत्रेषु चक्ररहस्यं न प्रकाशितमस्ति । चिकारयिषिते तु तदपि प्रकाश्यमस्तीति व्यङ्ग्यम् । ननु **अरुणोपनिषद्बह्वृचोपनिषत्त्रिपुरोपनिषदादिषु** चक्ररहस्यमपि प्रकाशितमेवास्तीति किमनेनेत्यत आह—मम नामपरायणा इति । नामशब्दो देवतावाचकप्रातिपदिकपरो मन्त्रपरश्च **सौन्दर्यलहर्याम्— 'शिवः शक्तिः कामः'** इति मन्त्रोद्धारश्लोके मन्त्राक्षराण्युधृत्यान्ते **'भजन्ते वर्णास्ते तव जननि नामावयवताम्'** इति प्रयोगात् द्विविधयोः शब्दयोरेकशेषः । तेन नामोपदेशापदेशेन चक्ररहस्यकथनं मन्त्राणामुद्धारश्चो**पनिषत्सु** न लभ्यते । तादृशापूर्वस्तोत्रकरणे तु भवतीनामेव नामज्ञत्वादधिकार इति व्यज्यते । तस्मादुक्तहेतुपञ्चकात् वो युष्मानेवाहमाज्ञापयामि नान्या इति योजना ॥ ३० ॥

**कुरुध्वमङ्कितं स्तोत्रं मम नामसहस्रकैः ।**
**येन भक्तैः स्तुताया मे सद्यः प्रीतिः परा भवेत् ॥ ३१ ॥**

आज्ञप्तव्यार्थमेवाह—कुरुध्वमिति । नामसहस्रकैरितीत्थंभूतलक्षणे तृतीया । सहस्रनामोपलक्षितं मम स्तोत्रं कुरुध्वमित्यन्वयः । स्तोत्रं विशिनष्टि—ममाङ्कितमिति । मम नाम्ना चिह्नितमित्यर्थः । अङ्कनं नाम चरमश्लोके नामप्रक्षेपः । यथा **कामदेवाङ्के राघवपाण्डवीये काव्यलक्ष्म्यङ्के किरातार्जुनीये** च । प्रकृते च यद्यप्यम्बाया अनन्तानि नामानि तथापि ललितेत्यसाधारणं नाम । गुणिरुद्रेश्वरादिपत्नीष्वपि भवान्यादिनामप्रयोगेण तेषां साधारण्यात् । त्रिपुरसुन्दरीति नाम्नोऽपि तन्त्रान्तरे प्रतिपत्तिथिनित्यायाः

सत्त्वात् । अतः सहस्रनामसमाप्तिश्लोके फलश्रुतिचरमश्लोके च ललिताम्बिकेति नाम्न उल्लेखः ॥ ३१ ॥

**हयग्रीव उवाच**

**इत्याज्ञप्ता वचोदेव्यः श्रीदेव्या ललिताम्बया ।**
**रहस्यैर्नामभिर्दिव्यैश्चक्रुः स्तोत्रमनुत्तमम् ॥ ३२ ॥**

अथ सार्धनवभिः श्लोकैः पुनरपि हयग्रीववाक्यम् । अत्र पूर्वश्लोकार्धेन पौनरुक्त्याभावादेवमुक्तम् । रहस्यैश्चक्रराजस्य मन्त्रोद्धाररहस्याभ्यां सहितैः । मत्वर्थीयोऽच्प्रत्ययः ॥ ३२ ॥

**रहस्यनामसाहस्रमिति तद्विश्रुतं परम् ।**
**ततः कदाचित्सदसि स्थित्वा सिंहासनेऽम्बिका ॥ ३३ ॥**

स्तोत्रनाम्नोऽन्वर्थकताप्रदर्शनाय तन्निर्वक्ति—रहस्यनामसाहस्रमिति । तद्विश्रुतं परं इतिपदस्य वारद्वयमन्वयः । रहस्यगर्भितत्वाद्धेतोः रहस्यनामसहस्रमिति परं अतिशयेन विश्रुतं प्रसिद्धमित्यर्थः । सिंहासने अवस्थानं सर्वेषां दर्शनार्थम् ॥ ३३ ॥

**स्वसेवावसरं प्रादात्सर्वेषां कुम्भसम्भव ।**
**सेवार्थमागतास्तत्र ब्रह्माणीब्रह्मकोटयः ॥ ३४ ॥**

सेवावसरः सेवार्थमवकाशः । ब्रह्माणीति नायं ब्रह्मशब्दान्ङीप् **'इन्द्रवरुणे'**त्यादिसूत्रे ब्रह्मशब्दपाठाभावेनानुगमायोगात् । अपितु ब्रह्म वेदानणति शब्दायते व्याहरतीति यावत् । स ब्रह्माणश्चतुर्भिर्वदनैश्चतुर्वेदवक्ता ब्रह्मेत्यर्थः । तस्य स्त्रीत्यर्थे पुंयोगलक्षणो ङीष् । तथा च **स्वच्छन्दशास्त्रयोगः**(श्लोकः)– **'ब्रह्माणीत्यपर शक्ति ब्रह्मणोत्सङ्गगामिनी'**ति । ब्रह्माणमानयति जीवयतीति वा ब्रह्माणी । अतो न **'पुमांस्त्रिये'**त्येकशेषप्रसक्तिः । अथवा ब्रह्माणीशब्दो भारतीकोटिपरः । तत्समेता ब्रह्मकोटय इति शाकपार्थिवादेराकृतिगणत्वान्मध्यमपदलोपी समासः । बहुवचनं कोटिसंख्यापरम् । तेन प्रकृतिप्रत्ययाभ्यां मिलित्वा कोटिगुणिता कोटिरिति सिध्यति । जलधिसंख्याका ब्रह्माण्यस्तावन्त एव ब्रह्माणश्चेत्यर्थः । अतएव **रुद्रयामले** सर्वमङ्गलाध्यानप्रकरणे–**'आवृतां ब्रह्मसहितब्रह्माणीकोटिकोटिभि'**रित्यादि स्मर्यते ॥ ३४॥

**लक्ष्मीनारायणानां च कोटयः समुपागताः ।**
**गौरीकोटिसमेतानां रुद्राणामपि कोटयः ॥ ३५ ॥**

लक्ष्मीकोटिसमेता नारायणकोटीनां कोटय इत्यर्थः । रुद्राणामित्यपि रुद्रकोटीनामित्यर्थकम् । यथाश्रुते तावदेकैकस्य रुद्रस्य कोटिकोटिगौरीसमेतत्वावगतिः स्यात्

पूर्वाभ्यां शक्तिभ्यां सह संख्यायां वैषम्यं च । यदि पुनर्बहुकोटिसंख्याकरुद्रसमुदायस्यैव विशेष्यत्वाभिप्रायेण गौरीकोटिसमेतत्वरूपं विशेषणं नत्वेकैकरुद्रस्य विशेष्यत्वाभिप्रायेणेति पर्यालोच्यते तदा यथाश्रुतमेव साधु । सर्वाणि बहुवचनानि पुनरनन्तसंख्यापराणि ब्रह्माण्डानामानन्त्यं प्रति ब्रह्माण्डसृष्ट्यधिकारिषु त्रयस्यावश्यकत्वेन तेषामानन्त्ये विवादाभावात् । तेषां युगपदाह्वानं तु सर्वब्रह्माण्डेष्वस्य प्रसिद्धिसम्पादनायेत्याकूतम् ॥ ३५ ॥

**मन्त्रिणीदण्डिनीमुख्याः सेवार्थं याः समागताः ।**
**शक्तयो विविधाकारास्तासां संख्या न विद्यते ॥ ३६ ॥**

विविधाकारा इति ।

'**परा शक्तिश्चादिशक्तिरिच्छाज्ञानक्रिया बला ।**
**बालान्नपूर्णा बगला तारा वाग्वादिनी परा ॥**
**गायत्री चैव सावित्री सिद्धलक्ष्मीः स्वयंवरा ।**
**नकुली तुरगारूढा कुरुकुल्ला च रेणुका ॥**
**संपत्करी च साम्राज्यलक्ष्मीः पद्मावती शिवा ।**
**दुर्गा भद्राकृतिः काली कालरात्रिः सुभद्रिका ॥**
**छिन्नमस्ता भद्रकाली कालकण्ठी सरस्वती ।**'

इत्याद्या **रुद्रयामलादौ** प्रसिद्धाः । यद्यपि पूर्वत्रापि कोटय इति बहुवचनेनासंख्यातत्वमेवोक्तं तथापीह तत्तत्समानसंख्याकाः प्रत्येकं बालादयः सजातीया एव । परस्परविजातीया अप्यनन्ता इत्याशयेन तासां नाम्नां विशिष्य निर्देष्टुमशक्यत्वात्संख्या न विद्यत इत्युक्तम । अथवाऽसंख्या असंख्यनामधेयमित्यर्थः । न विद्यते न शक्यते वक्तुमिति शेषः । सम्यक् ख्यातीति संख्या नामनिर्देष्टेत्यर्थो वा ॥ ३६ ॥

**दिव्यौघा मानवौघाश्च सिद्धौघाश्च समागताः ।**
**तत्र श्रीललितादेवी सर्वेषां दर्शनं ददौ ॥ ३७ ॥**

दिवि भवा दिव्या दिक्पालाद्या देवाः । मानवाः पुण्याः ब्रह्मर्षयो विश्वामित्राद्याः । सिद्धाः सनकनारदाद्या योगिनः । तेषामोघाः संख्याविशेषः । तथा च **रुद्रयामले**—

'**अनेककोटिदिक्पालैश्चन्द्रार्कवसुकोटिभिः ।**
**सनकाद्यैश्च योगीन्द्रैः सप्तर्षीणां च कोटिभिः ॥**
**नारदादिमहौघानां कोटिभिः परिवारिताम् ।**'

इति । तेनौघा इति बहुवचनमनेककोटिपरम् । यद्यप्योघो नाम संख्याविशेषो न ज्योतिःशास्त्रे प्रदृश्यते । यदुक्तम्—

**'एकदशशतसहस्रायुतलक्षप्रयुतकोटयः क्रमशः ।**
**अर्बुदमब्जं खर्वं निखर्वमहापद्मशङ्कवस्तस्मात् ॥**
**जलधिश्चान्त्यं मध्यं परार्धमिति दशगुणोत्तराः संज्ञाः ।'**

इति । नापि **वायुपुराणे** । तत्र हि **'शृणु संख्यां परार्धस्य परस्याप्यपरस्य च'** इत्यादि **'कोटिकोटिसहस्राणि परार्धमिति कीर्त्यते'** इत्यन्तं यथापूर्वमुक्त्वोक्तम्—

**'परार्धद्विगुणं चापि परमाहुर्मनीषिणः ।**
**शतमाहुः परिदृढं सहस्रपरिपद्मकम् ।**
**ततोऽयुतं च नियुतं प्रयुतं चार्बुदं ततः ॥**
**न्यर्बुदं खर्बुदं खर्वं निखर्वं शङ्कुपद्मकौ ।**
**समुद्रं मध्यमं चैव परार्धमपरं ततः ॥**
**एवमष्टादशैतानि स्थानानि गणनाविधौ ।**
**शतानीति विजानीयान्युद्दिष्टानि मनीषिभिः ॥'**

इति । तथापि **रामायणे** युद्धकाण्डे **'शतं शतसहस्राणां कोटिमाहुर्विपश्चितः'** इत्यारभ्य **'शतं समुद्रसाहस्रमहौघ इति विश्रुत'**मित्यन्ते शङ्कु-महाशङ्कु-वृन्द-महावृन्द-पद्म-महापद्म-खर्व-महाखर्व-समुद्र-महौघाख्या उत्तरोत्तरं लक्षलक्षगुणिता दशसंख्या उक्तास्तत्र **'नामैकदेशे नामग्रहण'**मितिन्यायेनौघपदमात्रं प्रयुक्तम् । अथवा परप्रकाशानन्द-नाथाद्याः सप्त परमगुरवो गगनानन्दनाथाद्या अष्टौ परापरगुरवो भोगानन्द-नाथाद्याश्चत्वारोऽपरगुरव इत्योघत्रयं दिव्यादिपदवाच्यम् । इदञ्च कामराज-सन्तानाभिप्रायेणोक्तम् । लोपामुद्रासन्तानभेदेन विद्याभेदेन च मित्रेशानन्दनाथादीनि बहून्योघत्रयाणि **ज्ञानार्णवादिषु** द्रष्टव्यानि । दिव्यादिगुरुक्रमस्तु गुरूपदेशादवगन्तव्यः । तत्र सर्वेषामिति संख्याविशेषो महौघपर्यायः । बहुवचनमप्यनन्तानन्तपरम् । **यजुर्वेद**संख्याप्रायपाठे परार्धायस्वाहेत्यस्योत्तरमुषसेस्वाहेत्यारभ्य सर्वस्मै स्वाहेत्यन्ता अष्टौमन्त्राः श्रूयन्ते । तत्रत्याश्चोषा आदयः शब्दाः संख्याः प्रायपाठाल्लक्षलक्षगुणो-त्तरसंख्यावाचका वक्तव्याः । तदयं संग्रहः ।

**'उषोव्युष्टितथोदेष्यन्नुद्यन्नुदित एव च।**
**स्वर्गोलोकश्च सर्वश्चेत्येवनाम्नायते श्रुतौ।**
**एताः परार्धात्परतः संख्या लक्षगुणोत्तराः'**

इति । एवं सति **रामायणै**कवाक्यतापि लभ्यते । **रामायणी**यमहाशङ्को **ज्योतिः-शास्त्री**यपरार्धपर्यायत्वात् । सति सम्भवे **स्मृते**र्मूलान्तरगवेषणाया अयोगात् । न चैवं

सर्वपदस्य संज्ञारूपत्वेन सर्वनामतानापत्तिः । सर्वनामपदस्यान्वर्थकतया चरमसंख्या-वाचकस्यापि सर्वपदस्य समस्तवाचकतया तदुपपत्तेः । अतएव **श्रुतावपि** स्माया-देशश्चतुर्थ्या उपपद्यते । तस्य छान्दसत्वे तु प्रकृते **सुडागमो**ऽपि तथैवेति ज्ञेयम् ॥ ३७ ॥

**तेषु दृष्ट्वोपविष्टेषु स्वे स्वे स्थाने यथाक्रमम् ।**
**तत्र श्रीललितादेवीकटाक्षाक्षेपनोदिताः ॥ ३८ ॥**

**उत्थाय वशिनीमुख्या बद्धाञ्जलिपुटास्तदा ।**
**अस्तुवन्नामसाहस्रैः स्वकृतैर्ललिताम्बिकाम् ॥ ३९ ॥**

**विश्वकर्मशास्त्रे** नृपस्य दक्षतः पुत्रस्य वामभागेऽष्टमन्त्रिण इत्यादिरीत्योक्तम् । क्रममनतिक्रम्य यथाक्रमम् । अत्र स्वशब्द आत्मनि वाच्ये पुंलिङ्ग एवेति प्रकृते वाग्देवतात्मपरोपि स्वकृतैरित्यत्र पुंलिङ्ग एव भवति सर्वनाम्नो वृत्तिमात्रे पुंवद्भावो वा ॥ ३८-३९ ॥

**श्रुत्वा स्तवं प्रसन्नाभूल्ललिता परमेश्वरी ।**
**सर्वे ते विस्मयं जग्मुर्ये तत्र सदसि स्थिताः ॥ ४० ॥**

ते सर्वे ब्रह्माणीप्रभृतयोऽपि । प्रसादविस्मययोर्मूलं तु शब्दार्थयोरलङ्कारादि-पुष्टिरदोषता । यथा **विष्णुसहस्रनामादिषु 'क्षेत्रज्ञोऽक्षर एव च'**त्यादौ निरर्थकाव्ययप्रयोगः शतावधिनाम्नां द्विरुक्तिः केषांचित्त्रिरुक्तिश्चतुरुक्तिश्च न तथेह स्तोभप्रयोगः पुनरुक्तिर्वा । यद्यपि **भगवत्पादैर्भाष्ये** तत्रार्थभेदो वर्णितस्तथाप्यर्थभेदेन नाम्नां भेदाङ्गी-कारो नानार्थोच्छेदाद्यापत्त्या नान्यगतिकः। अर्थभेदेऽप्युच्चारणभेदादपि भेदापत्तिश्च । तथा चक्ररहस्यमन्त्रोद्धारादिरूपरहस्यार्थान्तराणामपि चमत्कृतानीति । तानि च गुरुमुखादेव यद्यपि वेद्यानि तथापि विद्वच्चित्तचमत्कारार्थं क्वचित्क्वचिदर्थान्तराणि तत्र तत्र दिङ्मात्रेण प्रदर्शयिष्यामः ॥ ४० ॥

**ततः प्रोवाच ललिता सदस्यान्देवतागणान् ।**
**ममाज्ञयैव वाग्देव्यश्चक्रुः स्तोत्रमनुत्तमम् ॥ ४१ ॥**

सदसि स्थितान्सदस्यान्प्रति प्रोवाच विस्मयनिरासार्थमिति शेषः । अथ षड्भिश्लोकैरम्बावाक्यम् । ममाज्ञयैव न तु स्वप्रतिभामात्रेण । अतो नात्र विस्मयः कर्तव्य इति भावः ॥ ४१ ॥

**अङ्कितं नामभिर्दिव्यैर्मम प्रीतिविधायकैः ।**
**तत्पठध्वं सदा यूयं स्तोत्रं मत्प्रीतिवृद्धये ॥ ४२ ।**

अयं प्राथमिको विधिः । पूर्वोक्तस्त्वेतदनुवादरूपोऽपि वक्तृश्रोतृभेदाद्विधिरेव । अतएव पुनःश्रवणस्यानन्यपरत्वाभावेन् शाखाभेदेन पुनः श्रुताग्निहोत्रविधीनामिव न कर्मभेदकत्वम् ॥ ४२ ॥

**प्रवर्तयध्वं भक्तेषु मम नामसहस्रकम् ।**
**इदं नामसहस्रं मे यो भक्तः पठतेऽसकृत् ॥ ४३ ॥**

सम्प्रदायः प्रवर्तनीय इति विधत्ते । भक्तेषु श्रीविद्यादीक्षितेषु वक्ष्यमाणेषु काम्यप्रयोगेषु सति सम्भवे स्तोत्रावृत्तिः कर्तव्येति विधत्ते—इदमिति । यः सकृदेकवारमपि पठति ॥ ४३ ॥

**मम प्रियतमो ज्ञेयस्तस्मै कामान्ददाम्यहम् ।**
**श्रीचक्रे मां समभ्यर्च्य जप्त्वा पञ्चदशाक्षरीम् ॥ ४४ ॥**

तस्मै कामान्ददामीति । किमुत बहुवारमित्यनया भङ्ग्या काम्यप्रयोगेष्वावृत्तिविधानाभावेऽप्यस्यैवावृत्तिविधाने तात्पर्यं दाक्षायणयज्ञविधिवत् । अन्यथा होमविधेरग्रबिन्दुनिपातमात्रेण शास्त्रार्थसिद्धिवत्सकृत्पाठेनैव तत्सिद्धिरावृत्तौ मानाभावात्परिसंख्याद्यर्थं सकृत्त्वविधानस्य वैयर्थ्यापातात् । प्रथमविधावुक्तस्य सदातनत्वस्योपसंहारार्थमाह—श्रीचक्र इति । उपलक्षणापायेऽप्युपलक्ष्यानपाय इति न्यायबललभ्यमर्थमाह ॥ ४४ ॥

**पश्चान्नामसहस्रं मे कीर्तयेन्मम तुष्टये ।**
**मामर्चयतु वा मा वा विद्यां जपतु वा न वा ॥ ४५ ॥**

अशक्तस्य जपार्चनादेः फलमितएव लभ्यमित्याह ॥ ४५ ॥

**कीर्तयेन्नामसाहस्रमिदं मत्प्रीतये सदा ।**
**मत्प्रीत्या सकलान्कामाँल्लभते नात्र संशयः ॥ ४६ ॥**

स्पष्टम् ॥ ४६ ॥

**तस्मान्नामसहस्रं मे कीर्तयध्वं सदादरात् ।**

**हयग्रीव उवाच**

**इति श्रीललितेशानी शास्ति देवान्सहानुगान् ।**
**आज्ञापयामास तदा लोकानुग्रहहेतवे ॥ ४७ ॥**

अथ अध्युष्टश्लोकैर्हयग्रीववाक्यम् । यद्यप्युपान्त्यश्लोकान्तमेतद्वाक्यमेव । तथापि मध्ये ध्यानश्लोकः प्रक्षिप्त इति वदन्तीत्येवमुक्तम् । अम्बाया वचनमुपसंहरति ।

भगवतीच्छारूपायाः शासनाज्ञापरपर्यायप्रवर्तनाय नित्यत्वाच्छास्तीति प्रवर्तमाननिर्देशोऽप्युपपद्यते । **'आक्रुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण इयाय मुक्ति'**मितिवत् ॥ ४७ ॥

**तदाज्ञया तदारभ्य ब्रह्मविष्णुमहेश्वराः ।**
**शक्तयो मन्त्रिणीमुख्या इदं नामसहस्रकम् ॥ ४८ ॥**

निगमयति ॥ ४८ ॥

**पठन्ति भक्त्या सततं ललितापरितुष्टये ।**
**तस्मादवश्यं भक्तेन कीर्तनीयमिदं मुने ॥ ४९ ॥**

तत्र हेतुं प्रवक्ष्यामीत्युपक्रान्तमर्थमुपसंहरन्नेव सङ्गतिदर्शनपूर्वकशिष्यावधानाय प्रतिजानीते ॥ ४९ ॥

**आवश्यकत्वे हेतुत्वे मया प्रोक्तो मुनीश्वर ।**
**इदानीं नामसाहस्रं वक्ष्यामि श्रद्धया शृणु ॥ ५० ॥**

आवश्यकत्व इति ॥ ५० ॥

**अथ ध्यानश्लोकः**

**सिन्दूरारुणविग्रहां त्रिनयनां माणिक्यमौलिस्फुर-**
**त्तारानायकशेखरां स्मितमुखीमापीनवक्षोरुहाम् ।**
**पाणिभ्यामलिपूर्णरत्नचषकं रक्तोत्पलं बिभ्रतीं**
**सौम्यां रत्नघटस्थरक्तचरणां ध्यायेत्परामम्बिकाम् ॥ ५१ ॥**

अस्य श्रीललितासहस्रनामस्तोत्रमालामन्त्रस्य वशिन्यादिभ्यो वाग्देवताभ्य ऋषिभ्यो नमः शिरसि । अनुष्टुप्छन्दसे नमः मुखे । श्रीमहात्रिपुरसुन्दर्यै देवतायै हृदये । क ४ बीजाय नाभौ । स ३ शक्तये गुह्ये । ह ५ कीलकाय पादयोः । चतुर्विधपुरुषार्थसिध्यर्थे जपे विनियोगाय सर्वाङ्गे । कूटत्रयद्विरावृत्य बालया वा षडङ्गद्वयम् । अथ–

**'ऋषिर्गुरुत्वाच्छिरसि ध्येयत्वाद्देवता हृदि ।**
**छन्दोक्षरत्वाज्जिह्वायां न्यस्तव्यं मन्त्रवित्तमैः ॥'**

इत्यादिरीत्या ऋषिन्यासस्थानानि **प्रपञ्चसारोक्तानि** शैवशाक्तादिभेदेन न्यासे मुद्राविशेषाः **पदार्थादर्शोक्तास्**तत्तद्वासनाश्च जपप्रकरण एवा**स्माभि**र्विवृता इति नेह लिख्यन्ते ।

माणिक्यशब्दात्तस्येदमित्यण् । अर्शआद्यच् । ततश्च माणिक्यकिरीटवति मौलौ स्फुरन् शोभमानस्तारानायकश्चन्द्र एव शेखरः शिरोभूषणं यस्यास्ताम् । उत्तमपरो वा

मौलिशब्दः । माणिक्यश्रेष्ठवत्स्फुरन्नित्यादिपूर्ववत् । आसमन्तात्पीनौ पुष्टौ वा **'ऊधस्तु क्लीबमापीनमि'**ति कोशादूधोवद्वा वक्षोरुहौ यस्यास्ताम् । अलिभिः भ्रमरैः पूर्णरत्नमयं चषकं वाटीम् ।

**'चषकं च कटोरी च वाटिका खारिका तथा ।**
**कचोली गाथिका चेति नामान्येकार्थकानि वै ॥"**

इति **रत्नसमुच्चये**ऽभिधानात् तदन्तर्गतस्य मधुनः सुगन्धित्वान्मधुपपूर्णता । यद्वा **'अलिः सुरापुष्पलिहो'**रिति **हैमकोशा**न्मद्यमलिपदवाच्यम् । रत्नं घटे तिष्ठति एतादृशो रक्तचरणः पञ्चमो द्रवो यस्यास्तामिति । एवं परिभाषायां चतुर्भिः श्लोकैः सहस्रनाम्नः प्रथमो भागो विवृत इति शिवम् ॥ ५१ ॥

**॥ इति श्रीभासुरान्दकृते सौभाग्यभास्करे । उपोद्घातपरैः श्लोकैः**
**प्रथमा तपिनीकला ॥ १ ॥**

**॥ इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणसर्वतन्त्रस्वतन्त्रश्रीमन्नृसिंह-**
**यज्वचरणाराधकेन भारत्युपनामकश्रीमद्गम्भीररायदीक्षितसूरिसूनुना**
**भास्कररायेण भासुरानन्दनाथेतिदीक्षानामशालिना प्रणीते**
**सौभाग्यभास्करे ललितानामपरिभाषामण्डलभाष्ये**
**उपोद्घातप्रकरणं नाम प्रथमा कला ॥**



# अथ प्रथमशतकं नाम द्वितीया तापिनीकला

*अथ परिभाषामण्डले नामारम्भकवर्णानिव विभाजकोपाधीकृत्य द्वात्रिंशद्विधानि वक्ष्यमाणानि नामानि विवेचयितुमेकपञ्चाशन्मातृकासु ग्राह्यवर्णान्विचिनोति—*

**अक्षु शराच्छरवर्णांस्ततः समानन्त्यमौ कचयोः ।**
**अथ मध्यान्यांस्तपयोर्द्वितीयमन्त्ये त्यजेन्नवमम् ॥ ५ ॥**

*अक्षु षोडशस्वराणां मध्ये शरात् प्राथमिकपञ्चाक्षराणि गृहीत्वा । ल्यब्लोपे पञ्चमी । शरवर्णान् षष्ठादिदशमान्तान् पञ्चवर्णांस्त्यजेत् । ततः अवशिष्टानामेकादशादिषोडशान्तानां मध्ये समान्द्वादशचतुर्दशषोडशान् । कचयोः कवर्ग-चवर्गयोः अन्तिमौ घकार-ङकारौ झकार-ञकारौ च । अथानन्तरे टवर्गे मध्यान्यान् डकारभिन्नांश्चतुरो वर्णान् । तपयोः तवर्ग-पवर्गयोः द्वितीयं थकारं फकारं च । अन्त्ये यवर्गीयदशाक्षरेषु नवमं लकारं त्यजेत् । तत्तदक्षरादिनामधेयानामभावादिति भावः ॥ ५ ॥*

*अतएव '**द्वात्रिंशद्भेदभिन्ना या तां वन्देऽहं परात्परामि**'ति **सूतसंहितोक्ति**रेतत्परेत्याशयेनाह—*

**इत्थं शिष्टानुष्टुब्वर्णारब्धेषु नामसु तु संख्याः ।**
**अर्वनटत्रिद्वीष्वेकद्विचतुःकंजपानवरधीराः ॥ ६ ॥**

*इत्थमेकोनविंशतिवर्णानां त्यागेनावशिष्टा अनुष्टुब्वर्णाः द्वात्रिंशत्संख्यान्यक्षराणि तैरारब्धेषु नामसु संख्यां वच्म इत्यर्थः । तदेवाह सार्धेन । अत्रैकैकं पदमेकैकाक्षरादिनाम्नां संख्येति क्रमः । तथाहि । अर्व। अकारादीनि नामानि चत्वारिंशत् (४०)। नट । आकारादीनि दश (१०) । इकारादीनि त्रीणि (३) । ईकारादीनि द्वे (२) । उकारादीनि पञ्च (५) । इषुशब्दस्य बाणपरत्वेन तदर्थकत्वात् । एकारादि नामेकं (१) । ओकारादीनि द्वे (२) । अंकारादीनि चत्वारि (४) । कंज । ककारादीन्येकाशीतिः (८१) । पान । खकाराद्येकम् (१) । पकारात्पूर्वं नकारीयबिन्दुलेखस्तु छन्दोनुसारादनिष्टाभावाच्चोक्तः । वर । गकारादीनि चतुर्विंशतिः (२४) । धीरः । चकारादीन्येकोनत्रिंशत् (२९) ॥ ६ ॥*

**किंधूपद्विस्तम्भछलभयमांसे पदे वरः सङ्गः ।**
**प्रकटगयाजलवाटीधुसिधर्मे माखखोल्कटीकाधीः ॥ ७ ॥**

*किं। छकाराद्यमेकं नाम (१)। धूप। जकारादीन्येकोनविंशतिः (१९)। डकारादीनि द्वे (२)। स्तम्भ। तकारादीनि षट्चत्वारिंशत् (४६)। छल। दकारादीनि*

सप्तत्रिंशत् (३७)। भय। धकारादीनि चतुर्दश (१४)। मांसे। नकारादीनि पञ्चसप्ततिः (७५)। पदे। पकारादीन्येकाशीतिः (८१)। वरः। बकारादीनि चतुर्विंशतिः (२४)। सङ्गः। भकारादीनि सप्तत्रिंशत् (३७)। प्रकट। मकारादीनि द्वादशोत्तरशतम् (११२)। गय। यकारादीनि त्रयोदश (१३)। जल। रेफादीनि नामान्यष्टत्रिंशत् (३८)। वाटी। लकारादीनि चतुर्दश (१४)। धुसि। वकारादीन्येकोनाशीतिः (७९)। धर्मे। शकारादीन्येकोनषष्टिः (५९)। मा। षकारादीनि पञ्च (५)। खखोल्क। सकारादीनि द्वाविंशत्युत्तरशतम् (१२२)। टीका। हकारादीन्येकादश (११)। धीः। क्षकारादीनि नव (९)। नामानीत्यर्थः ॥ ७ ॥

**इत्थं नामसाहस्रं साधकलोकोपकारकं विहितम् ।**
**गुणगणसदसद्भावावाश्रित्य ब्रह्मणोऽम्बायाः ॥ ८ ॥**

इत्थं पूर्वोक्तप्रकारेण । साधकानां तत्तन्मातृकाभिमान्यमृताकर्षिणीन्द्राण्यादिक्षमावत्यन्तदेवताः सिसाधयिषूणां लोकानामुपकारकम**स्माभि**र्विहितमुक्तमित्यर्थः । तत्तदक्षरारब्धनामसंख्याज्ञानेन सद्यः पापाद्विमुच्यत इति । अत्र श्रीमातृशब्देन ललिताम्बाया इव मातृकासरस्वत्यास्तदभिन्नानाममृतादीनामपि संग्रह इति सुवचनम् । अथवा देव्या अनन्तेषु नामसु शीघ्रं साधकोपकारकत्वेन क्लृप्तान्येव नामानि वाग्देवताभिरिह संगृहीतानीत्यर्थः । ननु निर्गुणे ब्रह्मणि धर्मलेशराहित्याद्गुणक्रियाजातिरूढीनां शब्दप्रवृत्तिनिमित्तानामसम्भवाच्चतुष्टय्यपि शब्दानां प्रवृत्तिर्न तत्र युज्यत इत्यत आह । गुणगणेति । ब्रह्मणोऽम्बाया इति समानाधिकरणे षष्ठ्यौ ॥ ८ ॥

अयं भावः । ब्रह्म द्विविधं सकलं निष्कलं चेति । '**द्वे ब्रह्मणी वेदितव्ये परं चापरं च**'ति **श्रुतेः स्मृतेश्च** । तत्र सकलमपरम् । तद्विविधं जगन्नियामकं जगदात्मकं चेति । तदुक्तम्- '**जगन्नियन्ता जगदात्मकश्चे**'ति । अन्यत्रापि—'**शिवः कर्ता शिवो भोक्ता शिवः सर्वमिदं जगत्**' इति । '**देवी दात्री च भोक्त्री च देवी सर्वमिदं जगदि**'ति च । '**स्थितिसंयमकर्ता च जगतोऽस्य जगच्च स**' इति च । '**सोऽकामयत बहु स्यां प्रजायेये**'ति **श्रुति**श्च । अकामयतेति निमित्ततताया बहु स्यामिति परिणाम्युपादानतायाश्च प्रतीतेः । '**प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधा**'दित्यधिकरणे '**आत्मकृते परिणामादि**'ति **ब्रह्मसूत्रं** च । तत्र जगदात्मकं ब्रह्म चराचरभेदाद् द्विविधम् । द्विविधमपि हिरण्यगर्भादिभेदाद्वियदादिभेदाच्चानेकविधम्। जगन्नियन्त्रपि नियमनस्य सृष्टिस्थितिलयतिरोधानानुग्रहभेदेनानेकविधत्वाद्ब्रह्मविष्णुरुद्रादिभेदेनानेकविधमेव । तेष्वप्येकैकस्य भक्तानुजिघृक्षया तत्तद्वासनानुसारेण कार्यभेदेन च गृहीतानां रूपाणामनन्तत्वात्तत्तद्विशिष्टवेषेणानन्त्यमेव । तदुक्तं **सुप्रभेदे**—

**'यतीनां मन्त्रिणां चैव ज्ञानिनां योगिनां तथा ।**
**ध्यानपूजानिमित्तं हि तनूर्गृह्णाति मायया ॥'**

इति । **कालिकापुराणे–**

**मायैका भिन्नरूपेण कमलाख्या सरस्वती ।**
**सावित्री सा च सन्ध्या च भूता कार्यस्य भेदतः ॥"**

इति । **बृहन्नारदीये**ऽपि जगत्कर्त्रीं शक्तिं प्रकृत्य,

**'उमेति केचिदाहुस्तां शक्तिं लक्ष्मीं तथा परे ।**
**भारतीत्यपरे चैनां गिरिजेत्यम्बिकेति च ॥**
**दुर्गेति भद्रकालीति चण्डी माहेश्वरीति च ।**
**कौमारी वैष्णवी चेति वाराही च तथा परे ॥**
**ब्राह्मीति विद्याविद्येति मायेति च तथा परे ।**
**प्रकृतिश्च परा चेति वदन्ति परमर्षयः ॥"**

इति । श्रुतिश्च 'एकधा बहुधा चैव दृश्यते जलचन्द्रवदि'ति । देवीपुराणे–

**'देव्या वा एष सिद्धान्तः परमार्थो महामते ।**
**एषा वेदाश्च यज्ञाश्च स्वर्गश्च सकलं जगत् ॥**
**देव्या व्याप्तमिदं विश्वं जगत्स्थावरजङ्गमम् ।**
**इज्यते पूज्यते देवैरन्नपानात्मिका च सा ॥**
**सर्वत्र शाङ्करी देवी तनुभिर्नामभिश्च सा ।**
**वृक्षेषूर्व्यां तथा वायौ व्योम्न्यप्स्वग्नौ च सर्वशः ॥"**

इति । निष्कलं त्वेकविधमेव । तदेतत्सर्वं कूर्मपुराणे हिमवन्तं पति देवीवाक्येन स्पष्टीकृतम्–

**अशक्तो यदि मां ध्यातुमैश्वरं रूपमव्ययम् ।**
**तदा मे सकले रूपे कालाद्येऽनन्तभेदिनि ॥**
**यदेव रूपं मे तात मनसो गोचरस्तव ।**
**तन्निष्ठस्तत्परो भूत्वा तदर्चनपरो भव ॥**
**यत्तु मे निष्कलं रूपं चिन्मात्रं केवलं शिवम् ।**
**सर्वोपाधिविनिर्मुक्तमेकमेवामृतं परम् ।**
**ज्ञानेनैकेन तल्लभ्यं क्लेशेन परमं पदम् ॥"**

इति । एवंस्थिते सगुणे ब्रह्मणि शक्त्या शब्दानां प्रवृत्तिर्निराबाधैव । प्रवृत्तिनिमित्तभूतानां धर्माणां सत्त्वात् । निर्धर्मकि तु शब्दा लक्षणया प्रवर्तन्ते । विशिष्टकेवलयोस्तादात्म्यरूपस्य शक्यसम्बन्धस्य सम्भवात् । निर्गुणे मिथ्यारूपस्य सम्बन्धस्य स्वीकारेऽपि स्वसमानसत्ताकधर्मशून्यत्वरूपनिर्धर्मकताया ब्रह्मणोऽनपायात् । अतीतानागतघटादिविषयकज्ञानीयविषयतासम्बन्धस्येवान्यतरस्मिन्संसृष्ट-

त्वमात्रेणैव तादात्म्यस्यापि सम्बन्धत्वाङ्गीकारसम्भवाद्वा । अतएव **त्रिशत्यां** वक्ष्यते **'लक्ष्यार्थलक्षणागम्ये'**ति । अनया च रीत्या भगवत्या नामान्यनन्तान्येव । वक्ष्यति च हयास्यः— **'देवीनामसहस्राणि कोटिशः सन्ति कुम्भजे'**ति । **सौरसंहितायां** याज्ञवल्क्यं प्रति सूर्यवचनं मायां प्रकृत्य,

**'अस्या नामान्यनन्तानि तानि वर्णयितुं मया ।**
**न शक्यानि मुनिश्रेष्ठ कल्पकोटिशतैरपि ॥'**

इति । **देवीभागवते**ऽपि—

**'असंख्यातानि नामानि तस्या ब्रह्मादिभिः सुरैः ।**
**गुणकर्मविधानाद्यैः कल्पितानि च किं ब्रुवे ॥'**

इति । किंबहुना शब्दमात्रं ब्रह्मपरम् । अतएव प्रकृतेऽपि कानिचिन्नामानि जीवावस्थाभेदपराणि दृश्यन्ते विश्वरूपा तैजसात्मिकेत्यादीनि । कानिचित्तु जीवविशेषणपराणि मालिन्यादीनि । स्थावरविशेषणपराणि मह्यादीनि । सगुणब्रह्म-विशेषणपराणि मुकुन्देत्यादीनि । तत्तच्छक्तिपराणि रमेत्यादीनि । तत्तदवतार-विशेषकृतगुणक्रियादिघटितानि **'भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिणी'**त्यादीनि । निर्गुण-ब्रह्मपराणि परंज्योतिरादीनि दृश्यन्ते । एवमन्येऽपि बहवो भेदा ऊह्याः । एवंसति यद्यपि शब्दजातं सर्वमपि देवीनामैवेति सहस्रनामगणनप्रयासो व्यर्थ एव । तथापि तेषु यैर्यैर्नामभिस्तावत्पुरातना महामहिमानो देवीभक्ता देवीं स्तुत्वा प्रसादितवन्तः स्वान्मनोरथान् साधितवन्तो देवीमुखान्नाम्नोऽस्य माहात्म्यं भवत्विति वरान्दापितवन्तः स्वयमेव वा वरान् दत्तवन्तस्तान्येव नामानि संगृहीतुं गणनाप्रयासः सार्थकः । स चान्येष्वपि सहस्रनामसु तुल्य एव । अस्य तु तेभ्योऽपि महत्त्वमधिकजनपरिग्रह-दाढर्याच्छीघ्रफलकत्वेतरासाध्यफलकत्वादिभिर्बहुभिर्हेतुभिरिति तु पूर्वमेव व्यक्तीकृत-मुत्तरत्रापि करिष्यते । तदेतत्सर्वमभिप्रेत्योक्तं **विष्णुधर्मोत्तरे**—

**'एकस्यैव समस्तस्य ब्रह्मणो द्विजसत्तम ।**
**नाम्नां बहुत्वं लोकानामुपकारकरं शृणु ॥**
**निमित्तशक्तयो नाम्नां भेदिन्यस्तदुदीरणात् ।**
**विभिन्नान्येव साध्यन्ते फलानि द्विजसत्तम ॥**
**यच्छक्तिमन्नाम यस्य तत्तस्मिन्नेव वस्तुनि ।**
**साधकं पुरुषव्याघ्र सौम्यक्रूरेषु वस्तुषु ॥**

इति । तेनेदमपि सिध्यति । अन्नकामान्नदायै नम इति, वसुकामो वसुदायै नम इति, भीतो भयापहायै नम इति, बद्धो बन्धमोचन्यै नम इति जपेदित्यादि । यद्यपि **वायुपुराणे**–

**'अरण्ये प्रान्तरे वापि जले वापि स्थलेऽपि वा ।**
**व्याघ्रकुम्भीरचोरेभ्यो भयस्थाने विशेषतः ॥**
**स्वपंस्तिष्ठन्व्रजन्मार्गे प्रजपन्भोजने रतः ।**
**कीर्तयेत्सततं देवीं स वै मुच्येत बन्धनात् ॥',**

इति देवीनामकीर्तनसामान्यस्यैव बन्धनिवर्तकत्वमुक्तम् । **वामकेश्वरतन्त्रेऽपि**–

**'मनसा संस्मरत्यस्या यदि नामापि साधकः ।**
**तदैव मातृकाचक्रे विदितो भवति प्रिये ॥'**

इति नामस्मरणसामान्यस्य मातृचक्रान्तं प्रसिद्धिः फलमुक्तम् । तथापि चतुर्धाकरणन्यायेन **विष्णुधर्मोत्तर**वचनेनैतेषामुपसंहारादत्रत्यो नामशब्दो भयापहत्येत्यादिनामविशेषपरत्वेन व्यवतिष्ठते । अत एव नामविशेषाश्रयेण फलविशेषः **काशीखण्डे** स्मर्यते–

**'उमानामामृतं पीतं येनेह जगतीतले ।**
**न जातु जननीस्तन्यं स पिबेत् कुम्भसम्भव ॥**
**उमेति द्व्यक्षरं मन्त्रं योऽहर्निशमनुस्मरेत् ।**
**न स्मरेच्चित्रगुप्तस्तं कृतपापमपि द्विज ॥'**

इत्यादि । नन्वेवंसति फलश्रुतौ सर्वफलकत्वोक्तेरप्यनेनैव न्यायेनोपसंहारः प्रसज्जते । ततश्च **सर्वरोगप्रशमनी**मित्यादिना वक्ष्यमाणस्य सर्वफलप्रदत्ववचनस्य नातीव सार्थक्यम् । न चार्थवादत्वेन सार्थक्यम् । वेदे तथा सुवचत्वेपि **पुराणे**ष्वसम्भवात् । तदुक्तं **बृहन्नारदीये**–

**'पुराणेष्वर्थवादत्वं ये वदन्ति द्विजाधमाः ।**
**तैरर्जितानि पुण्यानि तद्वदेव भवन्ति वै ॥**
**समस्तकर्मनैर्मूल्यसाधनानि नराधमः ।**
**पुराणान्यर्थवादानि ब्रुवन्नरकमश्नुते ॥'**

इत्यादीति चेत् । मैवम् । तत्तन्नाम्नां शक्तिभेदेन फलभेदे सिद्धे तत्समष्ट्यनुवादकत्वेन तत्सार्थक्यसम्भवात् । न चानुवादस्याप्यर्थानुवादान्तः पातित्वेनोक्तनिषेधवाक्यविरोधः । तत्रत्यार्थवादपदस्यात्मवपोत्खेदनादिवाक्यसमानयोगक्षेमगुणवादपरत्वात् । **'प्रतिमासु शिलाबुद्धिं कुर्वाणो नरकं व्रजे'**दित्यादौ शिलात्वे सत्येव शिलाबुद्धिनिषेधस्य शिलान्तरसाधारणदेवतानाविर्भावबुद्धिनिषेधपरत्ववत् । वस्तु-

तस्तु **'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासा'**विति वाक्यस्य **'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेते'**त्यनेन फलांशेनोपसंहारः । **'न हिंस्यात्सर्वाभूतानी'**तिनिषेधस्य **'न ब्राह्मणं हन्या'**दित्यनेनापि नोपसंहार इति सिद्धान्तः। विशेषकाकाङ्क्षायां सत्यामेवोपसंहारावतारात् । अनयोर्विधिनिषेधयोः सर्वपदघटितत्वेन विशिष्यविशिष्यैव सर्वेषां फलानां प्राणिनां चोपस्थित्या भावनान्वये कीदृशं फलं किंजातीयः प्राणीति विशेषाकाङ्क्षाया अनुदयात् । तदुक्तं **तन्त्रवार्तिके**—

**'सामान्यविधिरस्पष्टः संह्रियेत विशेषतः ।**
**स्पष्टस्य तु विधेर्नान्यैरुपसंहारसम्भवः ॥'**

इति । तता च प्रकृतेऽपि सर्वेभ्य कामेभ्य एकैकं नामेति विधिपर्यवसानस्यावश्यकत्वाद् **'यच्छक्तिमन्नाम यस्ये'**ति **विष्णुधर्मोत्तर**वचनस्य **पाद्यवायवीय**देवीनामसामान्याश्रितविध्युपसंहारकताया नामांशे स्वीकारेऽपि फलांशे तदस्वीकारः । सर्वपदघटितस्यैव विधिपर्यवसानस्य बहुभिर्वचनैः सिद्धत्वात् । तथा च देवीवचनम्—

**'कीर्तयेन्नामसाहस्रमिदं मत्प्रीतये सदा ।**
**मत्प्रीत्या सकलान्कामाँल्लभते नात्र संशयः ॥'**

इति । **कालिकापुराणे**ऽपि—

**'ये स्तुवन्ति जगन्मातर्भवतीमम्बिकेति च ।**
**जगन्मयीति मायेति सर्वं तेषां प्रसिध्यति ॥'**

इति । **विष्णुपुराणे** देवींप्रति विष्णुवचनम्—

**'ये त्वां मायेति दुर्गेति वेदगर्भाम्बिकेति च ।**
**भद्रेति भद्रकालीति क्षेम्या क्षेमंकरीति च ॥**
**प्रातश्चैवापराह्णे च स्तोष्यन्त्यानम्रमूर्तयः ।**
**तेषां हि प्रार्थितं सर्वं मत्प्रसादाद्भविष्यति ॥'**

इति । **याज्ञवल्क्यस्मृतौ**—

**'विनायकस्य जननीमुपतिष्ठेत्ततोऽम्बिकाम् ।**
**दूर्वासर्षपपुष्पाणां दत्त्वार्घ्यं विनिवेदयेत् ॥'**

इति । विधायोपस्थानमन्त्रं लिङ्गं च समर्यते—

**'रूपं देहि यशो देहि भगं भगवति दे हि मे ।**
**पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे ॥'**

इति । **देवीभागवते**ऽपि–

**'न तदस्ति पृथिव्यां वा दिवि प्राप्यं सुदुर्लभम् ।**
**प्रसन्नायां शिवायां यदप्राप्यं नृपसत्तम ॥**
**ते मन्दास्तेऽतिदुर्भाग्या रोगैस्ते समुपद्रुताः ।**
**येषां चित्ते न विश्वासो भवेदम्बार्चनादिषु ॥'**

इति।**हरिवंशे**ऽपि–

**'ब्रह्मा विष्णुश्च रुद्रश्च चन्द्रसूर्याग्निमारुताः ।**
**अश्विनौ वसवश्चैव विश्वे साध्यास्तथैव च ॥**
**महेन्द्रः सहपर्जन्यो धाता भूमिर्दिशो दश ।**
**गावो नक्षत्रवंशाश्च ग्रहा नद्यो ह्रदास्तथा ॥**
**सरितः सागराश्चैव नानाविद्याधरोरगाः ।**
**तथा नागाः सुपर्णाश्च गन्धर्वाप्सरसां गणाः ॥**
**कृत्स्नं जगदिदं प्रीतं देवीनामानुकीर्तनात् ।'**

इति । न चैवं पर्यवसन्नस्य विधेरन्नदावसुदादिनामभेदेन बहुरूपत्वात्सर्वेभ्यः कामेभ्योऽन्नदेति नाम कीर्तयेदिति विधिनैव सिद्धे **विष्णुधर्मोत्तरीय**स्यान्नकामोन्नदेति नाम कीर्तयेदिति विशेषविधिवैयर्थ्यापत्तिरिति वाच्यम् । अस्य पर्यनुयोगस्य स्वर्गकामविधावपि तुल्यत्वात् । अनेन विधिनैव स्वर्गफलकत्वं ज्ञात्वानुष्ठाने स्वर्गो नान्यथेत्यभ्युदयशिरस्कत्वादिरूपसमाधानस्यापि तुल्यत्वात् । परमार्थतस्तु तन्त्राणां स्मृतित्वाविशेषेऽपि मन्वादिस्मृतीनां कर्मकाण्डशेषत्वं तन्त्राणां तु ब्रह्मकाण्ड-शेषत्वमिति सिद्धान्तादुत्तरमीमांसीयदेवताधिकरणन्यायेन देवताविग्रहादेस्तान्त्रिकैरङ्गी-कारात्तत्तत्कामनापूरकत्वादिगुणकं ब्रह्म ध्यातव्यमिति द्योतनमेव विशेषविधेः प्रयोजनम् । तथा च **श्रुतिः–'अन्नादो वसुदानो विन्दते वसु य एवं वेदे'**ति । अन्नमास-मन्तादत्त इत्यन्नादः । वसुनो धनस्य दानं यस्मात्स वसुदानश्च परमेश्वर-स्तमेवंप्रकारेण यो वेदोपास्ते स वस्वन्नं च विन्दत इति तदर्थात् । किञ्च । 'अन्नदायै नम' इति मन्त्रेण सार्वकाम्यवचनेन भयहरणकामप्रयोगे क्रियमाणे गौणमुख्याधि-करणन्यायेन तस्य मन्त्रस्य जघन्यवृत्त्या भयापहत्वप्रकारकस्मृतिजनकतायाः सिद्धत्वेऽप्यन्नकामप्रयोगे मुख्यवृत्त्यैवान्नप्रदत्वप्रकारकस्मृतिजनकतया देवताया अपि झडित्यर्थोपस्थितिस्तत्प्रसादोऽपि झडित्येव स्यादिति विशेषद्योतनमपि प्रयोजनम् । अतएव **स्कान्दे सूतगीतायां** नामसु गौणमुख्यभेदेन फलभेदः स्मर्यते ।

**'नामानि सर्वाणि तु कल्पितानि**
**स्वमायया नित्यसुखात्मरूपे ।**
**तथापि मुख्यास्तु शिवादिशब्दा**
**भवन्ति संकल्पनया शिवस्य ॥**

**मुख्यशब्दजपतो मुनीश्वराः**
**सत्यमेव परमेश्वरो भवेत् ।**
**तस्य वक्त्रकमले सदाशिवो**
**नृत्यतिस्म परमेशया सह ॥'**

इत्यलं विस्तरेण ॥ ८ ॥

इदानीं छलाक्षरसूत्रोक्तरीत्यैव प्रतिनामधेयमक्षराणि संचिख्यासुः श्लेषेण गुरुं प्रणमति–

**मन्त्राद्योजयति गुणी नवचरणस्त्रिंशदर्धाभः ।**
**एकार्धत्रयदेहो भूमदहारीतसप्तपाल्लेशः ॥ ९ ॥**

मन्त्राणामाद्यो मूलकारणं श्रीगुरुसार्वभौमो जयति सर्वोत्कर्षेण वा वर्तते ।

**'मोक्षस्य मूलं यद् ज्ञानं तस्य मूलं महेश्वरः ।**
**तस्य पञ्चाक्षरो मन्त्रो मन्त्रमूलं गुरोर्वचः ॥'**

इति वचनात् । तमेव विशेषणैर्विशिनष्टि । गुणी परमार्थतो निर्गुणोऽपि-**'विद्यावतारसिध्यर्थं स्वीकृतानेकविग्रहः ।'**' नवे नित्यनूत्ने चरणे रक्तशुक्लाख्ये यस्य सः । तदुक्तम्–

**'वन्दे गुरुपदद्वन्द्वमवाङ्मनसगोचरम् ।**
**रक्तशुक्लप्रभामिश्रमतर्क्यं त्रैपुरं महः ॥"**

इति । अथवा **'पवित्रं चरणं चक्रं लोकद्वारं सुदर्शनमि'**ति कोशान्नवचक्रात्मकः । त्रैलोक्यमोहनादिसर्वानन्दमयान्तचक्रराजाभिन्न इति यावत् । त्रिंशतामर्धं पञ्चदशाक्षराणि श्रीविद्यान्तर्गतानि तदाभस्तत्तुल्यस्तद्रूप इत्यर्थः । **'निरञ्जनः परमंसाम्यमुपैती'**ति श्रुतावभेदेऽपि तुल्यतोक्तिदर्शनात् । एको मुख्यश्चासावर्धत्रयदेहश्च अर्धं च त्रयं च । अध्युष्टमिति यावत् । तादृशी सार्धत्रिवलयाकारा कुण्डलिन्येव सर्वदेवतारूपा देह आत्मा यस्य सः । भूतुल्यो मदो महामद इत्यर्थस्तं हरति । यद्वा भूमा ब्रह्मानन्दस्तं दत्तेऽतएव हारी मनोहरः । **'यो वै भूमा तत्सुखमि'**ति श्रुतेः । प्ताः जटाः ताभिः सहितः सप्तः, परमशिवस्तत्पादौ लाति आदत्ते विषयीकरोतीति सप्तपाल्ला शिवपदभक्तिः इता प्राप्ता सप्तपाल्ला येन सः अतएवेशः परमशिवः शिवभक्तिबललभ्यतदभेद इति समुदितार्थः । प्ता इत्येकाक्षरस्य जटावाचकत्वं **'स प्ताः सप्ताश्वनुन्नारुणकिरणनिभाः पातु बिभ्रत्रित्रनेत्रः'** इतिप्रयोगे प्रसिद्धम् । **आदित्यपुराण**प्रसिद्धपश्चिमोदधितीरस्थसप्तकोटीश्वरनामनिर्वचनश्लोकेऽपि–

**"अद्याप्यस्ति विपश्चितामपि महत्सन्देहकोटिद्वयं**
**यः श्रुत्या जगदीश्वरो निगदितः सप्तः किमप्तोऽथ सः ।**

**तत्रेशः प्रथमैव कोटिरिति किं निश्चायनाय स्फुटं**
**नाम्नैव प्रथितो भवत्परशिवः श्रीसप्तकोटीश्वरः ॥"**

इति । अत्र सप्ताप्तशब्दौ सजटनिर्जटवाचिनौसन्तौ शिवविष्णुपरौ । ईदृश्या च रीत्योत्तरश्लोकानामपि प्रकृतोऽप्रकृतो वार्थो वर्णयितुं शक्योऽपि ग्रन्थविस्तर-भयात्पण्डितैरूहितुं शक्यत्वाच्च निष्प्रयोजनत्वाच्च तमुपेक्ष्य नामविभागपरत्वेनैव व्याख्यान्तरं प्रस्तूयते । मन्त्राद्यो जयति मन्त्राणामादावुच्चारणीयः प्रणवो जयति । **'ॐकारो वर्तुलस्तारो मन्त्राद्यः प्रणवो ध्रुवः'** इति **मातृकाकोशात्** । **कालिकापुराणे– 'स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यते'** इत्यनेनादावन्ते चोच्चार्यत्वेन प्रणवस्य विधानात् । अतएव **शाट्यायनः– 'दानयज्ञतपस्वाध्यायजपध्यानसन्ध्योपासनप्राणायामहोमदेवपित्र्यमन्त्रो-च्चारणब्रह्मारम्भादीनि प्रणवमुच्चार्य प्रवर्तयेदि'**ति । **कात्यायनो**ऽपि प्रणवं प्रकृत्य,

**'ब्रह्मारम्भे विरामे च यागहोमादिषु शान्तिपुष्टिकर्मसु ।**
**चान्येष्वपि काम्यनैमित्तिकादिषु सर्वेषु विनियोगोस्य ॥'**

इति । **दाल्भ्यपरिशिष्टे**ऽपि–

**'ब्रह्मयज्ञो जपो होमो देवर्षिपितृकर्म च ।**
**अनोंकृत्य कृतं सर्वं न भवेत्सिद्धिकारकम् ॥"**

इति । अतएव **'ॐकारेण सर्वा वाक् संतृण्णे'**ति **श्रुतिः** । सर्वो मन्त्रः संपुटित इति तदर्थः । **'उतृदिर् हिंसानादरयो'**रिति धातोः समुपसृष्टत्वे उभयमेलनार्थकतया दीर्घसोमे संतृण्णाविति विधौ न संतृणत्यसंतृणेहि हनु इति निषेधेऽपि प्रयोगदर्शनात् । ननु सहस्रनामस्तोत्रस्य मन्त्रत्वे प्रणवपुटितत्वं युज्येत तदेव तु न सम्भवति । मानाभा-वात् । अतएव **त्रिशत्यां** मन्त्रत्वस्याहत्य विधिः –

**'केवलं नामबुद्धिस्ते न [ कार्या तेषु ] कुम्भज ।**
**मन्त्रात्मकत्वमेतेषां नाम्नां नामात्मतापि च ॥'**

इति चेत् न । तच्चोदकेषु मन्त्राख्येत्यधिकरणे मन्त्रप्रसिद्धिविषयत्वस्यैव मन्त्रलक्षणत्वोक्तेः । अत्र च तान्त्रिकाणां मालामन्त्रत्वव्यवहारदर्शनात् **'शिवशङ्कर-रुद्रेशमहेश्वरमृडाव्यये'**तिसन्दर्भे तु मन्त्रप्रसिद्ध्यभावेन नामत्वमात्रम् । केवलं नामबुद्धिस्ते इति त्वीदृशसन्दर्भस्य परिसंख्यापकं न पुनः सहस्रनामसमाख्यातस्य । अत एव **'सहस्रनाममन्त्रोऽयं जपितव्यः शुभाप्तये'** इत्यादिवचनानि **गणेशसहस्रनामादिषु** दृश्यन्ते इत्याद्यन्तयोः प्रणव आवश्यकः । तस्य वर्णभेदेन स्वरभेदादयः **कलिकापुराणे** स्मर्यन्ते–

**"स उदात्तो द्विजातीनां राज्ञां स्यादनुदात्तकः ।**
**प्रचितश्चोरुजातानां मनसापि तथा स्मरेत् ॥**

**चतुर्दशस्वरे योसौ शेष औकारसंज्ञिकः ।**
**स चानुस्वारचन्द्राभ्यां शूद्राणां सेतुरुच्यते ॥**
**शूद्राणामादिसेतुर्वा द्विसेतुर्वा यदृच्छया ।**
**द्विसेतवः समाख्याताः सर्वथैव द्विजातयः ॥'**

इति । द्विजातीनां ब्राह्मणानाम् । राज्ञा क्षत्रियाणाम् । ऊरुजातानां वैश्यानाम् । मनसापीति वैश्यमात्रान्वयि । चन्द्रो नादः । सेतुः प्रणवः । द्विसेतव आद्यन्तप्रणवोच्चारणशीलाः । द्विजातयस्त्रैवर्णिका इति तदर्थः । यत्त्वा**थर्वणब्रह्मणे** वेदभेदेन स्वरव्यवस्था श्रूयते । स्वरितोदात्त एकाक्षर ओंकार **ऋग्वेदे,** त्रैस्वर्योदात्त एकाक्षर ओंकारो **यजुर्वेदे,** दीर्घप्लुतोदात्त एकाक्षर ओंकारः **सामवेदे,** ह्रस्वोदात्त एकाक्षर ओंकारोऽ**थर्ववेदे सामवेद**विषयिष्वेवेति नात्रोपयुज्यते ।

एवं प्रणवं प्रदर्श्य श्रीमातेत्यादीनि त्रिषष्टिनामानि विभज्यन्ते—गुणीत्यादिना । यद्यप्यत्र मूलकारैः स्वशास्त्रोपयुक्तपरिभाषा न्यायमूलत्वेन विदुषां सुलभा इत्याशयेनैकीकृत्य न दर्शितास्तथापि शिष्यानुजिघृक्षयास्**माभि**रत्र कथ्यते । कटपयवर्गभवैरिति पूर्वोक्तश्लोके ङकार-ञकारयोः शून्यसङ्केतः कृत । इह तु दशत्वसंख्यायां क्रियते । तस्या एवापेक्षणात् । शून्यस्यानपेक्षणाच्च । ककारादिभिर्द्योतितसंख्याया आश्रयास्त्वेकैकनामान्तर्गताक्षराणि स्वररूपाणि । **'चतुरश्छयतावाद्यक्षरलोपश्चे'**ति **पणिनिसूत्रे, 'एष वै सप्तदशः प्रजापति'**रित्यादि**श्रुतिषु** च संख्यायाः स्वरमात्राश्रयत्वदर्शनात् । एकद्वित्र्यादिसंख्यावाचकपदानि तु यत्र पादोऽर्धो वा विशेष्यत्वेन निर्दिश्यते तत्र तानि पादार्थात्मकनामसंख्यापराणि । यत्र च विशेष्यनिर्देशमन्तरेण प्रयुज्यन्ते तत्र समसंख्याकाक्षरनामसंख्यापराणि । तत्राप्यर्धस्यार्धयोरर्धानां वा समाप्तिपर्यन्तं यानि नामानि तत्पराण्येव न पुनस्त्रिपादपञ्चपादान्तर्गतनामपराणि । एकद्वित्रिचतुःपादाद्यन्तर्गतवर्णानां न साङ्केतिकार्थं प्रयोग इति । एतदुदाहरणानि न्यायाश्चावसर एव व्यक्तीभविष्यन्ति । गुणी गकार-णकारौ त्रित्वपञ्चत्वसंख्यापरौ तस्याश्च नामविशेष्यकत्वे त्रीणि पञ्च च नामानीति पर्यवसानात्तावता कतिभिरक्षरैरेकैकं नामेत्याकाङ्क्षाया अनिरासेनाकाङ्क्षितविधानं ज्याय इति सोमचयनेष्ट्यधिकरणन्यायेनाक्षराण्येव विशेष्याणि स्वीक्रियन्ते । तेषां च नामान्तरसांकर्येण विशेष्यत्वस्वीकारेऽप्युक्तदोषतादवस्थ्यादेकस्य नाम्नस्त्रीण्येवाक्षराणीत्यादिरेवार्थः सिध्यति । चतुरक्षरान्तर्गताक्षरत्रयस्यावयुत्यानुवादे वैयर्थ्यात् । एतेन अज्राट् इति **छलाक्षरसूत्रे**ऽचां षोडशसु सङ्केतः । इयं च संख्याक्षरनिष्ठा हल्भिरुक्ता संख्या तु नामनिष्ठा । ततश्च इत्युक्ते एकं नाम त्र्यक्षरमित्यर्थ इति भ्रमो निरस्तः । प्रकृते वर्णैकत्वादेवैकं नामेत्यर्थस्य लाभात् । प्रथमं नामेति तु वर्णप्राथम्यादेव सेत्स्यतीत्यंशस्तु सूत्रेष्वत्रापि समानः । नव चरणा यस्मिन्वाक्समूहे स नवचरणः ।

*तस्य नवधा विभज्य निदेशबलादेकैकस्य चरणस्यैकैकनामात्मकत्वं ध्वन्यते । तथा च नवशब्दोदिता संख्या नामस्वेवान्वेति नाक्षरेषु । अत्र नवशब्दान्नवत्वसंख्याया इव नकारवकारोदितदशचतुःसंख्ययोर्झडिति न प्रतीतिः । अतः प्रतीतिशैघ्र्यमान्थर्याभ्यां संख्यावाचकपदाक्षराणामिह सम्भूयैकार्थप्रत्यायकत्वमेव । एकत्र चरणादिशब्द-समवधानमहिम्ना संख्यावाचकशब्दानां नामधेयान्वितस्वार्थकत्वमेव नाक्षरान्वित-स्वार्थकत्वमिति सिद्धे चरणादिविशेष्यसमर्पकपदाभावेऽपि नामान्वितस्वार्थकत्वं क्लृप्तं न दण्डेन पराणुद्यते । एकत्र निर्णीतः शास्त्रार्थोऽसतिबाधकेऽन्यत्रापीति न्यायात् । आदित्यः प्रायणीयः पयसिचरुरिति विधेरस्थालीवचनस्यापि चरुशब्दस्यादिति-मोदनेनेति वाक्यशेषवशादोदनार्थकत्वे निर्णीते सौर्यं चरुमित्यादौ वाक्यशेषाभावेऽ-प्योदनार्थकत्वानपायात् । ईदृशासांकार्यसिध्यर्थमेव चाक्षरसंख्यायां वाच्यायां गुणादि-शब्दान्तराणामेव प्रयोगो न पुनर्नवदशादिसंख्यापदाक्षराणामिति व्यवस्थापि सिध्यति । त्रिंशदर्धाः । समांशस्याप्यंशत्वमात्रविवक्षायामनियतलिङ्गोऽर्धशब्दः । '**अर्धं नपुंसक**'मिति सूत्रे कः पुनः पुलिंङ्ग इति भाष्यस्यानियतलिङ्गपरत्वेनैव **कैयटेन** व्याख्यानात् । '**वा पुंस्यर्ध**' इति **कोशाच्च** । तेन षोड़शषोडशाक्षराणि त्रिंशन्नामानीत्यर्थः । भकारस्य चतुरक्षरात्मकमेकनामेति । एकपदस्य तदुत्तरमेकनामेत्यर्थे सिद्धन्यायात् द्वादशाक्षर-मिति सिध्यति । एकस्मिन्नर्धे तावत एव परिशेषात् । अर्धात्परतोऽर्धान्तरग्रहणेन तन्मध्ये नामसमाप्त्ययोगात् । '**यतिर्विच्छेद**' इति **पिङ्गलसूत्रेणा**र्धान्तेऽवसानविधानात् । अवसानस्य च पदसमाप्तिव्याप्यत्वात् । न चार्धान्यूनमेव नाम समाप्यतामिति वाच्यम् । तथात्वे एकपदवैयर्थ्यात् । रूपपदेन द्वादशसंख्याया उक्तपरिभाषानुसारेण वक्तुं शक्यत्वेऽपि द्व्यक्षरैकाक्षरे नामनी इति भ्रमो माप्रसज्जीति तथा नोक्तम् । अत एव दशाधिका संख्या पारिभाषिकानेकाक्षरसाध्यत्वान्नेह परिभाषया निर्दिश्यत इत्यपि नियमो द्रष्टव्यः । ततोऽर्धत्रयं त्रीणि नामानि ततोष्टाभिरष्टाभिरक्षरैर्द्वे । ततश्चतुर्भिः पञ्चभिरष्टाभिर्द्वाभ्यां षड्भिश्चाक्षरैः षण्नामानि । ततः सप्तभिश्चरणैः सप्त । ततस्त्रिभिः पञ्चभिर्द्वे नामनी इत्येवं श्लोकार्थः ॥ ९ ॥*

**अथ नाम्नामर्थः प्रस्तूयते ।** तेषु स्त्रीपुंनपुंसकलिङ्गानां नाम्नां विशेषणरूपत्वेन तेषां क्रमेण चिदात्मा ब्रह्मेत्यादीनि विशेष्यसमर्पकपदानि निर्दिष्टानि । पदानु-सारीण्येव हि लिङ्गानि न तु वास्तविकं ब्रह्मण्येकमपि लिङ्गं '**न स्त्री न षण्ढो न पुमानजेतुरि**'ति **विष्णुभागवतात्** ।

**'न त्वमम्ब पुरुषो न चाङ्गना चित्स्वरूपिणि न षण्ढतापि ।**
**नापि भर्तुरपि ते त्रिलिङ्गता त्वां विना न तदपि स्फुरेदयम् ॥'**

इति । कालिदासोक्तेश्च । अत एव देवताया ध्यानेप्यैच्छिक एव विकल्पः स्मर्यते ।

'पुंरूपं वा स्मरेद्देवि स्त्रीरूपं वा विचिन्तयेत् ।
अथवा निष्कलं ध्यायेत्सच्चिदानन्दलक्षणम् ॥'

इति विशेष्यनिर्देशायैव व लिङ्गत्रयसाधारणस्य प्रणवस्यादौ प्रयोगः । तस्य च समस्तस्य ब्रह्मैवार्थः । 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति भगवद्वचनात् । अकारोकारमकारनादबिन्दुभिर्व्यस्तैर्ब्रह्मविष्णुरुद्रेश्वरसदाशिवानां कथनात्तत्पञ्चकरूपमिति वा । तदुक्तं बृहन्नारदीये–

'अकारं ब्रह्मणो रूपमुकारं विष्णुरूपवत् ।
मकारं रुद्ररूपं स्यादर्धमात्रं परात्मकम् ॥
वाच्यं तत्परमं ब्रह्म वाचकः प्रणवः स्मृतः ।
वाच्यवाचकसम्बन्धस्तयोः स्यादौपचारिकः ॥'

इति । रूपपदं वाच्यवाचकयोरभेदाभिप्रायेणाभिन्नपरम् । अत एव भेदघटितो वाच्यवाचकभावसम्बन्ध औपचारिकः अमुख्यः । व्यावहारिक इत्यर्थः । अनेनैवाशयेन पुष्पदन्तोप्याह– 'समस्तव्यस्तं त्वां शरणद गृणात्योमिति पद'मिति । यज्ञवैभवखण्डे तु नानाविधा अर्था वर्णिताः –

'ज्ञातार्थे ज्ञातमित्येवं वक्तव्ये सति तद्विना ।
ओमिति प्राह लोकोऽयं तेन ज्ञातस्य वाचकः ॥
अज्ञातार्थे तथाज्ञातमिति प्राप्ते तु वाचके ।
ओमिति प्राह लोकोऽयं तेन ज्ञातस्य वाचकः ॥
सन्दिग्धार्थं तु सन्दिग्धमिति प्राप्ते तु वाचके ।
ओमिति प्राह लोकोऽयं तेन सन्दिग्धवाचकः ॥
आकाशादिपदार्थानां ये शब्दा वाचका भुवि ।
विना तानखिलान्शब्दान् लोक ओमिति भाषते ॥
अतः प्रयोगबाहुल्यात् घटकुड्यादिशब्दवत् ।
आकाशादिपदार्थानां वाचकः प्रणवः स्मृतः ॥
सर्वावभासकत्वेन ब्रह्मणा सदृशः स्मृतः ।
सर्वावभासकं मन्त्रमिमं जपति यो द्विजः ॥
सर्वमन्त्रजपस्योक्तफलं स लभतेऽचिरात् ।'

इति । बृहत्पाराशरस्मृतिरपि–

'प्रणवो हि परं तत्त्वं त्रिवेदं त्रिगुणात्मकम् ।
त्रिदेवतं त्रिधामं च त्रिप्रज्ञं त्रिरवस्थितम् ॥

त्रिमात्रं च त्रिकालं च त्रिलिङ्गं कवयो विदुः ।
सर्वमेतत्त्रिरूपेण व्याप्तं हि प्रणवेन तु ॥
अग्निः सोमश्च सूर्यश्च त्रिधामेति प्रकीर्तितम् ।
अन्तःप्रज्ञं बहिःप्रज्ञं घनप्रज्ञमुदाहृतम् ॥
हृत्कण्ठे तालुके चेति त्रिस्थानमिति कीर्त्यते ।
अकारोकारमकारैस्त्रिमात्र उच्यते स तु ॥
कर्मारम्भेषु सर्वेषु त्रिमात्रं तं प्रकीर्तयेत् ।
स्थित्वा सर्वेषु शब्देषु सर्वं व्याप्तमनेन हि ॥
न तेन हि विना किञ्चिद्वक्तुं याति गिरा यत ।'

इति । गोपथब्राह्मणेऽपि—'ओंकारं पृच्छामः ।। को धातुः किं प्रातिपदिकं किं नामाख्यातं किं लिङ्गं का विभक्तिः कः स्वरः' इत्यादिना महता खण्डेन तत्स्वरूपनिर्णयः प्रपञ्चसारे प्रणवपटले व्याख्यातृभिः पद्मपादाचार्यैरपि प्रणवार्थदीपिकादिग्रन्थान्तरे च कृतो भूयानस्य विस्तरो द्रष्टव्यः ।

लोके हि दुःखदशायां मातुः स्मरणं प्रसिद्धम् । अनुभूतास्तु मातरो न तापत्रयहरणसमर्थाः । तदुक्तमभियुक्तैः—

'नानायोनिसहस्रसम्भववशाज्जाता जनन्यः कति
प्रख्याता जनकाः कियन्त इति मे सेत्स्यन्ति चाग्रे कति ।
एतेषां गणनैव नास्ति महतः संसारसिन्धोर्विधे-
र्भीतं मां नितरामनन्यशरणं रक्षानुकम्पानिधे ॥'

इति । अतो दुरन्तदुःखहरणक्षमासु सर्वोत्तमा जगन्मातैव स्वस्मिन्दयावत्त्वापादनाय मातृत्वेनैव स्तोतव्या स्तोत्रसन्दर्भप्रयोजनमोक्षादिरूपफलत्वेनापि स्तोतव्येत्या-शयेनाह—

**श्रीमाता श्रीमहाराज्ञी श्रीमत्सिंहासनेश्वरी ।**

श्रीति । श्रियो लक्ष्म्या माता श्रीरिति गीरुपलक्षणं तद्वाचकमेव वा । तथा च व्याडिकोशः –

---

बालातपा

॥ श्रीगणेशाय नमः ॥

नमः श्रीगुरुनाथस्य चरणाम्बुजभास्वते ।
महामोहनिशोद्भूतदुःखभूतौघशत्रवे ॥
सौभाग्यभास्कराख्ये ते (ख्येऽस्मिन्) भाष्ये भास्करनिर्मिते ।
समस्तविद्यासिद्धान्तसाररत्नमहोदधौ ॥

**'लक्ष्मीसरस्वतीधीत्रिवर्गसम्पद्विभूतिशोभासु।**
**उपकरणवेषरचनाविद्यासु श्रीविद्ये प्रथिते ॥'**

इति । तथा च श्रीगीर्जनकत्वान्नेयं तत्समानकोटिभूता रुद्राणी किंतु तत्त्रितयजनयित्री परशिवमहिषी परा भट्टारिकेत्युक्तं भवति । यद्वा श्रियं लक्ष्मीं माति परिच्छिनत्ति । परिच्छेद्यापेक्षया परिच्छेदस्याधिक्यावश्यंभावादनवधिकश्रीरूपो मोक्ष इत्यर्थः । **'सा हि श्रीरमृता सतामि'**ति **श्रुतिप्रसिद्धम्** । त्रयीं माति ब्रह्मणे बोधयति परिच्छेदेन व्यसृजति वा । **'यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मा'** इति **श्रुतेः** । प्राथमिकाभिव्यक्तिरूपा व्यासरूपा वेत्यर्थः । श्रियं विषं माति कण्ठे स्थापयतीति वा अनयोः पक्षयोर्नाम पुल्लिङ्गं भवति । शिवशक्त्योरभेदात्प्रकाशो विमर्शो वा विशेष्यः । 'श्रीमात्रे नम' इति मन्त्रे विशेषाभावेऽप्यर्थानुसन्धाने विशेषः । अथवा 'अभियुक्तानां नाम श्रीपदपूर्वं प्रयुञ्जीत । श्रीचक्रश्रीशैलंविद्याश्रीफलादिकव'दित्यभियुक्त-प्रसिद्धेर्मातेति पदमात्रस्योत्पादिकेत्यर्थः । विनिगमनाविरहात्सर्वेषामिति लाभात् । **'यतो वा इमानि भूतानि जायन्ते'** इति अविशेषश्रुतेश्च । अतएव निरुपपदा एवेश्वरेशानादिशब्दाः परशिववाचकाः । अत**श्च** **'ईशानो भूतभव्यस्ये'**त्यादाविव जगन्मातेति क्वचित्प्रतिसम्बन्धिनिर्देशेऽपि मातृपदमात्रस्य त्रिपुरसुन्दरीवाचकत्वं न विहन्यते । यद्वा । हसकलरडेति व्यञ्जनषट्कस्य बालायाः स्वरत्रयेणान्ते योजने कूटत्रयात्मको जायमानो मन्त्रो मातेत्युच्यते । **'माया कुण्डलिनी क्रिया मधुमतीति'** मन्त्रपारायणोद्धारश्लोके मातृपदस्य तथा वृद्धैर्व्याख्यानादिति मन्त्रोद्धारपरा व्याख्यावगन्तव्या ।

राजशब्दान्नान्तत्वान्ङीपि कृते पश्चान्महच्छब्देन समासे **'आन्महत'** इत्यात्वे श्रीयुक्ता महाराज्ञीति मध्यमपदलोपसमासे रूपम् । न तु महाराजशब्दाट्टित्वान्ङीप् । तथात्वे महाराजीत्यापत्तेः । सकलप्रपञ्चजातपालनेऽधिकृतेत्यर्थः । राजशब्दशक्यता-वच्छेदकनृपत्वकोटौ पालनस्य निविष्टत्वात् । तथा च श्रुतिः– **'येन जातानि जीवन्ती'**ति

---

**बालानां मन्दबुद्धीनामवगाहः सुदुर्लभः ।**
**इति मत्वा भाष्यसारं नामार्थैकप्रकाशकम् ॥**
**बालातपाख्यं श्रीदेव्याः साधकानां सुखावहम् ।**
**करोमि देवताप्रीत्यै साधकेन्द्रैर्नियोजितः ॥**

श्रीरिति भारती गौर्योरुपलक्षणम् । तथा च श्रीभारती गौरीणां माता । तेन त्रिमूर्तिशक्ति(क्ती)नां कारणभूतत्वादियं परब्रह्मणः शक्तिरित्युक्तं भवति । श्रीमात्रे इति चतुर्थ्य-न्तम् ।.अतएवेयं महराज्ञी । भारत्याद्याः केवलं राज्ञ्यः । इयं तु श्रीयुता महती राज्ञी । महाराज्ञ्यै इति च ॥ नृपाधिष्ठितमासनं सिंहवच्छ्रेष्ठत्वात् सिंहासनमित्युच्यते । अखिल प्रपञ्चसाम्राज्य-शोभायुतत्वाच्छ्रीमत् । तस्येशित्री ईश्वर्यै इति च ॥

अत्र श्रीविद्यायां निगूढस्याक्षरत्रयस्योद्धारः । तत्रैकं तावत्षोडशीकलेत्युच्यते । **'सच्छिष्यायोपदेष्टव्या गुरुभक्ताय सा कले,** ति वचनात्प्रायेणाधुनिकैर्बहुभिर्गुरुमुखाज्ज्ञातम् । तच्च **'शिवः शक्तिः काम'** इति विद्योद्धारश्लोके **सौन्दर्यलहरीव्याख्यानोल्लेखने** प्रकटीकृतं चतुर्लक्ष्मीमनुषु प्राथमिको मन्त्र इति । इतरद्वयं प्रकाशविमर्शरूपम् । तदुक्तं **संकेतपद्धतौ**—

**'अकारः सर्ववर्णाग्र्यः प्रकाशः परमः शिवः ।**
**हकारोऽन्त्यः कलारूपो विमर्शाख्यः प्रकीर्तितः ॥'**

इति । अनयोपरि रहस्यत्वादेव—

**"मध्यबिन्दुविसर्गान्तः समास्थानमये परे ।**
**कुटिलारूपके तस्याः प्रतिरूपं वियत्कले ॥"**

इत्यादिभिर्गूढार्थैरेव श्लोकै**र्योगिनीहृदये** स्वरूपनिष्कर्षः कृतः । तत्प्रकाशनं **चास्माभिर्वरिवस्यारहस्यसेतुबन्ध** एव कृतमिति नेह्मतन्यते । राज्ञीत्यंशेन मायाराज्ञीमन्त्रोद्धारः । अत एव न टच्प्रत्ययान्तत्वेन प्रयोगः ।

नृपाधिष्ठितमासनं सिंहासनमुच्यते । आसनेषु सिंहः श्रेष्ठमित्यर्थे राजदन्तादित्वात्पूर्वनिपातः । श्रीमत्प्रपञ्चसाम्राज्यलक्ष्मीवच्च तत्सिंहासनं च तस्येश्वरी ईशित्री । सिंहाभिन्नमासनमिति वा । देव्याः सिंहासनारूढत्वात् । तदुक्तं **देवीपुराणे** नामनिर्वचनाध्याये—

**'सिंहमारुह्य कन्यात्वे निहतो महिषोऽनया ।**
**महिषघ्नी ततो देवी तथा सिंहासनेश्वरी ॥'**

इति । यद्वा सिंहशब्दो हिंसार्थकः । तदुक्तं **वैयाकरणैः**—

**'हिंसिधातोः सिंहशब्दो वशकान्तौ शिवः स्मृतः ।**
**वर्णव्यत्ययतः सिद्धौ पश्यकः कश्यपो यथा ॥'**

इति । तेन सिंहेन हिंसयाऽसनं क्षेपणं निरास इति यावत् । **'असु क्षेपणे'** इतिधातोर्ल्युट् । संहार इति समुदायार्थः । तत्रेश्वरी समर्था । तथा च **श्रुतिः**— **'यत्प्रयन्त्यभिसंविशन्तीति'**। यद्वा मकारः पञ्चसंख्यापरः । सन्ति सिंहासनसमाख्याताश्चैतन्यभैरव्यादिसम्पत्प्रदा भैरव्यन्ता अष्टौ मन्त्राः । तेषु त्रयं युग्मरूपं द्वयमेकैकरूपमित्येवं पञ्चैव दिङ्मध्यभेदेन सिंहासनानि **ज्ञानार्णवे** कथितानि ।

**'पञ्चसिंहासनगता कथं सा त्रिपुरा परा ।**
**कथयस्व महेशान कथं सिंहासनं भवेत् ॥'**

इति पृष्टे,

**'प्रथमं श्रृणु देवेशि ब्रह्मा सृष्टिकरो यदा ।**
**निश्चेतनोऽथ देवेशीं तदा त्रिपुरसुन्दरीम् ॥**
**समाराध्याभवत्कर्ता सृष्टेस्तु परमेश्वरि ।**
**ब्रह्माणं तं समाराध्य तपसा महता प्रिये ॥**
**शक्रोऽभूद्देवराजोयं पूर्वस्यां दिशि पालकः ।**
**तदा प्रसन्ना त्रिपुरा पूर्वसिंहासने स्थिता ॥'**

इत्यादिना । तेषां पञ्चसिंहासननानामीश्वरीमित्यनेन मन्त्रोद्धारः ।

एवं त्रिभिर्नामभिः सृष्टिस्थितिलयकर्तृत्वेन ब्रह्म लक्षयित्वा प्रकृतपुराणोक्त-मातृप्रादुर्भावादिकथाक्रमं प्रायेणाश्रयन्नेव तिरोधानानुग्रहापरपर्यायबन्धमोक्षप्रदत्वेनापि सप्रपञ्चं लक्षयितुमुपक्रमते—

**चिदग्निकुण्डसम्भूता देवकार्यसमुद्यता ॥ ५२ ॥**

चिदग्नीत्यादिना शिवशक्त्यैक्यरूपिणीत्यन्तेन । चित्केवलं ब्रह्म तदेवाग्निकुण्डं अविद्यालक्षणतमोविरोधित्वात् । '**अन्तर्निरन्तरनिरिन्धनमेधमाने मोहान्धकारपरिपन्थिनि संविदग्ना**'वित्यादौ चिद्वह्निरूपकप्रयोगदर्शनात् । **शक्तिसूत्रमपि**—'**चिद्वह्निरवरोहपदे छन्नोपि चिन्मात्रयामेयेन्धनं पुष्यती**'ति । तद्भाष्यं च चितिरेव विश्वग्रसनशीलत्वाद्वह्निरिति । तत्र सम्यक् अभेदेन भूतस्थितचैतन्याख्यधर्मरूपेणावस्थिता न तु जाता । '**तत्र जातः, तत्र भवः**' इति पाणिनिना भूजनिधात्वोर्भेदेन कीर्तनात् शक्तिशक्तिमतोरभेदाच्च । तदुक्तं **संक्षेपशारीरकाचार्यैः**—'**चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यते**' इति । यद्वा प्रसिद्धमग्निकुण्डमेव चित् । चिदग्निपदयोरेव वोपमितसमासः । '**ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुने**'त्यादौ रूपकदर्शनात् । तस्य कुण्डात्सम्भूता प्रादुर्भूता उत्पन्नेत्यर्थः । '**धुन्धुमारस्ततोऽभवदि**'त्यादौ भवतेरुत्पत्तावपि प्रयोगात् । तदुक्तं **रेणुकापुराणे**—'**रेणुनामाभवत्पुत्र इक्ष्वाकुकुलवर्धनः**' इत्यारभ्य तस्य तपो देवीवरं च वर्णयित्वा,

**'एतस्मिन्नन्तरे यज्ञे वह्निकुण्डाच्छनैर्द्विजा ।**
**दिव्यरूपान्विता नारी दिव्याभरणभूषिता ॥'**

इत्यारभ्य

**'वह्नेः शीतांशुबिम्बाभा सहसा निर्गता बहिः ।**
**एकैव तु जगद्धात्री द्वितीया नास्ति काचन ॥'**

---

चिद्रूपोयोऽग्निस्तत्कुण्डात्प्रादुर्भूता । भूतायै इति च ॥ देवानां कार्ये भण्डासुरवधादि तदर्थमुद्यता आविर्भूता । उद्यतायै इति च ॥ ५२ ॥

इत्यन्तेन । **ब्रह्माण्डपुराणे**ऽपि भण्डासुरपीडितं शक्रं निर्वर्ण्य '**कुण्डं योजनविस्तारं सम्यक्कृत्वातिशोभनमि**'त्यादिना चिदग्निकुण्डे देवैः कृतं स्वस्वमांसहोममुक्त्वोक्तम्–

**'होतुमिच्छत्सु देवेषु कलेवरमनुत्तमम् ।**
**प्रादुर्बभूव परमं तेजःपुञ्जमयं महत् ॥**
**कोटिसूर्यप्रतीकाशं चन्द्रकोटिसुशीतलम् ।**
**तन्मध्यतः समुदभूच्चक्राकारमनौपमम् ॥**
**तन्मध्यतो महादेवीमुदयार्कसमप्रभाम् ।'**

इत्यारभ्य

**'तां विलोक्य महादेवीं देवाः सर्वे सवासवाः ।**
**प्रणेमुर्मुदितात्मानो भूयोभूयोऽखिलात्मिकाम् ॥'**

इत्यन्तम् । नित्याया उत्पत्त्यसम्भवमाशंक्य समाधत्ते–देवकार्येति । देवानां कार्याणि भण्डासुरमहिषासुरवधादीनि तदर्थमुद्यता आविर्भूता । प्रकृतिविकृतिभावाभावेन तादर्थ्यचतुर्थ्यन्तेन सह समासायोगेऽपि शेषषष्ठ्या समासः । तदुक्तं **मार्कण्डेयपुराणे**–

**देवानां कार्यसिध्यर्थमाविर्भवति सा यदा ।**
**उत्पन्नेति तदा लोके सा नित्याप्यभिधीयते ॥'**

इति । **कूर्मपुराणे**ऽपि हिमवन्तंप्रति भगवत्योक्तम्-

**अहं वै याचिता देवैः संस्मृता कार्यगौरवात् ।**
**विनिन्द्य दक्षं पितरं महेश्वरविनिन्दकम् ॥**
**धर्मसंस्थापनार्थाय तवाराधनकारणात् ।**
**मेनादेहात्समुत्पन्ना त्वामेव पितरं श्रिता ॥'**

इत्यादि ॥ ५२ ॥

एवं चिद्रूपत्वेन प्रकाशात्मकतामुक्त्वा विमर्शात्मकं रूपमाह–

## उद्यद्भानुसहस्राभा चतुर्बाहुसमन्विता ।

उद्यदिति । भानूनां किरणानां सहस्रं यस्य स भानुसहस्रः सूर्यः । तस्योद्यत्त्वं विशेषणम् । वर्तमानकालिकोदयवत्त्वं तदर्थः । वर्तमाने लटः शतृशानचोर्विधानात् । तेन लौहित्यं ध्वन्यते । उद्यतां भानूनां रक्तसूर्याणां यत्सहस्रमानन्त्यं तेन तुल्येति वा । अतिलोहितेति फलितोऽर्थः । उक्तं हि **स्वतन्त्रतन्त्रे**–

---

उद्यां(द्यतां) भानूनां रक्तसूर्याणां यत्सहस्रं तदिव आभा यस्याः । आभायै इति च ॥ चतुर्भिर्बाहुभिः सम्यगतिसुन्दरतया अन्विता युता । अन्वितायै इति च ॥

**'स्वात्मैव देवता प्रोक्ता ललिता विश्वविग्रहा ।**
**लौहित्यं तद्विमर्शः स्यादुपास्तिरिति भावना ॥'**

इति । **वामकेश्वरतन्त्रे**ऽपि- **'स्वयं हि त्रिपुरादेवी लौहित्यं तद्विमर्शनमि'**ति । ईदृश-प्रकाशविमर्शसामरस्यापन्नाया देव्यास्त्रीणि रूपाणि स्थूलं सूक्ष्मं परं चेति । करचरणादिविशिष्टं स्थूलम् । मन्त्रमयं सूक्ष्मम् । वासनामयं परम् । तदुक्तं **योगवासिष्ठे भगवता**—

**'सामान्यं परमं चेति द्वे रूपे विद्धि मेऽनघ ।**
**पाण्यादियुक्तं सामान्यं यत्तु मूढा उपासते ॥**
**परं रूपमनाद्यन्तं यन्ममैकमनामयम् ।**
**ब्रह्मात्मा परमात्मादिशब्देनैतदुदीर्यत ॥''**

इत्यादि । **'सामान्यं द्विविधं प्रोक्तं स्थूलसूक्ष्मविभेदत'** इत्यन्यत्रापि । यत्तु गङ्गादीनां जलादिमयं रूपं तत्स्थूलतरं चतुर्थम् । सूक्ष्मस्यापि पुनस्त्रैविध्यं वक्ष्यते । तेषु स्थूलं निर्दिशति—चतुरिति । ध्यानोक्तावयवमन्त्रोपलक्षणमेतत् । बाहुमात्रपरमेव वा ।

**रागस्वरूपपाशाढ्या क्रोधाकाराङ्कुशोज्ज्वला ॥ ५३ ॥**

बाहुप्रसङ्गादायुधानां त्रिविधं रूपमाह—**रागेति** चतुर्भिः । रागोऽनुरक्तिश्चित्त-वृत्तिविशेषः । इच्छैव वा । राग एव स्वं वासनामयं रूपं यस्य स्थूलस्य पाशस्य तेनाढ्या वामाधःकरेत्युक्ता ।क्रोधो द्वेषाख्या चित्तवृत्तिः । आकारशब्दादर्शआद्यचि आकारं सविषयकं ज्ञानमित्यर्थः । घटोऽयमित्याकारकं ज्ञानमित्यादौ विषय-परत्वेनाकारपदप्रयोगात् । क्रोधपदमेव ज्ञानपरमिति तु कश्चित् । तत्क्रोधोङ्कुश इति श्रुतिविरोधाद्वक्ष्यमाणस्मृतावेव ज्ञानपदस्य क्रोधपरत्वसम्भवादयुक्तम् । तस्मात् द्वेषज्ञानोभयात्मकेनाङ्कुशेनोज्ज्वला शोभमानदक्षाधःकरा । तथा चोक्तं **पूर्वचतुः-शतीशास्त्रे'पाशाङ्कुशौ तदीयौ तु रागद्वेषात्मकौ स्मृतौ'** इति । **तन्त्रराजे**ऽपि वासनापटले—

**'मनोभवेदिक्षु धनुः पाशो राग उदीरितः ।**
**द्वेषः स्यादङ्कुशः पञ्चतन्मात्रा पुष्पसायकाः ॥''**

इति । **उत्तरचतुःशतीशास्त्रे** तु—

**'इच्छाशक्तिमयं पाशमङ्कुशं ज्ञानरूपिणम् ।**
**क्रियाशक्तिमये बाणधनुषी दधदुज्ज्वलम् ॥'**

इत्युक्तम् ॥ ५३ ॥

---

रागः इच्छा सः स्वं रूपं यस्य पाशस्य तेनाढ्या । आढ्यायै इति च ॥ क्रोधो द्वेषः स आकारो अस्य अङ्कुशस्य तेन उज्ज्वला शोभमाना । उज्ज्वलायै इति ॥ ५३ ॥

## मनोरूपेक्षुकोदण्डा पञ्चतन्मात्रसायका ।

संकल्पविकल्पात्मकक्रियारूपं मन एव रूपं यस्य तादृशमिक्षुरूपं पुण्ड्रेक्षुमयं कोदण्डं धनुर्यस्या वामोर्ध्वकरे सा तथोक्ता । पञ्चसंख्यानि तन्मात्राणि शब्दादीनि विषयाः । तदेव तन्मात्रं पञ्चभूतानामेतदेव रूपमित्यर्थः । तदुक्तं **महास्वच्छन्दसंग्रहे**–

**'भूतमात्रस्वरूपोऽर्थविशेषाणां निरूपकः ।**
**शब्दस्तु शब्दतन्मात्रं मृदूष्णकविनिश्चयः ॥**
**विशिष्टस्पर्शरूपश्च स्पर्शतन्मात्रसंज्ञकः ।**
**नीलपीतत्वशुक्लत्वविशिष्टं रूपमेव च ॥**
**रूपतन्मात्रमित्युक्तं मधुरत्वाम्लतायुतम् ।**
**रसतन्मात्रसंज्ञं तु सौरभ्यादिविशेषतः ॥**
**गन्धः स्याद्गन्धतन्मात्रं तेभ्यो वै भूतपञ्चकम् ।'**

इति । एतानि तन्मात्राण्येव सायकाः बाणा यस्या दक्षोर्ध्वकरे सा तथोक्ता । तदुक्तं **वामकेश्वरतन्त्रे**- 'शब्दस्पर्शादयो बाणा मनस्तस्याभवद्धनु'रिति । **कादिमते**ऽपि–

**बाणास्तु त्रिविधाः प्रोक्ताः स्थूलसूक्ष्मपरत्वतः ।**
**स्थूलाः पुष्पमयाः सूक्ष्मा मन्त्रात्मानः समीरिताः ॥**
**पराश्च वासनायां तु प्रोक्ताः स्थूलान् शृणु प्रिये ।**
**कमलं त कैरवं रक्तं – कह्लारेन्दीवरे तथा ॥**
**सहकारकमित्युक्तं तेष प्राणै पुष्पपञ्चकमीश्वरि ।'**

इति । तेषां नामानि तु **कालिकापुराणे**–

**'हर्षणं रोचनाख्यं च मोहनं शोषणं तथा ।**
**मारणं चेत्यमी बाणा मुनीनामपि मोहदा ॥'**

इति । **ज्ञानार्णवे** तु–

**'क्षोभणं द्रावणं देवी तथाकर्षणसंज्ञकम् ।**
**वश्योन्मादौ क्रमेणैव नामानि परमेश्वरि ॥'**

इति । **तन्त्रराजे** तु–

**'मदनोन्मादनौ पश्चात्तथा मोहनदीपनौ ।**
**शोषणश्चेति कथिता बाणाः पञ्च पुरोदिताः ॥'**

---

मन एव रूपं यस्य ईदृशं इक्षुमयकोदण्डस्य धनुर्यस्याः साः । कोदण्डायै इति ॥ पञ्चसंख्या तन्मात्राणि शब्दादिविषयाः तान्येव सायकाः शरा यस्याः सा । सायकायै इति ॥

इति । अथायुधमन्त्रोद्धारः । रश्च अगश्च स्वं च तेषां समाहारो रागस्वम् । अगशब्देन स्थाणुर्हकारः । '**हः शिवो गगनं स्थाणु**'रिति **कोशात्** । स्वं सबिन्दुक ईकारः । तेन रेफहकारेकारबिन्दुसमाहारो रूपं सूक्ष्माख्यं यस्य पाशस्येत्यादि । हकारोत्तरमिह रेफोऽवगन्तव्यः सम्प्रदायात् । क्रो च धश्च आ च क्रोधाः । तदुपरि श्रूयमाणः कारप्रत्ययो द्वद्वान्तत्वात् प्रत्येकं सम्बध्यते । क्रोकारधकाराकारा इत्यर्थः । तेऽङ्कुशेनोज्ज्वलाः अनुस्वारेण शोभमानाः । कौ शेत इति कुशः अंकाराभिन्नः कुशोऽङ्कुशः । मन इति थकारस्य संज्ञा । थकाराधिकारे '**दक्षनासाधिपो मन**' इति **कोशात्** । कोदण्डोऽनुस्वारः '**अंकारश्चञ्चुकोदण्ड**' इति **कोशात्** । मनोरूपः कोदण्डः थकाराभिन्नोंकारः क्रोधाकारेत्यादिनामसु दकाररेफककारलकारयकार-सकारवकारा आ ई ऊ स्वराः सबिन्दुका विवक्षिताः । इतरदविवक्षितम् । तेषां यथासम्प्रदायं योगे बाणबीजानि सिध्यन्तीति । आयुधबीजविभागस्तु गुरुमुखादव-गन्तव्यः ।

**निजारुणप्रभापूरमज्जद् ब्रह्माण्डमण्डला ॥ ५४ ॥**

निजःस्वकीयो योऽरुणप्रभाया रक्तिमकान्तेः पूरः प्रवाहस्तस्मिन्मज्जन्ति तदभेदेन भासमानानि ब्रह्माण्डानां मण्डलानि यस्याः सा । प्रातःकाले सौभाग्यादिन्यासविशेषेषु यादृशं ध्यानं विहितमस्ति तादृशरूपवतीत्यर्थः ॥ ५४ ॥

**चम्पकाशोकपुन्नागसौगन्धिकलसत्कचा ।**

इदानीं अग्निकुण्डापादानकस्थूलरूपप्रादुर्भावे शीर्षस्य प्रथमत्वाद्देवीमुखाभिन्न-वाग्भवकूटस्य पञ्चदश्यां प्रथमत्वाच्च शीर्षमारभ्यैव पादपद्मान्तं वर्णयितुमारभते । चम्पकादिशब्दा वृक्षे शक्ता अपि तत्तत्पुष्पेष्वपि निरूढलाक्षणिकाः । '**द्विहीनं प्रसवे सर्व**'**मित्यग्निपुराणकोशात्** । चम्पकानि चेत्यादि द्वन्द्वः । सौगन्धिकानि कह्लाराणि तैः पुष्पैः लसन्तः शोभमानाः कचाः शिरोरुहा यस्याः सा । लसच्छब्दोऽन्तर्भावितण्यर्थो वा । तेन पुष्पेषु स्वीयपरिमलापादकाः कचा इति फलति । तदुक्तम्—

'**जानासि पुष्पगन्धान् भ्रमर त्वं ब्रूहि तत्त्वं मे ।**
**देव्याः केशकलापे गन्धः केनोपमीयेत्**॥' इति ।

---

ढ्या सः स्वं रूपं यस्य पाशस्य तेनाढ्या । आढ्यायै इति च ॥ क्रो॰

---

निजः स्वकीयः यः अरुणप्रभायाः लोहि[त]कान्ते पुरः प्रवाहः तस्मिन्मज्जन्ति निमग्नानि ब्रह्माण्डानां मण्डलानि यस्याः सा । मण्डलायै इति ॥ ५४ ॥

चम्पकादिपदैर्निरूढलक्षणया तत्पुष्पाणि गृह्यन्ते । तैर्लसन्तः शोभमानाः कचाः शिरोरुही(हा) यस्याः । कचायै इति ॥

**कुरुविन्दमणिश्रेणीकनत्कोटीरमण्डिता ॥ ५५ ॥**

कुरुविन्दमणयः पद्मरागाख्याः शोणाः कामानुरागादिबहुगुणशीलाः रत्नविशेषा । तदुक्तं **गरुडपुराणे** रत्नाध्याये–

**'तस्यास्तटेषूज्ज्वलचारुरागा भवन्ति तोयेषु च पद्मरागाः ।**
**सौगन्धिकोत्थाः कुरुविन्दजाश्च महागुणाः स्फाटिकसम्प्रसूताः ॥**

सौगन्धिककुरुविन्दस्फटिकाद्यन्तर्गतपाषाणादिप्रभेदास्तद्गर्भे पद्मरागमणीनामुत्पत्तिः । तेषु कुरुविन्दोद्भवेष्वेव ।

**'बन्धूकगुञ्जाशकलेन्द्रगोपजपाशशासृक्समवर्णशोभाः ।**
**भ्राजिष्णवो दाडिमबीजवर्णास्तथापरे किंशुकवर्णभास ॥'**

इति । अत्र तस्या इत्यस्य रावणगङ्गाया इत्यर्थः ।

**ये तु रावणगङ्गायां जायन्ते कुरुविन्दकाः ।**
**पद्मरागा घनाकारं बिभ्राणाः सुस्फुटार्चिषः ॥'**

इत्युपक्रमात् । गुणातिशयोऽपि तत्रैव कथितः –

**'कामानुरागः कुरुविन्दजेषु शनैर्न तादृक् स्फटिकोद्भवेषु ।**
**माङ्गल्ययुक्ता हरिभक्तिदाश्च वृद्धिप्रदास्ते स्मरणाद्भवन्ति ॥'**

इति । ईदृशानां श्रेण्या पङ्क्त्या कनता दीप्यमानेन कोटीरेण मुकुटेन मण्डिता । ईदृशविशेषणविशिष्टां देवीं ध्यायतां भक्त्याद्यभिवृद्धिर्भवतीति ध्वनिः । कुरुविन्दाश्च मणयश्चेति द्वन्द्व इति तु कश्चित् । तद्रत्नोत्पत्त्यज्ञानात् ॥ ५५ ॥

**अष्टमीचन्द्रविभ्राजदलिकस्थलशोभिता ।**

चन्द्रस्याष्टमी कला यस्यां तिथौ वर्धते ह्रसति वा सा तिथिरष्टमीत्युच्यते । तत्सम्बन्धी यश्चन्द्रोऽष्टकलायुक्तः समचन्द्रार्धमिति यावत् । तद्वद्विभ्राजता विराजमानेन अलिकस्थलेन ललाटदेशेन शोभिता । **'ललाटमलिकं गोधिरि'**त्यग्निपुराणीय**कोशात्** ।

---

कुरुविन्दमणयः पद्मरागाख्याः रक्तमणयः । तेषां श्रेण्या पङ्क्त्या कनत्ता दीप्यमानेन कोटीरेण मकुटेन मण्डिता भूषिता । मण्डितायै इति ॥ ५५ ॥

अष्टमी सम्बन्धी यश्चन्द्रः अर्धवृत्तरूपः तद्वद्विभ्राजता विराजमानेनालिकस्थलेन ललाटप्रदेशेन शोभिता । शोभितायै इति ॥

**मुखचन्द्रकलङ्काभमृगनाभिविशेषका ॥ ५६ ॥**

मुखमेव चन्द्र इति रूपकं तत्कलङ्कत्वेन तुल्यो मृगनाभेः कस्तूर्या विशेषकः तिलको यस्यास्तथोक्ता । कलङ्कतिलकयोरुपमानोपमेयभावः ॥ ५६ ॥

**वदनस्मरमाङ्गल्यगृहतोरणचिल्लिका ।**

वदनमेव स्मरस्य कामराजस्य माङ्गल्यगृहं तस्य तोरणो बहिर्द्वारमेव, चिल्लिका भ्रूलता यस्याः । **'चिल्लिका भ्रूलतायां स्या'**दिति **नामकल्पद्रुमः** । **'आभुग्नमसृणचिल्ली'**ति **ललितास्तवरत्नं** च । परम्परितरूपकम् । प्राचीनपाठप्रयोगाच्चिल्लीशब्द एव भ्रूपरो ज्ञेयः ।

**वक्त्रलक्ष्मीपरीवाहचलन्मीनाभलोचना ॥ ५७ ॥**

वक्त्रलक्ष्म्या मुखकान्तेः परीवाहे जलपूरे चलद्भ्यां चञ्चलाभ्यां मीनाभ्यां तुल्ये लोचने यस्याः । मीनस्येवेक्षणं यस्या इति वा । मीनानां वीक्षणमात्रे शिशुनामभिवृद्धिः न तु स्तन्यदानादिनेति प्रसिद्धेः । तेन कटाक्षमात्रेण भक्तपोषकेत्यर्थः ॥ ५७ ॥

**नवचम्पकपुष्पाभनासादण्डविराजिता ।**
**ताराकान्तितिरस्कारिनासाभरणभासुरा ॥ ५८ ॥**

नवं नूतनं चम्पकस्य पुष्पं न तु केवलकलिका । ईषद्विकसिता गन्धफलीति यावत् । तेन तुल्यो यो नासादण्डस्तेन विराजिता तारा । मङ्गलाख्या शुक्लाख्या च तारकादेवीविशेषो वा । तयोः कान्तिं तिरस्करोति जयतीति तथा । तादृशेन नासाभरणेन माणिक्यमौक्तिकादिभ्यां घटितेन भासुरा शोभमाना ॥ ५८ ॥

**कदम्बमञ्जरीक्लृप्तकर्णपूरमनोहरा ।**

कदम्बमञ्जर्या नीपवल्लर्या क्लृप्तः कल्पितः कर्णपूरः कर्णोपरिभागे अवस्थाप्यमानः शेखरस्तेन मनोहरा रमणीया ।

---

मुखरूपचन्द्रस्य कलङ्काभः कलङ्कसदृशो मृगनाभेः कस्तूर्याविशेषकस्तिलको यस्याः सा । विशेषकायै इति ॥ ५६ ॥

वदनमेव स्मरस्य मन्मथस्य माङ्गल्यगृहं तस्य तोरणो बहिर्द्वारं तदेव चिल्लिकाभ्रूर्यस्या सा । चिल्लिकायै इति ।.

वक्त्रस्य मुखस्य यः(या) लक्ष्मीः कान्तिः तस्या परीवाहे (पू)रे चलद्भ्यां चञ्चलाभ्यां मीनाभ्यां तुल्ये लोचने [चल]द्भिश्चञ्चलैर्मीनैस्तुल्यानि लोचनानि यस्याः सा । लोचनायै इति ॥ ५७ ॥

नवं नूतनं यच्चम्पकपुष्पां(पं) ईषद्विकसित(तं) तेन तुल्येन नासादण्डेन नासिकावंशेन विराजिता । विराजितायै इति ॥

ताराया नक्षत्रस्य या कान्तिः तां स्वकान्त्या तिरस्करोति यत्तादृशेन नासाभरणेन भासुरा शोभमाना । भासुरायै इति ॥ ५८ ॥

कदम्बस्य मञ्जर्या पुष्पेण क्लृप्तः कल्पितः कर्णपूरः कर्णोर्ध्वे स्थापितः शेखरः तेन मनोहरा रमणीया । मनोहरायै इति ॥

## ताटङ्कयुगलीभूततपनोडुपमण्डला ॥ ५९ ॥

ताटङ्कयुगलं कर्णाभरणद्वयं तस्य स्वर्णादिभवस्य प्रकृतेऽभावात् । अभूततद्भावे च्विः । तथा सम्पद्यमाने तपनस्य सूर्यस्योडुपस्य चन्द्रस्य च मण्डले ¹यस्याः । तदुक्तम्–

**सूर्यचन्द्रौ स्तनौ देव्यास्तावेव नयने स्मृतौ ।**
**उभौ ताटङ्कयुगलमित्येषा वैदिकीश्रुतिः ॥ ५९ ॥**

इति ॥ ५९ ॥

## पद्मरागशिलादर्शपरिभाविकपोलभूः ।

पद्मरागशिलैवातिनिर्मलत्वात्प्रतिबिम्बग्राहित्वाच्चादर्शो दर्पणं तं परिभवत्यवजानाति । ततोप्यतिशयेन कामेश्वरप्रतिबिम्बग्राहित्वाच्छोणत्वाच्च । ईदृशी कपोलभूर्गण्डभित्तिर्यस्याः ।

## नवविद्रुमबिम्बश्रीन्यक्कारिरदनच्छदा ॥ ६० ॥

नवां नूतनां विद्रुमबिम्बयोः पक्वप्रवालतुण्डीफलयोः श्रियं कान्तिं न्यक्कुरुतोऽधः कुरुतस्ततोऽप्याधिक्येनौन्नत्यात् तादृशौ रदनच्छदावौष्ठौ यस्याः । **सा भवति शुद्धविद्या येदन्ताहन्तयोरभेदमति**'रित्युक्तेर्दत्तात्रेयसंहितादिषु श्रीविद्यायास्तादृशाभेदपरत्वेन व्याख्यानात्सैव शुद्धविद्योच्यते । ॥ ६० ॥

## शुद्धविद्याङ्कुराकारद्विजपङ्क्तिद्वयोज्ज्वला ।

शुद्धाया अविद्यामलप्रतिस्पर्धिन्या विद्यायाः षोडशीरूपाया अङ्कुराणामिवाकारः स्वरूपं यस्य तेन द्विजपङ्क्तिद्वयेन दन्तपङ्क्तियुगलेनोज्ज्वला शोभमाना । श्रीमातुर्हि

---

ताटङ्कयुगलं, कर्णाभरणद्वयां(यं) तथाभूते तपनोडुपयोः सूर्यचन्द्रयोर्मण्डले यस्याः सा । मण्डलायै इति ॥ ५९ ॥

पद्मरागशिलात्मको य आदर्शः तं परिभावति अवजानाति । ईदृशी कपोलभूर्गण्डप्रदेशो यस्याः सा । भुवे इति ।

नवां नूतनां विद्रुमबिम्बयो पक्वप्रवालतुण्डीफलयोः श्रियं कान्तिं न्यक्कुरुतः अधःकुरुतो दशन(रदन)च्छदौ ओष्ठौ यस्या सा । छदायै इति ॥ ६० ॥

शुद्धाः दोषरहिताः याः विद्याः मोक्षसाधनीभूतवेदादयो मन्त्राद्याश्च तासां अङ्कुराः । यथाहि विस्तृतस्य वृक्षस्य संक्षिप्तं रूपं अङ्कुरः एवं विद्याङ्कुराकाराः ये द्विजाः दन्तास्तेषां यत्पङ्क्तिद्वयं

मूलाधारादिभ्यः परापश्यन्त्यादिक्रमेण वैखर्यात्मना मुखान्निःसृतासती षोडशीविद्या पश्चात्कर्णात्कर्णोपदेशेन विसृताभूत् । तत्र शब्दब्रह्मरूपस्य बीजस्योच्छूनतावस्था परा स्फुटितावस्था पश्यन्ती मुकुलिताव्यक्तं दलद्वयं मध्यमा । सम्यग्विकासेन प्रसृतं मिथं संसृष्टमूलं दलद्वयं वैखरी । तदेव चाङ्कुरपदवाच्यम् । तद्दशायां दन्तसाम्यमप्यस्त्येव । षोडशाक्षराङ्कुराणां प्रत्यङ्कुरं दलद्वयाद् द्वात्रिंशद्दन्तसंख्यासम्पत्तिरपि । अतस्तान्यङ्कुराण्येव मूर्तिमन्ति दन्तरूपाणीति तात्पर्यम् । द्विजशब्दश्लेषेण समासोक्त्यलङ्कारेणार्थान्तरमपि । वेदादयो विद्या हि ब्राह्मणमेवाश्रित्य तिष्ठन्ति । '**विद्या ह वै ब्राह्मणमाजगाम**' इति **श्रुतेः** । तेनाप्रतिष्ठाः सत्योऽन्यत्र विस्तरं प्राप्नुवन्ति । अतोहेतोर्ब्राह्मणा एव विद्याङ्कुररूपाः । ततश्च शुद्धा निर्मला सती विद्याङ्कुराकारा च सती यावद् द्विजानां ब्राह्मणानां पङ्क्तिस्तद्द्वयेनोज्ज्वला । ब्राह्माणानामप्यम्बामुखान्निःसृतत्वेन त एव मूर्तिमन्तो दन्ता इति तात्पर्यम् । यद्वा '**शुद्धविद्या च बाला च द्वादशार्धा मतङ्गिनी**'त्यादिक्रमेणानुत्तरपर्यन्ता द्वात्रिंशद्दीक्षास्तन्त्रेषु प्रसिद्धास्तद्द्विजपङ्क्तिपदेनोच्यन्ते । दीक्षाया अपि जन्मरूपत्वात् । उपनयनापेक्षया द्वितीयत्वाच्च । '**दीक्षा जन्म तृतीयं स्या**'दिति वचनस्य मातुरुदराज्जन्ममेलनाभिप्रायकत्वेनाविरोधात् । शुद्धविद्या त्र्यक्षरी सैवाङ्कुरमारम्भो यस्याः सा शुद्धविद्याङ्कुरा । अकारेत्यत्राङःपरतोऽकारप्रश्लेषेणाङ्कुरयोरभिविध्यनुत्तरवाचकत्वेनानुत्तरपर्यन्तेत्यर्थः । शुद्धविद्याङ्कुरा च सा आकारा च सा द्विजपङ्क्तिश्चेति कर्मधारयोत्तरं तस्या द्वयेनोज्ज्वला भासमानेति विग्रहः । सम्प्रदायक्रमायातद्वात्रिंशद्दीक्षितान्तःकरणैः पुरुषधौरेयैरेव लभ्या नान्यैरिति भावः ।

**कर्पूरवीटिकामोदसमाकर्षिदिगन्तरा ॥ ६१ ॥**

**'एलालवङ्गकर्पूरकस्तूरीकेसरादिभिः ।**<br>
**जातीफलदलैः पूगैर्लाङ्गल्यूषणनागरैः ॥**<br>
**चूर्णैः खदिरसारैश्च युक्ता कर्पूरवीटिका ।'**

---

तेनोज्ज्वला क्षोभमाना अखिला विद्याः । अङ्कुराकारेण संक्षेपरूपेण देवतामुखे दन्तात्मकतया स्थिता इति भावः । उज्ज्वलायै इति ॥

**'एलालवङ्गकर्पूरकस्तूरीकेश(स)रादिभिः ।**<br>
**जातीफलैर्दलैः पूगैर्लाङ्गल्यूषणनागरैः ॥**<br>
**चूर्णैः खादिरसारैश्च युक्ता कर्पूरवीटिका ।'**

इति प्रसिद्धकर्पूरवीटिकायास्ताम्बूलस्यामोदं स्वाभिमुखेन सम्यगाकर्षन्ति इत्याकर्षाः ईदृशा दिगन्तरस्था देवता यस्याः सा । दिगन्तरस्था देवताः परिमललुब्धाः स्वाभिमुख्येन परिमलमाकर्षन्तीत्यर्थः । अन्तरायै इति ॥ ६१ ॥

इतिलक्षणलक्षितस्य ताम्बूलस्यामोदं परिमलं समाकर्षन्ति स्वस्वाभिमुख्येन प्रसारयन्ति या दिशः प्राच्याद्या दश देवतास्ता एवान्तं परिधानं यस्याः सा । ताभिर्देवताभिरम्बामुखकमलविगलत्ताम्बूलकवलनापेक्षिणीभिरपि तदलाभात्प्रथमनिःसृतपरिमल एवाहंपूर्विकया यौगपद्येन समाकृष्य सर्वाभिर्गृह्यते । तल्लिप्सयैव हि ता आवृत्य परितोऽदृश्यवेषेण स्थिता इति तात्पर्यगत्योत्प्रेक्षाध्वननादिह वस्तुनालङ्कारध्वनिः । अथवा यस्या वीटिकामोदेन परिमलातिशयेन समाकर्षीणि सुरभिलानि दिगन्तराणि सेति ।

**'आमोदः सोऽतिनिर्हारी वाच्यलिङ्गत्वमागुणात् ।**
**समाकर्षी तु निर्हारी सुरभिर्घ्राणतर्पणः ॥'**

**इत्यमरः** ॥ ६१ ॥

## निजसंलापमाधुर्यविनिर्भर्त्सितकच्छपी ।

निजस्य स्वीयस्य स्वतःशोभनस्य ब्रह्मविषयकस्य वालापस्य वर्णात्मकशब्दस्य माधुर्येण मञ्जुलतया विशिष्य निःशेषेण भर्त्सिता तिरस्कृता कच्छपी वीणा यया सा । समासान्तविधेरनित्यत्वा'**न्नद्यृतश्चे**'ति न कप् । कच्छपस्य स्त्री कच्छपीति तु कश्चित् । तत्' **कच्छपी महतीवीणे**'त्यादिकोशदर्शनात् । **अमरकोश**शेषोऽपि वीणामधिकृत्याह–

**'विश्वावसोः सा बृहती तुम्बरोस्तु कलावती ।**
**सा नारदस्य महती सरस्वत्यास्तु कच्छपी ॥'**

इति । लोके हि वर्णाभिव्यक्तेरभावेऽपि षड्जादिस्वराभिव्यक्तिमात्रेण ज्ञातचरानेव वर्णानुन्नीय माञ्जुल्यमात्रलिप्सयैव हि वीणानादे रुचिरित्यनुभवः । कच्छप्यास्तु सारस्वतत्वादेव शुकसारिकादिवदीषत्स्पष्टवर्णाभिव्यक्तिरप्यस्ति । स्पष्टतरवर्णाभिव्यक्तितदधिकमाधुर्यशालिनः संल्लापस्य तु सर्वातिशयत्वे नास्ति विवाद इति । अत एव **सौन्दर्यलहर्याम्**–

**'विपञ्च्या गायन्त्या विविधमपदानं पशुपते-**
**स्त्वयारब्धे वक्तुं चलितशिरसा साधुवचने ।**
**तदीयैर्माधुर्यैरपलपिततन्त्रीकलरवां**
**निजां वीणां वाणीं निचुलयति चोलेन निभृतम् ॥'** इति ।

---

निजस्य स्वस्य यः संलापः वर्णमयशब्दोच्चारः तस्य माधुर्येण विनिर्भत्सिताविशेषेण तिरस्कृता कच्छपी वीणा यया सा । कच्छप्यै इति ॥

**मन्दस्मितप्रभापूरमज्जत्कामेशमानसा ॥ ६२ ॥**

स्मितमीषद्धासः सोऽपि मन्दः तस्य प्रभापूरे लावण्यप्रवाहे मज्जतीति मज्जत् । न तु मग्नम् । एकत्र मग्नस्यावयवान्तरसञ्चारविलोपापत्तेः । इदं त्ववयवान्तर-सञ्चारार्थं यतते तस्मान्निःसर्तुं नाभिवाञ्छति चेति वर्तमाननिर्देशेन ध्वनितम् । कामः कलाशरीरघटको बिन्दुरग्नीषोमाख्यो रविः । तदुक्तं **कामकलाविलासे**—

**बिन्दुरहङ्कारात्मा रविरेतन्मिथुनसमरसाकारः ।**
**कामः कमनीयतया कला च दहनेन्दुविग्रहौ बिन्दुः ॥'**

इति । स एवेश्वरो राजराजेश्वरस्तस्य मानसं यस्याः सा तथोक्ता । **मीमांसकमते** विभुनोपि मनसो मज्जनकथनेन प्रभापूरस्य निरवधिकाधिक्यं ध्वन्यते ॥ ६२ ॥

**अनाकलितसादृश्यचिबुकश्रीविराजिता ।**

वाग्देवतामारभ्याद्य यावद्वर्णयितुं प्रवृत्तैः कविभिरनाकलितं आसमन्तादभिव्याप्य न कल्पितं सम्यक् न लब्धं सरसोपमानस्यालाभात् । अपि तु मुखमुकुरवृन्तरूप-यत्किञ्चिदुपमानेन लब्धप्रायं यत्सादृश्यमौपम्यं यस्यास्तादृश्या चिबुकश्रिया विराजिता ।

**कामेशबद्धमाङ्गल्यसूत्रशोभितकन्धरा ॥ ६३ ॥**

कामेशेन परमशिवेन बद्धं यन्माङ्गल्यसूत्रं कामोज्जीवनहेतुभूतं सौभाग्याभरणं तेन शोभिता कन्धरा शिरोधिर्यस्याः ॥ ६३ ॥

**कनकाङ्गदकेयूरकमनीयभुजान्विता ।**

अङ्गं ददातीत्यङ्गदं शरीरघटकमित्यर्थः । **'कनकमेवाङ्गदं येषां तैः सुवर्णैकशरीरकैः ।'** केयूरैर्दोर्भूषणैश्चतुर्भिः कमनीया रमणीया ये भुजास्तैरन्विता युक्ता । अङ्गदकेयूर-योराकृतिवैलक्षण्यमाश्रित्याभरणद्वयपरं वा व्याख्येयम् । अतएव **ब्रह्मोत्तरखण्डे** सप्तमेऽध्याये शिवध्यानप्रकरणे प्रयोगः – **'दधानं नागवलयकेयूराङ्गदमुद्रिका'** इति । अन्यत्रापि **'केयूराङ्गदहारकङ्कणमुखालङ्कारविभ्राजिता'**मिति । **'केयूरमङ्गदं दोर्भूषे'**त्यग्नि-**पुराणं** तु भुजभूषणत्वेनानुगमय्य कथनपरम् । तदनुसारित्वाद् **अमरसिंहो**ऽपि तत्पर एवेत्यदोषः ।

---

मन्दस्मितमीषद्धासः तस्य प्रभापूरे लावण्यप्रवाहे मज्जत् कामेशमानसं यस्याः सा । मानसायै इति ॥ ६२ ॥

अनाकलितं अलब्धं कविभिः सादृश्यं यस्याश्चिबुक श्रियः तया विराजिता शोभमाना । विराजितायै इति ॥

कामेशेन बद्धं यन्माङ्गल्यसूत्रं सौभाग्याभरणं तेन शोभिता कन्धराग्रीवा यस्याः सा । कन्धरायै इति ॥ ६३ ॥

कनकमयैरङ्गदैः केयूरैः बाहुभूषणैः कमनीयाः सुन्दरा ये भुजाः चतुःसंख्याः तैरन्विता युता । अन्वितायै इति ॥

## रत्नग्रैवेयचिन्ताकलोलमुक्ताफलान्विता ॥ ६४ ॥

रत्नखचितग्रैवेयेण ग्रीवाभरणचिन्ताकेन चार्थात्सौवर्णेन लोलैश्चञ्चलैर्हारभावमापन्नैर्मुक्ताफलैश्चान्विता । रत्नमयं ग्रीवासम्बन्धि यच्चिन्ताकं तदधस्तिर्यक्पङ्क्तिरूपेण लम्बमानैर्मुक्ताफलैरित्येकाभरणपरं वा । चिन्ताकमान्ध्रदेशुषु प्रसिद्धम् । ललाटिकापर्याय इति तु कश्चित् । तत्तादृशकोशालेखनाच्चिन्त्यम् । ग्रीवायामेव चिन्ता ध्यानं येषां ते ग्रैवेयचिन्ताकाः । उपर्युपर्यापातत एव ध्यानं ये कुर्वन्ति न पुनर्दहरान्तर्देवानां द्रढयितुं क्षमास्ते मध्यमाधिकारिण इत्यर्थः । लोलाः सतृष्णा अधमाधिकारिणः **'लोलश्चलसतृष्णयो'**रित्यग्निपुराणानुयाय्य**मरः** । मुक्ता उत्तमाधिकारिण इत्यर्थः । एषां त्रयाणामपि यानि रत्नभूतान्याफलानि अल्पफलान्यधिकफलानि च । **'आङीषदर्थेऽभिव्याप्ता'**विति **कोशात्** । तैरन्विता तद्वाने तत्परा इति प्रकृताप्रकृतोभयविषयकश्लेषः ॥ ६४ ॥

## कामेश्वरप्रेमरत्नमणिप्रतिपणस्तनी ।

कामेश्वरस्य प्रेमैव रत्नमणिः रत्नोत्तमः । तत्पणनविषये प्रतिपणभूतौ स्तनौ यस्याः । मणिशब्दो रत्नपरः सन्स्तनयोरेव विशेषणं वा । स्तनरत्ने विक्रीय प्रेमरत्नं क्रीतवतीति भावः । तेन द्विगुणमूल्यदानेन क्रयविक्रयाभ्यां च सुतरां परस्परस्वतापायेन प्रेमपरावृत्त्यभावः पातिव्रत्यातिशयाश्चेति विनिमयालङ्कारेण वस्तुध्वनिः ।

## नाभ्यालवालरोमालिलताफलकुचद्वयी ॥ ६५ ॥

नाभिरेवालवालो लतावापश्वभ्रो यस्या रोमाल्यभिन्नलतायास्तस्याः फलभूता कुचद्वयी यस्याः सेति परम्परितरूपकमुत्प्रेक्षासम्बन्धातिशयोक्तिश्चेति सङ्करः ॥ ६५ ॥

## लक्ष्यरोमलताधारतासमुन्नेयमध्यमा ।

लक्षयितुं योग्या लक्ष्या ज्ञाप्यमानेति यावत् । ज्ञायमानस्यैव लिङ्गस्यानुमितिं प्रति कारणत्वात् । लिङ्गज्ञानमात्रस्य कारणतावादेपि लिङ्गज्ञानयोर्विशेष्यविशेषणभावे विनिगमनाविरहेणोभयतोऽपि कारणताया दुष्परिहरत्वात् । अनागतादेरपि बौद्धाकारस्य सत्त्वात् । तथा च गौतमसूत्रम्– **'बुद्धिसिद्धिं तदसदि'**ति । लक्ष्या या रोमलताधारता रोमावलिरूपवल्यावापस्थानत्वम् । आधारतासम्बन्धेन रोमलतैव लिङ्गमिति यावत् । तया सम्यगुन्नेयं प्रमानुमितिविषयो मध्यमं वलग्नं यस्याः । नाभ्यधःप्रदेशो

---

रत्नमयेन ग्रैवेयेण ग्रीवाभरणेन चिन्ताकेन चलोलैर्मुक्ताफलैर्हारभावमापन्नैः अन्विता युता । अन्वितायै इति ॥ ६४ ॥

कामेश्वरस्य प्रेमैव रत्नमणिः । तत्पणने प्रतिपणभूतौ स्तनौ यस्याः स्तन्यै इति ॥

नाभिरेवालवालो लता वापगर्तः यस्या ईदृशी या रोमावलिरूपा लतात्तस्याः फलभूतं कुचद्वयं यस्याः सा । कुचद्वय्यै इति ॥ ६५ ॥

लक्षयितुं योग्या लक्ष्या । ज्ञायमाना । ईदृशी या लोमलताया आधारता तया समुन्नेयं अनुमिति विषयीभूतं मध्यमं मध्यभागो यस्याः सा । मध्यमायै इति ॥

मध्यमाख्यघनावयववान् रोमलतात्वादिति प्रयोगः । मध्यमस्य रोमलतया समर्थनात्काव्यलिङ्गालङ्कारः । यद्यपि '**निराधारो हा रोदिमि कथय कस्याद्य पुरत**' इत्यादाविव स्वान्यतरभागानेकवर्णायाः पदमध्ययतेः साधुतायाः समुद्राद्यन्तस्थापरत्वेनैव व्यवस्थितत्वात्पादान्तयतेः '**प्रणमत भवबन्धक्लेशनाशाय नारायणचरणसरोजद्वन्द्वमानन्ददायी**'-त्यादाविवाधारतेत्यस्य मध्ये न साधुत्वं तथापि रातमाण्डव्यादिमुनीनां छन्दःशास्त्रप्रवर्तकानां प्राचामाचार्याणां च मते यतेरनङ्गकारात्तद्रीत्या साधुत्वमुपपद्यते । **पैङ्गलं** तु कलियुगीयग्रन्थमात्रपरमिति प्रदर्शितं **छन्दोभास्करेऽस्माभिः** ।

**स्तनभारदलन्मध्यपट्टबन्धवलित्रया ॥ ६६ ॥**

स्तनयोर्भरेण गौरवेण दलत इव मध्यस्य दार्ढ्यार्थं कृतः पट्टबन्धः कनकपट्टिकाभिर्बन्ध एव वलित्रयं यस्याः सेत्युत्प्रेक्षातिशयोक्ती ॥ ६६ ॥

**अरुणारुणकौसुम्भवस्त्रभास्वत्कटीतटी ।**

अतिशयेनारुणमरुणारुणं कान्तायाः करतलरागरक्तरक्त इतिवदतिशयस्य वीप्सया द्योतनात् । अरुणवदनूरुवदरुणं वा । कुसुम्भेन रक्तं कौसुम्भं च यद्वस्त्रं तेन भास्वती भासुरा कट्यास्तटी यस्याः ॥

**रत्नकिंकिणिकारम्यरशनादामभूषिता ॥ ६७ ॥**

रत्नमयीभिः किङ्किणिकाभिः क्षुद्रघण्टिकाभी रम्येण रशनाभिन्नेन दाम्ना सौवर्णमेखलासूत्रेण भूषिता ॥ ६७ ॥

**कामेशज्ञानसौभाग्यमार्दवोरुद्वयान्विता ।**

कामेशेनैव ज्ञाते तदेकसाक्षिके सौभाग्यमार्दवे लावण्यकोमलत्वे ययोस्तयोरूर्वोर्द्वयेनान्विता ।

---

स्तनयोर्भारेण गुरुत्वेन दलदिव त्रुट्यदिवस्थितं यन्मध्यं दार्ढ्यार्थं कृतः पट्टबन्धः कनकपट्टिकाभिर्बन्ध इव वलित्रयं यस्याः सा । त्रयायै इति ॥ ६६ ॥

अरुण इवानूरुरिवारुणं यत्कौसुम्भं कुसुम्भेन रक्तं ईद(दृ)शेन वस्त्रेण भास्वती शोभमाना कट्यास्तटीप्रदेशो यस्याः सा । तट्यै इति ॥

रत्नमयीभिः किङ्किणिकाभिः क्षुद्रघण्टिकाभिः रम्येण रशनात्मकदाम्ना मेखलासूत्रेण भूषिता । भूषितायै इति ॥ ६७ ॥

कामेशेनैव ज्ञाते सौभाग्यमार्दवे सौन्दर्यमृदुत्वे ययोस्ताद(दृ)शोरुद्वयेनान्विता । अन्वितायै इति ॥

**माणिक्यमुकुटाकारजानुद्वयविराजिता ॥ ६८ ॥**

माणिक्यमुकुटं अखण्डमाणिक्येन निर्मितं मुकुटं टोपिकानामकं न्युब्जं शिरः-प्रावरणं यत्तस्येवाकारो ययोस्तयोर्जानुनोरूरुपर्वणोर्द्वयेन विराजिता ॥ ६८ ॥

**इन्द्रगोपपरिक्षिप्तस्मरतूणाभजङ्घिका ।**

इन्द्रगोपाः प्रावृषेण्याः आरक्ततमा कृमिविशेषाः तैः परितः क्षिप्तौ खचितौ यौ स्मरस्य कामराजस्य तूणौ निषङ्गौ ताभ्यां तुल्ये जङ्घे एव जङ्घिके यस्याः । यदि तैः खचितौ स्यातां तदोपमा सम्भाव्येतेत्युपमायामभूतत्वांशध्वनिः ।

**गूढगुल्फा कूर्मपृष्ठजयिष्णुप्रपदान्विता ॥ ६९ ॥**

गूढौ मांसलौ गुल्फौ पार्ष्णी यस्याः । कूर्मयोः पृष्ठे जयत इति जयिष्णुनी ये प्रपदे पादाग्रे ताभ्यामन्विता । जयिष्णुपदमिष्णुच्प्रत्ययान्तम् । न तु **'ग्लाजिस्थश्चक्स्नु'**रिति क्स्नुप्रत्ययान्तं जिष्णुरित्यापत्तेः । इष्णुचो विधानं तु **'भुवश्चे'**तिसूत्रे चकारस्यानुक्त-समुच्चयार्थकत्वेन वृत्तिकृता व्याख्यानात् । तत्सूत्रे छन्दसीत्यनुवृत्तिस्तु न कार्या । **'भूष्णुर्भविष्णुर्भविते'**त्य**मरकोशे** प्रयोगात् । प्रयोगशरणा वैयाकरणा इति न्यायात् । तस्माद्विष्णुभ्राजिष्णुवज्जयिष्णुरपि साधुरेव ॥ ६९ ॥

**नखदीधितिसञ्छन्ननमज्जनतमोगुणा ।**

नखानां पादनखचन्द्राणां दीधितिभिः किरणैः सम्यक् छन्नो लोपितो नमतां ब्रह्मविष्ण्वादिजनानां तमोगुणोऽज्ञानं यस्याः । पादध्यानेनाज्ञाननाश इति भावः । यद्वा अस्याश्चरणयुगस्य नखचन्द्रस्य नमज्जनकिरीटमणिगणच्छायाप्रतिबिम्बबाहुल्येन दीधितीनां विशिष्यभानाभावे तासां तमोनाशाय नमज्जनहृदयान्तःप्रवेश उत्प्रेक्षते कविरिति भावः । तथा च **मत्स्यपुराण-पद्मपुराणयोः** पार्वत्याः सामुद्रिकलक्षणानि दृष्टवतो नारदस्य वाक्यम्–

**'न जातोऽस्याः पतिर्भद्रे लक्षणैश्च विवर्जिता ।**
**उत्तानहस्ता सततं चरणैर्व्यभिचारिभिः ॥**
**स्वच्छायया भविष्येयं किमन्यद्बहुभाष्यते ।'**

---

माणिक्येन निर्मितं यन्मुकुटं टोपिकानामकं न्युज्व(ब्ज)शिरः प्रावरणं तस्येवाकारो ययोर्जानुनोस्तयोर्द्वयेन विराजिता । विराजितायै इति ॥ ६८ ॥

इन्द्रगोपाः वर्षाकालोद्भवा आरक्तकृमिविशेषाः । तैः परितः क्षिप्तौ व्याप्तौ यौ स्मरस्य मदनस्य तूणीरौ शरधी तयोरिवाभा ययोस्ते जङ्घिके जङ्घे यस्याः सा । जङ्घिकायै इति ॥

गूढौ मांसलौ गुल्फौ पादे मणिबन्धौ यस्याः सा । गुल्फायै इति । कूर्मपृष्ठे जयन्त इति कूर्मपृष्ठे जयिष्णू ईदृशे प्रपदे पादाग्रे ताभ्यामन्विता । अन्वितायै इति ॥ ६९ ॥

नखानां पादनखानां दीधितिभिर्ज्योत्स्नासदृशैः किरणैः सम्यक् छिन्नो लोपितो नमतां भक्त-जनानां तमोगुणः अज्ञानं यस्याः सा ।

इति मेनांप्रत्युक्तेर्दुर्लक्षणान्येवेमानि कथितानीति भ्राम्यता हिमवता सदुःखं पृष्टो नारद उवाच—

**'हर्षस्थानेऽपि महति त्वया दुःखं निवेद्यते ।**
**अपरिच्छिन्नवाक्यार्थो मोहं यासि महागिरे ॥'**

इत्यादिना न जातोऽस्याः पतिरित्यादिवाक्यानामर्थं निर्वर्ण्यान्ते कथितम्—

**'यत्तु प्रोक्तं मया पादौ स्वच्छायाव्यभिचारिणौ ।**
**अस्याः शृणु ममात्रापि वाचोऽर्थं शैलसत्तम ॥**
**चरणौ पद्मसङ्काशावस्याः स्वच्छनखोज्ज्वलौ ।**
**सुरासुराणां नमतां किरीटमणिकान्तिभिः ॥**
**विचित्रवर्णैर्हास्यन्ति स्वच्छायां प्रतिबिम्बतैः ।**
**प्रविश्य नाशयिष्यन्ति तेषां हार्दं तमोगुणम् ॥'** इति ।

## पदद्वयप्रभाजालपराकृतसरोरुहा ॥ ७० ॥

पदद्वयस्य चरणयुगलस्य प्रभाजालेन सौष्ठवादिगुणसमूहेन पराकृते निरस्ते सरोरुहे कमले यस्याः सा ॥ ७० ॥

## सिञ्जानमणिमञ्जीरमण्डितश्रीपदाम्बुजा ।

सिञ्जानाः भूषणजन्यशब्दविशेषं कुर्वाणा मणयो ययोस्ताभ्यां मञ्जीराभ्यां पादकटकाभ्यां मण्डिता श्रीर्ययोस्तादृशे पदाम्बुजे यस्याः '**नद्यृतश्च**'त्यविकल्पितोऽपि कप्रत्ययः श्रीशब्दस्य नदीसंज्ञानिषेधादेव न भवति । '**ह्रस्वो नपुंसक**' इति ह्रस्वस्तु संज्ञापूर्वकविधेरनित्यत्वान्नेह भवति । मण्डिते श्रीयुक्ते पादाम्बुजे यस्या इति त्रिपद-बहुव्रीहिर्वा ।

## मरालीमन्दगमना महालावण्यशेवधिः ॥ ७१ ॥

मरालो हंसः स्वभावादेव मन्दगतिः । तत्रापि स्त्रीजातीया विशेषत इति मराल्येवोपात्ता । तस्या इव मन्दगमनं यस्याः । महतो लावण्यस्यातिशयितसौन्दर्यस्य शेवधिर्निधिः । '**निधिर्ना शेवधि**'रित्य**ग्निपुराणात्** । अत एव '**परवल्लिङ्गं द्वन्द्वतत्पुरुष-यो**'रिति **पाणिनीयसूत्रात्** पुलिङ्गमिदं नाम । तेन 'शेवधये नम' इत्येव प्रयोगो न पाक्षिकः 'शेवध्ये नम' इति ॥ ७१ ॥

---

पदद्वयस्य यः प्रभाजालः कान्तिसमूहः तेन पराकृतानि सरोरुहाणि यस्याः सा । सरोरुहायै इति ॥ ७० ॥

सिञ्जाने शब्दं कुर्वाणे मणिमये मञ्जीरे पादकटके ताभ्यां मण्डिता भूषिता श्रीः शोभा ययोरीदृशे पदाम्बुजे यस्याः सा । अम्बुजायै इति ॥

मरालीव हंसीव मन्दं गमनं यस्याः सा । गमनायै इति । महदत्युत्कृष्टं यल्लावण्यं सौन्दर्यं तस्य शेवधिर्निधिः । शेवधये इति ॥ ७१ ॥

**सर्वारुणाऽनवद्याङ्गी सर्वाभरणभूषिता ।**

वासनाभरणकुसुमकान्त्यादिकं सर्वमेवारुणं यस्याः । अवद्यानि निन्द्यानि न भवन्तीत्यनवद्यानि सुलक्षणान्यङ्गानि अवयवा यस्याः । सर्वैश्चूडामणिप्रभृति-पादाङ्गुलीयकान्तैः **कालिकापुराणोक्तै**श्चत्वारिंशता **कल्पसूत्रोक्तै**रन्यैरपि वाभरणैर्भूषिता ।

एवं स्थूलं रूपमुक्त्वा तदवस्थितिस्थानान्याह—

**शिवकामेश्वराङ्कस्था शिवा स्वाधीनवल्लभा ॥ ७२ ॥**

शिवकामेत्यादिना । कमनीयत्वात्कामः '**कामः कमनीयतये**'त्युक्तेः । कामं यथेच्छं रूपमस्येति वा कामः । ईदृशव्युत्पत्त्यैव मन्मथे कामपदप्रवृत्तेः **कालिकापुराणे** प्रदर्शनात्—

**'जगत्सु कामरूपत्वे त्वत्समो नैव विद्यते ।**
**अतस्त्वं कामनाम्नापि ख्यातो भव मनोभव ॥'**

इति । प्रज्ञानमेव वा कामः । तथा च **श्रुतिः**—'**यदेतद्धृदयं मनश्चैतत्संज्ञानमज्ञानं विज्ञानं प्रज्ञानं मेधा दृष्टिर्धृतिर्मतिर्मनीषा जूतिः स्मृतिः सङ्कल्पः क्रतुरसुः कामो वश इति सर्वाण्येवैतानि प्रज्ञानस्य नामधेयानि भवन्ति**' इति । अत्र प्रज्ञानशब्देन शिव एवोच्यते । **स्कान्दे ब्रह्मगीतायां** तथैवोपबृंहणदर्शनात्—

**शङ्कराख्यं तु विज्ञानं बहुधा शब्द्यते बुधैः ।'**
**केचिद्धृदयमित्याहुः.........................॥'**

इत्यारभ्य

**'वश इत्यास्तिकाः केचित्सर्वाण्येतानि सन्ततम् ।**
**प्रज्ञानस्य शिवस्यास्य नामधेयान्यसंशयम् ॥'**

इत्यन्तम् । जगत्सिसृक्षावानीश्वरः कामपदवाच्यः । तथा च **बृहदारण्यके** श्रूयते—"**आत्मैवेदमग्र आसीदेक एव सोऽकामयतेत्याद्येतावान्वै कामः**' इत्यन्तम् । 'शिवश्चासौ कामश्चासावीश्वरश्चेति कर्मधारयः । गुणिरुद्रमदनयोर्निरासाय पदत्रयी । तस्याङ्के

---

सर्वं वसनाभरणादिकं अरुणं यस्याः सा । अरुणायै इति ॥ अनवद्यान्यनिन्द्यान्यङ्गानि यस्याः सा । अङ्ग्यै इति । सर्वैराभरणै भूषिता । भूषितायै इति ॥

शिवात्मको यः कामेश्वरः मन्मथरुद्रादिभिन्नः परशिवात्मकः । तस्याङ्के वामोत्सङ्गे तिष्ठतीति सा । अङ्कस्थायै इति ॥ शिवाभिन्नत्वाच्छिवा । शिवायै इति । स्वाधीनो वल्लभो यस्याः सा । वल्लभायै इति ॥ ७२ ॥

वामोत्सङ्गे तिष्ठति निषण्णा । अतएवाह शिवा । वश कान्तौ शिवः स्मृतः । कान्तिरिच्छा । परशिवेच्छारूपेत्यर्थः । इच्छारूपायाः शक्तेः शिवाधारकत्वादिति भावः । शिवाभेदाद्वा शिवा । तत्र शिवपदनिरुक्तिस्तु **शैवागमे**–

**'वृत्तेः साक्षितया वृत्तिप्रागभावस्य च स्थितः ।**
**बुभुत्सायास्तथा ज्ञोऽस्मीत्यापातज्ञानवस्तुनः ॥**
**असत्यालम्बनत्वेन सत्यः सर्वजडस्य तु ।**
**साधकत्वेन चिद्रूपः सदा प्रेमास्पदत्वतः ॥**
**आनन्दरूपः सर्वार्थसाधकत्वेन हेतुना ।**
**सर्वसम्बन्धवत्त्वेन सम्पूर्णः शिवसंज्ञितः ॥**
**जीवेशत्वादिरहितः केवलः शिव एव स ।'**

इति । शिवं करोतीति वा शिवशब्दात् 'तत्करोती'तिण्यन्तात्पचाद्यचि टाप् । शेतेऽस्मिन्सर्वमिति वा । 'सर्वनिघृष्वरिष्वे'त्यादिना कर्तृभिन्नेऽर्थे औणादिकनिपातनात् । शिवाः शोभना गुणा अस्यां सन्तीति वा । अर्शआदित्वादच् । **जैनेन्द्रव्याकरणे** तु **'शिवादयश्चे'**ति सूत्रम् । **तत्सुभूतिचन्द्रेण** व्याख्यातम् । शाम्यतीति शिवः क्वन इत्वमङ्गलोपश्च निपात्यत इति ।

**'समेधयति यं नित्यं सर्वार्थानामुपक्रमम् ।**
**शिवेति यन्मनुष्याणां तस्मादेव शिवः स्मृतः ॥'**

इति **भारते** ।

**'समा भवन्ति मे सर्वे दानवाश्चामराश्च ये ।**
**शिवङ्करोस्मि भूतानां शिवत्वं तेन मे सुरा ॥'**

इति च । **'यो योनिं योनिमधितिष्ठत्येको यस्मिन्निदं सं च विचैति विश्वम्'** इति **श्रुतिः** । **'त्रिलोचनं नीलकण्ठं प्रशान्तमि'**ति च । तदेतत्सर्वं **शिवाष्टोत्तरशतव्याख्याने** संगृहीत**मस्माभिः** –

**'प्रकृत्या नैर्मल्यादमलगुणयोगादपि**
**शमाज्जगत्याधारत्वाद्धजदमृतदानाच्च भवतः ।**
**बलादिच्छाशक्तेः परमशिव वेदान्तनिकरै-**
**रसाधारण्येन व्यवहृतिमयासीः शिव इति ॥'**

शिवाभेदा वा शिवा । तदभेदस्य प्रवृत्तिनिवृत्ति(मित्त)ता च **लिङ्गपुराणे** दर्शिता–

**'यथा शिवस्तथा देवी यथा देवी तथा शिवः ।**
**तस्मादभेदबुद्ध्यैव शिवेति कथयन्त्युमाम् ॥**

इति । तत्रैव स्थलान्तरे–

**'उमाशङ्करयोर्भेदो नास्त्येव परमार्थतः ।**
**द्विधाऽसौ रूपमास्थाय स्थित एको न संशयः ॥'**

इति । 'परमात्मा शिवः प्रोक्तः शिवा सैव प्रकीर्तिते'ति च । यज्ञवैभवखण्डेऽपि–

**चिन्मात्राश्रयमायायाः शक्त्याकारे द्विजोत्तमाः ।**
**अनुप्रविष्ठा या संविन्निर्विकल्पा स्वयंप्रभा ॥**
**सदाकारा परानन्दा संसारोच्छेदकारिणी ।**
**सा शिवा परमा देवी शिवाभिन्ना शिवङ्करी ॥'**

इत्यारभ्य

**'करुणासागरामेनां यः पूजयति शाङ्करीम् ।**
**किं न सिद्ध्यति तस्येष्टं तस्या एव प्रसादतः ॥'**

इत्यन्तम् । अथवा । वायोर्भार्या शिवानाम्नी । उक्तं च लैङ्गे–

**'समस्तभुवनव्यापी भर्ता सर्वशरीरिणाम् ।**
**पवनात्मा बुधैर्देव ईशान इति कीर्त्यते ॥**
**ईशानस्य जगत्कर्तुर्देवस्य परमात्मनः ।**
**शिवा भार्या बुधैरुक्ता पुत्री चास्य मनोजव ॥'**

इति । 'बालेन्दुशेखरो वायुः शिवः शिवमनोरमे'ति च । वायुपुराणेऽपि–

**ईशानस्य चतुर्थी या तनुर्वायुरिति स्मृता ।**
**तस्य पत्नी शिवानाम पुत्रश्चास्य मनोजव ॥'**

इति । यद्वा । शिवं मोक्षं ददातीति शिवा । तदुक्तं देवीपुराणे–

**'शिवा मुक्तिः समाख्याता योगिनां मोक्षदायिनी ।**
**शिवाय जयते देवी ततो लोके शिवा स्मृता ॥'**

इति । आगमे तु–

**पावकस्योष्णतेवेयं भास्करस्येव दीधितिः ।**
**चन्द्रस्य चन्द्रिकेवेयं शिवस्य सहजा शिवा ॥'** इति ।

एवमिच्छादिधर्मरूपापि न धर्मिणंप्रति गुणभूतेत्याह–स्वाधीनेति । स्वस्यात्मनोऽधीन आयत्तो वल्लभो भर्ता कामेश्वरो यस्याः । शिवस्य शक्त्यधीनात्मलाभकत्वाद्धर्म्येव धर्माधीन इत्यर्थः । तदुक्तं कालिकापुराणे–

**नित्यं वसति तत्रापि पार्वत्या सह नर्मकृत् ।**
**मध्ये देवीगृहं तत्र तदधीनस्तु शङ्करः ॥'**

इति । आगमेऽपि–

**'शक्तो यया स शम्भुर्भुक्तौ मुक्तौ च पशुगणस्यास्य ।**
**तामेनां चिद्रूपामाद्यां सर्वात्मनास्मि नतः ॥'**

इति । **स्कान्देऽपि**–

**'जगत्कारणमापन्नः शिवो यो मुनिसत्तमाः ।**
**तस्यापि साभवच्छक्तिस्तया हीनो निरर्थकः ॥'**

इति । श्रीमदाचार्यभगवत्पादैरप्युक्तम्–

**शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितुं**
**न चेदेवं देवो न खलु कुशलः स्पन्दितुमपि ॥'**

इति । स्वाधीनो वल्लभो ययेति वा । शर्यातिकन्यायाः सुकन्यायाः पतिरश्विभ्यां स्वसमानरूपः कृत इति तं विशिष्याजानत्या भगवतीमाराध्यैव स्वाधीनीकृत इति **देवीभागवते** सप्तमस्कन्धे कथा स्मर्यते–

**'शरणं ते जगन्मातः प्राप्तास्मि भृशदुःखिता ।**
**रक्ष मेऽद्य सतीधर्मं नमामि चरणौ तव ॥'**

इत्यादिप्रार्थनोत्तरम्,

**'एवं स्तुता तदा देवी तया त्रिपुरसुन्दरी ।**
**हृदि तस्या ददौ ज्ञानं येनाधीनः पतिर्भव ॥'**

इत्याद्युक्तेः । एवं शच्या इन्द्रप्राप्तिरपि षष्ठस्कन्धोक्तेहोदाहर्तव्या ॥ ७२ ॥

यद्यपि **भक्तिमीमांसायां** **'तत्प्रतिष्ठा गृहपीठवदि'**तिसूत्रे गृहे तिष्ठति पीठे तिष्ठतीति प्रयोगाविशेषादुभयोरप्यधिकरणत्वं मुख्यमेव न तु साक्षात्परम्परासम्बन्धादिरूपतारतम्यपीठभूभागस्यापि गृहन्तर्गतत्वादित्युक्तम तथापि गुहे क्व तिष्ठतीत्याकाङ्क्षानुदयात्पीठमपेक्ष्येतरेषामधिकरणानां तारतम्यमनुभवसिद्धमस्त्येव । तेन न्यायेन मुख्यत्वात्कामेश्वरवामोत्सङ्गं प्रथममुक्त्वा स्थलान्तराण्याह–

**सुमेरुमध्यशृङ्गस्था श्रीमन्नगरनायिका ।**

सुमेरुमध्यशृङ्गस्थेत्यादिना । सुमेरोर्हेमाद्रेर्मध्यशृङ्गे तिष्ठतीति तत्स्था । शोभने मेरुमध्यशृङ्गेति वा । मेरुपर्वते हि शिवत्रिकोणवत्त्रीणि शृङ्गाणि तेषां मध्ये चतुर्थं शृङ्गमस्ति । तदुक्तं **ललितास्तवरत्ने दुर्वासमहामुनिभिः** –

**'स जयति सुवर्णशैलः सकलजगच्चक्रसंघटितमूर्तिः ।**
**काञ्चननिकुञ्जवाटीकन्दलदमरीप्रपञ्चसङ्गीतः ॥**
**हरिहयनैर्ऋतमारुतहरितामन्तेष्ववस्थितं तस्य ।**
**विनुमः सानुत्रितयं विधिहरिगौरीशविष्टपाधारम् ॥**
**मध्ये पुनर्मनोहररत्नरुचिस्तबकरञ्जितदिगन्तम् ।**
**उपरि चतुःशतयोजनमुत्तुङ्गं शृङ्गपुङ्गवमुपासे ॥'**

---

सुमेरोर्हेमाद्रेर्यन्मध्यशृङ्गं तस्मिन्तिष्ठतीति सा । शृङ्गस्थायै इति ॥ **श्रीमल्लक्ष्मीवद्यन्नगरं** श्रीविद्यानगरं तस्य नायिका राज्ञी । नायिकायै इति ॥

इति । श्रीमल्लक्ष्मीवद्यन्नगरं निरुपपदमेव नगरपदं विद्यानगरवाचकं तस्य नायिका अधिपतिः । तच्च नगरं द्विविधं एकं तावन्मध्यमेरुशृङ्गस्थम् । तदुक्तं **ललितास्तवरत्ने**–

**'तत्र चतुःशतयोजनपरिणाहं देवशिल्पिना रचितम् ।**
**नानासालमनोज्ञं नमाम्यहं नगरमादिविद्यायाः ॥'**

इति । तत्र मध्यशृङ्गे । चत्वारि शतानीति विग्रहः । न तु **'चतुःशतमुत्कृति'**रिति **पिङ्गलसूत्र** इव चतुरधिकं शतमिति । उत्तरश्लोके प्रथमप्राकारस्य प्रथमं सहस्र-पूर्वकषट्शतसंख्याकयोजनपरिमित इति परिमाणोक्तिविरोधात् । नानासालैः पञ्च-विंशतिभिः प्राकारैरिति तदर्थः । अपरं सकलब्रह्माण्डबहिरूर्ध्वभागे सुधासागर-मध्यगतरत्नद्वीपस्थम् । तदुक्तं **रुद्रयामले**–

**'अनेककोटिब्रह्माण्डकोटीनां बहिरूर्ध्वतः ।**
**सहस्रकोटिविस्तीर्णे सुधासिन्धोस्तु मध्यमे ॥**
**रत्नद्वीपे जगद्द्वीपे शतकोटिप्रविस्तरे ।**
**पञ्चविंशतितत्त्वात्मपञ्चविंशतिवप्रकैः ॥**
**त्रिलक्षयोजनोत्तुङ्गैः श्रीविद्यायाः पुरं शुभम् ।'**

इत्यादि । **विद्यारत्नभाष्ये** तु क्षीरसमुद्रमध्येऽप्येकं पुरमस्तीत्युक्तं परन्तु तस्य चतुर्विंशतिप्राकारा इत्यसकृदुक्तं तत्रैकस्य प्राकारस्य न्यूनत्वं गवेषणीयम् । श्रीमन्नगर-शब्दः श्रीचक्रपरो वा । **'चक्रं पुरं च सदनमगारं नगरं गुहे'**ति **विश्वाख्योक्तेः** । **'कगज-दशारे'**त्यादि**गौडपादीयसूत्रे** श्रीपुरस्य चक्रपरत्वेन तद्भाष्ये व्याख्यानाच्च । **'नैतमृषिम-विदित्वा नगरं प्रविशेत्'**, **'देवानां पूरयोध्या'**, **'अमृतेनावृतां पुरी'**मित्यादिश्रुतिषु नगरादि-पदानां चक्रे प्रयोगदर्शनाच्च **'नगरचक्र–'** (?) इत्यादि**रुद्रयामलात्** ।

## चिन्तामणिगृहान्तस्था पञ्चब्रह्मासनस्थिता ॥ ७३ ॥

मेरौ तु स्वल्पपरिमाणम्,

**'शृङ्गारवर्णवप्रस्योत्तरतः सकलविबुधसंसेव्यम् ।**
**चिन्तामणिगणरचितं चिन्तां दूरीकरोतु मे सदनम्' ॥'**

इति **ललितास्तवरत्नात्** । **गौडपादीयसूत्रभाष्ये** तु सर्वेषां चिन्तितार्थप्रदमन्त्राणां निर्माणस्थानं तदेवेति तस्य चिन्तामणिगृहत्वमित्युक्त्वा तन्निर्माणप्रकारो विस्तेरण वर्णितः ।

---

**चिन्तामणिरभीष्टप्रदो मणिस्तैर्निर्मितं यद्गृहं तस्यान्तस्तिष्ठतीति सा । अन्तस्थायै इति ॥**
**पञ्चब्रह्ममयं यदासनं ब्रह्मविष्ण्वादिपादयुतं मञ्चं तस्मिन् स्थिता । स्थितायै इति ॥ ७३ ॥**

पञ्चभिर्ब्रह्मभिर्निर्मितमासनं मञ्चकरूपं तत्र स्थिता । तदुक्तं **बहुरूपाष्टकतन्त्रे भैरवयामलतन्त्रे** च–

**'तत्र चिन्तामणिमयं देव्या मन्दिरमुत्तमम् ।**
**शिवात्मके महामञ्चे महेशानोपबर्हणे ॥**
**अतिरम्यतले तत्र कशिपुश्च सदाशिवः ।**
**भृतकाश्च चतुष्पादा महेन्द्रश्च पतद्ग्रहः ॥**
**तत्रास्ते परमेशानी महात्रिपुरसुन्दरी ।'**

इति । भृतकाः भृत्याः द्रुहिणहरिरुद्रेश्वरा इत्यर्थः । आग्नेयादीशानान्तविदिक्षु ब्रह्मादय उपर्यधःस्तम्भरूपाः मध्ये पुरुषरूपा अपि श्रीध्यानाच्छक्तिभावं प्राप्ता मीलिताक्षा निश्चला इत्यादिकं **पुराणा**दवगन्तव्यम् ॥ ७३ ॥

**महापद्माटवीसंस्था कदम्बवनवासिनी ।**

महान्ति पद्मानि यस्यामीदृश्यामटव्यां वने सम्यक्तिष्ठति । पद्माटवीस्वरूपमूर्ध्वं **'त्रिलक्षयोजनायाममहापद्मवनावृतम्'** इति **रुद्रयामलो**क्तमेकम् । **ललितास्तवरत्नो**क्तमन्यत्-

**'मणिसदनसालयोरधिमध्यं दशतालभूमिरुहदीर्घैः ।**
**पर्णैः पयोदवर्णैर्युक्तां काण्डैश्च योजनोत्तुङ्गैः ॥**
**मिलितैस्तालीपञ्चकमानैर्मिलितां च केसरकदम्बैः ।**
**सन्ततगलितमरन्दस्रोतोनिर्यन्मिलिन्दसन्दोहाम् ॥**
**पाटीरपवनबालकधाटीनिर्यत्परागपिञ्जरिताम् ।**
**पद्माटवीं भजामः परिमलकल्लोलपक्ष्मलोपान्ताम् ॥'**

इति । ब्रह्मरन्ध्रस्थितसहस्रदलपद्ममपि पद्माटवीत्युच्यते । उक्तं च **स्वच्छन्दतन्त्रे**– **'तस्मादूर्ध्वं कुलं पद्मं सहस्रारमधोमुख'**मिति प्रक्रम्य **'महापद्मवनं चेदं समानं तस्य चोपरी'**ति । ब्रह्माण्डपिण्डाण्डयोरैकरूप्याच्च । इदं **चारुणोपनिषद्भाष्ये**– **'आण्डीभवजमामुहु'**रिति-वाक्यव्याख्यानावसरे स्पष्टीकृतम् ।

कदम्बानां नीपानां वने वसतीति तथा । चिन्तामणिगृहं परितो मणिमण्टपं तत्परितः कदम्बवनम् । तदुक्तं **भैरवयामले**–

**'बिन्दुस्थानं सुधासिन्धुपञ्चयोन्यः सुरद्रुमाः ।**
**तत्रैव नीपश्रेणी च तन्मध्ये मणिमण्टपम् ॥**
**तत्र चिन्तामणिमयम्.........................।'**

इत्यादि । कनकरजतप्राकारमध्यभूः सप्तयोजना । तस्माद्द्वियोजनोन्नताः कदम्बवृक्षाः सन्तीत्यपि **पुराणे** स्थितम् ।

---

महान्ति पद्मानि यस्यां ईदृशी या अटवीवनं तस्यां सम्यक् तिष्ठतीति सा । मंस्थायै इति ॥ कदम्बानां वने वसतीति सा । वासिन्यै इति ॥

**सुधासागरमध्यस्था कामाक्षी कामदायिनी ॥ ७४ ॥**

सुधासागरः पीयूषवर्णः स चोर्ध्वस्थ एकः '**अमृतेनावृतां पुरी**'मिति **श्रुतिप्रसिद्धः** । पिण्डाण्डे बिन्दुस्थाने सहस्रारकर्णिकाचन्द्रमध्येऽन्यः । अपराजिताख्ये सगुणब्रह्मोपासनाप्राप्ते नगरे अरनामकण्यनामकौ द्वौ सुधाहृदौ सागरप्रतिमौ । **शारीरकभाष्ये**— '**अनावृत्तिः शब्दादि**'तिसूत्रे कथितावन्यौ । अविशेषात्सर्वेऽपीह गृह्यन्ते । तेषां मध्ये तिष्ठतीति तथा ।

कामे कमनीये अक्षिणी यस्याः । समासान्तष्टच् । कामेश्वर एव नेत्रं यस्या इति वा । नेत्रविषयत्वान्नेत्रत्वमुपचर्यते । काञ्चीपीठाधिष्ठात्र्या इदमसाधारणं नाम । तदुक्तं **ब्रह्माण्डपुराणे**—

'**सर्वज्ञा साक्षिभावेन तत्तत्कामानपूरयत् ।**
**तद्दृष्ट्वा चरितं देव्या ब्रह्मा लोकपितामहः ॥**
**कामाक्षीति तदा नाम ददौ कामेश्वरी च ।**' इति ।

कामान्मनोरथान् ददातीति कामदायिनी । कामेश्वरमेव वा भक्तेभ्यो वितरति शिवाभेददानाभिप्रायेण वा कामदायिनी । कामं मन्मथं द्यति खण्डयतीति वा कामदः शिवस्तेन अयिनी शुभावहविधिमती । '**अयः शुभावहो विधि**'**रित्यमरः** । अथवा दायो नाम पित्रादिपरम्परार्जितं स्वम् । ततः कामेश्वरेण दायवती । तदभिन्नानादिसिद्धस्वभाववतीत्यर्थः ॥ ७४ ॥

*अथ परिभाषायां चतुःषष्टिनामानि विभजते—*

***अर्धचतुर्विंशतितनुदोद्भव.........गुणगणो दशपात् ।***
***दम्भावहगोमेदाभावेहचतुर्गुणा गुणैर्गङ्गा ॥ १० ॥***

*अर्धानां चतुर्विंशतिः ततस्तकारात्षडक्षरमेकं नाम । ततो नकाराद्दशाक्षरम् । नकारस्य शून्ये सङ्केतितत्वेऽपि तावन्मात्रस्य नामाक्षरसंख्यत्वायोगादकारान्तरसाहित्यापेक्षायां प्रथमोपस्थितिन्यायेनैकाङ्कसमावेशे दशसंख्यावाचकत्वसिद्धेः । टवर्गे दशमत्वादपि तत्सिद्धेः दशपादिति । तत्रैकादशानां पादात्मकनाम्नां सत्त्वेऽपि छन्दोनुरोधादवयुत्यानूद्यैकादशः पादः पृथग् उत्तरार्धे दकारेण निर्दिष्टः । चतुरिति चत्वारि नामानीत्यर्थः । न तु चतुरक्षरमेकं नामेति । तथात्वे एकेनैव घकारढकाराद्यक्षरेण सिद्धेऽधिकोक्तेर्वैयर्थ्यात् । एकाद्यादिसंख्यावाचकपदसम्बन्धिभिर्नैरेव वर्णैरक्षरसंख्याव्यवहारस्यासाङ्कर्यार्थमङ्गीकारस्योक्तत्वाच्च । ततश्चत्वारि नामानि*

---

सुधाया अमृतस्य यः सागरः समुद्रः तन्मध्ये तिष्ठतीति सा । मध्यस्थायै इति ॥ कामानि कमनीयानि अक्षीणि यस्याः सा । कामाक्ष्यै इति ॥ कामानभीष्टान् ददाति सा । दायिन्यै इति ॥ ७४ ॥

*कतिकत्यक्षराणीत्याकाङ्क्षायां परस्पराक्षरसंख्यावैषम्ये मानाभावात् 'समं स्याद-श्रुतत्वा'दितिन्यायेन समसंख्याक्षराणीति सिद्धेऽर्धस्यार्धयोरर्धानां वा मध्य एवेत्यपि नियमाच्चत्वारिचत्वार्यष्टावष्टौ वाक्षराणीति सिद्ध्यति न तु नवनवेत्यादि । अर्धात्परतो द्वितीयनामसमाप्त्यापत्तेः छन्दःसूत्रविरोधेन तस्यानिष्टत्वात् । चतुरष्ट-संख्ययोरन्यतरनियमस्तु* ***'भक्तिप्रिया भक्तिगम्या भक्तिवश्या भयापहा'*** *इत्यर्धपर्या-लोचनवतां व्युत्पत्तिमतां च सुज्ञान एव । नह्ययं ग्रन्थः सहस्रनामाक्षराणा- मुद्धाराय गुरुचरणैः कृतः किन्तु ज्ञाताक्षरान्प्रति विभागप्रदर्शनाय । अतश्चाक्षर-ज्ञानसापेक्षत्वाद्व्युत्पन्नैश्चतुश्चतुरक्षराणीति ज्ञातुं शक्यमेव । न च तैरन्यत्राप्येवमेव ज्ञातुं शक्यत्वाद्ग्रन्थवैयर्थ्यम् । व्युत्पन्नानामपि सन्देहस्य प्रचुरं प्रदर्शयिष्यमाणत्वात् । अन्यथा* ***छलाक्षरशूत्राणामपि*** *वैयर्थ्यापत्तेः । अथापि यद्यष्टाक्षरे द्वे नामनी विभज्येते तदा गुणैरिति गकारेण* ***'शरच्चन्द्रनिभानने'****त्यत्र शरच्चमिति त्र्यक्षरस्य भिन्नना-मत्वापत्तिः । तत्रापि भ्रमादिष्टापत्तिं वदन्तस्तु नात्राधिकारिणः । तदुक्तं योगवासिष्ठे–* ***'नात्यन्तमज्ञो नोत ज्ञः सोऽस्मिन्शास्त्रेऽधिकारवानि'****ति तुल्याविमौ पर्यनुयोगसमाधी सर्वशास्त्रेष्वपीति ॥ १० ॥*

अथ देव्याः स्थूलरूपस्य कार्याणि स्पष्टतया वदन्नेव रहस्यभूतं परं रूपं रहस्योक्तिभिरेव वर्णयितुमारभते–

**देवर्षिगणसंघातस्तूयमानात्मवैभवा ।**

देवर्षीत्यादिना । देवगण ऋषिगणश्च यस्तयोः संघातेन महासमुदायेन स्तूयमान आत्मा स्वरूपं यस्य तादृशं वैभवं यस्याः, स्तूयमानात्मवैभवमात्मनो व्यापकत्वं यस्या वा सा । अथवा देवर्षिगणैः संघातशः स्तूयमानं बहुप्रकारेण स्तूयमानमित्यर्थः । यद्वा संघातो नरकविशेषस्तन्निरासार्थं स्तूयमानमित्यादि । पापस्य प्रायश्चित्तमित्यादौ षष्ठ्या नाश्यनाशकभावसम्बन्धार्थकत्वदर्शनादिहापि षष्ठीसमासः । यद्वा सम्यक् घातो भण्डासुरवधस्तदुद्देशेन स्तूयमानमित्यादि । अतएवोत्तरनामनि तदुत्तरभावित-वधोद्योगकथनम् । अतएव **ब्रह्माण्डपुराणे** भण्डासुरपीडितैर्देवैः कृतं **'जयदेवि जगन्मात'**-रित्यादिना देवीस्तवं निर्वर्ण्याम्बया वरं वृणुध्वमित्युक्ते देवानां वाक्यम्–

**'यदि तृष्टासि कल्याणि वयं दैत्येन्द्रपीडिताः ।**
**दुर्लभं जीवितं चापि त्वां गताः शरणार्थिनः ॥'**

इत्यादि । अन्यत्रापि–

**'ततः कदाचिदागत्य नारदो भगवानृषिः ।**
**प्रणम्य परमां शक्तिमुवाच विनयान्वितः ॥'**

---

देवानां ऋषीणां गणानां गणदेवानां आदित्यवस्वादीनां च यः सङ्घातः समुदायः तेन स्तूयमानमात्मनोवैभवं यस्याः सा । वैभवायै इति ॥

इत्यारभ्य–

**'अयं भण्डासुरो देवि बाधते जगतां त्रयम् ।**
**त्वयैकयैव जेतव्यो न शक्यस्त्वपरैः सुरैः ॥'**

इत्यन्तम् । वस्तुतस्तु देवा ब्रह्मादयः । ऋषयो वसिष्ठादयः । देवर्षयो नारदादयः । देवर्षयश्च देवर्षयश्चेति विग्रहः । गणाः आदित्यादयः ।

**'आदित्यविश्ववसवस्तुषिताभास्वरानिलाः ।**
**महाराजिकसाध्याश्च रुद्राश्च गणदेवताः ॥'**

इत्यग्निपुराणात् । तेषां संघातः समुदायः **'अनेककोटिदिक्पालैश्चन्द्रार्कवसुकोटिभि'**रित्यादि-**रुद्रयामलोक्त**स्तेन स्तूयमानमित्यर्थः । तेन न गणसंघातपदाभ्यां पौनरुक्त्यं शङ्कनीयम् । अथ पररूपपरत्वपक्षे देवादिस्तूयमानत्वविशेषणादखिलानुगतमखिलपरिचितम-खिलप्रेमास्पदं चैतन्यमेवात्मेति **शैवशास्त्रोक्तं** स्वरूपं ध्वनितम् । **अग्निपुराणे**ऽपि–

**'तस्य चैतन्यमात्मेति प्रथमं सूत्रमीरितम् ।**
**ज्ञानबन्ध इतीदं तु द्वितीयं सूत्रमीशितुः ॥'**

इति । ततश्च देवादिभिः स्तूयमानं परिचीयमानमात्मनः । **'स्वात्मैव देवता प्रोक्ता ललिता विश्वविग्रहे'**ति **तन्त्रराजोक्ताया** आत्माभिन्नदेवताया वैभवं विभुत्वमनन्त-शक्तिसंवृतत्वरूपं प्राभवं यस्याः सेति वर्णनीयम् । अथ **'देवकार्यसमुद्यते'**ति यत्स्थूल-रूपस्य कार्यमुक्तं तत्प्रपञ्चयति ।

**भण्डासुरवधोद्युक्त शक्तिसेनासमन्विता ॥ ७५ ॥**

भण्डनामकोऽसुरस्तद्युद्धादिकं च **ललितोपाख्याने** विस्तरेण प्रसिद्धतरम् । तदुक्तं तत्रैव **ब्रह्माण्डपुराणे** मन्मथदाहं प्रक्रम्य,

**'अथ तद्भस्म संवीक्ष्य चित्रकर्मा गणेश्वरः ।**
**तद्भस्मना तु पुरुषं चित्राकारं चकार स ॥'**

इत्यारभ्य

**'एतद्दृष्ट्वा तु चरितं धाता भण्डितिभण्डिति ।**
**यदुवाच ततो नाम्ना भण्डो लोकेषु कथ्यते ॥'**

इत्यन्तम् । तस्यासुरत्वमपि तत्रैवोक्तम्–

**'रुद्रकोपानलाज्जातो यतो भण्डो महाबलः ।**
**तस्माद्रौद्रस्वभावश्च दानवश्चाभवत्ततः ॥'**

---

भण्डनामको योऽसुरस्तस्य वधे हनने उद्युक्ता याः शक्तयः तासां सेनाभिः सम्यगन्विता युक्ता । समन्वितायै इति ॥ ७५ ॥

इति । तस्य दैत्यस्य वधे हनने उद्युक्तानां शक्तीनां स्त्रीदेवतानां सेनाभिः सैन्ये सम्यक् व्यूहनिर्माणेनान्विता युक्ता । सम्यगभेदेनान्विता वा । तथा च **गौडपादीयं सूत्रम्**— '**भण्डासुरहननार्थमेकैव अनेका**' इति । यद्वा भण्डो निर्लज्जः स च प्रकृते जीव-भावमापन्नो देही । तदाहुः '**सच्चित्सुखात्माऽपि जडास्थिरत्वदुःखादिभिः क्लिश्यसि भण्डिमाय**'मिति । तस्यासून् प्राणान् रात्यादत्ते तत्सर्वं स्वं तद्वतो धर्मो भण्डिमेति यावत् । ज्ञानबन्ध इति सूत्रोक्तो बन्ध इति भावः । अस्यात्मा ज्ञानमिति सूत्रद्वयं सन्धावकारश्लेषाश्लेषाभ्यामात्मन्यात्मत्वज्ञानाभावोऽनात्मन्यात्मत्वज्ञानं च आणव-मलपदवाच्यत्वेन प्रसिद्धो बन्ध इत्यर्थस्तद्भाष्यवार्तिकयोरुक्तः । तस्य वधो यस्मात्त-दुद्युक्तमुद्योग उद्यम इति यावत् तस्य याः शक्तयः सामर्थ्यानि तासां सेनया समूहेन समन्वितेति रहस्यार्थः । तथा च **शिवसूत्राणि**— '**उद्यमो भैरवः । शक्तिचक्रानुसन्धाने विश्वसंहारः**' । शक्तिसन्धाने शरीरोत्पत्तिः भूतसन्धाने भूतपृथक्त्वविश्वसंघट्टा इत्यादीनि तद्वार्तिकानि यथा—

**'योयं विमर्शरूपायाः प्रसरन्त्याः स्वसंविदः ।**
**झडित्युच्चलनाकारप्रतिभोन्मज्जनात्मकः ॥**
**उद्यमोऽन्तःपरिस्पन्दः पूर्णाहंभावनात्मकः ।**
**स एव सर्वशक्तीनां सामरस्यादशेषतः ॥**
**विश्वतोभरितत्वेन विकल्पानां विभेदिनाम् ।**
**अलं कवलनेनापीत्यन्वर्थादेव भैरवः ॥**
**योऽयमुक्तः स्वसंवित्तेरुद्योगो भैरवात्मकः ।**
**अस्यास्ति महती शक्तिरतिक्रान्तक्रमाक्रमा ॥**
**निःशेषनिजचिच्छक्तिसेनाक्रमणलम्पटा ।**
**रिक्तारिक्तोभयाकाराप्यन्यैतद्दूषिणी परा ॥**
**तथैव स्वात्मचिद्धित्तौ प्रमेयोल्लासनादितः ।**
**परप्रमातृविश्रान्तिपर्यन्तस्पन्दरूपया ॥**
**सृष्टिस्थितिलयान्ताख्या भासा शक्तिप्रसारणात् ।**
**प्रपञ्चविषयं चञ्चत्पञ्चकृत्यं प्रपञ्चितम् ॥**
**तया प्रसारितस्यास्य शक्तिचक्रस्य यत्पुनः ।**
**सन्धानमन्तरा माया सोक्तक्रमविमर्शनम् ॥**
**तस्मिन्सत्यस्य विश्वस्य कालाग्न्यादिकलावधेः ।**
**संहारः स्यात्स्वसंवित्तिवह्निसद्भावलक्षणः ॥**
**इच्छाशक्तिरुमेत्यादिसूत्रोक्ता शक्तिरस्य या ।**
**सन्धाने योगिनस्तस्यास्तन्मये भावने सति ॥**
**तद्वशात्तत्तदिच्छार्हशरीरोत्पत्तिरिष्यते ।**
**भूतानां देहधीप्राणशून्यानां ग्राहकात्मनाम् ॥**

**ग्राह्याणां स्थावराणां च सन्धानं परिपोषणम् ।**
**पृथक्त्वमथ विश्लेषो व्याध्यादिक्लेशबन्धनात् ॥**
**विश्वस्य देशकालादिविप्रकृष्टस्य यत्पुनः ।**
**संघट्टश्चक्षुराद्यक्षप्रत्यक्षीकरणादिकम् ॥**
**एतत्सर्वं भवेच्छक्तिसन्धाने सति योगिनः ।'**

इत्यादि । पुंस्त्वशक्तिर्बाल्ये तिरोहितापि यौवने यथा समुल्लसति तथा विचित्राः शक्तिसमूहा जीवे विद्यमाना अप्यज्ञानवशात्तिरोहिताः उद्योगे सति तु सर्वा अपि ताः समुल्लसन्तीति तु समुदायार्थः ॥ ७५ ॥

**सम्पत्करी समारूढसिन्धुरव्रजसेविता ।**

अस्ति सम्पत्करीनाम काचिद्देवता । या तावत् **स्वतन्त्रतन्त्रे**– '**सम्पत्करीति काप्यस्ति विद्या साऽचिन्त्यवैभवे**'त्यारभ्य' '**एवं त्रिवर्णा सा विद्या विधानं चाथ कथ्यत**' इत्यन्तेन वर्णिता । सा हि त्रिपुरसुन्दर्या गजेष्वधिकृतेति **ललितोपाख्याने प्रसिद्धम्** । 'ललिता-**परमेशान्या अङ्कुशास्त्रात्समुद्गता । सम्पत्करी नामदेवी**' त्यारभ्य '**रणकोलाहलं नाम सारुरोह मतङ्गज**'मित्यादिकमुक्त्वा '**तामन्वगा ययुः कोटिसंख्याका कुञ्जरोत्तमा**' इत्यन्तम् । तया सम्यग्गजशास्त्रकथितोपायैरारूढानामारोहणादिना नियमितानां सिन्धुराणां भद्रमन्द्र-मृगादिभेदभिन्नगजानां व्रजेन हास्तिकेन सेविता । अथवा सुखसम्पन्मयी चित्तवृत्तिः सम्पत्करीत्युच्यते तस्यां समारूढैर्विषयीभूतैः सिन्धुरव्रजैः शब्दादिविषयसमूहैः सेविता । तथा च **कादिमते**– '**इन्द्रियार्थान्गजान्पूर्वे तन्नाम्नैव समर्चयेदि**'ति । एकस्मिन् ज्ञाने विषयीभूतायास्त्रिपुट्या विविच्य सम्बन्धज्ञानरूपा चित्तवृत्तिः सुखसम्पत्करी । तदुक्तं **प्रत्यभिज्ञायाम्**–

**'ग्राह्यग्राहकसंवित्तिसामान्ये सर्वदेहिनाम् ।**
**योगिनां तु विशेषोऽयं सम्बन्धे सावधानतः ॥'**

इति । तदिदं '**लोकानन्दः समाधिसुख**'मिति **शिवसूत्रव्याख्यायां** स्पष्टम् । '**मात्रा स्वप्रत्ययानुसन्धाने नष्टस्य पुनरुत्थान**'मिति सूत्रे **वरदराजेनो**क्तम्–

**'मात्रा पदार्थरूपाद्यास्तेष्वेभिश्चक्षुरादिभिः ।**
**अक्षैः स्वप्रत्ययो नाम ततस्त्वग्राह्यवेदनम् ॥**
**सन्धानं तु समस्तं तदहमित्यनुसंहतिः ।**
**अमुष्मिन्सति नष्टस्य हरितस्योक्तवर्गतः ॥**
**तुर्यस्य पुनरुत्थानं भूय उन्मज्जनं भवेत् ।**
**ऐक्यसम्पत्करं तस्य योगीन्द्रस्येति शिष्यत ॥'**

इति ।

---

सम्पत्कर्याख्या या मूलदेव्यङ्कुशात्प्रादुर्भूता देवता तया स्वशक्तिसेनया सहितया सम्यक् गज-शास्त्रोक्तरीत्या आरूढौ(ढो) यः सिन्धुराणां गजानां व्रजः समुदायः तेन सेविता । सेवितायै इति ।

**अश्वारूढाधिष्ठिताश्वकोटिकोटिभिरावृता ॥ ७६ ॥**

अश्वारूढाख्या काचिद्देवता **तन्त्रे** प्रसिद्धा । यस्यास्त्रयोदशाक्षरो मन्त्रः सा तावदश्वेष्वधिकृता । तदुक्तं **ब्रह्माण्डपुराणे**–

**'अथ श्रीललितेशान्याः पाशायुधसमुद्भवा ।**
**अति त्वरितविक्रान्तिरश्वारूढा चलत्पुरः ॥'**

इत्यारभ्य

**'अपराजितनामानं समारुह्य हयं ययौ ।**
**बहवो वातजवना वाजिनस्तां समन्वयुः ॥'**

इत्यन्तम् । अतएव त्रिपुरासिद्धान्ते नामनिरुक्तिः **'तुरङ्गेषु स्थिरत्वाच्च साश्वारूढेति गीयत'** इति । तयाधिष्ठितानां स्वायत्तीकृतानां अश्वानां कोटिगुणितकोटिभिर्जलधिसंख्याभिर्बह्वीभिरावृता । यद्वा **'इन्द्रियाण्यश्वरूपाणि तत्र पश्चिमतो यजे'**दिति **कादिमते** वचनादश्वपदेनेन्द्रियाणि कथ्यन्ते । तदारूढं मनः। मनस इन्द्रियद्वारैव वृत्तिनिर्गमात् । ततश्चैकेन मनसा असंख्यातानीन्द्रियाण्यधिष्ठाय तत्तत्सुखानि भुनक्तीत्यर्थः । अश्वारूढैरिति बहुवचनान्तेन विग्रहे बहुभिर्मनोभिर्युगपदनन्तेन्द्रियाधिष्ठात्रीत्यर्थः । आत्माख्यदेवतारूपो योगी पूर्वोक्तोद्यमाभ्यासवांश्चेदिच्छामात्रेण सर्वशरीराभिमानी भवतीति भावः । तथा च **शिवसूत्राणि**– **'विस्मयो योगभूमिकाः । इच्छाशक्तिरुमा कुमारी । दृश्यं शरीर**'मिति । तद्वार्तिकानि च–

**'यथा सातिशयानन्दे तस्य चिद्विस्मयो भवेत् ।**
**तथास्य योगिनो नित्यं तत्तद्वेद्यावलोकने ॥**
**निःसामान्यपरानन्दानुभूतिस्तिमितेन्द्रिये ।**
**परे स्वात्मन्यतृप्त्यैव यदाश्चर्यं स विस्मयः ॥**
**स एव खलु योगस्य परतत्त्वैकरूपिणः ।**
**भूमिकास्तत् क्रमारोहपरविश्रान्तिसूचिकाः ॥**
**ईदृग्विस्मयविद्योगभूमिकारूढचेतसः ।**
**परभैरवतां युक्त्याभ्यसमानस्य शाश्वती ॥**
**तस्यैव योगिनो येच्छाशक्तिः सैव भवत्युमा ।**
**परा भट्टारिका सैव कुमारीति प्रकीर्तिता ॥**

---

अश्वारूढाख्या श्रीदेवी पाशादाविर्भूता देवता तया अधिष्ठितानां स्वायत्तीकृतानां अश्वानां या कोटिगुणिता कोटिः तादृशानेकाभिः कोटिभिरावृता परितः संवृता । आवृतायै इति ॥ ७६ ॥

**सदाशिवादिक्षित्यन्तविश्वसर्गादिलीलया ।**
**कुमारी कुं महामाया भूमिं मारयतीत्यपि ॥**
**कुमारी चोपभोग्यस्य योगिनो भैरवात्मनः ।**
**कुमारी नान्यभोग्यस्य भोक्त्रेकात्म्येन तिष्ठति ॥**
**उमा कुमारी सन्त्यक्तसर्वसङ्गा महेशितुः ।**
**आराधनपरा तद्वदिच्छाशक्तिस्तु योगिनः ॥**
**अयमेव स्फुटोपायो दृष्टोऽनुत्तरदेशिकैः ।**
**एवमीदृक्प्रभावेच्छाशक्तियुक्तस्य योगिनः ॥**
**यद्यद्दृश्यमशेषं तच्छरीरं तस्य योगिनः ।**
**अहमित्यपृथक्त्वेन प्रतिवत्प्रतिभासनात् ॥**
**एवं देहे च बाह्ये च सर्वत्रैवास्य योगिनः ।**
**दृश्यं शरीरतामेति शरीरं चापि दृश्यताम् ॥'**

इति । सूत्रान्तरञ्च '**यथा तत्र तथान्यत्रे**'ति ।

**'यत्र स्वाभाविका देहे स्फुटीभूता स्वतन्त्रता ।**
**यथा तत्र तथान्यत्र देहे भवति योगिनः ॥**
**स्फुटीभवति युक्तस्य पूर्णाहन्तास्वरूपिणी ।'**

इति ॥ ७६ ॥

**चक्रराजरथारूढसर्वायुधपरिष्कृता ।**

चक्रराजकिरिचक्रगेयचक्रादयो रथप्रभेदा **रथशास्त्रे** ललितोपाख्याने च वर्णिताः –

**'आनन्दध्वजसंयुक्तो नवभिः पर्वभिर्युतः ।**
**दशयोजनमुन्नम्रश्चतुर्योजनविस्तृतः ॥**
**महाराज्ञीश्चक्रराजरथेन्द्रः प्रचलन्बभौ ।**
**मन्त्रिताभा (ण्यम्बा) महाचक्रे गीतिचक्रे रथोत्तमे ॥**
**सप्तपर्वाणि चोक्तानि तत्र देव्यश्च ताः शृणु ।**
**किरिचक्ररथेन्द्रस्य पञ्चपर्वसमाश्रयाः ॥**
**देवताश्च शृणु प्राज्ञ नामानि शृण्वतां जयः ।**
**चक्रराजरथो यत्र तत्र गेयरथोत्तमः ॥**
**यत्र गेयरथस्तत्र किरिचक्ररथोत्तमः ।**
**एतद्रथत्रयं तत्र त्रैलोक्यमिव जङ्गमम् ॥**

---

चक्रराजाख्यो यः श्रीदेव्या रथः तं आरूढानि यानि सर्वाण्यायुधानि देवतारूपाणि तैः परिष्कृता अलङ्कृता । परिष्कृतायै इति ॥

इत्यादि। तेषु चक्रराजाख्यं रथमारूढैः सर्वैरायुधैः परिष्कृतालङ्कृता युद्धकाले देवी। रथसमीपे देव्याः सर्वाण्यायुधानि चक्रराजरथे परिपूर्य स्थापितानि सन्तीत्यर्थः। यद्वा चक्रराजं श्रीचक्रमेव रथस्तमारूढानि यानि सर्वायुधानि सर्वाण्यात्मज्ञानसाधनानि तैरित्यादि। यज्ञायुधानि सम्भरतीत्यादौ साधने प्रायुधशब्दप्रयोगदर्शनात्। आणवोपाय-शाक्तोपाय-शाम्भवोपायादयः **शैवशास्त्रोक्त**साधनविशेषा **योगशास्त्रोक्ता**श्च ते श्रीचक्रान्न भिद्यन्त इत्यर्थः। तथा च सूत्रम्–'**नासिकान्तमध्यसंयमात्किमत्र सव्यापसव्यसौषुम्ने**'ष्विति। चक्रसिद्धौ सत्यां योगमार्गे किमपि नावशिष्यत इत्यर्थः। अथवा चक्रराजमेव रथ आधारो यस्य तच्चक्रेशत्वाख्या सिद्धिरितियावत्। तामारूढं तद्दानेऽधिकृतं यत्सर्वायुधं सर्वाणि कर्मादिरूपाण्यायुधानि साधनानि यस्मिंस्तत् '**सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत**'इति वचनाज्ज्ञानम्। शुद्धविद्येत्यर्थः। तया परिष्कृता। तथा च **शिवसूत्रम्**– '**शुद्धविद्योदयाच्चक्रेशत्वसिद्धि**'रिति। **वार्तिकान्यपि**–

**'यदापरिमितां सिद्धिमनिच्छन्पुनरिच्छति।**
**विश्वात्मवत्प्रथारूपां परां सिद्धिं तदास्य तु॥**
**शुद्धविद्योदयाच्चक्रराजत्वं सिद्धिमृच्छति।**
**वैश्वात्म्यप्रथनाकाङ्क्षी संधत्ते शक्तिमात्मनः॥**
**यदा योगी तदा तस्य सदाशिवपदस्पृशः।**
**ईश्वरो बहिरुन्मेषो निमेषोऽन्तः सदाशिवः॥**
**सामानाधिकरण्यं च सद्विद्याहमिदं धियोः।**
**इति नीत्या जगत्सर्वमहमेवेति या मतिः॥**
**सा शुद्धा निर्मला विद्या तदीयादुदयात्स्फुटात्।**
**उन्मज्जनात्स चिच्छक्तिमात्मनो नित्यमामृशेत्॥**
**यदा योगी तदा तस्य चक्रेशत्वमनुत्तरम्।**
**माहेश्वर्या समावेशोत्कर्षात्सिध्यति योगिन॥'** इति।

**गेयचक्ररथारूढमन्त्रिणीपरिसेविता॥ ७७॥**

गेयचक्राख्यं रथमारूढया मन्त्रिण्या श्यामलादेव्या परितः सेविता। यद्वा गेयं प्रसिद्धं चक्रं यस्य तादृशो रथो यस्य सूर्यमण्डलस्य तत्रारूढाभिर्मन्त्रिणीभिर्विद्योपासकाभिर्योगिनीभिः परिसेविता। अथवा गेयो मुख्यश्चक्राख्यो रथो यस्याः सा त्रिपुरसुन्दरी तस्या आरूढमारोहणं बुद्धौ विषयीकरणमनुसन्धानमिति यावत्। तेन

---

गेय चक्राख्यं रथं आरुढा। या मन्त्रिणी राजश्यामला तया परितः समन्तात्सेविता। सेवितायै इति॥ ७७॥

यो मन्त्रिणीः । मन्त्रोऽस्यास्तीति मन्त्रि मन्त्रवीर्यं तन्नयति विषयीकरोतीति तदनुभवस्तेन परिसेविता । आत्मनं त्रिपुरसुन्दर्याश्चाभेदेनानुसन्धाने क्रियमाणे यत्तावत् **तन्त्रराजे** कथितं गरुमुखैकवेद्यं मन्त्रवीर्ययोजनं तस्यानुभवो भवतीत्यर्थः । तथा च सूत्रम्–'**महाह्रदानुसन्धानान्मन्त्रवीर्यानुभव**' इति ।

**'महाह्रद इति प्रोक्ता शक्तिर्भगवती परा ।**
**अनुसन्धानमित्युक्तं तत्तादात्म्यविमर्शनम् ॥**
**मन्त्रवीर्यमिति प्रोक्तं पूर्णाहन्ताविमर्शनम् ।**
**तदीयोऽनुभवस्तस्य स्फुरणं स्वात्मनः स्फुटम् ॥'**

इति । एतच्च '**विद्याशरीरस्फुरता मन्त्ररहस्य**'मिति सूत्रे भगवता **श्रीक्षेमराजेन** विस्तरेण स्फुटीकृतम् ॥ ७७ ॥

## किरिचक्ररथारूढदण्डनाथापुरस्कृता।

किरिर्वराहः '**कोलः पोत्री किरिः किटि**'रित्यमरात् । तदाकृतीनि तदाकृष्टानि वा चक्राणि यस्य तं रथमारूढया दण्डनाथया वाराह्याख्यया देव्या पुरस्कृता सेविता । '**सर्वदा दण्डपाणित्वाद् दण्डनाथेतिगीयत**'इति **त्रिपुरासिद्धान्ते** दण्डनाथनामनिर्वचनात् । अथवा किरय इति किरणाः सृष्टय इति यावत् । इदमुपलक्षणं स्थितिलययोः तेषां चक्रं समूह एव रथः तस्यारोहेऽपि दण्डनाथेन कृतान्तेन पुरस्कृता न स्वाधीनीकृता । सृष्टिस्थितिलयान्तःपतितोऽपि योगी न यमयातनाविषयः । अलुप्तानुसन्धान इति यावत् । तथा च सूत्रम्–'**तत्प्रवृत्तावप्यनिरासः स्वसंवेत्तृभावा**'दिति । व्याख्यातं च भगवता **कृष्णदासेन**–

**'तेषां सृष्ट्यादिभावानां प्रवृत्तावप्यनारतम् ।**
**उन्मज्जनेऽपि निष्कम्पयोगावष्टम्भशालिनः ॥**
**अनिरासः स्वसंवेत्तृभावादप्रच्युतिर्निजात् ।**
**उद्यत्तुर्यचमत्कारादुपलब्धिस्वभावतः ॥'** इति ।

## ज्वालामालिनिकाक्षिप्तवह्निप्राकारमध्यगा ॥ ७८ ॥

ज्वालामालिनीनामिका चतुर्दशीतिथिनित्या । तया हि श्रीमातरमभितो वह्निमयः प्राकारो निर्मितः । तदाक्षिप्तस्य निर्मितस्य वह्निमयस्य प्राकारस्य

---

किरिचक्रनामकं रथमारूढा । या दण्डनाथा वाराही तया पुरस्कृता सेविता । पुरस्कृतायै इति ॥

ज्वालामालिनीति चतुर्दशी नित्या । तया आसमन्तात्परितः क्षिप्तस्य निर्मितस्य वह्निमय-प्राकारस्य सालस्य मध्यभागे गच्छती[ति] स्थिता सा । मध्यगायै इति ॥ ७८ ॥

वरणस्य मध्यगा मध्यभागे स्थिता । तथा च **ब्रह्माण्डे** ज्वालामानिनीं प्रति देवीवचनम्–

**'वत्से त्वं वह्निरूपासि ज्वालामालामयाकृतिः ।**
**त्वया विधीयतां रक्षा बालस्यास्य महीयसः ॥**
**शतयोजनविस्तारं परिवृत्य महीतलम् ।**
**त्रिंशद्योजनमुन्नम्रज्वालाप्राकारतां व्रजेत् ॥'**

इत्यादि । यद्वा ननु परस्परविलक्षणसृष्ट्यादिसंवृतस्य ज्ञानिनः कथमद्वैतानुसन्धानलोपाभाव इत्यत आह–ज्वालेति । ज्वालानां मालिनिका मालास्ताश्च आक्षिप्तास्तत्क्षणे उत्पन्नाश्च वह्नेः प्राकाराः प्रकाराः स्फुलिङ्गादयस्तेषां मध्यगा तद्द्रष्टृत्वेन तत्स्रष्टृत्वेन च मध्यवर्तिनी विवदमानयोर्द्वयोर्मध्यस्थवन्निर्विकारा । सृष्ट्यादिकर्तृत्वेन तद्विकारेऽप्यविकारिणीति यावत् । तदुक्तं **स्पन्दशास्त्रे**–

**अवस्थायुगलं चात्र कार्यकर्तृत्वशब्दितम् ।**
**कार्यता क्षयिणी तत्र कर्तृत्वं पुनरक्षयम् ॥**
**कार्योन्मुखः प्रयत्नो यः केवलं सोऽत्र लुप्यते ।**
**तस्मिंल्लुप्तेऽपि लुप्तोऽस्मीत्यबुधः प्रतिपद्यते ॥**
**न तु योऽन्तर्मुखो भावः सर्वज्ञत्वगुणास्पदः ।**
**तस्य लोपः कदाचित्स्यादन्यस्यानुपलम्भनात् ॥**

इति । चिद्वह्निरूपस्य ज्ञानिनो विस्फुलिङ्गज्वालादितुल्यजगतः कार्यस्य नाशेऽपि वह्नित्वरूपप्रकाशकत्वस्य प्रकाशात्मकत्वस्य वा न क्षतिरिति फलितार्थः । न च शिवकार्यस्य क्षयिष्णुत्वेन शिवनिष्ठकर्तृत्वस्य नाशाभावे साधकस्य योगिनः किमायातमिति वाच्यम् । अस्यापि शिवतुल्यत्वेन **'तथापर्यनुयोगानर्हत्वात् शिवतुल्यो जायत'** इति सूत्रात् । उक्तञ्च **'स्वशक्तिप्रचयो विश्व'**मिति सूत्रे **वार्तिककारैः** –

**'शक्तयोऽस्य जगत्कृत्स्नं शक्तिमांस्तु महेश्वरः ।**
**इत्यागमदिशा विश्वं स्वशक्तिप्रचयो यथा ॥**
**शिवस्य तत्समस्यापि तथास्य परयोगिनः ।**

इति । अथवा । ज्वालामालिनिकासु शक्तित्रिकोणेषु पञ्चसु क्षिप्तानां समरसभावमापन्नानां वह्निप्राकाराणां शिवत्रिकोणानां चतुर्णां मध्ये बिन्दुरूपेण तिष्ठतीति । तदुक्तमुत्तरचतुःशतीशास्त्रे–

**'तच्छक्तिपञ्चकं सृष्ट्या लयेनाग्निचतुष्टयम् ।**
**पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसम्भवः ॥'**

इति ॥ ७८ ॥

**भण्डसैन्यवधोद्युक्तशक्तिविक्रमहर्षिता ।**

भण्डासुरस्य सैन्यस्य चतुरङ्गबलस्य वधे उद्युक्तानां संयतानां शक्तीनां नकुल्यादीनां विक्रमेण पराक्रमेण हर्षिता । यद्वा । भण्डो जीवभावस्तस्य सैन्यं तदनुगुणाद्वैतविषयिण्यो वृत्तयस्तस्य वधे उद्युक्तानामद्वैतवृत्तिरूपशक्तीनां विशेषेण क्रमः पादविक्षेपस्तेन हर्षिता । स्वानन्दांशे आवरणनाशात् । तदिदमुक्तं **शक्तिसूत्रे**—'**तदपरिज्ञाने स्वशक्तिव्यामोहिता संसारित्व**'मिति । तस्य स्वकर्तृकपञ्चविध-कृत्यस्यापरिज्ञाने स्वाभिः शक्तिभिः खेचरी-गोचरी-दिक्चरी-भूचरीसंज्ञाभिर्व्या-मोहितैव संसारित्वमिति तदर्थः । तासां च शक्तीनां पशुभूमिकापतिभूमिकेति भूमिकाद्वैविध्येन प्रमात्रन्तःकरणबहिःकरणविषयभावाद्यापत्तिस्त**द्भाष्ये** द्रष्टव्या । एतद्वधोद्युक्तशक्तयश्चैतदु**त्तरसूत्रे** कथिताः तत्परिज्ञाने चित्तमेवान्तर्मुखीभावेन चेतन-पदाध्यारोहाच्चितिरिति । अन्तर्मुखीभावशब्देन वृत्तिविशेषरूपाः शक्तय उच्यन्त इति ।

**नित्यापराक्रमाटोपनिरीक्षणसमुत्सुका ॥ ७९ ॥**

कामेश्वर्यादिचित्रान्ताः पञ्चदशतिथिनित्याख्या देवताः । यासां मन्त्रा **ज्ञानार्णवे तन्त्रराजे** च भेदेनोद्धृताः । तासां पराक्रमस्याटोपो विस्तारो दमनकादिचन्द्र-गुप्तान्तपञ्चदशसेनानीवधपर्यन्तः तस्य निरीक्षणे सम्यगुत्सुका । पक्षे नित्या अनादिसिद्धाः स्वात्मशक्तयस्तत्पराक्रमे क्षणे उत्तरोत्तरमुत्सुका । सकृज्जातापि ज्ञानकलान्तर्मुखतायामेवोत्साहं जनयन्ती सती वर्धते । उक्तञ्च **योगवासिष्ठे**—

**'सर्वा एव कला जन्तोरनभ्यासेन नश्यति ।**
**इयं ज्ञानकला त्वन्तः सकृज्जातापि वर्धते ॥'**

इति ॥ ७९ ॥

**भण्डपुत्रवधोद्युक्तबालाविक्रमनन्दिता ।**

भण्डासुरस्य पुत्राणां चतुर्बाह्वाद्युपमायान्तानां त्रिंशत्संख्याकानां वधे उद्युक्ताया बालाख्यदेव्या नववर्षाया स्वपुत्र्या विक्रमेण नन्दिता हृष्टा । उक्तञ्च **ब्रह्माण्डे**—

**'ताभिर्निर्विद्यमानानि सा देवी ललिताम्बिका ।**
**पुत्र्या भुजापदानानि श्रुत्वा प्रीतिं समाययौ ॥'**

इति ।

---

भण्डस्य भण्डासुरस्य यत्सैन्यं सेना तस्य वधे उद्युक्तानां सन्नद्धानां शक्तीनां विक्रमेण पराक्रमेण हर्षिता । सञ्जातहर्षा । हर्षितायै इति ॥

नित्यानां कामेश्वर्यादिचित्रान्तानां यः पराक्रमस्याटोपः विस्तारः तन्निरीक्षणे सम्यगति-शयेनोत्सुका । उत्सुकायै इति ॥ ७९ ॥

भण्डस्य भण्डासुरस्य ये पुत्राः तेषां वधे संहारे उद्युक्ताया बालायाः स्वकुमार्या विक्रमेण नन्दिता हृष्टा । नन्दितायै [इति] ॥

**मन्त्रिण्यम्बाविरचितविषङ्गवधतोषिता ॥ ८० ॥**

मन्त्रिण्यम्बया श्यामलाम्बया विरचितेन विषङ्गाख्यस्य दैत्यस्य वधेन तोषिता। विषङ्गविशुक्रौ भण्डासुरभ्रातरौ। तदुक्तं **ब्रह्माण्डे**–

**'पुरा भण्डासुरो नाम सर्वदैत्यशिखामणिः।**
**पूर्वदेवान्बहुविधान्यः स्रष्टुं स्वेच्छया पटुः॥**
**विशुक्रं नाम दैतेयवर्गसंरक्षणक्षमम्।**
**शुक्रतुल्यविचारज्ञं दक्षांसेन ससर्ज सः॥**
**वामांसेन विषङ्गं च सृष्टवान्भ्रातरावुभौ।'**

इत्यादि ॥ ८० ॥

**विशुक्रप्राणहरणवाराहीवीर्यनन्दिता।**

विशुक्राख्यस्य दैत्यस्य प्राणान् हरतीति हरणं तादृशेन वाराहीनामिकाया दण्डिनीदेव्या वीर्येण शौर्येण नन्दिता। **त्रिपुरासिद्धान्ते** वाराहीपदनिरुक्तिर्यथा–

**'वाराहानन्दनाथस्य प्रसन्नत्वान्महेश्वरी।**
**वाराहीति प्रसिद्धेयं वराहवदनेन च॥'**

इति। पक्षे भण्डपुत्रा आणवादयो मलाः विरुद्धः सङ्गो विषङ्गो विषयाभिलाषः, विषं गच्छतीति वा विषात्मक इति यावत्। अत एव '**यो विषस्थो ज्ञानशक्तिहेतुश्चे**'ति सूत्रे विषविरुद्धत्वादविषशब्दो माहेश्वर्यादिशक्तिमण्डलपरत्वेन **क्षेमराजवृत्तौ** व्याख्यातः। विरुद्धं शुक्रं तेजो यस्य स जीवभावः। विशेषेण शुचं शोकं राति क्रामतीति वा। अयस्मयादित्वात्पृषोदरादित्वाद्वा पक्षद्वये शब्दसिद्धिः। बालामन्त्रिणीवाराह्य अन्तर-वृत्तिविशेषास्ताभिस्तेषां क्षयेण स्वात्मदेवता तुष्यतीति। तदिदमुक्तं '**बललाभे विश्वमात्मसात्करोती**'ति **शक्तिसूत्रे**। चित्तिरेव बलं तल्लाभे उन्मग्नस्वरूपाश्रयेण विश्वं स्वाभेदेन भासयतीति तद् **भाष्यम्**। तथा '**तदारूढप्रमिते तत्क्षयाज्जीवसंक्षय**' इति **शिवसूत्रे वार्तिककारैः** –

**'तदित्युक्तचरे धाम्नि संवेत्तृत्वस्वरूपिणी।**
**आरूढा प्रमितिः सच्चिन्मद्विमर्शनतत्परा॥**
**यस्य तस्यास्य तदिति प्रोक्ताणवमलात्मनः।**
**अभिलाषस्य रूढस्य क्षयाज्जीवस्य संक्षयः॥'**

---

मन्त्रिण्यम्बया राजश्यामलया विरचितो विशेषेण कृतो यो विशुक्रस्य भण्डासुरभ्रातुर्वधः तेन तोषिता तुष्टा। तोषितायै इति ॥ ८० ॥

विषङ्गाख्य अपरभ्रातुः प्राणानां हरणे व(वा)राह्या दण्डनाथाया यद्वीर्यं शौर्यं तेन नन्दिता। नन्दितायै इति ॥

इति । असुरनिर्मितैर्नानाविधैर्विघ्नैर्यन्त्रितान्देवान्वीक्ष्य श्रीमात्रा तदात्व एव स्वभर्तुर्मुखालोकनमात्रेणाष्टाविंशत्यर्णो महागणपतिरुत्पादितस्तेन तदीयं विघ्नयन्त्रं निर्भिद्य देवा मोचिताः । उक्तञ्च **ब्रह्माण्डपुराणे**—

**'ततः सा ललितादेवी कामेश्वरमुखं प्रति ।**
**दत्तापाङ्गा समहसन्नातिव्यक्तरदावलि ॥**
**तस्या मन्दस्मितरुचः कुञ्जराकृतिमान्मुखे ।**
**कटक्रोडगलद्दानः कश्चिद्देवो व्यजृम्भता ॥'** इत्यादि ।

तदिदं नामद्वयेनाह । कामेश्वरमुखस्य परशिववदनचन्द्रस्यालोकाभ्यां साकूत-वीक्षणचन्द्रिकाभ्यां कल्पित उत्पादितः श्रीमान्महान्गणेश्वरो यस्याः सा । यद्वा सूत्रोक्तो जीवक्षयो नित्यत्वान्न युज्यत इत्याशङ्क्य जीवभावस्य क्षयपरत्वेन समाधत्ते—

**कामेश्वरमुखालोककल्पितश्रीगणेश्वरा ॥ ८१ ॥**

कामेश्वर इति । कामेश्वरः केवलनिर्गुणः शिवस्तन्मुखालोकेन तदनुभवेन कल्पितं श्रीगणेश्वरत्वं पुर्यष्टकाधीश्वरत्वं यया सा । पुर्यष्टकप्रमातृत्वाहन्ताभिमानिविशिष्टस्य जीवपदवाच्यत्वेन तत्तादात्म्याभिमानस्य स्वात्मस्वरूपनिष्कर्षज्ञानजन्येन पुर्यष्टकेश्वरत्वज्ञानेन नाशे विशेषणाभावाप्रयुक्तो विशिष्टाभाव इति भावः । तदुक्तम् **'भूतकञ्चुकी तदा विमुक्तो भूयः पतिसमः पर'** इति **शिवसूत्रे।वार्तिककारैः**—

**'तदेत्युक्ताभिलाषस्य प्रशमाज्जीवसंक्षये ।**
**पुर्यष्टकप्रमातृत्वाभिमानगलनादसौ ॥**
**देहारम्भकरैर्भूतैरस्पृशद्भिरहं पदम् ।**
**कञ्चुकीव विशेषेण मुक्तो निर्वाणभाग्यतः ॥**
**भूयो बाहुल्यतः पत्या समोऽयं परमेशिना ।**
**तत्त्वरूपं समाविष्टश्चिदानन्दघनात्मकम् ॥**
**तत एव परः पूर्णः सम्यक् तन्मयतां गतः ।'**

इति । अयमेवार्थः **शक्तिसूत्रेऽप्युक्तः**—**'चिदानन्दलाभे देहप्राणादिष्ववभासमानेष्वपि चिदैकात्म्यप्रतिपत्तिदार्ढ्यं जीवन्मुक्ति'**रिति । **'मध्यविकासाच्चिदानन्दलाभ'** इत्युत्तरसूत्रे तु मध्यविकासो यश्चिदानन्दलाभो हेतुत्वेनोक्तः स इह वक्ष्यमाणमहागणेशपदेन ग्राह्यः । यश्च मध्यविकासेऽप्युपायस्तत्तो**ऽप्युत्तरसूत्रे** विकल्पक्षयादिरूपो वर्ण्यते स इह कामेश्वरमुखालोकपदेनोक्तः । प्रहर्षितेत्यनेन तु चिदानन्दलाभ उक्तः । एतेषां स्वरूपनिष्कर्षस्तु **प्रत्यभिज्ञाहृदये**ऽनुसन्धेयो विस्तरभयान्नेहोच्यते ॥ ८१ ॥

---

कामेश्वरस्य मुखालोकमात्रेण कल्पितः उद्भावितः श्रीगणेश्वरो महागणपतिर्यया । गणेश्वरायै इति ॥ ८१ ॥

**महागणेशनिर्भिन्नविघ्नयन्त्रप्रहर्षिता ।**

महागणेशेन निःशेषेण भिन्नैर्नाशितैर्विघ्नयन्त्रैः प्रत्यूहसमूहयन्त्रणैः प्रकर्षेण हर्षिता । गव्यूतिमात्रायामे शिलापट्टे अलसादिदेवताष्टकपुटितशूलाष्टकोपेतदिगष्टकं जयविघ्नं नाम यन्त्रं विलिख्य देवीसैन्ये विशुक्रेण निक्षिप्तं तन्महागणपतिना चूर्णीकृतमिति **ललितोपाख्याने** प्रसिद्धम् ।

**भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिणी ॥ ८२ ॥**

भण्डेनासुरेन्द्रेण दैत्यराजेन निर्मुक्तानां शस्त्राणामस्त्राणां प्रतिकूलान्यस्त्राणि वर्षतीति तथा । शस्त्रास्त्रयोर्भेदो **धनुर्वेदे–'धृत्वा प्रहरणं शस्त्रं मुक्त्वात्वस्त्रमितीरित'**-मिति ।पक्षे महागणानामीश्वरत्वेनात्मन्यात्मताज्ञानाभावादाविद्यकवृत्तिरूपाणां विघ्नानामस्त्राणां च पराहन्तानुसन्धानधारारूपप्रत्यस्त्रैर्नाशेन नामद्वयमध्यात्मरीत्यापि व्याख्येयम् ॥ ८२ ॥

**कराङ्गुलिनखोत्पन्ननारायणदशाकृतिः ।**

कराङ्गुल्यो दक्षवामकरद्वयस्याङ्गुल्यो दश तासां नखसन्धिषूत्पन्ना नारायणस्य दशाकृतयो मत्स्यादिदशावतारा यस्याः सा । भण्डासुरेण सर्वासुरास्त्रं नाम सकलदैत्योत्पादनमस्त्रं प्रयुक्तं तेन सोमक-रावण-बलि-हिरण्याक्षादय उत्पन्नाः सन्तोऽयुध्यन्त । ततो देव्या दक्षहस्ताङ्गुष्ठादिवामहस्तकनिष्ठिकान्ताङ्गुलिनखेभ्यः क्रमेण मत्स्य-कूर्म-वराह-नारसिंह-वामन-भार्गव-दाशरथि-हलधर-कृष्ण-कल्किरूपदशावतारानुत्पाद्य ते निषूदिताः । उक्तञ्च **ब्रह्माण्डे**–

**'दक्षहस्ताङ्गुष्ठनखान्महाराज्ञ्याः समुत्थितः ।**
**महामत्स्याकृतिः श्रीमानादिनारायणो विभुः ॥**

इत्यारभ्य

**दशावतारनाथास्ते कृत्वेत्थं कर्म दुष्करम् ।**
**ललिताम्बां नमस्कृत्य बद्धाञ्जलिपुटाः स्थिताः ॥'**

---

महागणेशेन निर्भिन्नं निःशेषेण नाशितं यद्विघ्नयन्त्रम् । गव्यूतिमात्रविस्तृतायां शिलायां यल्लिखित्वा शक्तिसैन्ये आलस्यादिकमुद्भाव्य विघ्नकरणाय शक्तिसैन्ये विशुक्रेण निक्षिप्तमिति प्रसिद्धम् । तेन प्रकर्षेण हर्षिता । हर्षितायै इति ।

भण्डनामकेनासुरेन्द्रेण निर्मुक्तानां प्रयुक्तानां शस्त्राणां प्रतिकूलानि नाशकान्यस्त्राणि वर्षतीति सा । वर्षिण्ये इति ॥ ८२ ॥

करयोरङ्गुलयः दश तासां नखेभ्य उत्पन्ना नारायणस्य विष्णोराकृतयः अवतारा यस्याः । आकृतये इति ।

इत्यन्तेन। पक्षे जीवसम्बन्धिन्यो जाग्रदादयोऽवस्था पञ्चेश्वरसम्बन्धीनि सृष्ट्यादीनि कृत्यानि पञ्चेत्येवं दशाकृतयोऽपि नखमात्रेणोत्पन्ना भवन्तीति अनायासेनोत्पद्यन्त इत्यत्र तात्पर्यम्। नारायणशब्दो जीवेश्वरयोरुपलक्षकः। दशाशब्दोऽवस्थापरः। कृतिशब्दः कृत्यपरो वा।

**महापाशुपतास्त्राग्निनिर्दग्धासुरसैनिका ॥ ८३ ॥**

षडक्षरात्पाशुपतास्त्रमन्त्रादयं भिन्नो महापाशुपतास्त्रमन्त्रः। पूर्व ईश्वरदेवत्योऽन्त्यः सदाशिवदेवत्यः।

**'रुद्रादयः पिशाचान्ताः पशवः परिकीर्तिताः।**
**तेषां पतित्वात्सर्वेशो भवः पशुपतिर्मतः॥'**

इति **लैङ्गात्**। पशुपतेः ईश्वरस्य सदाशिवस्येदं पाशुपतम्। अश्वपत्यादित्वान्न पत्युत्तरपदलक्षणो ण्यप्रत्ययः। महच्च तत्पाशुपतं च महापाशुपतं सदाशिवास्त्रं तस्याग्निना निर्दग्धा असुरस्य भण्डस्य सैनिका यया सा। पक्षेऽभ्यासतारतम्येनोत्तरोत्तरोत्पन्ना उत्कृष्टा अद्वैतवृत्तय एव महापाशुपतास्त्राग्नयः असुरसैनिका आविद्यकवृत्तयः॥ ८३॥

**कामेश्वरास्त्रनिर्दग्धसभण्डासुरशून्यका।**

कामेश्वरस्य यदस्त्रं तन्महापाशुपतादस्त्रादप्यधिकम्। तस्याग्निना निर्दग्धं भण्डासुरेण सहितं शून्यकाख्यं तदीयनगरं यया सा। तथा च **ब्रह्माण्डे**–

**'अथैकशेषितं दुष्टं निहताशेषबान्धवम्।**
**क्रोधेन प्रज्वलन्तं च जगद्विप्लवकारिणम्॥**
**महासुरं महासत्त्वं भण्डं चण्डपराक्रमम्।**
**महाकामेश्वरास्त्रेण सहस्रादित्यवर्चसा॥**
**गतासुमकरोन्माता ललिता परमेश्वरी।**
**तदस्त्रप्रहितैर्ज्वालैः शून्यकं तस्य पत्तनम्॥**
**सस्त्रीकं च सबालं च सगोष्ठधनधान्यकम्।**
**निर्दग्धमासीत्सहसा स्थलमात्रमशिष्यत॥**
**शून्यकं तत्पुरं नाम शून्यमासीद्यथार्थतः।'**

---

महत् यत्पशुपतिसम्बन्ध्यस्त्रं तस्याग्निना निःशेषेण दग्धाः भण्डनामकासुरस्य सैनिका। सेनानायकाः यस्याः सा। सैनिकायै इति॥ ८३॥

**कामेश्वरस्य** कामेश्वरसम्बन्ध्यस्त्रस्य अग्निना निःशेषेण दग्धं भण्डासुरसहितं शून्यकं नाम **तन्नगरं यस्याः (यया) सा। शु(शू)**न्यकायै इति॥

इति । यद्वा । आत्माख्यदेवताया जीवदशायामेव सायुज्यमुक्तिं प्राप्तस्य शिवतुल्यस्थितिमियता प्रबन्धेन कथयित्वा साम्प्रतं प्रारब्धवशात्स्थितस्य दग्धपटाभासस्य द्वैतभानस्य तत्तुल्येन लिङ्गशरीरादिना सह नाशमात्मज्ञानेन वदन् शिवमात्रावशेषमाह । कामेश्वरास्त्रं चिदग्निः । चिदात्मन एव सर्वकाम्यमानत्वेन कामेश्वरत्वात् । **'आत्मनः कामाय सर्वं प्रियं भवति'** इति श्रुतेः । भण्डासुरो द्वैतभानकरो जीवभावः । शून्यकेतिपदस्य दग्धपटाभासद्वैतभानमर्थः । शून्यवादिसम्मतं शून्यमेव वा । जीवभावसहितस्य शून्यभावस्य चिदग्निनापगमे चिन्मात्रमवशिष्यत इति सिध्यति । शून्यशब्दाद्रिक्तेऽर्थे यावादिगणपाठात्कन् ।

एवं भण्डासुरपीडितैर्देवैः स्तुता सती भण्डहननान्तं देवकार्यं कृत्वा तदन्ते सन्तुष्टैर्देवैः पुनः स्तुतेत्याह—

**ब्रह्मोपेन्द्रमहेन्द्रादिदेवसंस्तुतवैभवा ॥ ८४ ॥**

ब्रह्मेति । ब्रह्मविष्णुशक्राद्यैर्देवैः सम्यक् स्तुतं वैभवं पराक्रमो यस्याः ।

**'अस्मिन्नवसरे देवा भण्डसंहारतोषिताः ।**
**सर्वेऽपि सेवितुं प्राप्ता ब्रह्मविष्णुपुरोगमाः ॥'**

इत्यादि **ब्रह्माण्डपुराणात्** । पक्षे ब्रह्मणः संस्तुतं परिचितं विभुत्वमपरिच्छिन्नत्वं सर्वात्मत्वं यस्या आत्मरूपदेवतायाः सा ॥ ८४ ॥

**हरनेत्राग्निसन्दग्धकामसञ्जीवनौषधिः ।**

हरस्य तृतीयनेत्रस्थेन अग्निना सम्यक् दग्धस्य भस्मीकृतस्य कामस्य मन्मथस्य सञ्जीवनौषधिः जीवातुः । विरक्ततरस्यापि कामेश्वरस्य स्वाभिमुखीकरणात् । भण्डासुरहननोत्तरं ब्रह्मादिभिः प्रार्थितया ललिताम्बया पुनर्मन्मथो जीवित इति कथाया **ब्रह्माण्डपुराणे** स्मरणाच्च । **'एतेन पित्रा निर्भर्त्सितो बालो मात्रैवाश्वास्यते किले'**ति न्यायोऽप्यनुगृहीतः । अनेनैवाशयेनोक्तं **ब्रह्मवैवर्ते**— **'हरौ रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चने'**ति । न च तत्र हरिपदस्योपास्यदेवतोपलक्षणत्वेन त्रिपुरसुन्दरीकोपात्त्राणकर्तृत्वं परमशिवस्यैव गुरुपरम्परावधित्वाद्वक्तव्यं न पुनर्वैपरीत्यमिति शङ्क्यम् । परमशिवस्यापि श्रीविद्योपासकत्वेनोपासनायाश्च गुरुमन्तरेणायोगात्तदपेक्षायां त्रिपुरसुन्दर्या एव तद्गुरुत्वस्वीकारात् । अतएव **योगिनीहृदये** शिवेनैव पार्वतीं प्रत्युक्तम्—

**'अन्यायेन च दातव्यं नास्तिकानां महेश्वरि ।**
**एवं त्वयाहमाज्ञप्तो मदिच्छारूपया प्रभो ॥'**

---

ब्रह्मोपेन्द्रमहेन्द्रादिदेवैः सम्यक् स्तुतं वैभवं पराक्रमो यस्याः सा । वैभवायै इति ॥ ८४ ॥

हरस्य शिवस्य तृतीयं यन्नेत्रं तस्याग्निना सम्यग्दग्धस्य कामस्य मन्मथस्य सञ्जीवने ओषधिरूपा । ओषध्यै इति ॥

इति प्रवृत्तिंप्रति इच्छायाः कारणत्वाच्छिवस्य प्रवर्तिका भगवत्येवेति सिद्धं तस्या गुरुत्वम् । अतएव गुरुमूर्तिरिति नाम वक्ष्यते । **'शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यते'** इति । **चतुःशतीशास्त्रा**दिच्छाशक्तिविशिष्टस्यैव परशिवस्यादिनाथत्वेन तन्त्रेषु गणनान्न त्रिपुरसुन्दर्या गुरुमण्डलान्तरादिनाथात्पूर्वगणनपूजनाद्यापत्तिचोद्यावकाशः । तथा च **महास्वच्छन्दतन्त्रे**—

**'गुरुशिष्यपदे स्थित्वा स्वयमेव सदाशिवः ।**
**प्रश्नोत्तरपदैर्वाक्यैस्तन्त्रं समवतारयत् ॥'**

इति । स्वयमेवेत्यनेन प्रकाशविमर्शांशयोर्विभजनेन परस्परं गुरुशिष्यभावः सूचितः । प्रवर्तकत्वप्रष्टृत्वे देवीनिष्ठयोर्वक्तृत्वप्रवर्त्यत्वे शिवनिष्ठयोर्गुरुत्वशिष्यत्वयोरवच्छेदके इति तद्भेदादविरोधः । एतदेव द्योतयितुं मदिच्छारूपयेति विशेषणं प्रभुपदेन सम्बोधनं च । वस्तुतस्तु आदिनाथादर्वागादिशक्त्यम्बानाम्ना द्वितीयस्थाने गण्यत एवेति न ततः पूर्वं पुनर्गणनापत्तिः । सदाशिवनामकतृतीयगुरुं प्रत्यादिनाथावच्छिन्नाया आदिशक्तेरेव गुरुत्वाद् द्वितीयस्थान एव गणनीयतया न तयोः पौर्वापर्ये विनिगमनाविरहोऽपीति दिक् । यद्वा हरणं हरः आत्मस्वरूपापहारः, हरन्तीति वा हराः आत्मापहर्तारस्तेषां नेता नायकः स एव आसमन्ताद् व्याप्तोऽग्निः स्वस्वरूपान्यथाकरणात् । मूलाज्ञानमिति यावत् । तस्य मूलाज्ञानाधिकत्वात् । तेन सम्यग्दग्धो यः कामो जीवभावमापन्नः कामेश्वरस्वरूप आत्मा तस्य सम्यगावरणपरावृत्त्यभावपूर्वकं जीवने स्वस्वरूपावाप्तौ ओषधिर्मूलिका । एतदुपासनया विद्यारूपयाऽविद्यानिवृत्त्या स्वस्वरूपावाप्तिलक्षणो मोक्ष इति भावः । मन्मथस्य दाहात्पूर्वं सशरीरस्य जीवत एव पश्चादशरीरजीवनदृष्टान्तादात्मनोऽपि पूर्वं ब्रह्मण एव सतोऽविद्यावशात्सशरीरस्येव स्थितस्य तन्निवृत्तावशरीरतापूर्वकब्रह्मैक्यप्राप्तिर्ध्वन्यते । ध्वनितं चैवमेव **शैवशास्त्रा**न्तिमाधिकरणे **'भूयः स्यात्प्रोक्तमिलन'**मिति । **वार्तिके**ऽपि—

**'पुनश्च प्रोक्तचैतन्यस्वरूपमिलनात्मकम् ।**
**परायोगादिरूढस्य भवेत्परमयोगिनः ॥**
**भूयः स्यादिति वाक्यस्य स्फुट एवायमाशयः ।**
**यच्छिवत्वममुष्योक्तं नापूर्वं तत्तु योगिनः ॥**
**स्वभाव एव तन्मायाशक्तिप्रोत्थापितान्निजात् ।**
**नानाविकल्पदौरात्म्यात्पराभूतमिव स्वतः ॥**
**विमृष्टं गुरुनिर्दिष्टप्रोक्तोपायक्रमेण तत् ।**
**शिवत्वं व्यक्तमेतीति शिवेनोदीरितं शिवम् ॥'**

इति **शक्तिशास्त्रा**न्तिमाधिकरणेऽपि **'निजसंविद्देवताचक्रेश्वरत्वप्राप्ति'**रिति सूत्रावयवे निजपदेन तथैव स्फोरितमिति ।

इयता प्रबन्धेन देव्याः परं रूपं सूक्ष्मतरत्वात्सूक्ष्मरूपात्परात्परतो वक्तव्यमपि रहस्योक्तिविषयत्वात्स्थूलरूपकार्येण भण्डासुरवधेन सह श्लेषलिप्सया पूर्वमेवोक्त्वा क्रमप्राप्तं सूक्ष्मरूपं स्थूलरूपाभिन्नत्वेन वर्णयति—

**श्रीमद्वाग्भवकूटैकस्वरूपमुखपङ्कजा ॥ ८५ ॥**

श्रीमद्वाग्भवेत्यादिना । सूक्ष्मरूपमपि सूक्ष्मसूक्ष्मतरसूक्ष्मतमभेदात्त्रिविधं पञ्चदशीविद्या कामकलाक्षरं कुण्डलिनी चेति भेदात् । तेष्वाद्यं नामत्रयेणोच्यते । श्रीमज्ज्ञानप्रदायकत्वादिमाहात्म्यशीलं वाग्भवत्यस्मादिति व्युत्पत्त्या वाग्भवनामकं कूटं पञ्चाक्षराणां समुदाय एवैकं मुख्यं स्वं निजं रूपं यस्य तादृशं मुखपङ्कजं यस्याः । तदुक्तम्— **'नेत्रोष्ठापरगलवर्णशालिवाचां । सम्भूतिर्मुखमिति वाग्भवाख्यकूटम्'** इति ॥ ८५ ॥

**कण्ठाधःकटिपर्यन्तमध्यकूटस्वरूपिणी ।**

कण्ठस्याधः कटिपर्यन्तो यस्य स मध्यभागः स एव मध्यस्थकामराजाख्यस्य षडक्षरसमूहस्य स्वं निजं रूपमस्याः । पटुज्योतिष्मती लोचने इतिवत्कर्मधारयादपि मत्वर्थीयः ।

**शक्तिकूटैकतापन्नकट्यधोभागधारिणी ॥ ८६ ॥**

सर्जनशक्तिमत्त्वाच्छक्तिनामकेन कूटेन चतुरक्षरसमूहेनैकतामभेदमापन्नकटेरधोभागं धारयतीति तथा । तदुक्तम्—

**'कामस्ते हृदि वसतीति कामराजं**
**स्रष्टृत्वात्तदनु तवाम्ब शक्तिकूटम् ।'**

इति ॥ ८६ ॥

**मूलमन्त्रात्मिका मूलकूटत्रयकलेवरा ।**

चतुर्विधपुरुषार्थमूलकारणत्वान्मूलं पञ्चदशाक्षरी सैव मननात्त्रायत इति मन्त्रः । आत्मा स्वरूपं यस्याः । तदुक्तम्—

**पूर्णाहन्तानुसन्ध्यात्मा स्फूर्जन्मननधर्मतः ।**
**संसारक्षयकृत्त्राणधर्मतो मन्त्र उच्यते ॥'**

---

श्रीमती सर्वोत्कृष्टा वाग्भवत्यस्मादिति श्रीमद्वाग्भवं ईदृशं कूटं वर्णसमूहः सौभाग्यविद्यायाः प्रथमं कूटम् । तदेवैकं मुख्यं स्वरूपं ईदृशं मुखपङ्कजं यस्याः सा । पङ्कजायै इति ॥ ८५ ॥

कण्ठाधःकटिपर्यन्तं मध्यकूटस्य कामराजकूटस्य स्वरूपं यस्याः सा । स्वरूपिण्यै इति ॥

शक्त्याख्येन तार्तीयेन कूटेन एकतां अभेदमापन्नं प्राप्तं ईदृशं कटेरधोभागं धारयतीति सा । धारिण्यै इति ॥ ८६

अखिल पुमर्थमूलभूतो मन्त्रः सौभाग्यविद्यारूपः स आत्मास्वरूपं यस्याः सा । आत्मिकायै इति ॥ मूलस्य कूटत्रयमेवोक्तरीत्या कलेवरं देहो यस्याः सा । कलेवरायै इति ॥

इति । मूलस्य कूटत्रयमेवोक्तरीत्या कलेवरं स्थूलरूपं यस्याः, कूटत्रयमेव कलेवरं सूक्ष्मरूपं यस्या इति वा । वस्तुतस्तु मूलशब्दाभ्यां कामकलाक्षरमुच्यते । कूटत्रयपदेन त्र्यात्मकसमुदायघटकावयवा उच्यन्ते । अयवये तयपो विधानात् । कामकलायां तूर्ध्वबिन्दुरेकस्तदधस्तिर्यग्बिन्दुद्वयं तदधो सार्धकलेति त्रयोऽवयवा गुरुमुखैकवेद्याः । त एव क्रमाद्विद्याकूटतया स्थूलरूपमुखाद्यवयवात्मना च परिणता इति सूक्ष्मतरं कुण्डलिन्याख्यं सूक्ष्मतमं वररूपपरं नामद्वयं समष्टिव्यष्टिभेदेनेति **नाथचरणागमे** विस्तरः । एवं ब्रह्माण्डान्तर्गतरूपमुक्त्वा पिण्ड़ाण्डान्तर्गतं कुण्डलिन्याख्यं रूपं वक्तुमुपक्रमते । सा हि मूलाधाराख्ये चक्रे सार्धत्रिवलयाकारेण सुप्ता सती योगिभिरुत्थाप्य षट्चक्राणि ब्रह्मविष्ण्वादिग्रन्थींश्च भेदयन्ती सहस्रारं नीता सती तत्कर्णिकारूपचन्द्रमण्डलादमृतं स्रावयति ।

अयोगिभिरपि भावनामात्रेण सर्वाप्येषा प्रक्रिया सम्पाद्यते तत्प्रक्रियापराणि नामान्याह—

## कुलामृतैकरसिका कुलसङ्केतपालिनी ॥ ८७ ॥

कुलामृतेत्यादिना । कुलं सजातीयसमूहः । स चैकज्ञानविषयत्वरूप-साजात्यापन्नज्ञातृज्ञेयज्ञानरूपत्रयात्मकः । घटमहं जानामीत्येव ज्ञानाकारात् । ज्ञानभासनायानुव्यवसायापेक्षायां दीपभासनाय दीपान्तरापेक्षापत्तेः । उक्तं चाचार्य-**भगवत्पादैः**— '**जानामीति तमेव भान्तमनुभात्येतत्समस्तं जग**'दिति । ततश्च सा त्रिपुटी कुलमित्युच्यते । तदुक्तं **चिद्गगनचन्द्रिकायाम्**–'**मेयमातृमितिलक्षणं कुलं प्रान्ततो व्रजति यत्र विश्रमम्**' इति । ऊर्ध्वाधरभावेन विद्यमानेषु **स्वच्छन्दसंग्रहादौ** प्रपञ्चितेषु द्वात्रिंशत्पद्मेषु सर्वाधस्तनं पद्मं त्रिपुटीसम्बन्धाभावादकुलमुच्यते । तदुपरिस्थानि कुलसम्बन्धीनि । यद्वा । कुः पृथ्वीतत्त्वं लीयते यत्र तत्कुलमाधारचक्रं तत्सम्बन्धा-ल्लक्षणया सुषुम्णामार्गोऽपि । अतः सहस्रारात्स्रवदमृतं कुलामृतम् । '**शरीरं कुलमित्युक्त**'मिति **स्वच्छन्दसंग्रहो**क्त्या शरीरसम्बन्धित्वाद्वा तत्कुलामृतम् । तत्र मुख्यतया रसिका तद्रसास्वादनपरा । '**पुष्पितायाः कुलागारं दृष्ट्वा यो जपते नर**' इति **कालीतन्त्रे** प्रयोगात्तत्रत्यामृतरहस्यरसिकेति वा ।

उपास्योपासकवस्तुजातस्य चित्त्वेन साजात्यात्तत्समुदायप्रतिपादकं शास्त्रमपि कुलम् । तथा च **कल्पसूत्रे** प्रयोगः— '**कुलपुस्तकानि च गोपाये**'दिति । '**दर्शनानि तु सर्वाणि कुलमेव विशन्ति ही**'त्यागमे च । '**न कुलं कुलमित्याहुराचारः कुलमुच्यत**' इति

---

कुः पृथ्वी । इदं च जलादिशिवतत्त्वान्तोपलक्षणम् । तल्लीयते यत्र परमशिवे तत्सम्बन्धि यदमृतं स्वरूपविमर्शः तत्र रसिका । रसिकायै इति । कुलस्य परमशिवस्य यः सङ्केतः नियतिः तां पालयतीति सा । पालिन्यै इति ॥ ८७ ॥

**भविष्योत्तरपुराण**वचनात् आचारोऽपि कुलं तयोः सङ्केतान् तत्रत्यरहस्यानि पालयति पशुषु न प्रकाशयति साम्प्रदायिकपरम्परायै प्रकाश्य तन्तुं प्रवर्तयति चेति तथा,

**'चक्रसङ्केतको मन्त्रपूजासङ्केतकाविति ।**
**त्रिविधस्त्रिपुरादेव्याः सङ्केतः परमेश्वरि ॥'**

इत्या**गमे** ।

**'कुलाङ्गनैषाप्यथ राजवीथीः प्रविश्य सङ्केतगृहान्तरेषु ।**
**विश्रम्य विश्रम्य वरेण पुंसा सङ्गम्य सङ्गम्य रसं प्रसूतः ॥'**

इति **चिन्तामणिस्तवे** च प्रतिपादितोऽयमर्थः ॥ ८७ ॥

**कुलाङ्गना कुलान्तस्था कौलिनी कुलयोगिनी ।**

कुलं नाम पातिव्रत्यादिगुणराशिशीलो वंशस्तत्सम्बन्धिन्यङ्गना यथा गुप्ता तथेयमप्यविद्याजवनिकया गुप्तत्वात्कुलाङ्गना । तदुक्तं **कुलार्णवे**—

**'अन्यास्तु सकला विद्याः प्रकटा मणिका इव ।**
**इयं तु शाम्भवी विद्या गुप्ता कुलवधूरिव ॥'**

इति । भगवान्परशुरामोऽप्याह **'अन्या विद्या वेश्या इवातिप्रकटा'** इत्यादि । कुलस्यान्तः मातृमेययोर्मध्ये मितिरूपेण स्थिता । कुलशास्त्रस्य मध्ये ज्ञेयत्वेन वा स्थिता । प्रतिगृहं प्रतिदेशं प्रतिदेहं प्रतिवंशं वा पूज्यत्वेन तिष्ठति । **'कुलं जनपदे गृहे । सजातीयगणे गोत्रे देहेऽपि कथितं कुल**'मिति **विश्वः** । तदुक्तं **भविष्योत्तरपुराणे**—

**'पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ।**
**गृहे गृहे शक्तिपरैर्ग्रामे ग्रामे वने वने ॥'**

इति । अधःस्थितं रक्तं सहस्रदलकमलमपि कुलम् । तत्कर्णिकायां कुलदेवीदलेषु कुलशक्तयश्च सन्तीति **स्वच्छन्दतन्त्रे**ऽस्य विस्तरः । ईदृगर्थस्य कुलपदस्य परतः सम्बन्धसामान्यार्थे तद्धिते कौलम् ।

**'कुलं शक्तिरिति प्रोक्तमकुलं शिव उच्यते ।**
**कुलेऽकुलस्य सम्बन्धः कौलमित्यभिधीयते ॥'**

इति **तन्त्रोक्तम्** । शिवशक्तिसामरस्यं वा कौलं तद्वती कौलिनी बाह्याकाशावकाशे चक्रं विलिख्य तत्र पूजादिकं कौलमिति रूढ्योच्यते इति कश्चित् । कुले उक्तार्थके योगः

---

कुलस्य परमशिवस्याङ्गनाशक्तिः । अङ्गनायै इति ॥ कुलस्य परशिवस्यान्तः सारतया तिष्ठतीति सा । अन्तस्थायै इति ॥ कुले भवं कौलं परशिवोत्पन्नं जगत् । तदस्यास्तीति कौलिनी । कौलिन्यै इति । कुलस्य पर शिवस्य योगः नित्यसम्बन्धः तद्वती । योगिन्यै इति ॥

सम्बन्धोऽस्या इति कुलयोगिनी । **छलाक्षरसूत्रकारैः** कौलिनी कुलयोगिनीत्यष्टाक्षरस्यैकनामत्वं यदुक्तं तत्रोपपत्तिं दशमे शतके वक्ष्यामः ।

### अकुला समयान्तस्था समयाचारतत्परा ॥ ८८ ॥

सुषुम्णोर्ध्वस्थितं सहस्रारपद्ममकुलमित्युच्यते । तथा च **स्वच्छन्दसंग्रहे**—'**अधश्चोर्ध्वः सुषुम्णायाः सहस्रदलसंयुत**'मित्यारभ्य '**पङ्कजद्वयमीशानि कुलाकुलमयं शुभ**'मित्यन्तम् । तद्रूपत्वात्तन्निष्ठत्वाद्वाऽकुला । न विद्यते कुलं देहवंशादिकं यस्या इति वा । दहराकाशावकाशे चक्रं विभाव्य तत्र पूजादिकं समय इति रूढ्योच्यते । स च सर्वैर्योगिभिरैकमत्येन निर्णीतोऽर्थ इति संङ्केतरूपत्वादपि समयः । तत्प्रतिपादकत्वाद् वसिष्ठ-शुक-सनक-सनन्दन-सनत्कुमाराख्यतन्त्रपञ्चकमपि समयपदेन व्यवह्रियते । तदन्तस्तत्प्रतिपाद्यतया तिष्ठति । यद्वा । समं साम्यं यातीति समयः शिवः । **आतोऽनुपसर्गे कः**' समयादेवी च तयोरेकशेषः । साम्यं च परस्परं शिवशक्त्योः पञ्चविधं अधिष्ठानसाम्यमनुष्ठानसाम्यमवस्थानसाम्यं नामसाम्यं रूपसाम्यं चेति । अधिष्ठानं पूजाधिकरणं चक्रादि । अनुष्ठानं सृष्ट्यादिकृत्यम् । अवस्थानं नृत्यादिक्रिया । नाम भैरवादि । रूपमारुण्यादि । अस्य च विस्तारो **वासनासुभगोदयव्याख्याने लल्लेन** कृतः । तयोरन्ते स्वरूपे तिष्ठति । '**अन्तःप्रान्तेऽन्तिके नाशे स्वरूपेऽतिमनोहर**' इति **विश्वः** । **रुद्रयामले** दशभिः पटलैरुपदिष्ट आचारः समयाचार इत्युच्यते । यद्वा । दीक्षितस्य गुरुकटाक्षवशात् षड्विधैक्यचतुर्विधैक्यान्यतरानुसन्धानदार्ढ्ये महावेधाख्यसंस्कारे च महानवम्यां जाते सति पश्चान्मूलाधारादुत्थिता देवी मणिपूरे प्रत्यक्षा भवति । तां तत्रैव पाद्यादिभूषणान्तैरुपचारैः सम्पूज्यानाहतं नीत्वा ताम्बूलान्तमभ्यर्च्य विशुद्धिचक्रं नीत्वा तत्रत्यचन्द्रकला- रूपैर्मणिभिः पूरयित्वा आज्ञाचक्रं नीत्वा नीराज्य सहस्रदलकमले सरघामद्ये सदाशिवेन संयोज्य तिरस्करिणीं प्रसार्य समीपं मन्दिरे स्वयं स्थित्वा यावद्भगवती पुनर्निर्गता सती मूलाधारकुण्डं प्रविशति तावत्तत्रैव समयं प्रतीक्षेतेत्याकारो गुरुमुखैकवेद्यः समयाचारः । तयोरुभयविधयोरपि तत्परा आसक्ता ॥ ८८ ॥

---

कुः पृथ्वी । इदं च पञ्चमहाभूतोपलक्षणम् । तत्र लीयते इति कुलं नश्वरम् । तस्मादन्या अकुला । अकुलायै इति ॥ समयः सच्छास्त्रसङ्केतः तस्यान्ते तत्सेवनान्ते प्राप्यत्वेन तिष्ठतीति सा । अन्तस्थायै इति ॥ आचरणमाचारः समयः पूर्वोक्त आचारो येषां तेषु तत्परा आसक्ता । तत्परायै इति ॥ ८८ ॥

## मूलाधारैकनिलया ब्रह्मग्रन्थिविभेदिनी ।

मूलाधाराख्यं चतुर्दलं पद्मं तत्कर्णिकायां मध्ये बिन्दौ कुलकुण्डनामके मुखमाच्छाद्य कुण्डलिनी तत्र सर्वदैव सुप्ता तिष्ठति । अतएवैतदाधारत्वात्सुषुम्णा-मूलत्वाच्च मूलाधार इत्युच्यते । स एवैको मुख्यो निलयो वासस्थानं यस्याः । षट्चक्रेषु प्रतिचक्रमाद्यन्तयोर्द्वौद्वौ ग्रन्थी । तत्र ब्रह्मग्रन्थिद्वयं स्वाधिष्ठानीयं विशेषेण भिनत्तीति तथा ॥

**इति श्रीभासुरानन्दकृते सौभाग्यभास्करे ।**
**आद्येन शतकेनाभूद्द्विया तापिनी कला ॥ १०० ॥**

**इति श्रीमत्पदवाक्येत्यादिभास्कररायकृते ललितासहस्रनाम परिभाषाभाष्ये**
**प्रथमशतकं नाम द्वितीया कला ॥ २ ॥**



---

मूलाधारः गुदोर्ध्वे लिङ्गाधः विद्यमानं चतुर्दलं कमलं सुषुम्णाया मूले आधारभूतत्वात् मूलाधार इत्युच्यते । स एकः मुख्यो निलयो यस्याः सा । निलयायै इति ॥
षट्सु चक्रेषु आद्यन्तयोर्द्वौ ग्रन्थी सुषुम्णामार्गनिरोधकौ । तत्रस्याधिष्ठानमणिपूरानाहताख्यानि त्रीणि चक्राणि ब्रह्मविष्णुरुद्राणां स्थानानि। तत्मीपे विद्यमानो ग्रन्थिरपि ब्रह्मग्रन्थीत्यादि तत्तन्नाम्नो-च्यते । मूलाधारे प्रसुप्तसर्पा कुण्डलिनी योगिभिरुत्थापिता झटिति ग्रन्थी निर्भिद्य सुषुम्णामार्गेण ब्रह्मरन्ध्रस्थचन्द्रमण्डलं प्रविश्य तच्चन्द्रमण्डलगलदमृतधाराभिर्देहमाप्लावयतीत्यागमप्रसिद्धम् । तदेतदाह ब्रह्मग्रन्थीत्यादि । ब्रह्मसंज्ञकं ग्रन्थिं विशेषेण भिनत्तीति सा । भेदिन्यै इति ॥

# द्वितीयशतकं नाम तृतीया धूम्रिका कला

**मणिपूरान्तरुदिता विष्णुग्रन्थिविभेदिनी ॥ ८९ ॥**

नाभौ दशदले पद्मे सामयिकपूजायां मणिभी रत्नैः पूर्यते भूष्यते देवीति तच्चक्रं मणिपूरपदवाच्यम् । तस्यान्तरधःस्थितं ग्रन्थिं भित्त्वोदिता प्रकटिता । तदुपरिस्थितं विष्णुग्रन्थिं विशिष्य भिनत्तीति तथा । विष्णोर्मणिपूरचक्रस्थितत्वेन तद्ग्रन्थ्यो-र्विष्णुग्रन्थिसंज्ञा । एवं ब्रह्मरुद्रग्रन्थिसंज्ञे अपि ज्ञेये ॥ ८९ ॥

**आज्ञाचक्रान्तरालस्था रुद्रग्रन्थिविभेदिनी ।**

भ्रूमध्ये द्विदलपद्मे आज्ञापकस्य श्रीगुरोरवस्थानादाज्ञाचक्रसंज्ञा । तावत्पर्यन्तं मनोविग्रहाभ्यासे ईषद् ज्ञानोदयो भवतीति वा । आङीषदर्थकः । तदन्तराले तिष्ठति । रुद्रग्रन्थिद्वयं हृदयगतानाहतचक्रीयं विभिनत्तीति तथा । अनुष्ठाने एतद्वैपरीत्यमुन्नेयम् । पाठक्रमादर्थक्रमस्य बलीयस्त्वात् '**अर्थाच्चे**'ति पाञ्चमिकन्यायात् । यद्वा । श्रीविद्यायां चत्वारः खण्डाः आग्नेय-सौर-सौम्य-चन्द्रकलाख्याः । त एव वाग्भव-कामराज-शक्ति-तुर्याख्याश्च । तेषां चतुर्णां मध्ये त्रयो हृल्लेखाख्या ग्रन्थयः । ताश्च तिस्रः क्रमेण रुद्रविष्णुब्रह्मसंज्ञकाः । तत्त्रयं भिनत्ति तदन्तः प्रविशति । तदभिधेयेत्यर्थः । वस्तुतस्तु **दत्तात्रेयसंहितायां** षडर्थप्रकरणोक्तकौलिकार्थपरमिदं नाम-षट्कम् । तदुक्तं तत्रैव—

**'मूलाधारादिकं चक्रषट्कं कुलमिति स्मृतम् ।**
**ग्रन्थित्रयं तत्र देविचक्रत्रितयगर्भितम् ॥**
**पृथ्व्याप्यचक्रद्वितयं ब्रह्मग्रन्थिपदोदितम् ।**
**वह्निसूर्यमयं चक्रद्वयं तेजोमयं महत् ॥**

---

नाभौ दशदलं कमलमस्ति । अन्तराराधनावसरे साधकैः(का) देव्यङ्गं मणिमयभूषणैरा-पूरयन्ति तत्रेति तन्मणिपूरम् । तदन्तः तन्मध्ये उदिता आविर्भूता । उदितायै इति ॥ विष्णुग्रन्थिं विभिनत्तीति सा । भेदिन्यै इति ॥ ८९ ॥

भ्रूमध्यस्थं द्विदलकमलमाज्ञापङ्कज(जं)[त] स्य गुरोः स्थानत्वादाज्ञाचक्रम् । तदन्तराले तिष्ठतीति सा । स्थायै इति ॥ रुद्रग्रन्थिं विभिनत्तीति सा । भेदिन्यै इति ॥

**विष्णुग्रन्थिपदेनोक्तं तैजसं सर्वसिद्धिदम् ।**
**वाय्वाकाशद्वयीरूपं चक्रद्वितयमुत्तमम् ॥**
**रुद्रग्रन्थिपदेनोक्तं मङ्गलायतनं महत् ।'** इत्यादि ।

**सहस्राराम्बुजारूढा सुधासाराभिवर्षिणी ॥ ९० ॥**

सहस्रसंख्याका अरा दलानि यस्य तदम्बुजं कमलं ब्रह्मरन्ध्राधःस्थमारूढा । सुधायास्तत्कर्णिकाचन्द्रसम्बन्धिन्या आसारो धारासम्पातस्तमभिवर्षितुं शीलमस्याः **'अमृतस्य धारा बहुधा दोहमानं, चरणं नो लोके सुधितान्दधातु'** इति **श्रुतेः** ॥ ९० ॥

**तडिल्लतासमरुचिः षट्चक्रोपरि संस्थिता ।**

तडित्सौदामिन्येव लता वल्ली तथा समा रुचिः कान्तिर्यस्याः । **'विद्युल्लेखेव भास्वरे'**ति **श्रुतेः** । 'षडवयवकानि। चक्राणीति मध्यमपदलोपी समासः । तेन 'द्विगो'-रितिङीप्प्रत्ययो न भवति । तानि च मूलाधार-स्वाधिष्ठान-मणिपूरानाहत-विशुद्धाज्ञा-चक्रनामकानि । तेषामुपरि: सहस्रारे सम्यक् स्थिता ।

**महासक्तिः कुण्डलिनी बिसतन्तुतनीयसी ॥ ९१ ॥**

महे उत्सवे तत्रत्यशिवशक्तिसमायोगरूपे आसक्तिस्तत्परता यस्याः । **'मह उद्धव उत्सव'** इत्यमरः । वह्नितेजस्यासक्तिर्यस्या वा । **'मह उत्सवतेजसो'**रिति **विश्वः** । महती आ समन्तात्सक्तिः संयोगो यस्या वा । कुण्डले अस्याः स्त इति कुण्डलिनी आकृत्या भुजङ्गी वा । तत्स्वरूपं च **तन्त्रराजे**—

**'मूलाधारस्थवह्न्यात्मतेजोमध्ये व्यवस्थिता ।**
**जीवशक्तिः कुण्डलाख्या प्राणाकाराथ तैजसी ॥**
**प्रसुप्तभुजगाकारा त्रिरावर्ता महाद्युतिः ।**
**मायाशीर्षा नदन्तीं तामुच्चरत्यनिशं खगे ॥**
**सुषुम्णामध्यदेशे सा यदा कर्णद्वयस्य तु ।**
**पिधाय न शृणोत्येनं ध्वनिं तस्य तदा मृतिः ॥"**

---

ब्रह्मरन्ध्रे स्थितमधोमुखं श्वेतसहस्रदलं कमलं सहस्रारमुच्यते । सहस्राराख्येऽम्बुजे आरूढा। आरूढायै इति ॥ सुधाया आसारः धारासंपातः तम् अभितः सर्वतो वर्षतीति सा । वर्षिण्यै इति ॥ ९० ॥

तडिल्लतायाः विद्युल्लतायाः समा रुचिः कान्तिर्यस्याः सा । रुच्यै इति ॥ मूलाधाराद्याज्ञान्तानां षट्चक्राणामुपरि सहस्रारे सम्यक् स्थिता । स्थितायै [इति] ॥

महे उत्सवे आसक्तिः प्रीतिर्यस्याः सा । सक्त्यै इति ॥ कुण्डलिनीशक्तिरूपा । कुण्डलिन्यै इति ॥ विसं कमलनालं तस्य तन्तुरिव तनीयसी सूक्ष्मरूपा । तनीयस्यै इति ॥ ९१ ॥

इत्यादि । **योगवासिष्ठे** चूडालोपाख्याने–

**'पुर्यष्टकापराख्यस्य मनसो जीवनात्मिकाम् ।**
**विद्धि कुण्डलिनीमन्तरामोदस्येव मञ्जरीम् ॥'**

इति । नामनिर्वचनं च **देवीपुराणे– 'यतः शृङ्गाटकाकारा कुण्डलिन्युच्यते तत'** इति यद्वा वाग्भवबीजस्य कुण्डलिनीति संज्ञा । तद्रूपा बिसतन्तुः कमलनालं तदेव तन्तुस्तद्वत्तनीयसी अतिशयेन कृशाकृतिः । **'नीवारशूकवत्तन्वी पीता भास्वत्यणूपमे'**ति **श्रुतेः** । **'कुलामृतैकरसिका'** इत्यारभ्येयत्पर्यन्ता मुक्ता प्रक्रिया सर्वापीति स्पष्टीकृता **वामकेश्वरतन्त्रे**–

**भुजङ्गाकाररूपेण मूलाधारं समाश्रिता ।**
**शक्तिः कुण्डलिनीनाम बिसतन्तुनिभा शुभा ॥**
**मूलकन्दं फणाग्रेण दंष्ट्राकमलकन्दवत् ।**
**मुखेन पुच्छं संगृह्य ब्रह्मरन्ध्रं समन्विता ॥**
**पद्मासनगता स्वस्था गुदमाकुञ्च्य साधकः ।**
**वायुमूर्ध्वगतं कुर्वन्कुम्भकाविष्टमानसः ॥**
**वाय्वाघातवशादग्निः स्वाधिष्ठानगतो ज्वलन् ।**
**ज्वलनाघातपवनाघातैरुन्निद्रितोऽहिराट् ॥**
**ब्रह्मग्रन्थिं ततो भित्त्वा विष्णुग्रन्थिं भिनत्त्यतः ।**
**रुद्रग्रन्थिं विभिद्यैव कमलानि भिनत्ति षट् ॥**
**सहस्रकमले शक्तिः शिवेन सह मोदिते ।**
**सा चावस्था परा ज्ञेया सैव निर्वृतिकारणम् ॥'**

इति । **अरुणोपनिषद्यपि** श्रूयते–

**'उत्तिष्ठत मा स्वप्त अग्निमिच्छध्वं भारताः ।**
**राज्ञः सोमस्य तृप्तासः सूर्येण सयुजोषसः ॥"**

इति । इयं चोपनिषत्सर्वापि भगवतीपरैव । उपबृंहणदर्शनात् । **'अरुणोपनिषद्गीते'**ति श्यामलासहस्रनामसु पाठाच्च । पृश्निनामकानामुपासकानां परस्परमुक्तिरियं भारती-सरस्वतीविद्येति यावत् । तत्सम्बन्धिनो भारताः । हे श्रीविद्योपासकाः, उत्तिष्ठत उपास्तिक्रमे प्रवर्तध्वम् । मा स्वप्त प्रमत्ता मा भूत । अन्तर्भावितण्यर्थौ वा कुण्डलिनीकर्मकाविमौ धातू योजनीयौ । अग्निं स्वाधिष्ठानगताग्नितेजोमयीं कुण्डलिनीमिच्छध्वं इच्छादण्डेनाहत्योत्थापयध्वम् । सूर्येण, सयुजा विशुद्ध्यनाहतचक्रयोर्मध्यवर्तिसूर्यसहितेन तेनाग्निना । उषसो दग्धस्य द्रुतस्येति यावत् । सोमस्य उमया राजराजेश्वर्या सहितस्य राज्ञो राजराजेश्वरस्य सहस्रारीयचन्द्रमण्डलान्तर्गतस्य वा ।

अर्थादमृतेन तृप्तासो भवत तृप्यत । अग्निकुण्डलिनीमुत्थाप्य सूर्यकुण्डलिन्या संयोज्य ताभ्यां चन्द्रमण्डलशिवशक्तिसामरस्येन द्रावयित्वा तदुत्थामृतधाराभिर्द्विसप्ततिसहस्र-नाडीमार्गानापूर्य तृप्ता भवतेत्यर्थः । तृप्तास इत्यत्र **'आज्जसे'**रित्य**सुगागमः** । तथा–

**'यत्कुमारी मन्द्रयते यद्योषिद्यत्पतिव्रता ।**
**अरिष्टं यत्किञ्च क्रियते अग्निस्तदनुवेधति ॥'**

कुः पृथ्वीतत्त्वं म्रियते लीयते यस्मिंस्तत्कुलकुण्डं कुमारं तत्सम्बन्धिनी कुमारी कुलकुण्डलिनी । मन्द्रयते मन्द्रस्वरेण नदति । अतएव रोदनावस्थासाहित्यात्कुल-कुण्डादुत्थापनस्योत्पत्तिरूपत्वाच्च सद्य उत्पन्ना कुमारीत्युच्यते । योषित् तरुणी तारुण्यलक्षणसूर्येणानाहतादुपरिभागे साहित्यात् । पतिव्रता पतिं ब्रह्मरन्ध्रस्थं कामेश्वरं व्रतयति भुङ्क्ते । **'पयोव्रतं ब्राह्मणस्ये'**त्यादि प्रयोगात् । एवं कौमारतारुण्यसम्भोगैररिष्टं शुभं पीयूषवर्षणरूपमन्यदपि यत्किञ्चित्सा क्रियते करोति तत्सर्वमग्निः स्वाधिष्ठान-गतोऽनुवेधति साधयति । अग्निज्वलनेनैव चन्द्रमण्डलद्रवादिति भावः । एतदुपबृंहणं **सनत्कुमारतन्त्रे**–

**'पृश्नयो नाम मुनयः श्रीविद्योपासका मिथः ।**
**सम्भूयोपदिशन्त्येतामुत्थापयत मा चिरम् ॥**
**कर्णिकायामधिष्ठाने वह्निमिच्छथ भारताः ।**
**सूर्येण सह विद्राव्य राज्ञः सोमस्य तृप्यते ॥'**

इत्यादि **'पातिव्रत्ये भुजङ्गम्या अग्निरेव सहायवानि'**त्यन्तम् । एवं **'लोकस्य द्वारमर्चिमत्पवित्रम् । ज्योतिष्मद्भ्राजमानं महस्वत् । अमृतस्य धारा बहुधा दोहमानम् । चरणं नो लोके सुधितान्दधात्वि'**ति मन्त्रोऽपि लोकस्य ब्रह्मलोकस्य द्वारं साधनम् । अर्चिर्ज्योतिर्महःशब्दा अग्निसूर्यचन्द्रकलावाचकाः । चरणशब्दश्चरति यातायातं करोतीति व्युत्पत्त्या कुण्डलिनीपरः । सामान्ये नपुंसकम् । सुधितान् तृप्तान् । हकारस्य धकारादेशोऽर्चिःशब्दे सकारलोपश्च छान्दसः । कुण्डलिनी अग्न्यादिस्थानमागतासती सुधावृष्टिं कुर्वत्यस्मांस्तृप्तान्करोत्वित्यर्थः । तदिदमुपबृंहितं **शुक्रसंहितायाम्**–

**'पावकस्यार्चिषा भानोर्ज्योतिषा महसा विधोः ।**
**दोहमाना सुधाधारा द्विसप्ततिसहस्रधा ॥**
**गुप्ताचारा कुण्डलिनी तृप्तानस्मांस्तनोतु सा ।'**

इति । अत्र गुप्तं यथा तथा चरतीति चरणपदस्यार्थः । एवं **वसिष्ठादि-तन्त्रेष्वप्युपबृंहणानि** द्रष्टव्यानि ॥ ९१ ॥

**भवानी भावनागम्या भवारण्यकुठारिका ।**

भवं महादेवं संसारं कामं वा आनयति जीवयतीति भवानी । तदुक्तं **देवीपुराणे** निर्वचनाध्याये–

**'रुद्रो भवो भवः कामो भवः संसारसागरः ।**
**तत्प्राणनादियं देवी भवानी परिकीर्तिता ॥'**

इति । यद्वा जलमूर्तेः परमेश्वरस्य भव इति संज्ञा । तस्य पत्नी उषानाम्नी । पुत्रः शुक्राख्यः । तदुक्तं **लिङ्गपुराणे**–

**'भव इत्युच्यते देवैर्भगवान्वेदवादिभिः ।**
**सञ्जीवनेन लोकानां भवस्य परमात्मनः ॥**
**उषा संकीर्तिता भार्या सुतः शुक्रश्च सूरिभिः ।'**

इति । **वायुपुराणे**ऽपि–

**'भवस्य या द्वितीया तु तनूरापः स्मृतेति वै ।**
**तस्योषा नामिका पत्नी पुत्रश्चाप्युशना स्मृतः ॥'**

इति । भवशब्दनिष्पत्तिरपि तत्रैव–

**'यस्माद्भवन्ति भूतानि ताभ्यस्ता भावयन्ति च ।**
**भवनाद्भावनाच्चैव भूतानां स भवः स्मृतः ॥'**

इति । अत्र ताभ्य इत्यस्याद्भ्य इत्यर्थः । **'तस्मादापो भवः स्मृता'** इत्युपक्रम्य पाठात् । भवं जीवनरूपं जलमप्यानयति जीवयतीति भवानी । यद्वा भवस्य स्त्रीत्यर्थे पुंयोगलक्षणो ङीप् । **'इन्द्रवरुणे'**त्यादिनानुगागमः । इयञ्च स्थानेश्वराख्यपीठस्याधिष्ठात्री देवता । तदुक्तं **पद्मपुराणे**ऽष्टोत्तरशतदेवीतीर्थमालाध्याये– **'स्थानेश्वरे भवान्याख्या बिल्वके नामपत्रके'**ति । एवं रूपपञ्चकं निर्वर्ण्य तत्प्राप्त्युपायं कतिपयैर्नामभिराह । भावना तावद् द्विविधा–शाब्दी भावना आर्थी भावना चेति । तत्र शाब्दी वैदिकशब्दनिष्ठाचार्येच्छासमानयोगक्षेमा । ईश्वरेच्छैवेति तु **मीमांसकवादकौतूहले** निरूपितमस्माभिः । आर्थी तु प्रवृत्तिरूपा । कारकाणां परस्परसम्बन्धरूपेत्यपि तत्रैव निरूपितम् । ताभ्यामगम्या गम्या वा कर्ममार्गाविषय इति वा तज्जन्यचित्तशुद्धिरूपा वेत्यर्थः । यद्वा भावना त्रिविधा । तदुक्तं **कूर्मपुराणे**–

**'ब्राह्मी माहेश्वरी चैव तथैवाक्षरभावना ।**
**तिस्रस्तु भावना रुद्रे वर्तन्ते सततं द्विजा ॥'**

---

भवत्यस्मात्सर्वमिति भवः परशिवस्तस्य पत्नी भवानी । भवान्यै इति ॥ भावना सगुणनिर्गुणाद्युपासना । तया गम्या ज्ञेया । गम्यायै इति ॥ भवः संसारः स एवारण्यं तत्तुल्यत्वात् । तस्य कुठारिका छेदनकर्त्री । कुठारिकायै इति ॥

इति । अन्यत्रापि–

**'त्रिविधां भावनां ब्रह्मन् प्रोच्यमानां निबोध मे ।**
**एका मद्विषया तत्र द्वितीयाऽव्यक्तसंश्रया ॥**
**अन्त्या तु सगुणा ब्राह्मी विज्ञेया त्रिगुणा त्रिधा ।'**

इति । इदं चेन्द्रद्युम्नंप्रति कूर्मावतारस्य भगवतो वचनम् । एतल्लक्षणनिष्कर्षश्च **रत्नत्रयपरीक्षायां दीक्षितैः** कृतस्तत एवावगन्तव्यः । यद्वा–

**'आज्ञान्तं सकलं प्रोक्तं ततः सकलनिष्कलम् ।**
**उन्मन्यन्ते परे स्थानं निष्कलं च त्रिधा स्थितम् ॥'**

इति । **योगिनीहृदयोक्तलक्षणास्तिस्रो** भावनाः । ताभिर्गम्या ज्ञेया । भवः संसार एवारण्यमतिगहनत्वात् पुनः पुनः प्ररोहाच्च । तस्य कुठारेव कुठारिका । **'द्वयोः कुठार'** इति कोशात् स्त्रीलिङ्गता । तच्छेत्त्रीत्यर्थः ।

**भद्रप्रिया भद्रमूर्तिर्भक्तसौभाग्यदायिनी ॥ ९२ ॥**

भद्रं मङ्गलं प्रियं यस्याः । भद्रो गजविशेषस्तज्जातीया गजाः प्रिया यस्या इति वा । भद्रा भव्या मूर्तिः स्वरूपं यस्याः । **'ब्रह्म तन्मङ्गलं विदु'**रिति **विष्णुपुराणात्** । **'मङ्गलानां च मङ्गल'**मिति **भारताच्च** । **'भगः श्रीकाममाहात्म्यवीर्ययत्नार्ककीर्तिष्वि'- 'त्याग्नेयपुराणोक्ता** भगपदार्थाः शोभना यस्यां सा सुभगा ललितैव तस्या भावः सौभाग्यं तदभेद इति यावत् । यत्तु **पद्मपुराणे**–

**'इक्षवस्तरुराजश्च निष्पावा जीरधान्यके ।**
**विकारवच्च गोक्षीरं कौसुम्भं कुसुमं तथा ॥**
**लवणं चाष्टमं तद्वत्सौभाग्याष्टकमुच्यते ।'**

इति वचने परिगणितं तदपि मङ्गलकार्योपयुक्तत्वाच्छ्रीकरत्वात्सौभाग्यमेवं । सुष्ठु भाग्यं नियतिर्यस्य तस्य भावो वा सौभाग्यम् । भक्तेभ्यस्तानि ददातीति तथा ॥ ९२ ॥

*अत्रेदं बोध्यम् । महाशक्तिरित्यारभ्यैतत्पर्यन्तानि नव नामानि बडण् इति* ***छलाक्षरसूत्रेण*** *निर्दिष्टानि । तथाहि* ***वररुचि****सङ्केते यवर्गोऽष्टानामिह तु नवानां संज्ञेत्युक्तं* ***'काज्ञाद्वाः, टयौ चे'****ति सूत्राभ्यां ककारमारभ्य झकारमभिव्याप्य द्वाराणि नव भवन्ति । टवर्गयवर्गावप्येवमिति तदर्थः । पिषुः । पवर्ग इषूणां पञ्चानां संज्ञा ।*

---

भद्रं मङ्गलं प्रियं यस्याः सा । प्रियायै इति ॥ भद्रा मङ्गला मूर्तिः स्वरूपं यस्याः सा । मूर्त्यै इति । सुष्टुभाग्यं दैवम् । तस्य भावः सौभाग्यम् । भक्तेभ्यः सौभाग्यं ददातीति सा । दायिन्यै इति ॥ ९२ ॥

*एतान्यक्षराणि नामसंख्याद्योतकानि । अज्राट् । अचो राजः षोडशान्तसंख्यावाचका भवन्ति । युयुत्साः । इकार आदौ तत उकारः । एतद्द्वयं यस्मादक्षरात्परतस्तदक्षरं साः । अकारेण सहितं तयोर्नाम । यथा किकु इत्यनयोः क इति संज्ञा टिटु इत्यनयोः ट इति । फीपात्पृडवः । फीकारात्परतः पृकारश्चेत्तद्युगलस्य डकारः संज्ञा । पकारात्परतश्चेत्तद्युगलस्यं बकारः संज्ञा । पुटोण् । संपुटीकरणस्य ण् इति संज्ञा । एवञ्च बडणिति सूत्रस्य डकारेण पुटितो बकार इत्यर्थः । तेन डबड इति सिध्यति । ततश्च फीपॄपिपुपॄफीपॄ इति सप्त वर्णा भवन्ति । द्वे नामनी चतुरक्षरे । तत्र प्रथमनाम्न आद्यमक्षरं पवर्गीयम् । तृतीयं नामाष्टाक्षरम् । तदाद्यमक्षरं च पवर्गीयम् । ततो द्वित्रिपञ्चाक्षरे । तदाद्ये पवर्गीये । ततः षष्ठं नामाष्टाक्षरम् । तदाद्यमक्षरं च पवर्गीयम् । ततो द्वे चतुरक्षरे । तयोराद्यं नाम पवर्गीयादिमाक्षरकम् । ततोऽष्टाक्षरमेकं नाम । तदाद्यमक्षरं च पवर्गीयमिति । एवं नव नामानीत्येतावान्सूत्रार्थ इति दिक् ।*

**भक्तिप्रिया भक्तिगम्या भक्तिवश्या भयापहा ।**

भक्तिर्द्विविधा– मुख्या गौणी चेति । तत्रेश्वरविषयकोऽनुरागाख्यश्चित्तवृत्तिविशेषो मुख्यभक्तिः । तथा च **भक्तिमीमांसासूत्रम्**– **'सा परानुरक्तिरीश्वरे'** इति । **'अथातो भक्तिजिज्ञासे'**तिसूत्रोपात्ता भक्तिस्तत्पदार्थः । तस्याः परेति विशेषणम् । परां मुख्यां भक्तिविशेषमुद्दिश्यानुरक्तिर्लक्षणत्वेन विधीयत इति तदर्थः । अतएव परेति गौणीं व्यावर्तयतीति **भाष्यम्** । **'गौण्या तु समाधिसिद्धि'**रिति सूत्रे गौणी भक्तिः सेवारूपा कथिता । तथा च **गरुडपुराणे**–

**'भज इत्येष वै धातुः सेवायां परिकीर्तितः ।**
**तस्मात्सेवा बुधैः प्रोक्ता भक्तिसाधनभूयसी ॥'**

इति । तद्भेदाः स्मरणकीर्तनादयो बहवः । तेन–

**"भक्तिरष्टविधा ह्येषा यस्मिन्म्लेच्छेऽपि वर्तते ।**
**स विप्रेन्द्रो यतिः श्रीमान् स मुनिः स च पण्डितः ॥'**

इत्यादित्य-**गरुडपुराणयो**र्वचनम् । **'भक्तिर्नवविधा राजन्'** इत्यादि **भागवतं** वचनम् । **'भक्तिर्दशविधा ज्ञेया पापारण्यदवोपमे'**ति दशविधत्वप्रतिपादकं **बृहन्नारदीय**वचनमन्य-

---

भक्तिर्मुख्यानुरक्तिः सा प्रिया यस्याः सा । प्रियायै इति ॥ भक्त्या निरुक्तया गम्या उपलभ्या । गम्यायै इति ॥ भक्तेरुक्तलक्षणया वश्या पराधीना । वश्यायै इति ॥ भयानि जरामरणादि निमित्तानि अपहन्तीति सा । अपहायै इति ॥

च्चैतादृशमवयुत्यानुवाद एव । ईदृशो भक्तिपदार्थः प्रियो यस्याः सा । तथा च **शिवपुराणे**—

**'कृतकृत्यस्य तृप्तस्य मम किं क्रियते नरैः ।**
**बहिर्वाऽभ्यन्तरे वाऽपि मया भावो हि गृह्यते ॥'**

इति । अत्र भावशब्देन बाह्या सेवारूपा चेष्टाऽभ्यन्तरोऽभिप्रायश्च गृह्यते । भक्त्या संराधनेन गम्या प्रत्यक्षा । तथा च **श्रुतिः**—

**'पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यन्ति नान्तरात्मन् ।**
**कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥'**

इति । **स्मृतिरपि**— **'योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनमि'**ति । **'ईश्वरप्रणिधानाद्वे'**ति **योगसूत्रे**ऽप्येवम् । प्रणिधानपदस्य भक्तिपरतया **राजमार्तण्डे** व्याख्यानात् । **[भक्ति] ब्रह्मसूत्र**मपि-**'अपिसंराधने प्रत्यक्षानुमानाभ्या'**मिति । अव्यक्तमपि ब्रह्म भक्त्या प्रत्यक्षं भवतीति **श्रुतिस्मृतिभ्यां** तथाऽवगमादिति तदर्थः ।

**'भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन ।**
**ज्ञातुं द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप ॥'**

इति **भगवद्वचन**मपि । अत्र प्रवेष्टुमित्यनेन ब्रह्मभावाख्यो मोक्ष उच्यते, सोऽपि भक्त्यैव लभ्यत इत्यर्थः । तेन प्रकृते गम्यपदं प्राप्यपरत्वेनापि व्याख्येयम् । **'ब्रह्मसंस्थोऽमृतत्वमेती'**ति श्रुतौ निष्ठापर्यायभक्तिवाचिना संस्थापदेन तथा प्रतिपादनात् । अतएव **भक्तिमीमांसायाम्**— **'तत्संस्थस्यामृतत्वोपदेशादि'**ति सूत्रम् । **ब्रह्ममीमांसायाम्**- **'तन्निष्ठस्य मोक्षोपदेशादि'**ति सूत्रञ्च । **नित्यातन्त्रे**ऽपि भक्तिलक्षणकथनपूर्वकं तस्याखिल-पुरुषार्थप्रदत्वमुक्तम्—

**'उक्तलक्षणसम्पन्ने गुरौ तत्प्रोक्तयोस्तथा ।**
**विद्यानुष्ठानयोः स्थैर्यधियः संशयनाशनी ॥**
**तारकत्वाप्रमत्तत्वे भक्तिरुक्ताखिलार्थदा ।**
**यया विहीना नियतमिहामुत्र च दुःखिता ॥'**

इति । अथवा भक्तिर्लक्षणा तया गम्या बोध्या । विशिष्टशक्तिकानां सत्यज्ञानादिपदानां निर्धर्मकब्रह्मवाचकत्वायोगात् । अतएव **त्रिशत्यां** वक्ष्यते— **'लक्ष्यार्था लक्षणागम्ये'**ति । **'सर्वेषां वैकमन्त्र्यमैतिशायनस्य भक्तिपावनत्वात्सवमानाधिकारो ही'**ति **जैमिनिसूत्रे** भक्तिपदस्य लक्षणायां प्रयोगः । आस्माकीने **शिवस्तवे**ऽपि—

**'न मे शक्तिः श्रीमन्महिमपरमाणोरपि नुतौ**
**तथापि त्वद्भक्तिं व्यतनवमवष्टभ्य किमपि ।**
**न मञ्चाः क्रोशन्ति प्रवचनमथापि प्रववृते**
**यथा लोके भक्त्या परशिव न शक्त्या स्वगतया' ॥**

इति भक्तेरुक्तलक्षणाया वश्या पराधीना । भक्त्या वश्येति वा । **'स्वतन्त्रापि शिवभक्तिपारतन्त्र्यत्वमश्नुष'** इति वचनात् । भयानि जलस्थलादिप्रयुक्तादीनि सर्वाण्यपहन्तीति भयापहा । **'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'**ति **श्रुतेः** । तथा च **वायुपुराणे**–

**'अरण्ये प्रान्तरे वापि जले वापि स्थलेऽपि वा ।**
**व्याघ्रकुम्भीरचोरेभ्यो भयस्थाने विशेषतः ॥**
**आधिष्वपि च सर्वेषु देवीनामानि कीर्तयेत् ।'** इति ।

**शाम्भवी शारदाराध्या शर्वाणी शर्मदायिनी ॥ ९३ ॥**

शम्भोरियं स्त्री शाम्भवानामियं माता वा शाम्भवी । **योगशास्त्रे** मुद्राविशेषस्येदं नाम । तल्लक्षणं तत्रैव–

**'अन्तर्लक्ष्य बहिर्दृष्टिर्निमेषोन्मेषवर्जिता ।**
**एषा सा शाम्भवी मुद्रा सर्वतन्त्रेषु गोपिता ॥'**

इति । **कल्पसूत्रे** तु दीक्षास्तिस्रः– शक्तीः शाम्भवी मान्त्री चेति । विभज्य तल्लक्षणान्युक्तानि **देवीभागवते 'अष्टवर्षा च शाम्भवी'**ति कन्याविशेषस्य नामोक्तं तद्रूपा वेत्यर्थः । शारदया सरस्वत्या वाग्देवताभिश्च आराध्या, शारदे शरदृतौ वर्षादौ वा आराध्या । **'अथ शरत्समाः । संवत्सर'** इत्यमरात् । **'शरत्काले महापूजा क्रियते या च वार्षिकी'**ति **मार्कण्डेयपुराणे** । वर्षस्यादौ भवा वार्षिकीत्यर्थः । **'वासन्ते नवरात्रे तु पूजयेद्रक्तदन्तिका'**मिति **रुद्रयामलात्** । शारदैर्विशारदैः पण्डितैः शालीनाख्याश्रमविशेषशीलैर्वाराध्या । **'शारदः पीतमुद्गे स्याच्छालीने प्रतिभाविनी'**ति **मेदिनी** । **'अकारो वासुदेवः स्यादाकारस्तु पितामह'** इत्यनेकार्थध्वनिमञ्जर्यामभिधानात्ताभ्यामाराध्येत्यक्षरद्वयश्लेषेणार्थे सिद्धे शारदा चासावाराध्येति कर्मधारयो वा । तत्र शारदांशनिरुक्तिः **कालीपुराणे**–

**'शरत्काले पुरा यस्मान्नवम्यां बोधिता सुरैः ।**
**शारदा सा समाख्याता पीठे लोके च नामतः ॥'**

इति । क्षितिमूर्तेः परमशिवस्य शर्व इति संज्ञा । तस्य स्त्रीत्यर्थे पुंयोगलक्षणे ङीष्यानुगागमः । मङ्गलस्य माता सुकेशी नाम्नीत्यर्थः । तदुक्तं **लैङ्गे**–

**'चराचराणां भूतानां धाता विश्वम्भरात्मकः ।**
**शर्व इत्युच्यते देवः सर्वशास्त्रार्थपारगैः ॥**

---

शम्भोरियं स्त्री शाम्भवी । शाम्भव्यै इति ॥ शारदया सरस्वत्या आराध्या पूज्या । आराध्यै इति । शर्वस्य परशिवस्य स्त्री शर्वाणी । शर्वाण्यै इति ॥ शर्म सुखं ददातीति सा । दायिन्यै इति ॥ ९३ ॥

**विश्वम्भरात्मनस्तस्य शर्वस्य परमेष्ठिनः ।**
**सुकेशी कथ्यते पत्नी तनुजोऽङ्गारकः स्मृतः ॥'**

इति । **वायवीये**ऽपि–

**शर्वस्य या तृतीया तु नाम भूमितनुः स्मृता ।**
**पत्नी तस्य सुकेशीति पुत्रश्चाङ्गारको मतः ॥'**

इति । शर्म सुखं दातुं शीलमस्याः **'शर्म शातसुखानि चे'**त्य**ग्निपुराणीयकोशः** । **'सुखं ददाति भक्तेभ्यस्तेनैषा शर्मदायिनी'**ति **देवीभागवतात्** ॥ ९३ ॥

**शाङ्करी श्रीकरी**–

करोतीति करः । पचाद्यच् । **'कृञो हेतुताच्छील्ये'**त्यादिना टो वा । शं सुखस्य करः । शं करे यस्य स वा शङ्करः तस्य स्त्री शाङ्करी । तथा च **कालिकापुराणे**-

**'प्रतिसर्गादिमध्यान्तमहं शम्भुं निराकुलम् ।**
**स्त्रीरूपेणानुयास्यामि प्राप्य दक्षादहं तनुम् ॥**
**ततस्तु विष्णुमायां मां योगनिद्रां जगन्मयीम् ।**
**शाङ्करीति स्तुविष्यन्ति रुद्राणीति दिवौकसः ॥'**

इति । करोतीति करी श्रियः करी । श्रीकरो विष्णुः । **'श्रीधरः श्रीकरः श्रीमानि'**ति **विष्णुसहस्रनामसु** पाठात् । तस्येयं श्रीकरीति वा ॥

*अथ परिभाषायां षट्चत्वारिंशन्नामानि विभजते–*

***राजा चतुर्बलेन्द्रो भूत्वा बलिरागमान् द्विदश ।***
***गुणगणगौण्यं गणगोमार्गे मार्गे मृगेण भवेत् ॥ ११ ॥***

*चतुरित्येकस्मिन्नर्धे चतुश्चतुरक्षराणि चत्वारि नामानि द्विदश द्विसहिता दश । अर्धत्रयेणैतादृशानि नामानि द्वादश । स्पष्टमन्यत् ॥ ११ ॥*

**–साध्वी शरच्चन्द्रनिभानना ।**

साध्वी पतिव्रता । **'सती साध्वी पतिव्रते'**त्य**मरः** । कालत्रयेऽपि पत्यन्तर-योगाभावादनितरसाधारणं पातिव्रत्यम् । तदुक्तं श्रीमदाचार्य**भगवत्पादैः** –

**'कलत्रं वैधात्रं कति कति भजन्ते न कवयः**
**श्रियो देव्याः को वा न भवति पतिः कैरपि धनैः ।**

---

शङ्कर एव शाङ्करः तस्य स्त्री । शाङ्कर्यै इति ॥ श्रियःकरी श्रीकरी । कर्यै इति ॥

साध्वी पतिव्रता । साध्व्यै इति ॥ शरत्कालचन्द्रेण तुल्यम् आननं यस्याः सा । आननायै [इति] ॥

**महादेवं हित्वा तव सति सतीनामचरमे**
**कुचाभ्यामासङ्गः कुरबकतरोरप्यसुलभः ॥'**

इति । **देवीभागवतेऽपि**— **'साध्वीत्यनन्यसामान्यपातिव्रत्येन गीयसे'** इति । शरत्कालिकेन चन्द्रेण तुल्यमाननं मुखं यस्याः ।

**शान्तोदरी शान्तिमती निराधारा निरञ्जना ॥ ९४ ॥**

**'शो तनूकरणे'** । शातं कृशम् । **'आदे च उपदेशेऽशिति'**त्यात्वम् । उदरं यस्याः सा शातोदरी । शतोदरस्यानन्तगुहस्य हिमवतोऽपत्यं हैमवतीत्यर्थो वा । शान्तिरस्या अस्तीति शान्तिमती । भक्तेष्वौद्धत्याभावात् । आधारान्निष्क्रान्ता मूलाधारादुद्गता । **'निरादयः क्रान्ताद्यर्थे पञ्चम्ये'**ति समासः । यद्वा निर्गत आधारः अधिष्ठानान्तरं यस्याः । सर्वजगदधिष्ठानस्य सत्यत्वेनाधारान्तरायोगात् । अथवा निराधाराख्यपूजास्वरूपा । तथा च **सूतसंहितायाम्—पूजा शक्तेः परायास्तु द्विविधा सम्प्रकीर्तिते**'त्युपक्रम्य बाह्याभ्यन्तरभेदेन द्वैविध्यमुक्त्वा बाह्याया वैदिकतान्त्रिकभेदेन द्वैविध्यं सलक्षणं वर्णयित्वोक्तम्—

**'पूजा याभ्यन्तरा सापि द्विविधा परिकीर्तिता ।**
**साधारा च निराधारा निराधारा महत्तरा ॥**
**साधारा या तु साधारे निराधारा तु संविदि ।**
**आधारे वर्णसंक्लृप्तविग्रहे परमेश्वरीम् ॥**
**आराधयेदतिप्रीत्या गुरुणोक्तेन वर्त्मना ।**
**या पूजा संविदि प्रोक्ता सा तु तस्यां मनोलयः ॥**
**संविदेव परा शक्तिर्नेतरा परमार्थतः ।**
**अतः संसारनाशाय साक्षिणीमात्मरूपिणीम् ॥**
**आराधयेत्परां शक्तिं प्रपञ्चोल्लासवर्जिताम् ।**
**स्वानुभूत्या स्वयं साक्षात्स्वात्मभूतां महेश्वरीम् ॥**
**पूजेयेदादरेणैव पूजा सा पुरुषार्थदा ।'**

इति । अथ निराधारपूजाकर्मीभूतसंवित्स्वरूपस्यैदम्पर्येण निषेधमुखेन विधिमुखेन पराभिमतनिरासेन च निर्धारणपूर्वकं तत्प्राप्तिसाधनोपायं तज्जन्यफलस्वरूपञ्च कतिपयैर्नामभिराह निरञ्जनादिभिरष्टभिः श्लोकैः । सन्ति हि त्रिविधाः पशवः ।

---

शातं कृशमुदरं यस्याः सा । उदर्यै इति ॥ शान्तिरस्या अस्तीति शान्तिमती । मत्यै इति ॥ निर्गत आधारः अधिष्ठानं यस्याः स्वस्यैव सर्वाधारत्वात् । आधारायै इति ॥ निर्गतमञ्जनं मालिन्यमविद्यासम्बन्धो यस्याः सा । अञ्जनायै इति ॥ ९४ ॥

तत्रानात्मन्यात्मताज्ञानस्वरूपाणवमलमात्रेण युक्तो विज्ञानकेवलः, देहारम्भकादृष्टात्मककार्मणमलवान् प्रलयाकलः, भेदबुद्धिजनकमायाख्यमलवान् सकल इति भेदात् । एषूत्तरोत्तरो मलः पूर्वपूर्वव्याप्य इत्यादि निरूपितं **सेतुबन्धेऽस्माभिः** । तत्र सकलपशुनिरासायाह । निरञ्जना अञ्जनं नाम कालिमा । मायासङ्ग इति यावत् । तमोरूपत्वेनावरणधर्मेण सादृश्यात् । तथा च **योगवासिष्ठे**–

**भावाभावे पदार्थानां हर्षामर्षविकारदा ।**
**मलिना वासना राम सङ्गशब्देन कथ्यते ॥'**

इति । निर्गतमञ्जनं यस्याः सा निरञ्जना । '**निरवद्यं निरञ्जन**'मिति श्रुतेः । अविद्यासम्पर्काभाववतीत्यर्थः । मिथ्यारूपाया अविद्यायाः स्वाधिष्ठानेऽभावात् । प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वस्यैव मिथ्यात्वात् । यद्वा नितरां रञ्जनं रागो रक्तिमा सन्तोषणं वा यस्याम् ॥ ९४ ॥

**निर्लेपा निर्मला नित्या निराकारा निराकुला ।**

प्रलयकालेऽतिव्याप्तिं निरस्यति । कर्मसम्बन्धेन लेपस्तस्मान्निष्काशिता । '**न मां कर्माणि लिम्पन्ति**' इति **स्मृतेः** । यद्वा लेपः कर्मसम्बन्धः स निर्गतो यस्याः ज्ञानेन सा निर्लेपा । तदुक्तं **यज्ञवैभवखण्डे**–

**'कर्मभि सकलैरपि लिप्यते ब्रह्मवित्प्रवरश्च न सर्वथा ।**
**पद्मपत्रमिवाद्भिरहो परब्रह्मवित्प्रवरस्य तु वैभवम् ॥'**

**गीतास्वपि** '**लिप्यते न स पापेन पद्मपत्रमिवाम्भसे**'ति । विज्ञानकेवलेऽतिव्याप्तिं परिहरति । निर्मला आणवमलाभाववती, मलस्तदात्मा तदभाववती वा । मुक्तजीवस्तु लक्ष्य एव । नित्यमुक्तेत्यनेन वा तन्निरासः । यद्वा नित्यशुचिनो मालिन्यभ्रमाधायकत्वादविद्यैव मलस्तदभावत्वान्निर्मला । मलस्य मिथ्यात्वात् । तदधिष्ठानं तु न तथेत्याह । नित्या कालत्रयेऽप्यबाध्या । तेन क्षणिकविज्ञानमेवात्मेत्यौ(त्तानि)त्पातिकबाह्यनिरासः । '**अविनाशी वा अरेऽयमात्मे**'ति श्रुतेः ।' तिथिनित्या कालनित्या मन्त्ररूपा वा । साकारविज्ञानवादिमाध्यमिकनिरासायाह । आकारस्य सगुणरूपस्य कल्पितत्वान्निराकारा । तदुक्तं **विष्णुभागवते**–

**'स वै न देवासुरमर्त्यतिर्यङ् न स्त्री न षण्ढो न पुमान्न जन्तुः ।**
**नायं गुणः कर्म न सन्न चासन्निषेधशेषो जयतादशेषः ॥'**

---

लेपः कर्मसम्बन्धः स निर्गतो यस्याः सा । लेपायै इति ॥ निर्गतः मलः विकाररूपः दोषो यस्याः सा । मलायै इति ॥ नित्या कालत्रया बाध्या । नित्यायै इति ॥ आकारः अवयवः स निर्गतो यस्याः सा । आकारायै इति ॥ निर्गता आकुला चिन्ता यस्याः सा । आकुलायै इति ॥

इति । आकुलेति भावप्रधानो निर्देशः । अविद्यासम्पर्केऽप्याकुलत्वाभावान्निराकुला । निर्गता आकुलचित्ता यस्या इति वा । तादृशानां दूरेति यावत् । आकुलत्वं सर्वाभावः शून्यं वा । तेन शून्यवादिगम्भीराख्यबाह्यनिरासः । तार्किकमतं निरस्यति ।

**निर्गुणा निष्कला शान्ता निष्कामा निरुपप्लवा ॥ ९५ ॥**

गुणशून्यत्वान्निर्गुणा । **'साक्षी चेता केवलो निर्गुणश्चे'**ति श्रुतेः । गुणानां शरीरधर्मत्वेन चिद्धर्मत्वाभावाच्च । तदुक्तं **मत्स्य-पद्मपुराणयो**र्हिमवन्तंप्रति नारदेन–

**'यदुक्तं च मया देवी लक्षणैर्वर्जितेति च ।**
**शृणु तस्यापि वाक्यस्य सम्यगर्थं विचारणात् ॥**
**लक्षणं दैवकोट्यङ्कः शरीरैकाश्रयो गुणः ।**
**इयं तु निर्गुणा देवी नैव लक्षयितुं क्षम ॥'**

इति । सावयवमेव ब्रह्मेति मतं निरसितुमाह । निर्गताः कला अंशा वास्तविका यस्याः । **'अंशो नानाव्यपदेशा'**दिति सूत्रम् । **'ममैवांशो जीवलोक'** इति **स्मृति**श्च कल्पितांशाभिप्रायत्वादविरुद्धा । निर्गुणचिन्ता वा निष्कलेत्युच्यते । तदुक्तं **विज्ञानभैरवभट्टारकैः** –

**'ध्यानं या निष्कला चिन्ता निराधारा निराश्रया ।**
**न तु ध्यानं शरीरस्य मुखहस्तादिकल्पना ॥'**

इति । निष्कला कलातीता वा । शान्ता शमवती । **'निष्कलं निष्क्रियं शान्त'**मिति **त्रिपुरोपनिषत्** । शकारोऽन्तो यस्य तद्रूपा । अमृतबीजात्मिकेति यावत् । आशान्तेति वा छेदाद्दिगन्तव्याप्तत्वोक्त्यात्मनः परिच्छिन्नतावादिदिगम्बरनिरासः । **'सत्यकामः सत्यसंकल्प'** इत्यादिश्रुत्या तादृशमेव ब्रह्मेति मतं निरस्यति । निर्गतः काम इच्छा यस्याः सा निष्कामा । **'अवाप्ताखिलकामायास्तृष्णा किंविषया भवेत्'** इति **देवीभागवतात्** । **'नेतिनेत्यात्मे'**ति **श्रुतेः** **'पूर्णमदः पूर्णमिद'**मिति **श्रुते**श्च औपाधिकगुणपराणि श्रुत्यन्तराणीति भावः । निष्कममतीति वा । **'अम गत्यादिषु'** । उपप्लवो नाशः स निर्गतो यस्याः । निःशेषेणातिशयेन उप समीप एव पिण्डाण्ड एव प्लवोऽमृतस्रवणं यया सा निरुपप्लवा । निर्बन्धादिपदेष्वतिशयाद्यर्थे निरः प्रयोगात् । तथा **चारुणोपनिषदि**– **'आप्लवस्व प्रप्लवस्व आण्डीभवज मा मुहु'**रिति ॥ ९५ ॥

---

निर्गता गुणाः सत्त्वादयः यस्याः सा । गुणायै इति ॥ निर्गता कला अंशा यस्या सा । कलायै इति ॥ शान्ता शमवती । शान्तायै इति ॥ निर्गतः काम इच्छा यस्याः सा । कामायै इति ॥ निर्गत उपप्लवो नाशो यस्याः सा । उपप्लवायै इति ॥

**नित्यमुक्ता निर्विकारा निष्प्रपञ्चा निराश्रया ।**

नित्यं मुक्ता यस्या भक्ताः सा । नित्यं यथा तथा मुक्ता वा । नित्यं मुञ्चति मुच्यते वा नित्यमुक्तस्य भावस्तत्ता वा । मोक्षरूपेत्यर्थः । प्रधानस्य मनसश्च निरासायाऽऽह । निर्गता विकाराः **सांख्ये** प्रसिद्धा महदाद्यास्त्रयोविंशतिर्यस्याः । तदुक्तं **सांख्यतत्त्वकौमुद्याम्**–

**'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥'**

इति । निर्गताः प्रपञ्चाः क्षित्यादिसञ्चयप्रसारणविस्तारा यस्याः सा निष्प्रपञ्चा । **'प्रपञ्चः सञ्चये प्रोक्तो विस्तारे च प्रतारण'** इति **विश्वः** । **'प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्त'** इति **श्रुतेः** । शरीराश्रितं ब्रह्मेति **चार्वाकमतं** निरस्तमिति । सर्वाश्रयस्याश्रयान्तरायोगान्निराश्रया । **'विश्वं प्रतिष्ठितं यस्यां तस्याः कुत्र प्रतिष्ठिति'**रिति वचनात् ।

**नित्यशुद्धा नित्यबुद्धा निरवद्या निरन्तरा ॥ ९६ ॥**

कालत्रयेऽपि मालिन्याभावान्नित्यशुद्धा । **'अस्पर्शश्च महाञ्शुचि'**रिति **श्रुतेः** । **'अत्यन्तमलिनो देहो देही चात्यन्तनिर्मल'** इति **स्मृतेश्च** । **'नहि विज्ञातुर्विज्ञातेर्विपरिलोपो विद्यते'** इति **श्रुतिमभिसन्धायाह** । नित्यबुद्धा चिद्रूपा । शुद्धबुद्धौ जिनविशेषौ तौ नित्यौ यस्याः प्रसादादिति वा । षट्दर्शनपूजायां जैनदर्शनोपास्यत्वेनापि देव्याः पूजादर्शनात् तदुपास्यतारानामकदेवीरूपेति यावत् । निर्गतं अवद्यं गर्ह्यमाविद्यकविकारजातं यस्याः । **'निरवद्यं निरञ्जनम्'** इति **श्रुतेः** । अवद्यान्नरकान्निर्गता यत्प्रसादादिति वा । तथा च **कूर्मपुराणे**–

**'तस्मादहर्निशं देवीं संस्मरेत्पुरुषो यदि ।**
**न यात्यवद्यं नरकं संक्षीणाशेषपातकः ॥'**

इति । **लिङ्गपुराणेऽपि**–

**'मायान्ताश्चैव घोराद्या अष्टाविंशतिकोटयः ।**
**नरकाणामवद्यानां पच्यन्ते तासु पापिनः ॥**
**अनाश्रिता भवानीशं शङ्करं नीललोहितम् ।'**

---

नित्यं मुक्ताः भक्ताः यस्याः सा । मुक्तायै इति ॥ निर्गताः विकाराः परिणामादिभावाः यस्याः सा । विकारायै इति ॥ निर्गतः प्रपञ्चः क्षित्यादिरूपः यस्याः सा । प्रपञ्चायै इति ॥ निर्गतः आश्रयः शरणं यस्याः सा । अ[ ा ]श्रयायै इति ॥

नित्यं शुद्धाः पापरहिताः जना यस्या सा । शुद्धायै इति ॥ नित्यबुद्धाः बुद्धिमन्तः ज्ञानिनः जना यस्या सा । बुद्धायै इति ॥ निर्गतमवद्यं गर्ह्यं यस्याः सा । आवद्यायै इति ॥ निर्गतमन्तरं भेदो यस्याः सा । अन्तरायै इति ॥ ९६ ॥

इत्यादि । अवकाशावधिभेदच्छिद्राण्यन्तरपदार्थाः तैर्विरहिता निरन्तरा ।

**'अन्तरमवकाशावधिपरिधानान्तर्द्धिभेदतादर्थ्ये ।**
**छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च ॥'**

इत्यमरः । **'य एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवति'** इति **श्रुतेः** । तेन सजातीयादिभेदत्रयवदेव ब्रह्मेति मतनिरासः ॥ ९६ ॥

## निष्कारणा निष्कलङ्का निरुपाधिर्निरीश्वरा ।

सर्वकारणस्य कारणान्तराभावान्निष्कारणा । **'सकारणं करणाधिपाधिपो न चास्य कश्चिज्जनिता न चाधिप'** इति **श्रुतेः** । निःशेषं कारणं प्रथमं यस्यामिति वा । तज्जन्यानन्दवतीत्यर्थः । **'महापद्मवनान्तस्थां कारणानन्दविग्रहा'**मिति वचनात् । कलङ्कः पापं तदभावान्निष्कलङ्का । **'शुद्धमपापविद्ध'**मिति **श्रुतेः** । उप समीपे आदधाति स्वीयं धर्मम् इत्युपाधिः । **'उपसर्गे घोः किः'** । स्वीयं लौहित्यं सामीप्यमात्रेण स्फटिके समर्पयज्जपाकुसुममुपाधिः । तद्वच्चितेर्भेदेन भानेऽविद्यैवोपाधिस्तद्रहिता निरुपाधिः । यद्वा । निष्कलङ्कत्वाद्यसाधारणधर्मेषु साध्येषु देव्यास्तादात्म्येन हेतुत्वे निरुपाधित्वं नाम व्याप्यत्वासिद्ध्यभावः सद्धेतुरित्यर्थः । सखण्डोपाधिरखण्डोपाधिश्चेति द्विविधैरपि धर्मैः शून्येति वा । **मीमांसाशास्त्रं साख्यशास्त्रञ्च** द्विविधं सेश्वरं निरीश्वरं चेति । तदुभयरूपत्वान्निरीश्वरा । सर्वेषामीश्वर्या ईश्वरान्तराभावाद्वा ।

## नीरागा रागमथना निर्मदा मदनाशिनी ॥ ९७ ॥

अथान्तःकरणभेदानामात्मत्वनिरासायारिषड्वर्गत्यागस्य साधनत्वबोधनाय च राग इच्छा तदभावादवाप्तसकलकामत्वान्नीरागा । अथवा **'द्वेषप्रतिपक्षभावाद्रसशब्दाच्च राग'** इति **शाण्डिल्यसूत्रे** भक्तेरपि रागपदवाच्यत्वाभिधानात्तन्निष्क्रान्तेत्यर्थः । नीरं जलमगः पर्वतस्तदुभयरूपा वा । भक्तानां वैराग्यदानेन रागं मथ्नातीति रागमथनी । कर्तर्यपि ल्युटो **महाभाष्ये-'नहि कारणयोरेव ल्युडुच्यत्'** इत्यादिग्रन्थेन साधितत्वादिह **'रागद्वेषाभिनिवेषाः क्लेशा'** इति **योगसूत्रोक्तो** रागो गृह्यते । मदराहित्यान्निर्मदा । मदं नाशयति मदनं धत्तूरमश्नातीति वा मदनाशिनी ॥ ९७ ॥

---

निर्गतं कारणं यस्याः सा । कारणायै इति ॥ निर्गतः कलङ्कः अपवादो यस्याः सा । कलङ्कायै इति ॥ निर्गत उपाधिर्गुणाधायको यस्याः सा । उपाधयेति ॥ निर्गत ईश्वरो यस्याः सा स्वस्मिन् सर्वैश्वर्यसत्त्वात् । ईश्वरायै इति ॥

रागः प्रीतिः स निर्गतो यस्याः सा । रागायै इति ॥ भक्तानां विषयगतं रागं मथ्नातीति सा । मन्थ(थ)न्यै [इति] ॥ मदः मोहकारणात्मास्तब्धतारूपः चित्तवृत्तिविशेषः । स निर्गतो यस्याः सा । मदायै इति ॥ सेवकानां मदे(दं) नाशयतीति सा । नाशिन्यै इति ॥ ९७ ॥

**निश्चिन्ता निरहङ्कारा निर्मोहा मोहनाशिनी ।**

चिन्ताशब्दः स्मृतिसामान्यवचनोऽपि दुःखजनकस्मृतिविशेषे निरूढलाक्षणिकः ।

**'चिन्ता चितासमा ज्ञेया चिन्ता वै बिन्दुनाधिका ।**
**चिता दहति निर्जीवं चिन्ता दहति जीवितम् ॥'**

इति प्रयोगात् । '**चिन्ता छले चुल्लिकाया**'मिति **विश्वकोशा**च्छलमप्यर्थः । तदुभय-राहित्यान्निश्चिन्ता । '**वैकारिकस्तैजसश्च भूतादिश्चेत्यहं त्रिधे**'ति वचनान्त्रिविधोऽहङ्कार-स्तद्राहित्यान्निरहङ्कारा । मोहो वैचित्यं तदभावान्निर्मोहा । मोहमेकत्वज्ञानदानेन नाशयतीति मोहनाशिनी । '**तत्र को मोहः कः शोक एकत्वमनुपश्यतः**' इति **श्रुतेः** ।

**निर्ममा ममताहन्त्री निष्पापा पापनाशिनी ॥ ९८ ॥**

ममशब्दो विभक्तिप्रतिरूपकमव्ययं ममेदमित्याकारकबुद्धिपरम् । सा च भेदघटितसम्बन्धं स्वरसतो विषयीकरोति । स्वाभिन्ने तदभावान्निर्ममा । ममताया-स्तादृश्या बुद्ध्या हन्त्री । पापराहित्यान्निष्पापा पापं नाशयति स्वीयविद्याया जपादिना भक्तानामिति तथा । '**यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवमेवास्य पाप्मानः प्रदूयन्त**' इति **श्रुतेः** । तथा च **वसिष्ठस्मृतिः**–

**'विद्यातपोभ्यां संयुक्तं ब्राह्मणं जपनैत्यकम् ।**
**सदाऽपि पापकर्माणमेनो न प्रतियुज्यते ॥**
**जापिनां होमिनां चैव ध्यायिनां तीर्थवासिनाम् ।**
**न संवसन्ति पापानि ये च स्नाताः शिरोव्रतैः ॥'**

इति । **पाद्मे** पुष्करखण्डे–

***'मेरुपर्वतमात्रोऽपि राशिः पापस्य कर्मणः ।***
***कात्यायनीं समासाद्य नश्यति क्षणमात्रतः ॥***
***दुर्गार्चनरतो नित्यं महापातकसम्भवैः ।***
***दोषैर्न लिप्यते वीर पद्मपत्रमिवाम्भसे ॥'***

---

चिन्ता दुःखजनकस्मृतिः । सा निर्गता यस्याः सा । चिन्तायै इति ॥ अहङ्कारोऽभिमानः स निर्गतो यस्या सा । अहङ्कारायै इति ॥ मोहः स्मृतिप्रतिबन्धकः चित्तवृत्तिः स निर्गतो यस्याः सा । मोहायै इति ॥ भक्तानां मोहं नाशयतीति सा । नाशिन्यै इति ॥

ममेति ममकारो ममायमित्यभिमानविशेषः । स निर्गतो यस्याः सा । ममायै इति ॥ स एवाभिमानो ममता तस्या हन्त्री । हन्त्र्यै इति ॥ निर्गतं पापं यस्याः सा । पापायै इति ॥ सेवकानां पापं नाशयतीति । नाशिन्यै इति ॥ ९८ ॥

इत्यादि । देवीभागवतेऽपि–

**'छित्त्वा भित्त्वा च भूतानि हत्वा सर्वमिदं जगत् ।**
**प्रणम्य शिरसा देवीं न स पापैर्विलिप्यते ॥**
**सर्वावस्थागतो वाऽपि युक्तो वा सर्वपातकैः ।**
**दुर्गां दृष्ट्वा नरः पूतः प्रयाति परमं पदम् ॥'**

इत्यादि । ब्रह्माण्डपुराणेऽपि–

**'वर्णाश्रमविहीनानां पापिष्ठानां नृणामपि ।**
**यद्रूपध्यानमात्रेण दुष्कृतं सुकृतायते ॥'**

इति ॥ ९८ ॥

**निष्क्रोधा क्रोधशमनी निर्लोभा लोभनाशिनी ।**

द्वेष्यस्यैवाभावान्निष्क्रोधा । **'न मे द्वेष्योऽस्ति न प्रिय'** इति **भगवद्वचनात्** । भक्तानामरिषड्वर्गान्तर्गतं क्रोधं शमयति नाशयतीति क्रोधशमनी । क्रोधस्य दुष्टत्वमापस्तम्बेनोक्तम्–

**'क्रोधयुक्तो यद्यजति यज्जुहोति यदर्चति ।**
**स तस्य हरते सर्वमामकुम्भो यथोदकम् ॥'**

इति । अत्यन्तमौदार्यान्निर्लोभा । लोभः सर्वगुणान्हन्तीति निन्दितं लोभं भक्तानां नाशयतीति तथा ।

**निःसंशया संशयघ्नी–**

**तन्त्रराजे** गुरुलक्षणकथनदशायाम्–**'असंशयः संशयच्छिन्निरपेक्षो गुरुर्मत'** इत्युक्त्वा तयोर्विशेषणयोर्लक्षणमुक्तम्-**'असंशयस्तत्त्वविच्च तच्छित्तत्प्रतिपादनादि'**ति । तादृशगुर्वभेदादिदं नामद्वयम् । निःसंशया संशयघ्नीति । **'छिद्यन्ते सर्वसंशया'** इति **श्रुतेः स्मृतेश्च** ।

*अथ परिभाषायामेकोनपञ्चाशन्नामानि विभजते–*

***गुणभुविगोमृगशृङ्गे मूलमघाभोगगौरवाभावे ।***
***स्थूणाङ्गमहान्तो द्विर्भवदूषितवाक्चतुर्विभाऽजोष्टौ ॥ १२ ॥***

*द्विरिति पञ्चाक्षरं नामद्वयम् । एकस्मिन्नर्धे दशाक्षराणामेव परिशेषात् । चतुरष्टपदे चतुरक्षरकनामधेयचतुष्टयाष्टकपरे । स्पष्टमन्यत् ॥ १२ ॥*

---

निर्गतः क्रोधो यस्याः सा । क्रोधायै इति ॥ सेवकानां क्रोधं शमयतीति सा । शमन्यै इति ॥ निर्गतः लोभः यस्याः सा । लोभायै इति ॥ सेवकानां लोभं नाशयतीति सा । नाशिन्यै इति ॥

निर्गतः संशयः सन्देहो यस्याः सा । संशयायै इति ॥ सेवकानां संशयान् घ्नन्तीति संशयघ्नी । संशयघ्न्यै इति ॥

## —निर्भवा भवनाशिनी ॥ ९९ ॥

उत्पत्तिराहित्यान्निर्भवा । 'अनादिमत्परं ब्रह्मे'ति श्रुतेः । भवं संसारं नाशयतीति तथा । तथा च **शक्तिरहस्ये**—

**'नवम्यां शुक्लपक्षे तु विधिवच्चण्डिकां नृप ।**
**घृतेन स्नापयेद्यस्तु तस्य पुण्यफलं शृणु ॥**
**दश पूर्वान्दश परानात्मानं च विशेषतः ।**
**भवार्णवात्समुद्धृत्य दुर्गालोके महीयते ॥'**

इति । **कौर्मे**ऽपि—

**'सैषा धात्री विधात्री च परमानन्दमिच्छताम् ।**
**संसारतापान्निखिलान्निहन्तीश्वरसंज्ञया ॥'**

इति । **देवीभागवते**ऽपि—

**'अहं वै मत्परान्भक्तानैश्वरं योगमाश्रितान् ।**
**संसारसागरादस्मादुद्धराम्यचिरेण तु ॥'**

इति भगवतीवाक्यम् । यद्वा । भवनाशिनीतटं नृसिंहमगमदिति **बृहज्जाबालोपनिषत्** प्रसिद्धनदीविशेषरूपा ॥ ९९ ॥

## निर्विकल्पा निराबाधा निर्भेदा भेदनाशिनी ।

विकल्पः शून्यविषयकं शब्दजन्यं ज्ञानम् । तथा च **योगसूत्रम्**—**'शब्दमात्रानुपाती वस्तुशून्यो विकल्प'** इति । **खण्डनखण्डखाद्ये**ऽपि—**'अत्यन्तासत्यपि ह्यर्थे ज्ञानं शब्दः करोति ही'**ति । फलपरीक्षायां **गौतमसूत्रमपि**—**'बुद्धिसिद्धं तदस'**दिति । तन्निष्क्रान्ता निर्विकल्पा । **'अत्यादयः क्रान्ताद्यर्थे द्वितीयये'**ति समासः । तदतिक्रमश्च शब्दजन्यत्वांशे । तेन निर्विषयकनित्यज्ञानरूपेति फलितम् । अथवा विकल्पः प्रकारो न विद्यते यस्यां चरमवृत्तौ तद्रूपेति । यद्वा विरुद्धः कल्पः पक्षो विकल्पस्तदभाववती । स्वविरुद्ध-पक्षान्तराभावात् । सर्वस्य चाभिन्नत्वान्निर्विशेषेति पर्यवसितोऽर्थः । **'अरूपवदेव हि तत्प्रधानत्वा'**दिति तार्तीयीके **ब्रह्ममीमांसाधिकरणे** निर्विकल्पैकलिङ्गताया ब्रह्मणः साधि-

---

भव उत्पत्तिः स निर्गतो यस्याः सा । भवायै इति ॥ सेवकानां भवं उत्पत्तिं नाशयतीति सा । नाशिन्यै इति ।। ९८ ॥

विकल्पः सविकल्पं ज्ञानम् । तन्निष्क्रान्ता निर्विकल्पा । कल्पायै इति ॥ निर्गतः आसमन्ताद्बाधः निषेधो यस्या आरोपितस्य हि बाधोनाधिष्ठानस्येति । अस्याः सर्वाधिष्ठानत्वात् । बाधायै इति ॥ निर्गतः मे(भे)दो यस्मात्(स्याः) सा । सर्वात्मत्वात् । भेदायै इति ॥ ने(भे)दं अद्वैतज्ञानप्रदानेन भक्तानां नाशयतीति सा । नाशिन्यै इति ॥

तत्वात् नेदं रजतमिति ज्ञानेन रजतबाधेऽपीदं पदार्थस्येव बाधाभावान्निराबाधा। अन्योऽन्याभावस्य प्रतियोगित्वसम्बन्धेनानुयोगित्वसम्बन्धेन चाभावान्निर्भेदा। तदुक्तं **कौर्मे**–

**'त्वं हि सा परमा शक्तिरनन्ता परमेष्ठिनी।**
**सर्वभेदविनिर्मुक्ता सर्वभेदविनाशिनी॥'**

इति। तत्रैव स्थलान्तरे–

**'शक्तिशक्तिमतोर्भेदं वदन्त्यपरमार्थतः।**
**अभेदं चानुपश्यन्ति योगिनस्तत्त्वचिन्तकाः॥'**

इति। भेदज्ञानं भेदमेव वा व्यावहारिकं तत्त्वज्ञानेन नाशयतीति तथा।

## निर्नाशा मृत्युमथनी निष्क्रिया निष्परिग्रहा॥ १००॥

नाशोऽन्तस्तदभावान्निर्नाशा। **'सत्यं ज्ञानमनन्त'**मिति **श्रुतेः**। भक्तानां मृत्युं मथ्नातीति तथा। **'अथ कस्मादुच्यते मामृतादित्यमृतत्वं प्राप्नोतीत्यक्षयत्वं प्राप्नोति नित्यन्तं प्राप्नोति स्वयं रुद्रो भवती'**ति **त्रैपुरोपनिषदुक्तेः**। विहितनिषिद्धरूपक्रियाराहित्यान्निष्क्रिया। **'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः'** इति **श्रुतेः**। यद्वा क्रियान्वयमन्तरेणैव कर्त्रादिकारकभावमापन्ना। तदुक्तं **विष्णुपुराणे**–

**'यथा सन्निधिमात्रेण गन्धः क्षोभाय जायते।**
**मनसो नोपकर्तृत्वात्तथाऽसौ परमेश्वरः॥'**

इति। निर्गतः परिग्रहो यस्याः **'परिग्रहः परिजने पत्न्यां स्वीकारमूलयोरिति मेदिनी**॥ १००॥

## निस्तुला नीलचिकुरा निरपाया निरत्यया।

उपमाभावान्निस्तुला **'हेतुदृष्टान्तवर्जित'**मिति **त्रिपुरोपनिषत्**। नीलाश्चिकुराः कुन्तला यस्याः। अपायोऽत्ययो नाशस्तद्रहिता। **'अत्ययोऽतिक्रमे दण्डे विनाशे दोषकृच्छ्रयो'**रिति **विश्वकोशा**नुसारेणातिक्रमादिरहिता निरत्यया।

---

निर्गतः नाशः यस्याः सा। नाशायै इति॥ भक्तानां मृत्युं मथ्नातीति सा। मथन्यै इति॥ विही(हि)त निषिद्धादि क्रियाभ्यो निर्गता। क्रियायै इति॥ निर्गतः परिग्रहः स्वीकारो यस्याः सा। आप्तकामत्वात्। परिग्रहायै इति॥ १००॥

निर्गता तुला उपमा यस्याः सा। तुलायै इति॥ नीलाश्चिकुराः कुन्तलाः यस्याः सा। चिकुरायै इति॥ निर्गतः अपायः विश्लेषः व्यापकत्वात् यस्याः सा। अर्प(पा)यायै इति॥ निर्गत अत्ययः दण्डः सर्वेश्वरत्वात् यस्याः सा। अत्ययायै इति॥

## दुर्लभा दुर्गमा दुर्गा दुःखहन्त्री सुखप्रदा ॥ १०१ ॥

दुर्लभा योगिनामप्यसाध्यत्वात् । अतएव दुर्गमा अधिगन्तुमशक्यत्वात् । अदुर्गमेति वा छेदः । न विद्यते दुर्गमो यस्या इति तदर्थः । दुर्गमाख्यदैत्य-वधप्रयोजिकेति यावत् ।अत एव दुर्गा । तदुक्तं **मार्कण्डेयपुराणे पाञ्चरात्रे लक्ष्मीतन्त्रे** च भगवत्यैव–

**'तत्रैव च वधिष्यामि दुर्गमाख्यं महासुरम् ।**
**दुर्गादेवीति विख्यातं तन्मे नाम भविष्यति ॥'**

इति । **काशीखण्डे**ऽपि **'दुर्गो नाम महादैत्य'** इत्यादिरध्यायः सर्वोऽप्येतत्पर एव । **'इयं च भीमरथीतीरे सन्नतिक्षेत्रवासिनी** । दुर्गापदनिरुक्तिर्**देवीपुराणे**ऽपि–

**'सुबलादिभये दुर्गे तारिता रिपुसङ्कटे ।**
**देवाः शक्रादयो येन तेन दुर्गा प्रकीर्तिता ॥'**

इति । इयञ्च वाराणस्यां सुबाहुनाम्ने राज्ञे वरदानेन तेन प्रार्थिता सती देव्यनेन नाम्ना प्रसिद्धा सती स्थिता । तदुक्तं **देवीभागवते** तस्मै वरदानोत्तरं तत्प्रार्थनाप्रकरणे–

**'नगरेऽत्र त्वया मातः स्थातव्यं सर्वदा शिवे ।**
**दुर्गादेवीति नाम्ना वै त्वं शक्तिरिह संस्थिता ॥'**

इति । नववर्षा कन्यापि दुर्गेत्युच्यते । तदप्युक्तं तत्रैव–**'नववर्षा भवेद्दुर्गे'**ति तेन तद्रूपा वेत्यर्थः । दुःखस्य सांसारिकस्य हन्त्री । **'तदत्यन्तविमोकोऽपवर्ग'** इति **गौतमसूत्रात्** । **'दुःखेनात्यन्तविमुक्तश्चरति'** इति **श्रुतेश्च** । सुखान्यैहिकामुष्मिककैवल्यरूपाणि प्रकर्षेण दत्ते सुखप्रदा । **'रसँ ह्येवायं लब्ध्वानन्दी भवति'** इति **श्रुतेः** । एतस्य विस्तरः **पाद्मे पुष्करखण्डे** चरमभागे षड्भिरध्यायैर्द्रष्टव्यः ॥ १०१ ॥

## दुष्टदूरा दुराचारशमनी दोषवर्जिता ।

दुष्टानां दोषवतां दूरा अप्राप्या । **'न भजन्ति कुतर्कज्ञा देवीं विश्वेश्वरीं शिवा'**मिति **देवीभागवतात्** । दुराचारं शास्त्रविरुद्धाचारं शमयतीति तथा । वक्ष्यति च पुरस्तात् ।

**'नित्यकर्माननुष्ठानान्निषिद्धकरणादपि ।**
**यत्पापं जायते पुंसां तत्सर्वं नश्यति द्रुतम् ॥'**

इति । दोषै रागद्वेषादिभिर्वर्जिता ।

---

दुर्लभा बाह्यप्रयत्नैरसाध्यत्वात् । दुर्लभायै इति ॥ बाह्यज्ञानैरधिगन्तुमशक्यत्वा[द्] दुर्गमा । दुर्गमायै इति ॥ दुर्गासुरनाशिनी । दुर्गायै इति ॥ भक्तानां दुःखहन्त्री । हन्त्र्यै इति ॥ सुखं भक्तानां प्रकर्षेण ददातीति सा । प्रदायै इति ॥ १०१ ॥

दुष्टानां दूरा अप्राप्या । दूरायै इति ॥ सेवकानां दुराचारं शमयतीति सा । शमन्यै इति ॥ दोषै रागादिभिर्वर्जिता । वर्जितायै इति ॥

**सर्वज्ञा सान्द्रकरुणा समानाधिकवर्जिता ॥ १०२ ॥**

सर्वं जानातीति सर्वज्ञा । **'यः सर्वज्ञः सर्ववि'**दिति **श्रुतेः** । **'सर्वज्ञा सर्ववेत्तृत्वा'**दिति **देवीपुराणाच्च** । सान्द्रा घना करुणा यस्याः । **'न तत्समश्चाभ्यधिकश्च दृश्यत'** इति **श्रुतौ** दर्शननिषेधेन तद्विषययोरेव निषेधात्समानाधिकाभ्यां वर्जिता ॥ १०२ ॥

**सर्वशक्तिमयी सर्वमङ्गला—**

अथ सगुणरूपमाश्रित्याह—बालाबगलादिनिखिलशक्त्यभेदात्सर्वशक्तिमयी । ब्रह्ममयं जगदित्यादाविव मयडभेदार्थकोऽपि । सर्वदेवशक्तिसमूहरूपत्वादपि सर्वशक्तिमयी । तदुक्तं **पाञ्चरात्र-लक्ष्मीतन्त्रयो**रिन्द्रंप्रति देव्यैव—

**'महालक्ष्मीरहं शक्र ! पुनः स्वायम्भुवेऽन्तरे ।**
**हिताय सर्वदेवानां जाता महिषमर्दिनी ॥**
**मदीयाः शक्तिलेशा ये तत्तद्देवशरीरगाः ।**
**सम्भूय ते ममाभूवन् रूपं परमशोभनम् ॥**
**आयुधानि च देवानां यानि यानि सुरेश्वर ।**
**मच्छक्तयस्तदाकारा आयुधानि तदाऽभवन् ॥'**

इति । **मार्कण्डेयपुराणे** त्वयमर्थो विस्तरेण वर्णितो द्रष्टव्यः । **'पदार्थशक्तयो या यास्तास्ता गौरीं विदुर्बुधा'** इति **लैङ्गा**दसंकुचितार्थक एव सर्वशब्दो वा । सर्वाणि मङ्गलानि यस्याः । **देवीपुराणे** तु—

**'सर्वाणि हृदयस्थानि मङ्गलानि शुभानि च ।**
**इप्सितानि ददातीति तेन सा सर्वमङ्गला ॥**
**शोभनानि च श्रेष्ठानि या देवी ददते हरे ।**
**भक्तानामार्तिहरणी तेनेयं सर्वमङ्गला ॥'** इति ।

**इति श्रीभासुरानन्दकृते सौभाग्यभास्करे ।**
**द्वितीयशतकेनाभूत् तृतीया धूम्रिका कला ॥ २०० ॥**

**॥ इति श्रीमत्पदवाक्येत्यादिभास्कररायकृते ललितासहस्रनामभाष्ये**
**द्वितीयं शतकं नाम तृतीया कला ॥ ३ ॥**



---

सर्वं जानातीति सा । ज्ञायै इति ॥ सान्द्रा घना भक्तेषु करुणा यस्याः सा । करुणायै इति ॥ समानाधिकाभ्यां वर्जिता । सर्वोत्तमत्वात् । वर्जितायै इति ॥ १०२ ॥

सर्वशक्त्यभिन्ना । मय्यै इति ॥ सर्वाणि मङ्गलानि भक्तानां यस्याः सा । मङ्गलायै इति ॥

# तृतीयशतकं नाम चतुर्थी मरीच्याख्या कला

**—सद्गतिप्रदा ।**

स्वर्गादिमोक्षान्ताः सद्गतीः सतो ब्रह्मणोऽवगतिं ज्ञानं वा सतां गतिर्वा प्रददातीति तथा । **'गतिस्त्वं मतिस्त्वं त्वमेका भवानी'**त्यभियुक्तोक्तेः । **पाद्मे**—

**'त्रिकालं पूजयेद्यस्तु चतुर्दश्यां नराधिप ।**
**स गच्छति परं स्थानं यत्र देवी व्यवस्थिता ॥'**

इत्यारभ्य

**'दुर्गापूजोपकरणं स्वल्पं वा यदि वा बहु ।**
**कृत्वा वित्तानुसारेण रुद्रलोके महीयते ॥'**

इत्यन्तैश्चतुर्भिरध्यायैः प्रत्युपचारं गुणकामविधिभिः क्रमेण समस्तलोकगतिप्रतिपादकानि वचनानीहोपष्टम्भकत्वेन योजनीयानि ।

**सर्वेश्वरी सर्वमयी सर्वमन्त्रस्वरूपिणी ॥ १०३ ॥**

अतएव सर्वस्वामित्वात्सर्वेश्वरी । असंकुचितस्वामित्वमभेदं विना न निर्वहतीत्याह । सर्वमयी क्षित्यादिशिवान्ततत्त्वाभिन्ना । तदुक्तं **कामिके**—

**'चतुर्विंशत्युत्तरं यद्भुवनानां शतद्वयम् ।**
**भुवनाध्वा स सञ्चिन्त्यो रोमवृन्दात्मनो विभोः ॥**
**पञ्चाशद्वर्णरूपेण स्तुवन्वर्णाध्वकल्पना ।**
**असौ त्वगात्मनाऽचिन्त्यो देवदेवस्य शूलिनः ॥**
**सप्तकोटिमहामन्त्रैर्मूलविद्यासमुद्भवैः ।**
**मन्त्राध्वा सन्धिरात्माऽसौ विचिन्त्यः पार्वतीपतेः ॥**
**अनेकभेदसंभिन्ना मन्त्राणां पदसंहतिः ।**
**पदाध्वेत्युच्यते सोम्या शिरामांसतया स्थितः ॥**
**पृथिव्यादीनि षड्विंशत्तत्त्वान्यागमवेदिभिः ।**
**तत्त्वाध्वेत्युदितान्येष शुक्लमज्जास्थिरूपधृक् ॥'**

---

सती उत्तमा या सालोक्यादिगतिः तां प्रकर्षेण भक्तेभ्यो ददातीति सा । प्रदायै इति ॥

सर्वेषां पिपिलिकादिब्रह्मान्तानां ईश्वरी स्वामिनी । ईश्वर्यै इति ॥ सर्वं क्षित्यादिशिवान्ततत्त्वं तन्मयी तदभिन्ना । मय्यै इति ॥ सर्वेषां मन्त्राणां स्वरूपं अस्याः सा । स्वरूपिण्यै इति ॥ १०३ ॥

इति । एतदेवावयुत्यानुवदति त्रिभिः । सर्वे सप्तकोटिसंख्यामन्त्राः स्वरूपमस्याः । श्रूयते च **सुन्दरीतापिनीये**–**'पूर्वोत्तराभ्यां विद्याया अनेकाः परिक्लृप्ता'** इति । स्पष्टतरं च **गौडपादैः**–**'विद्यायाः पूर्वोत्तराभ्यामनेका जाता'** इत्यादिभिः सप्तभिः सूत्रैः सर्वमन्त्रात्मकत्वं वर्णितं तद्भाष्ये च प्रपञ्चितम् । तत्रैव **'तथा यन्त्रतन्त्राणी'**ति सूत्रे वर्णितं प्रमेयमाह ॥ १०३ ॥

**सर्वयन्त्रात्मिका सर्वतन्त्ररूपा मनोन्मनी ।**

सर्वेषां घटार्गलादीनां यन्त्राणामात्मस्वरूपमेवात्मिका । **'प्रत्ययस्था'**दितीत्वम् । **वामकेश्वरादि**सर्वतन्त्राण्येव रूपं शरीरमस्याः । सर्वतन्त्रैर्निरूप्या वा । तदुक्तम्–

**'बहुधाऽप्यागमैर्भिन्नाः पन्थानः सिद्धिहेतवः ।**
**त्वय्येव निपतन्त्येते स्रोतस्विन्य इवार्णवः ॥'**

इति । शरीरपक्षेऽपि **कामिकागमे**–

**'कामिकं पादकमलं योगजं गुल्फयोर्युगम् ।**
**पादद्वयाङ्गुलीरूपे कारणप्रसृताह्वये ॥**
**अजिता जानुनोर्युग्मं दीप्तमूरुद्वयं विभोः ।**
**पृष्ठभागेंऽशुमानस्य नाभिः श्रीसुप्रभेदकम् ॥**
**विजयं जठरं प्राहुर्निःश्वासं हृदयात्मकम् ।**
**स्वायम्भुवं स्तनद्वन्द्वमनलं लोचनत्रयम् ॥**
**वीरागमः कण्ठदेशो रुरुतन्त्रं श्रुतिद्वयम् ।**
**मकुटं मुकुटं तन्त्रं बाहवो विमलागमाः ॥**
**चन्द्रज्ञानमुरः प्रोक्तं बिम्बं वदनपङ्कजम् ।**
**प्रोद्गीततन्त्रं रसना ललितं गण्डयोर्युगम् ॥**
**सिद्धं ललाटफलकं सन्तानं कुण्डलद्वयम् ।**
**किरणं रत्नभूषा स्याद्वातुलं वसनात्मकम् ॥**
**अङ्गोपाङ्गानि रोमाणि तन्त्राण्यन्यानि कृत्स्नशः ।**
**एवं तत्त्वात्मकं रूपं महादेव्या विचिन्तयेत् ॥'**

---

सर्वेषां पूज्यानां धार्याणां च यन्त्राणां आत्मस्वरूपं इति सा । आत्मिकायै इति ॥ सर्वाणि तन्त्राणि चतुःषष्ट्यादिभेदभिन्नानि रूपं यस्याः सा । रूपायै इति ॥ योगिनः विषयासक्तिराहित्येन हृदि निरुद्धं मनोन्मनीत्युच्यतो तस्य परमपुरूषार्थसाधकत्वेनात्मशक्तिभूतत्वादियमेव तद्रूपा । उन्मन्यै इति ॥

इति । भ्रूमध्यादष्टमं स्थानं ब्रह्मरन्ध्राादधस्तनम् । मनोन्मनीति कथितं तद्रूपा । तत्स्वरूपं **स्वच्छन्दसंग्रहे**–

**'या शक्तिः कारणत्वेन तदूर्ध्वं चोन्मनी स्मृता ।**
**नात्र कालकलामानं न तत्त्वं न च देवता ॥**
**सुनिर्वाणं परं शुद्धं रुद्रवक्त्रं तदुच्यते ।**
**शिवशक्तिरिति ख्याता निर्विकल्पा निरञ्जना ॥'**

इति । अतएव **'वामदेवाय नमो ज्येष्ठाय नम'** इति श्रुतौ प्रसिद्धस्य मनोन्मनाख्यशिवस्य शक्तिरिति च । त्रिपुरोपनिषद्यपि–

**'निरस्तविषयासङ्गं सन्निरुद्धं मनो हृदि ।**
**यदायात्युन्मनीभावं तदा तत्परमं पदम् ॥'**

इति । **योगशास्त्रे** मुद्राविशेषस्य संज्ञा । तल्लक्षणं तत्रैव–

**'नेत्रे ययोन्मेषनिमेषमुक्ते वायुर्यया वर्जितरेचपूरः ।**
**मनश्च सङ्कल्पविकल्पशून्यं मनोन्मनी सा मयि सन्निधत्ताम् ॥'**

इति । **बृहन्नारदीये**ऽपि–

**'ध्यानध्यातृध्येयभावो यदा पश्यति निर्भरम् ।**
**तदोन्मनत्वं भवति ज्ञानामृतनिषेवणात् ॥'**

इति । मनांस्युन्मन्यन्ते उत्कृष्टज्ञानयुक्तानि कुरुत इति वा । सन्धिरार्षः ।

**माहेश्वरी महादेवी महालक्ष्मीर्मृडप्रिया ॥ १०४ ॥**

**'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः ।**
**तस्य प्रकृतिलीनस्य यः परः स महेश्वरः ॥'**

इति श्रुतिप्रसिद्धस्य महेश्वरपदस्य त्रिगुणातीतत्वं शक्यतावच्छेदकम् । तदुक्तं **लैङ्गे**–

**'तमसा कालरुद्राख्यो रजसा कनकाण्डजः ।**
**सत्त्वेन सर्वगो विष्णुर्नैर्गुण्येन महेश्वरः ॥'**

इति । अविच्छिन्नत्वमत्र तृतीयार्थः । महेश्वरपदस्य तद्वाच्ये लक्षणा । कालरुद्राख्य इत्युपक्रमानुसारात् । तेन तदवच्छिन्नो महेश्वरः ।

---

महेश्वरस्येयं माहेश्वरी । ईश्वर्यै इति ॥ महती प्रमाणैरपरिच्छिन्ना देवी द्योतनशीला । देव्यै इति ॥ महती चासौ लक्ष्मीः च । लक्ष्म्यै इति ॥ मृडस्य परशिवस्य प्रिया । प्रियायै इति ॥ १०४ ॥

**'सत्येन ब्रह्मचर्येण लिङ्गमस्य यथा स्थितम् ।**
**समर्चयन्ति ये लोकास्तन्महेश्वर उच्यते ॥'**

इति । **भारते**–'**महेश्वरः स भूतानां महतामीश्वरश्च स**' इति च । यस्य पञ्चविंशतिव्यूहो **वातुलशुद्धे** प्रतिपादितः सोऽपि महेश्वरस्तस्येयं माहेश्वरी । महती च सा देवी च महादेवी । महत्त्वं च प्रमाणागम्यशरीरकत्वम् । तदुक्तं **देवीपुराणे**–

**'बृहदस्य शरीरं यदप्रमेयं प्रमाणतः ।**
**धातुर्महेति पूजायां महादेवी ततः स्मृता ॥'**

इति । अथवा चन्द्रमूर्तेः शिवस्य महादेव इति संज्ञा तस्य पत्नी । बुधस्य माता रोहिणीनाम्नी देवीत्यर्थः । तथा च **लैङ्गे**–

**'समस्तसौम्यवस्तूनां प्रकृतित्वेन विश्रुतः ।**
**सोमात्मको बुधैर्देवो महादेव इति स्मृतः ॥**
**सोमात्मकस्य देवस्य महादेवस्य सूरिभिः ।**
**दयिता रोहिणी प्रोक्ता बुधश्चैव शरीरजः ॥'**

इति । **वायवीये**ऽपि–

**'नाम्ना देवस्य महतश्चन्द्रमास्तनुरष्टमी ।**
**पत्नी तु रोहिणी तस्य पुत्रश्चास्य बुधः स्मृतः ॥'**

इति । सेयं गण्डक्यां चक्रतीर्थाधिष्ठात्री देवता । '**शालग्रामे महादेवी**'ति **पाद्मे पुष्करखण्डे** देवीतीर्थेषु परिगणनात् । तत्रैव '**करवीरे महालक्ष्मी**'रिति परिगणितां देवीमाह महालक्ष्मीः । महती च सा लक्ष्मीश्च । महाविष्णोरियं पत्नी । करवीरं कलौ कोलापुरमिति प्रसिद्धम् । अथवा अम्बिकांशभूतैवेयम् । तदुक्तं **मैलारतन्त्रे**–

**'महालनामकं दैत्यं स्यति क्षपयतीति च ।**
**महालसा महालक्ष्मीरिति च ख्यातिमागता ॥**
**उपत्यकायां सह्याद्रेः पश्चिमोदधिरोधसि ।'**

इति । **शिवपुराणे**ऽपि शिवं प्रस्तुत्य–

**'तस्याङ्कमण्डलारूढा शक्तिर्माहेश्वरी परा ।**
**महालक्ष्मीरिति ख्याता श्यामा सर्वमनोहरा ॥'**

इति । **आयुष्यसूक्ते**–'**श्रियं लक्ष्मीमम्बिकामौपलाङ्गा**'मित्यत्र लक्ष्मीपदमात्रस्य पार्वत्यां प्रयोगश्च । तेन पदेन पूज्यवाचिमहत्पदस्य '**सन्महत्परमे**'त्यादिसूत्रेण समासः । '**सर्वस्याद्या महालक्ष्मीस्त्रिगुणा सा व्यवस्थिते**'ति **माकण्डेयपुराणञ्च** । त्रयोदशवर्षात्मक-

कन्यारूपा वा। कन्यां प्रक्रम्य '**त्रयोदशे महालक्ष्मी**'रिति **धौम्येन** कथनात्। '**मृड सुखने**' इति धातोर्विश्वस्थितिकर्तुः सत्त्वगुणवतः शिवस्य मृड इति संज्ञा। '**जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नम**' इति **महिम्नस्तवात्**। तस्य प्रिया॥ १०४॥

**महारूपा महापूज्या महापातकनाशिनी।**

महद् रूपंचतुष्टयमपेक्ष्योत्कृष्टं रूपं यस्याः। तदुक्तं **विष्णुपुराणे**—

**'परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विज।**
**व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथा परम्॥**
**प्रधानपुरुषव्यक्तकालानां परमं हि यत्।**
**पश्यन्ति सूरयः शुद्धं तद्विष्णोः परम पदम्॥**
**प्रधानपुरुषव्यक्तकालास्तु प्रविभागशः।**
**रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः॥'**

इति। महती च सा पूज्या च महापूज्या। पूज्यानां शिवादीनामपि पूज्येत्यर्थः। तथा च **पाद्म-देवीभागवतयोः** शिव-ब्रह्म-विष्णु-कुबेर-विश्वदेव-वायु-वसु-वरुणाग्नि-शक्र-सूर्य-सोम-ग्रह-राक्षस-पिशाच-मातृगणादिभेदेन तत्तत्पूजनीयदेवीमूर्तिभेदो मन्त्रे शैलेन्द्रनीलस्वर्णरौप्यपित्तलकांस्यस्फटिकमाणिक्यमुक्ताफलप्रवालवैडूर्यत्रपुसीसवज्रलोह-विकाररूपो विस्तरेण दर्शितः। अत्राग्निशक्रसूर्या माणिक्यमयीमेव प्रतिमां पूजयन्ति। इतरद्यथासंख्यं योजनीयम्। महान्ति ब्रह्महत्यादीनि पातकानि नाशयतीति तथा। तथा च **ब्रह्माण्डे**—

**'कृतस्याखिलपापस्य ज्ञानतोऽज्ञानतोऽपि वा।**
**प्रायश्चित्तं परं प्रोक्तं पराशक्तेः पदस्मृतिः॥'**

इति। **ब्रह्मोत्तरखण्डे**ऽपि—

**'बहुनाऽत्र किमुक्तेन श्लोकार्धेन वदाम्यहम्।**
**ब्रह्महत्याशतं वाऽपि शिवपूजा विनाशयेत्॥'**

इति। '**महापातकशब्देन वीरहत्यैव कथ्यत**' इति त्वर्थरत्नावल्यामुक्तम्। अत्रैव **सौभाग्य-रत्नाकरा**दिषु प्रायश्चित्तप्रकरणे पापतारतम्येन पञ्चदश्या जपसंख्यायां तारतम्य-वचनान्युपष्टम्भकत्वेन योजनीयानि।

---

महदपरिच्छिन्नं रूपं यस्याः सा। रूपायै इति॥ महती चासौ पूज्या च। पूज्यायै इति॥ भक्तानां महान्तिब्रह्महत्यादिपातकानि नाशयतीति सा। नाशिन्यै इति॥

**महामाया महासत्त्वा महाशक्तिर्महारतिः ॥ १०५ ॥**

ब्रह्मादीनामपि मोहकत्वान्महामाया । तदुक्तं **मार्कण्डेयपुराणे**–

**'ज्ञानिनामपि चेतांसि देवी भगवती हि सा ।**
**बलादाकृष्य मोहाय महामाया प्रयच्छति ।'**

कालिकापुराणेऽपि–

**'गर्भान्तज्ञानसम्पन्नं प्रेरितं सूतिमारुतैः ।**
**उत्पन्नं ज्ञानरहितं कुरुते या निरन्तरम् ॥**
**पूर्वातिपूर्वसंघातसंस्कारेण नियोज्य च ।**
**आहरादौ ततो मोहममत्वाज्ञानसंशयम् ॥**
**क्रोधोपरोधलोभेषु क्षिप्त्वा क्षिप्त्वा पुनःपुनः ।**
**पश्चात्कामेन योज्याशु चिन्तायुक्तमहर्निशम् ॥**
**आमोदयुक्तं व्यसनासक्तं जन्तुं करोति या ।**
**महामायेति संप्रोक्ता तेन सा जगदीश्वरी ॥'**

इति । यद्वा '**माया दम्भे कृपायां चे**'ति **कोशा**त्कृपाबहुला । सतो भावो बलं गुणः । प्राणिनश्च सत्त्वपदार्थाः । '**सत्त्वं गुणे पिशाचादौ बले द्रव्यस्वभावयो**'रिति **विश्वः** ।

महान्ति सत्त्वानि यस्याः, महती सर्वजगन्निर्वाहकत्वादिरूपा विस्तृता विविधा च शक्तिः सामर्थ्यं यस्याः सा । '**शक्तिर्बले च सामर्थ्ये तथा प्रहरणान्तरे**' इति **यादवः** । बलायुधपक्षावपीह योज्यौ । उक्तञ्च **विष्णुपुराणे**–

**'एकदेशस्थितस्याग्नेर्ज्योत्स्ना विस्तारिणी यथा ।**
**परस्य ब्रह्मणः शक्तिस्तथैतदखिलं जगत ॥'** इति ।

**'तत्राप्यासन्नदूरत्वाद्बहुत्वं स्वल्पता यतः ।**
**ज्योत्स्नाभेदोऽस्ति तच्छक्तेस्तद्वन्मैत्रेय विद्यते ॥'**

इति । महाशक्तिः कुण्डलिनीत्यत्र यदि तृतीयाक्षरस्य तालव्यत्वनिश्चयस्तदात्राकारप्रश्लेषः कर्तव्य इति न पौनरुक्त्यम् । न विद्यते महती शक्तिर्यदपेक्षयेति बहुव्रीहिः । '**न तत्समश्चाभ्यधिकश्च दृश्यत**' इति **श्रुतेः** । **छलाक्षरसूत्रे** परिभाषायां चानयोश्चतुरक्षरत्वोक्तिबलात्क्वचित्पुस्तकेषूपलम्भाच्च महासना-महाशनापदयोरिव भेदमङ्गीकृत्यास्माभिस्तथा व्याख्यातम् । न ह्येत**द्विष्णुसहस्रनामा**दिवत्पुनरुक्तिशता-

---

महतामपि मोहिनीत्वान्महामाया । मायायै इति ॥ महत्सत्यं(त्त्वं) बलं यस्याः सा । सत्त्वायै इति ॥ महत्य इच्छादिशक्तयो यस्याः सा । शक्त्यै इति ॥ महती रतिः प्रीतिः ज्ञानिनां यस्यां सा । रत्यै इति ॥ १०५ ॥

क्रान्तं येनार्थभेदमात्रमङ्गीकृत्य शब्दत ऐक्यं सोढव्यं स्यादिति । महती विषयरतिभ्योऽधिका रतिः प्रीतिर्ज्ञानिनां यस्यां सा । महाकामसुन्दरीत्वाद्वा महारतिरित्युच्यते ॥ १०५ ॥

**महाभोगा महैश्वर्या महावीर्या महाबला ।**

महानाभोगः क्षित्यादिरूपो विस्तारो यस्याः । भोगः सुखं वा धनं वा महद्यस्या इति वा । ऐश्वर्यमीश्वरता विभूतिश्चेत्युभयं महद्यस्याः । महान्ति वीर्याणि शुक्रादीनि यस्याः । **'वीर्यं शुक्रे प्रभावे च तेजःसामर्थ्ययोरपि'** इति **विश्वः** । महान्ति बलानि गन्धादीनि यस्याः ।

**'बलं गन्धे रसे रूपे स्थामनि स्थौल्यसेनयोः ।**
**बलो हलायुधे दैत्यभेदे बलिनि वायसः ॥'**

इति **विश्वः** । वायसपक्षे भुसुण्डादयो यत्प्रसादान्महान्तो जाता इति योज्यम् । तथा च **योगवासिष्ठे** वसिष्ठंप्रति भुसुण्डाख्यस्य वायसस्य वाक्यम्—

**भ्रातरश्चण्डतनया वायसा एकविंशतिः ।**
**भ्रातृभिः सह हंसीभिर्ब्राह्मी भगवती तथा ॥**
**चिरमाराधितास्माभिः समाधिविरमे सति ।**
**प्रसादपरया काले भगवत्या ततः स्वयम् ॥**
**तथैवानुगृहीताःस्मो येन मुक्ता वयं स्थिता ।**' इत्यादि ।

*अथ परिभाषायां चत्वारिंशन्नामानि विभजते—*

***भुवि हि चतुर्देहार्धं चतुष्पदार्धं भवेदविभौ ।***
***पादत्रयगुणदो द्विर्गौणार्हो द्विर्विभागशरवीरः ॥ १३ ॥***

*अत्र प्राथमिकं चतुरिति पदं द्विरिति पदद्वयं चैकैकार्धविभागपरम् । तेनाद्ये चत्वारि नामानि चतुरक्षराणि अन्त्ययोरष्टाक्षरे द्वे द्वे नामनी इति सिद्ध्यति । चतुष्पदेत्यत्र पदशब्दः पादपरः । स्पष्टमन्यत् ॥ १३ ॥*

**महाबुद्धिर्महासिद्धिर्महायोगेश्वरेश्वरी ॥ १०६ ॥**

महती च सा बुद्धिश्च महाबुद्धिः । यस्यां बुद्धावुत्पन्नायां ज्ञातव्यं नावशिष्यते सा महती । **'यस्मिन्विज्ञाते सर्वमिदं विज्ञातं स्या'**दिति **श्रुतेः** । महती बुद्धिर्यस्याः सकाशादिति

---

महाना भोगो विस्तारो यस्याः सा । भोगायै इति ॥ महदैश्वर्यं विभूतिर्यस्याः सा । ऐश्वर्यायै इति ॥ महान्ति वि(वी)र्याणि प्रभावा यस्याः सा । वीर्यायै इति ॥ महद्बलं सेना यस्याः सा । बलायै. इति ॥

महती उत्कृष्टा बुद्धिः यस्याः सकाशात्सा । बुद्ध्यै इति ॥ महती सिद्धिर्यस्याः सकाशात्सा । सिद्ध्यै इति ॥ महतां योगेश्वराणामपीश्वरी । ईश्वर्यै इति ॥ १०६ ॥

वा । एवमेव द्वेधा महासिद्धिपदं व्याख्येयम् । सिद्धयश्चाणिमाद्याः प्रसिद्धाः । अन्या अप्युक्ताः **स्कन्दपुराणे**—

**'रसानां स्वत उल्लासः प्रथमा सिद्धिरीरिता ।**
**द्वन्द्वैरनभिभूतिश्च द्वितीया सिद्धिरुच्यते ॥**
**अधमोत्तमताभावस्तृतीया सिद्धिरुत्तमा ।**
**चतुर्थी तुल्यता तेषामायुषः सुखदुःखयोः ॥**
**कान्तेर्वलस्य बाहुल्यं विशोका नाम पञ्चमी ।**
**परमात्मपरत्वेन तपोध्यानादिनिष्ठाता ॥**
**षष्ठी निकामचारित्वं सप्तमी सिद्धिरुच्यते ।**
**अष्टमी च तथा प्रोक्ता यत्र क्वचनशायिता ॥'**

इति । महतां योगेश्वराणामीश्वरीति तथा ॥ १०६ ॥

**महातन्त्रा महामन्त्रा महायन्त्रा महासना ।**

महान्ति बहुफलप्रदानि तन्त्राणि **कुलार्णव-ज्ञानार्णवादीनि**, मन्त्रा बाला-बगलादयो, यन्त्राणि पूजाचक्रपद्मचक्रामृतघटमेरुलिङ्गादीनि यस्याः सा तथा । यद्वा **स्वतन्त्राख्यं** तन्त्रं श्रीविद्याख्यो मन्त्रः सिद्धिवज्राख्यं च यन्त्रं महत्सर्वोत्तमं यस्याः । स्वतन्त्र-स्यान्यानपेक्षत्वान्महत्त्वम् । तदुक्तं तत्रैव—

**'भगवन्सर्वतन्त्राणि भवतोक्तानि वै पुरा ।**
**तेषामन्योन्यसापेक्ष्याज्जायते मतिविभ्रमः ॥**
**तस्मात्तु निरपेक्षं मे तन्त्रं तासां वद प्रभो ।'**

इति प्रश्ने

**'शृणु कादिमतं तन्त्रं पूर्णमन्यानपेक्षया ।**
**गोप्यं सर्वप्रयत्नेन गोपनं तन्त्रचोदितम् ॥'**

इति । **सौन्दर्यलहर्यामप्युक्तम्**—

**'चतुःषष्ट्या तन्त्रैः सकलमभिसन्धाय भुवनं**
**स्थितस्तत्तत्सिद्धिप्रसवपरतन्त्रैः पशुपतिः ।**
**पुनस्त्वन्निर्बन्धादखिलपुरुषार्थैकघटना**
**स्वतन्त्रं ते तन्त्रं क्षितितलमवातीतरदिदम् ॥'**

---

महान्ति उत्कृष्टानि तन्त्राणि यस्याः सा । तन्त्रायै इति ॥ महान्तः तादृशाः मन्त्राः यस्याः सा । मन्त्रायै इति ॥ महान्ति तादृशानि यन्त्राणि यस्याः सा । यन्त्रायै इति ॥ महत्सर्वोत्तमं ब्रह्मादिपादयुतमासनं यस्याः सा । आसनायै इति ॥

इति । मन्त्रविषये तु **'श्रीविद्येव तु मन्त्राणा'**मित्यादीनि **कुलार्णव-शक्तिरहस्ययोः** परःसहस्रं वर्णनानि द्रष्टव्यानि । सिद्धिवज्राख्यं यन्त्रं प्रकृत्य **नित्यातन्त्रे** स्मर्यते ।

**'ललिताविद्यया विद्यामन्यां यन्त्रेण वाऽमुना ।**
**यन्त्रमन्यत्समं वेत्ति योऽसौ स्यान्मूढचेतनः ॥'**

इति । महदासनं क्षित्यादिषट्त्रिंशत्तत्त्वरूपं यस्याः । **'एषा भगवती सर्वतत्त्वान्याश्रित्य तिष्ठती'**ति **देवीभागवतात्** ।

**महायागक्रमाराध्या महाभैरवपूजिता ॥ १०७ ॥**

ब्राह्म्याद्यंशभूताक्षोभ्यादिचतुःषष्टियोगिनीपूजासहितो महायागः स एव क्रमः तदितरस्य सर्वस्यापि विलम्बितफलप्रदत्वेनाक्रमत्वात्तेनाराध्या । **'शक्तौ च परिपाट्यां च क्रमश्चलनपङ्क्त्यो'**रिति **शाश्वतः** । यद्वा **भावनोपनिषदा** प्रतिपादितो यागो रहस्यतरः शिवयोग्यैकसाध्यो महायागः । स चांस्माभिस्तद्भाष्ये तत्प्रयोगविधौ च विशदीकृत इति नेहोच्यते । भरणरमणवमनकर्ता सृष्टिस्थितिसंहृतिकारी परशिवो भैरवः स एव महांस्तेन महाभैरवेण पूजिता । तदुक्तं **पाद्मे**—

**'शम्भुः पूजयते देवीं मन्त्रशक्तिमयीं शुभाम् ।**
**अक्षमालां करे कृत्वा न्यासेनैव भवोद्भवः ॥'**

इति । महाशम्भुनाथो महायागेन चिदग्निकुण्डाल्ललितां प्रादुर्भावयामासेति **ललितोपाख्याने** प्रसिद्धम् ॥ १०७ ॥

**महेश्वरमहाकल्पमहाताण्डवसाक्षिणी ।**

महाकल्पे महाप्रलये यन्महेश्वरस्य महाताण्डवं विश्वोपसंहारादात्मैकशेषसमुद्भूतानन्दकृतं तत्कालेऽन्यस्य कस्याप्यभावादियमेव साक्षिणी । तदुक्तं **पञ्चदशीस्तवे**—

**'कल्पोपसंहरणकल्पितताण्डवस्य देवस्य खण्डपरशोः परभैरवस्य ।**
**पाशाङ्कुशैक्षवशरासनपुष्पबाणैः सा साक्षिणी विजयते तव मूर्तिरेका ॥'** इतिं।
**'एषा संहृत्य सकलं विश्वं क्रीडति संक्षये ।**
**लिङ्गानि सर्वजीवानां स्वशरीरे निवेश्य च ॥'**

---

महायागः स्वतन्त्रतन्त्रोक्तः चतुर्भिर्दिवसैर्निर्वत्यः तस्य क्रमः गणेश-मातङ्गी-वाराही-बालापूजानां पूर्वपरीभावः । तेनाराध्या । आराध्यायै इति ॥ महाभैरवेण परशिवेन पूजिता । पूजितायै इति ॥ १०७ ॥

महेश्वरस्य परशिवस्य महाकल्पे महाप्रलये स्वात्मैकशेषोद्भूतानन्दकृतं यन्महाताण्डवं नटनं तदा देव्यतिरिक्तस्य कस्याप्यभावात् तत्साक्षिणी । साक्षिण्यै इति ॥

इति **देवीभागवते**। **महावासिष्ठेऽपि** निर्वाणप्रकरणोत्तरार्धे एकाशीतितमे सर्गे शताधिकैः श्लोकैरत्यद्भुतमतिभयङ्करं नृत्यमुभयोर्निर्वर्ण्योपसंहृतम्–

**'डिम्बं डिम्बं सुडिम्बं पच पच सहसा झम्यझम्यं प्रझम्यं**
**नृत्यन्त्याः शब्दवाद्यैः स्रजमुरसि शिरःशेखरं तार्क्ष्यपक्षैः।**
**पूर्णं रक्तासवानां यममहिषमहाशृङ्गमादाय पाणौ**
**पायाद्वो वन्द्यमानः प्रलयमुदितया भैरवः कालरात्र्या॥'** इति।

## महाकामेशमहिषी महात्रिपुरसुन्दरी॥ १०८॥

महतः कामस्य परमशिवाभिन्नस्येशस्य भूपस्य महिषी कृताभिषेका पत्नी। त्रयाणां मातृमानमेयानां पुरं नगरं तदात्मिका च सा। महती च सा सुन्दरी चेति तथा॥ १०८॥

## चतुःषष्ट्युपचाराढ्या चतुःषष्टिकलामयी।

चतुरधिका षष्टिश्चतुःषष्टिस्तावन्त उपचारा भगवता **परशुरामेण कल्पसूत्रे** गणिताः। अन्येऽप्यष्टौ तन्त्रान्तरे–

**'शिवपादप्रसूनानां धारणं चात्मरोपणम्।**
**परिवारविसृष्टिश्च गुरुभक्तार्चनं तथा॥**
**शैवपुस्तकपूजा च शिवाग्नियजनं ततः।**
**शिवपादोदकादानं साङ्गं प्राणाग्निहोत्रकम्॥**
**एते चतुःषष्टियुता उपचारा द्विसप्ततिः।**

इति। चतुरधिका षष्टिश्चतुःषष्टिस्तत्संख्या उपचाराः पूजाप्रकरणेऽस्माभिरुक्ताः तैराढ्या। धनिनी तदभिन्नधनशीला। चतुःषष्टिकलाः **शार्ङ्गधरीये कथाकोशे** च **श्रीधरीये लक्ष्मीपीठिकायां** च वैलक्षण्येन गणितास्ता निष्कृष्य लिख्यन्ते–

**अष्टादशलिपिबोधस्तल्लेखनशीघ्रवाचने चित्रम्।**
**बहुविधभाषाज्ञानं तत्कविताश्रुतनिगादिताद्यूतम्॥**
**वेदा उपवेदाश्चत्वारः शास्त्राङ्गषट्के द्वे।**
**तन्त्रपुराणस्मृतिकं काव्यालङ्कारनाटकादि द्वे॥**

---

महाकामेशस्य परशिवस्य महिषी। कृताभिषेका पत्नी। महिष्यै इति॥ त्रिपुरपदं ऊर्ध्वमध्याधोरूपलोकत्रयस्थ जनपरम्। तेषु सुन्दरी। महती उत्कृष्टा चासौ सुन्दरी चेति सा। सुन्दर्यै इति॥ १०८॥

चतुरधिका षष्टिः तत्संख्याकास्तन्त्रोक्ता ये उपचाराः उपासककृतैस्तैराढ्या युता। आढ्यायै इति॥ चतुःषष्टिकलाः गीतादिविज्ञानान्ताः तन्मयी तत्प्रचुरा। मय्यै इति॥

**शान्तिर्वश्याकर्षणविद्वषोच्चाटमारणानि च षट्।**
**गतिजलदृष्ट्यग्नथायुधवाग्रेतःस्तम्भसप्तकं शिल्पम् ॥**
**गजहयरथनरशिक्षाः सामुद्रिकमल्लसूदगारुडकाः।**
**तत्तत्सुषिरानद्धघनेन्द्रजालनृत्तानि गीतरसवादौ ॥**
**रत्नपरीक्षा चौर्यं धातुपरीक्षाप्यदृश्यत्वम्।**
**इति भास्कर[सुधियो क्रविनोक्ता निष्कृष्य कलाश्चतुःषष्टिः ॥'**

इति तत्प्रचुरा। कलाशब्दस्तन्त्रपरो वा। तान्यपि चतुःषष्टिर्**वामकेश्वरतन्त्रे** गणितानि। तानि [**सेतुबन्धेऽस्माभिर्विवृतानि**] तट्टीकायामस्माभिर्विवेचयिष्यन्ते। तन्मयी तत्प्रधाना।

**महाचतुःषष्टिकोटियोगिनीगणसेविता ॥ १०९ ॥**

ब्राह्मादीनामष्टानां मध्ये एकैकस्या अंशभूता अक्षोभ्यादिशक्तयोऽष्टावष्टाविति चतुःषष्टिर्योगिन्यः। तासामपि प्रातिस्विकमंशभूताः कोटिसंख्याका गणास्तैर्महद्भिः सेविता। वस्तुतस्तन्त्रराजोक्ता एवेह ग्राह्याः। यथा–

**ललिताचक्रनवके प्रत्येकं शक्तयः प्रिये।**
**चतुःषष्टिमिताःकोट्यं ................ ॥'**

इति। ताः संहत्य पञ्चाब्जानि सप्तार्बुदानि षट्कोट्यो भवन्ति। नवसु त्रैलोक्यमोहनादिचक्रादिषु प्रतिचक्रं भिन्नाभिन्नाश्चतुःषष्टिकोटिसंख्याका योगिन्यः सन्तीति ताः संहत्य पञ्चाब्जानि सप्तार्बुदानि षट्कोट्यो भवन्ति। तदिदं द्योतयितुं महत्पदं कोटिरेव विशेषणं वा। महत्त्वं च नवगुणितत्वम् ॥ १०९ ॥

**मनुविद्या चन्द्रविद्या चन्द्रमण्डलमध्यगा।**

**'मनुश्चन्द्रः कुबेरश्च लोपामुद्रा च मन्मथः।**
**अगस्तिरग्निः सूर्यश्च इन्द्रः स्कन्दः शिवस्तथा ॥**
**क्रोधभट्टारको देव्या द्वादशामी उपासकाः।'**

इति वचने संगृहीतो द्वादशप्रकारः श्रीविद्याप्रस्तारः। तदुद्धारश्च **ज्ञानार्णवे** द्रष्टव्यः। तेषु मनुश्चन्द्रविद्योभयरूपेत्यवयुत्यानुवादो नामद्वयम्। चन्द्रमण्डलस्य

---

एकैकस्य नाथस्य चतुःषष्टिकोटियोगिन्यः। एवं विधो नवनाथानां नवगणः यासां मन्त्राः षट्सप्त्युत्तरपञ्चशतकोटिसंख्याकाः **तन्त्रराजे** उद्धृताः। महद्भिरुत्कृष्टैरखिलपूज्यैश्चतुःषष्टिकोटियोगिनीगणैः सेविता। सेवितायै इति ॥ १०९ ॥

वाच्यवाचकयोरभेदान्मनूपासितविद्यात्मिका। विद्यायै इति ॥ चन्द्रोपासितविद्यात्मिका। इदं नामद्वयं द्वादशविद्यानामुपलक्षकम्। तेन द्वादशविद्यारूपेत्यर्थः। विद्यायै इति ॥ चन्द्रमण्डलमध्ये [ध्ये]यत्वेन गच्छतिती(तीति) सा। मध्यगायै इति।

मध्यं गच्छन्तीति तथा । कुण्डलिन्याः सहस्रारकर्णिकाचन्द्रभेदित्वात् । सायंसन्ध्या-वन्दने आयुष्करप्रयोगादौ च चन्द्रमण्डले ध्येयत्वात् । **शिवपुराणे** देवींप्रति शिववचनम्–

**अहमग्निशिरोनिष्ठस्त्वं सोमशिरसि स्थिता ।**
**अग्नीषोमात्मकं विश्वमावाभ्यां समधिष्ठितम् ॥'**

इति । चन्द्रमण्डलं तु श्रीचक्राभिन्नमिति रहस्यम् ।

## चारुरूपा चारुहासा चारुचन्द्रकलाधरा ॥ ११० ॥

चारु सुन्दरं रूपं लावण्यं हासश्च यस्याः । '**तवैव मन्दस्मितबिन्दुरिन्दु**'रित्युक्तेः । परमानन्दप्रदः प्रबोधविशेषो गुरुमुखैकवेद्यो यस्या इति तु लक्षणया कश्चिदूचे । चार्व्या वृद्धिक्षयरहितायाश्चन्द्रकलायाः सादाख्यायाश्चिद्रूपाया धरा धारयित्री । यद्वा चन्द्रकलाख्या राजकन्या **देवीभागवते** प्रसिद्धा । तस्याः स्वप्ने कामराजबीजोपासकः सुदर्शनाख्यो राजपुत्र एव त्वया वरणीय इत्यम्बया कथितम् । तेन चारु यथा तथा चन्द्रकलायाः धरा आधारभूतेत्यर्थः । तदुक्तं तत्रैव तृतीयस्कन्धे–

**'एतस्मिन्समये पुत्री काशिराजस्य सत्तमा ।**
**नाम्ना शशिकला दिव्या सर्वलक्षणसंयुता ॥'**

इत्युपक्रम्य

**'स्वप्ने तस्याः समागत्य जगदम्बा निशान्तरे ।**
**उवाच वचनं चेदं समाश्वास्य सुखं स्थिता ।**
**वरं वरय सुश्रोणि मम भक्तं सुदर्शनम् ।**
**सर्वकामप्रदं तेऽस्तु वचनान्मम भामिनि ॥'** इत्यादि ॥ ११० ॥

## चराचरजगन्नाथा चक्रराजनिकेतना ।

जङ्गमस्थावरात्मकस्य जगतोऽधीश्वरी । त्रैलोक्यमोहनादिनवचक्रराजमेव निकेतनं वासस्थानं यस्याः ।

## पार्वती पद्मनयना पद्मरागसमप्रभा ॥ १११ ॥

हिमवत्पर्वतस्य स्त्र्यपत्यत्वात्पार्वती । क्वचिदपवादविषयेऽप्युत्सर्गस्य प्रवृत्ते-रिञभाव इत्याहुः । '**प्रदीयतां दाशरथाय मैथिली**'तिवत्सम्बन्धसामान्यमेवेह विवक्षितं न

---

चारु सुन्दरं रूपं यस्याः सा । रूपायै इति ॥ तया हासः यस्याः सा । हासायै इति ॥ चारुचन्द्रस्य कला तस्या धरा । धरायै इति ॥ ११० ॥

चराचरस्य स्थावरजङ्गमात्मकस्य जगतो नाथा । नाथायै इति ॥ चक्रराजः श्रीचक्रं तन्निकेतनं स्थानं यस्याः सा । निकेतनायै इति ॥

पर्वतस्य हिमवतो अपत्यं स्त्री । पार्वत्यै इति ॥ पद्मनीव नयने यस्याः । नयनायै इति ॥ पद्मरागाख्येनारक्तरत्नेन समा प्रभा कान्तिर्यस्याः सा । प्रभायै इति ॥ १११ ॥

विशेष इति युक्तम् । पद्मे इव नयने यस्याः सा पद्मनयना । पद्मरागाख्यरत्नेनारक्तेन समा तुल्या प्रभा कान्तिर्यस्यास्तथा । पद्मविशेषस्य कोकनदस्य रागेण रक्तिम्ना समेत्यादि वा । '**त्रायस्व कुण्डलिनि कुङ्कुमपङ्कताम्रे**' इति **कल्याणाचार्योक्ते**रमृतकुण्डलिनीपरं वेदं नाम ॥ १११ ॥

**पञ्चप्रेतासनासीना पञ्चब्रह्मस्वरूपिणी ।**

ब्रह्माद्याः पञ्चापि वामादिस्वस्वशक्तिविरहेसति कार्याक्षम[1]त्वाद्वामांशेन प्रेताः तैः कल्पिते आसने मञ्चके आसीना । तदुक्तं **ज्ञानार्णवे**–

**'पञ्च प्रेतान्महेशान ब्रूहि तेषां तु कारणम् ।**
**निर्जीवा अविनाशास्ते नित्यरूपाः कथं वद ॥'**

इत्यादिना देव्या पृष्ट ईश्वर उवाच–

**'साधु पृष्टं त्वया भद्रे पञ्चप्रेतासनं कथम् ।**
**ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥**
**पञ्च प्रेता वरारोहे निश्चला एव ते सदा ।**
**ब्रह्मणः परमेशानि कर्तृत्वं सृष्टिरूपकम् ॥**
**वामा शक्तिस्तु सा ज्ञेया ब्रह्मा प्रेतो न संशयः ।**
**शिवस्य करणं नास्ति शक्तेस्तु करणं यतः ॥'**

इत्यारभ्य

**'सदाशिवो महाप्रेतः केवलो निश्चलः प्रिये ।**
**शक्त्या विना कृतो देवि कथञ्चिदपि न क्षमः ॥'**

इत्यन्तम् । ब्रह्मादिसदाशिवान्तानां पञ्चानामपि ब्रह्मकोटावन्तर्भावात्पञ्चब्रह्मणां स्वरूपमस्याः । तदुक्तं **त्रिपुरासिद्धान्ते**–

**'निर्विशेषमपि ब्रह्म स्वस्मिन्मायाविलासतः ।**
**ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥**
**इत्याख्यावशतः पञ्च ब्रह्मरूपेण संस्थितम् ।'**

इति । यद्वा । ईशान-तत्पुरुषाघोर-वामदेव-सद्योजाताख्यानि पञ्च ब्रह्माणि । तथा च **लैङ्गे**– **'क्षेत्रज्ञप्रकृतिबुद्ध्यहङ्कारमनांसि श्रोत्रत्वक्चक्षुर्जिह्वोपस्थानि शब्दादिपञ्चतन्मात्राणि**

---

ब्रह्मविष्णुरुद्रेश्वरसदाशिवाख्याः स्वस्वशक्तिराहित्ये धर्म्यंशेन पञ्चप्रेताः । तैः कल्पिते आमने आसीना । आसीनायै इति ॥ पञ्चब्रह्मपदेन पूर्वोक्ता ब्रह्मादयः । पञ्चब्रह्मणां स्वरूपं अस्याः । स्वरूपिण्यै इति ॥

---

1. त्वाद्धर्म्यंशेन

**च पञ्च ब्रह्मस्वरूपाणी**'त्युक्त्वा तेषामाकाशादिपञ्चमहाभूतजनकत्वमुक्तम् । तादृशस्वरूपवतीत्यर्थः । **यज्ञवैभवखण्डेऽप्युक्तम्**–

**'एक एव शिवः साक्षात्सत्यज्ञानादिलक्षणः ।**
**विकाररहितः शुद्धः स्वशक्त्या पञ्चधा स्थितः ॥'**

इति । सृष्टिस्थित्यादिपञ्चकृत्यशक्तिभिः सद्योजातादिपञ्चरूपो जात इत्यर्थः । **गरुडपुराणेऽपि**–

**'लोकानुग्रहकृद्विष्णुः सर्वदुष्टविनाशनः ।**
**वासुदेवस्य रूपेण तथा सङ्कर्षणेन च ॥**
**प्रद्युम्नाख्यस्वरूपेणाऽनिरुद्धाख्येन च स्थितः ।**
**नारायणस्वरूपेण पञ्चधा ह्यद्वयस्थितः ॥'**

इति । आचार्यैरप्युक्तम्–

**'पुंभावलीला पुरुषास्तु पञ्च यादृच्छिकं संलपितं त्रयी ते ।**
**अम्ब त्वदक्ष्णोरणुरंशुमाली तवैव मन्दस्मितबिन्दुरिन्दुः ॥'** इति ।

## चिन्मयी परमानन्दा विज्ञानघनरूपिणी ॥ ११२ ॥

चिदभेदाच्चिन्मयी । परम उत्कृष्ट आनन्दो ऽस्याः स्वरूपं सा । **'यो वै भूमा तत्सुखम्'** इति श्रुतेः । विज्ञानं चैतन्यमेव घनं सान्द्रं तदेकरसं रूपमस्याः । **'विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाये'**ति श्रुतौ विज्ञानघनपदस्य चिदेकरसपरत्वेन व्याख्यानदर्शनात् । अथवा विज्ञानशब्दो जीवपरः । **'यो विज्ञाने तिष्ठन्विज्ञानमन्तरो यमयती'**त्याद्यन्तर्यामिब्राह्मणे तथा व्याख्यानात् । तैर्घनं समष्ट्यात्मकं रूपमस्याः । ष्ट्यभिमानिहिरण्यगर्भात्मिकेत्यर्थः । **'एतस्माज्जीवघना'**दिति **श्रुतौ** जीवघनपदस्य तथा व्याख्यानात् ॥ ११२ ॥

## ध्यानध्यातृध्येयरूपा धर्माधर्मविवर्जिता ।

'ध्यै चिन्तायाम्' । चिन्ता मानसं ज्ञानं **'प्रत्ययैकतानता ध्यान'**मीति **योगसूत्रोक्तम्** । ज्ञानज्ञातृज्ञेयाख्यत्रिपुटीरूपेत्यर्थः । इष्टानिष्टप्रापके कर्मणि धर्माधर्मौ । तदुक्तं **मत्स्यपुराणे**–

**'धर्मेति धारणे धातुर्महत्त्वे वै प्रपद्यते ।**
**धारणेन महत्त्वेन धर्म एव निरुच्यते ॥'**

---

चिन्मयी चिदभिन्ना । चिन्मय्यै इति ॥ परम उत्कृष्ट आनन्दो यस्याः सा । आनन्दायै इति ॥ विज्ञानं चैतन्यमेव घनं एकरसं रूपं यस्याः सा । रूपिण्यै इति ॥ ११२ ॥

ध्यानं प्रत्ययैकतानता ध्याता तत्कर्ता ध्येयं तद्विषयः । एतेषां रूपं यस्याः सा । रूपायै इति ॥ धर्माधर्माभ्यां पुण्यपापाभ्यां वर्जिता रहिता । शास्त्रस्याविद्वद्विषयत्वात् । वर्जितायै इति ॥

**तेनेष्टप्रापको धर्म आचार्यैरुपदिश्यते ।**
**इतरोऽनिष्टफलदस्त्वाचार्यैरुपदिश्यते ॥'**

इति । **संवर्तस्मृतिरपि**–

**'देशे देशे य आचारः पारम्पर्यक्रमागतः ।**
**आम्नायैरविरुद्धश्च स धर्मः परिकीर्तितः ॥'**

इति । **याज्ञवल्क्योऽपि**–

**'इज्याचारदमाहिंसादानस्वाध्यायकर्मणाम् ।**
**अयं तु परमो धर्मो यद्योगेनात्मदर्शनम् ॥'**

इति । **जैमिनिरपि**–'**चोदनालक्षणोऽर्थो धर्म**' इति । अत्रैवाधर्म इत्यकारप्रश्लेषेण विहितनिषिद्धक्रियात्वे तल्लक्षणे ऊह्ये । ताभ्यां विवर्जिता । तिर्यगधिकरणन्यायेन देवतानां कर्मानधिकारित्वात् । शास्त्रस्याविद्यावद्विषयत्वाद्वा । यद्वा धर्माधर्मौ बन्ध-मोक्षौ । '**धर्माधर्मस्य वाच्यस्य विषामृतमयस्य चे**'ति **नित्याहृदय**श्लोके तथा व्याख्यान-दर्शनात्तदुभयरहिता । तथा च **त्रिपुरोपनिषदि** श्रूयते–

**'न निरोधो न चोत्पत्तिर्न बन्धो न च साधकः ।**
**न मुमुक्षुर्न वै मुक्तिरित्येषा परमार्थतः ॥'**

इति । अथवा धर्मशब्दो मत्वर्थलक्षणया धर्मिपरः । अधर्मशब्दो बहुव्रीहिणा धर्मपरः । धर्मिधर्मभावेन रहिता । जगता सहात्यन्ताभिन्नेत्यर्थः । धर्माधर्मशब्दौ शक्तिशिवाक्षर-वाचकौ ताभ्यां विवर्जिता पञ्चदशील(ग)तेति तु रहस्यार्थः । धातूनाम-नेकार्थत्वाद्वर्जनमभिवृद्धिः । तच्चाक्षरद्वयं **नित्याहृदये** कथितम्–

**'मध्यप्राणप्रथारूपस्पन्दव्योम्नि स्थिता पुनः ।**
**मध्यमे मन्त्रपिण्डे तु तृतीये पिण्डके पुनः ॥**
**राहुकूटद्वयं स्फूर्जत्........................ ।'**

इति । एतस्यार्थो गुरुमुखादवगन्तव्यो **वरिवस्यारहस्ये** वा **सेतुबन्धे** वा प्रपञ्चितो-**ऽस्माभि**रिति ततोऽवगन्तव्यः ।

अथैकोनविंशतिनामभिर्जीवेश्वरयोर्भेदान्विभजंस्तदात्मकत्वेन देवीं स्तोतुमुप-क्रमते–विश्वरूपेत्यादिना । सृष्टिक्रमे हि प्राथमिकस्तमःसर्गस्ततो महतः सर्गस्ततोऽ-हङ्कारस्य त्र्यात्मकस्य । ततः पञ्चतन्मात्रापरपर्यायाणि सूक्ष्मभूतानि शब्दादीनि भवन्ति । तेषु च पञ्चज्ञानशक्तयः पञ्च क्रियाशक्तयश्च सन्ति । तास्वाद्या व्यष्टिवेषेण श्रोत्रादिज्ञानेन्द्रियपञ्चकं जनयन्ति । समष्टिवेषेण त्वन्तःकरणम् । अन्त्या अपि व्यष्टिवेषेण वागादिकर्मेन्द्रियपञ्चकं समष्टिवेषेण प्राणं जनयन्ति । धर्मिभूताः शब्दादयस्तु गगनादिस्थूलभूतपञ्चकं जनयन्तीति वस्तुस्थितिः । तत्र

व्यष्टिभूतैः स्थूलभूतोपाधिभिः सूक्ष्मभूतोपाधिभिः कारणोपाधिभिश्चोपहितं चैतन्यं क्रमेण विश्वतैजसप्राज्ञपदवाच्यं भवति। समष्टिभूतैस्तैरुपहितं तु तत्त्वं क्रमेण वैश्वानरहिरण्यगर्भेश्वरपदवाच्यम्। अन्तःकरणकारणोपहितः परमात्मा हिरण्यगर्भः। प्राणकारणोपहितस्तु सूत्रात्मा। उभाभ्यां कारणाभ्यामविभक्ताभ्यामनुगमय्योपहितस्त्वन्तर्यामीत्युच्यते। एते त्रय एव ब्रह्मविष्णुरुद्रपदैः क्रमादभिधेया भवन्ति। एतच्च व्यष्टिजीवात्मसमष्टिजीवात्मपरमात्मनां प्रातिस्विकं त्रैविध्यमौपनिषदानां मतमवलम्ब्योक्तम्। तेषामन्ते जाग्रत्स्वप्नसुषुप्तीनामवस्थानां सृष्टिस्थितिसंहाराणां कृत्यानां च त्रयस्य त्रयस्यैवाङ्गीकारात्। तान्त्रिकाणां मते तु तुर्यतुर्यातीतयोरवस्थयोस्तिरोधानानुग्रहयोः कृत्ययोश्च द्वयोर्द्वयोराधिक्येन तदवस्थाकृत्यापन्नयोर्जीवपरमात्मनोरप्याधिक्यात्प्रातिस्विकं पाञ्चविध्यम्। न चैतावता वैमत्यम्, त्रिवृत्करणपञ्चीकरणप्रक्रिययोरिव स्थूलसूक्ष्मदृष्टिभेदेन व्यवस्थोपपत्तेः। परन्तु सुषुप्तावेव प्राज्ञस्य ब्रह्मभावसम्पत्त्या तदतीतावस्थाद्वयापन्नस्यात्मनो न जीवभावः। अविद्यालेशानुवृत्तेः सत्वाच्च न परमात्मभावोऽपि। अत एव सुषुप्तिदशापन्नजीवोपाधेः कारणशरीरत्वेनेव तुर्यदशापन्नजीवोपाधेर्महाकारणशरीरत्वेन व्यवहारः **'तत्परश्च शिवतुल्यो जायत'** इति **शिवसूत्रे** तादृशः शिवतुल्यत्वेन निर्दिष्टः। अर्धसाम्यादर्धशिव इति तदर्थः। अत एव च ततोऽपि परस्य **'निरञ्जनः परमं साम्यमुपैती'**ति **श्रुता**वभेदस्य परमसाम्यपदेन निर्देश उपपद्यते। अनेनैवाशयेन पूर्णजीवतायाः पूर्वशिवतायाश्च तद्दशायामभावान्न पृथग्गणनमौपनिषदानाम्। अत एव **'मुग्धेऽर्धसम्पत्तिः परिशेषा'**दित्यधिकरणे मूर्च्छावस्थायाः पार्थक्येन गणनाभावेऽयमेव हेतुस्तैरुपन्यस्तः। अस्त्येव वा गणनं पञ्चविधजीवोपाधीनां पञ्चकोशपदैर्व्यवहारदर्शनात्। परमात्मनस्तु तिरोधानानुग्रहापरपर्यायबन्धमोक्षदानोपाधिकत्वेन **'ईश्वरो बहिरुन्मेषो निमेषोऽन्तः सदाशिव'** इति **शैवतन्त्रो**क्तलक्षणानुसारेण रुद्रात्परतो भेदद्वयमक्षुण्णम्। एवं सति विश्वे स्थूलभूतोपहितजागरावस्थापन्नचैतन्यात्मका जीवास्तत्समष्टिभूतो वैश्वानरो रूपं चैतन्यदृष्ट्यात्मैव यस्याः सा विश्वरूपेत्यर्थः। यद्वा पूर्वं धर्मधर्मिभावविवर्जितेत्युक्तं तेन जगदभेदः सिद्ध इत्याह–

**विश्वरूपा जागरिणी स्वपन्ती तैजसात्मिका ॥ ११३ ॥**

विश्वरूपेति। विश्वमेव यस्या रूपं न तु विश्वाधारत्वेन धर्मिभूतमन्यद्रूपमस्तीत्यर्थः। तदुक्तं **विष्णुपुराणे**–

**'यथा हि कदलीनाम त्वक्पत्रान्या न दृश्यते।**
**एवं विश्वस्य नान्यत्वं त्वत्स्थादीश्वर दृश्यते ॥'**

---

विश्वः व्यष्टिस्थूलोपाध्युपहितं चैतन्यं तद्रूपं यस्याः सा। रूपायै इति ॥ जागरः ब्राह्मेन्द्रियविलास अस्या अस्तीति सा। जागरिण्यै इति ॥ स्वपन्ती स्वप्नदशाभिमानि[नी]। स्वपन्त्यै इति ॥ तैजसः व्यष्टिसूक्ष्मोपाध्युपहितं चैतन्यम्। तदात्मा स्वरूपं यस्याः सा। आत्मिकायै इति ॥ ११३ ॥

इति । **देवीभागवते**ऽपि प्रथमस्कन्धे–

**'वटपत्रशयानाय विष्णवे बालरूपिणे ।**
**श्लोकार्धेन तदा प्रोक्तं भगवत्याखिलार्थदम् ॥**
**सर्वं खल्विदमेवाहं नान्यदस्ति सनातनम् ।'**

इति । अथवा साक्षाद्ब्रह्मणो जीवभावोऽत्यन्तं नीचं रूपमिति शुनकतुल्यत्वम् । अत एव नीचसेवात्मकवृत्तेः श्ववृत्तिरिति संज्ञा । नीचतरः पशुभाव इति यावत् । तादृशं स्वरूपं विगतं यस्याः प्रसादात्सा विश्वरूपा । अथवा षोडशकलात्मिका त्रिपुरसुन्दरीत्यविवादम् । तदुक्तं **वासनासुभगोदये**–

**'दर्शाद्याः पूर्णिमान्ताश्च कलाः पञ्चदशैव तु ।**
**षोडशी तु कला ज्ञेया सच्चिदानन्दरूपिणी ॥'**

इति । चन्द्रमण्डले हि सादाख्या कला वृद्धिह्रासरहितैका । अन्याः पञ्चदश यातायातभागिन्यः । तदभिन्नायाः श्रीदेव्या अपि चिद्रूपा कला त्रिपुरसुन्दरीपदवाच्यैका । अन्यास्तु कामेश्वर्यादिचित्रान्तास्तिथिभेदेन विपरिवर्तमानाः । तदभिन्नायां पञ्चदश्यामप्येकमक्षरं गुरुमुखैकवेद्यं चिद्रूपं यद्वशादस्याः श्रीविद्येति संज्ञा । अन्यानि च पञ्चदशाक्षराणि सर्वैरुपासकैः श्रूयमाणानि नित्यास्वरूपाणि । एवं चन्द्रमण्डलदेवीपञ्चदशीनामैक्यमिति तत्तत्कलाक्षराणामप्यैक्यमेव । अत एव पञ्चदशसंख्यानां तिथीनामक्षराणामपि त्रिखण्डत्वं यथा-नन्दा भद्रा जया रिक्ता पूर्णेति त्रिरावृत्तेन भेदेन वाग्भवादिकूटभेदेन च । अत एव खण्डत्रयेणैव **तैत्तिरीयाः** शुक्लपक्षरात्रीणां पञ्चदशानां नामान्यामनन्ति । **'दर्शा दृष्टा दर्शता विश्वरूपा सुदर्शना । आप्यायमानाप्यायमानाप्यायसूनृतेरापूर्यमाणापूर्यमाणा पूरयन्ती पूर्णा पौर्णमासी**ति । एवमेतद्दिवसानामपि खण्डत्रयेणैव नामान्याम्नायन्ते । **'संज्ञानं विज्ञानं प्रज्ञानं जानदभिजानत् । सङ्कल्पमानं प्रकल्पमानमुपकल्पमानमुपक्लृप्तं क्लृप्तं श्रेयोवसीय आयत्सम्भूतं भूत'**मिति । अनयोरनुवाकयोश्च दिवसरात्रिनामत्वमित्यपि तत्रैवाम्नातम् । **'संज्ञानं विज्ञानं दर्शा दृष्टे'**त्येतावनुवाकौ पूर्वपक्षस्याहोरात्राणां नामधेयानीति । अत्र यद्यपि खण्डत्रयमपि समानसंख्यमेव तथाप्येकादश्या दशमीवेधे दशमीत्वात् **'उपोष्या द्वादशी शुद्धे'**ति वचनाद्द्वादश्या एवैकादशीत्वाच्चरमखण्डान्तर्गततिथेर्मध्यमखण्डे प्रवेशान्मन्त्रे द्वितीयतृतीयखण्डौ षट्चतुरक्षरौ भवतः । अत एव वेधाभावपक्षाभिप्रायेण सूर्यादिविद्यान्तरेषु समानाक्षराण्येव त्रीणि कूटानि । अनेनैवाशयेन **सुभगोदयटीकायां लल्लेनोक्तम्** । **'आपूर्यमाणायाः कलायाश्चन्द्रखण्डान्तःस्थिताया अपि सौरखण्डेऽन्तर्भावः । इराकलाप्रभेदत्वादिरापूर्यमाणयोरैक्यमनुसन्धेय'**मिति। उक्तश्लोके दर्शाद्या इति पदस्य शुक्लप्रतिपदाद्या इत्यर्थः । उदाहृत**श्रुतौ** प्रतिपदो दर्शनामकत्वोक्तेः तासां तिथीनां

मन्त्राक्षराणां च प्रातिस्विकं शिव-शक्ति-माया-शुद्धविद्यादितत्त्वात्मकत्वं कौलिक-सामयिकमतभेदेन तत्तदुपासनाप्रकारश्च चन्द्रकलायां द्रष्टव्यः । एवञ्च परस्परा-शेदाच्छुक्लपक्षचतुर्थीरात्रेः संज्ञाभूतमपि विश्वरूपापदं वाग्भवकूटचतुर्थाक्षरस्य शुद्धविद्यातत्त्वस्य च प्रतिपादकमिति तत्रितयाभिन्नेत्यर्थः । अथवा विश्वरूपमिति नपुंसकं पदम् । तस्य च मिथ्याजगदधिष्ठानेतिवत्स्त्रीलिङ्गता । तच्च कृष्णपक्ष-पञ्चमीदिवसवाचकम् । तथा च श्रूयते–'**प्रस्तुतं विष्टुतं संस्तुतं कल्याणं विश्वरूपम् । शुक्रममृतं तेजस्वि तेजः समिद्धम् । अरुणं भानुमन्मरीचिमदभितपत्तपस्वत् । सुता सुन्वती प्रसूता सूयमानाभिषूयमाणा । पीति प्रपासंपा तृप्तिस्तर्पयन्ती । कान्ता काम्या कामजाती युष्मती कामदुघा । प्रस्तुतं विष्टतं सुतासुन्वती**'ति । एतावनुवाकावपरपक्षस्याहोरात्राणां नामधेयानी'ति । तेन तद्रूपेत्यर्थः । एवं रात्रिविशेषस्य दिवसविशेष्य चोपलक्षणरीत्या श्लेषलिप्सया चैकैकस्यैवोपादानेऽपि सर्वरात्रिरूपा सर्वदिवसरूपा चेत्यर्थः पर्यवस्यति । अत एवेदृशज्ञाने फलविशेषः श्रूयते–'**स यो ह वा एता मधुकृतश्च मधुवृषांश्च वेद कुर्वन्ति हास्यैता अग्नौ मधु नास्येष्टापूर्तं धयन्तिं । अथ यो न वेद न हास्यैता अग्नौ मधु कुर्वन्ति धयन्त्यस्येष्टापूर्त**'मिति । अत्र मधुकृच्छब्दो रात्रिपरः । मधुवृषशब्दश्च दिवस परः । या एताः पूर्वपक्षापरपक्षयो रात्रयस्ता मधुकृतो यान्यहानि ते मधुवृषा इति वाक्यशेषात् । मधु कुर्वन्ति वर्षन्ति चेत्यवयवशक्तेश्च । एता यो वेद तस्यैता दिवससहिता रात्रयः अग्नौ बैन्दवस्थानात् ब्रह्मरन्ध्रान्मधु कुर्वन्ति स्रावयन्ति । अस्येष्टापूर्तं कर्मजातं न धयन्ति पीत्वा न लोपयन्ति । व्यतिरेकेऽनिष्टमाह । अथ य इत्यादिना । कुण्डलिन्युत्थापनेन मधुस्रावणेन डाकिन्यादिमण्डलाप्लावनरूपान्तरकर्मणि सत्येव बाह्यानि यज्ञादिकर्माणि सफलानि भवन्ति । तदभावे तु यस्मिन्काले कर्माणि क्रियन्ते स काल एव तेषां कर्मणां कालमृत्युरूपो भवतीति फलितार्थः । तदिदमुपबृंहितं **चन्द्रज्ञानतन्त्रे**–

**अन्तरग्नौ मधुस्रावं कुर्वतां शिशिरात्मनाम् ।**
**इष्टापूर्तादिकर्माणि फलन्ति किल कालतः ॥**
**अन्तःस्रावविहीनानां सदा सन्तप्तचेतसाम् ।**
**कर्माणि क्रियमाणानि कालो ग्रसति तत्क्षणात् ॥**
**कालकर्षणिकैवान्तः करोति मधुवर्षति ।**
**इति यो वेद तस्य स्याद् ब्रह्मरन्ध्रात्सुधास्रुतिः ॥**
**वैदेही जनयामास सरघा कालकर्षणी ।**
**अहोरात्रैरिमां विद्यां दशपञ्चभिरक्षरैः ॥'**

इति । अत्र तृतीयचतुर्थश्लोकयोरयमर्थः–कालकर्षिण्याख्या देवी मधु करोतीति मधुकृत् रात्रिरूपा । मधुवर्षतीति मधुवृषा अहोरूपा च । इति प्रकारेण रात्रि-

दिवसाभिन्नां देवीं यो वेदेत्यादि । विगतो देहो यस्य स विदेहोऽनङ्गः कामेशस्तत्सम्बन्धिनी वैदेही कामेश्वरी अहोरात्राभिन्नैः पञ्चदशभिर्वर्णैरिमां पञ्चदशीं विद्यां जनयामास । तथा च **श्रुतिः**– '**जनको ह वैदेहोऽहोरात्रैः समाजगामे**'ति । इयमेव च मधुकर्तृत्वात्सरघा । '**सरघा मधुमक्षिके**'त्य**मरः** । **श्रुति**रपि– '**इयं वाव सरघा तस्या अग्निरेव सारघंमध्वि**'तीत्यलं विस्तरेण । जागराख्यावस्थालक्षणमुक्तमीश्वर-**प्रत्यभिज्ञायाम्**–

**'सर्वाक्षगोचरत्वेन या तु बाह्यतया स्थिरा ।**
**सृष्टिः साधारणी सर्वप्रथात्मायं स जागरः ॥'**

इति । तद्वान् जागरी विश्वाख्यः स्थूलशरीराभिमानी जीवः । तदभिन्ना जागरिणी । '**ऋन्नेभ्यो ङीप्**' । स्वप्नलक्षणमपि **प्रत्यभिज्ञायाम्**–

**'मनोमात्रपथेऽध्यक्षविषयत्वेन विभ्रमात् ।**
**स्पष्टावभासभावानां सृष्टिः स्वप्रपदं मतम् ॥'**

इति । स्वपितीति स्वपन् स्वप्नदशापन्नस्तैजसाख्यः सूक्ष्मशरीरव्यष्ट्यभिमानी जीवः तदभिन्ना स्वपन्ती । '**उगितश्चे**'ति ङीप् । तैजसा उक्तलक्षणा जीवास्तत्समष्टिभूतो हिरण्यगर्भ आत्मा स्वरूपं यस्याः सा तैजसात्मिका ॥ ११३ ॥

**सुप्ता प्राज्ञात्मिका तुर्या–**

सुप्तं सम्मदावस्था । तल्लक्षणं च **शिवसूत्रे**– '**अविवेको मायः सौषुप्त**'मिति । "**सुखमहमस्वाप्सं न किञ्चिवेदिष**'मिति स्मरणान्यथानुपपत्त्या कल्पितास्तिस्रोऽविद्या-वृत्तयोऽज्ञानाहन्तासुखविषयिण्यः सन्ति यत्र तत्सौषुप्तमित्यर्थः । तद्वान्प्राज्ञाख्यः कारणशरीरव्यष्ट्यभिमानी जीवः सुप्तः । अर्श आदिभ्योऽच् । तदभिन्ना सुप्ता । प्राज्ञा उक्तलक्षणा जीवास्तत्समष्टिभूत ईश्वर आत्मा स्वरूपं यस्याः सा प्राज्ञात्मिका । एतदवस्थात्रयस्य तद्भोक्तॄणांञ्च विविच्य ज्ञानजन्यः शुद्धविद्योदयाख्यश्चमत्कार-स्तुर्यावस्था । तदुक्तं **स्पन्दशास्त्रे**–

**'त्रिषु धामसु यद्भोग्यं भोक्ता यश्च प्रकीर्तितः ।**
**विद्यात्तदुभयं यस्तु स भुञ्जानो न लिप्यते ॥'**

इति । **वरदराजे**नापि–

**'तुर्यं नाम परं धाम तदाभोगश्चमत्क्रिया ।**
**भेदेऽपि जागृदादीनां योगिनस्तस्य सम्भवेत् ॥'**

---

सुप्ता सुषुप्त्यवस्थाभिमनिनी । सुषुप्तायै इति ॥ प्राज्ञः व्यष्टिकारणोपाध्युपहितं **चैतन्यम्** । तदात्मा स्वरूपे(पं) यस्याः सा । आत्मिकायै इति ॥ जाग्रदाद्यवस्थात्रयानुस्यूतं **चैतन्यं तुर्या** तुर्यगं त्रिषु सन्ततं इत्युक्तेः । तद्रूपा । तुर्यायै इति ॥

इति । **शिवसूत्रमपि**— **'जाग्रत्स्वप्नसुषुप्तिभेदेऽपि तुर्याभोगसम्भव'**इति । **'त्रिषु चतुर्थं तलवदासेच्य'**मिति च । तद्वान्महाकारणशरीराभिमानी जीवस्तुर्यः । तस्य व्यष्ट्या समष्ट्या चाभिन्ना तुर्या । तुर्यावस्थाप्राप्तावुपायः शिवेनोक्तः—**'मनः स्वचित्तेन प्रविशे'**दिति ।

**'प्राणायामादिकं कृत्वा स्थूलोपायं विकल्पकम् ।**
**अविकल्पकरूपेण स्वचित्तेन स्वसंविदा ॥**
**अन्तर्मुखपरामर्शचमत्काररसात्मना ।**
**मनस्तुर्यरसेनात्र स्वदेहादिप्रमातृताम् ॥**
**मज्जनेन प्रशमयन् प्रविशेत्तत्समाविशेत् ।'**

इति । यद्वा— **'शिवमद्वैतं चतुर्थं मन्यन्त'** इति श्रुतिप्रसिद्धस्वरूपा **'तुरीया कापि देवते'**ति **शक्तिरहस्यात्** । 'तुरीया कापि त्वं दुरधिगमनिःसीममहिमे'ति भगवत्पादोक्तेश्च । त्रिपुरासिद्धान्ते तु—

**'तुरीयानन्दनाथस्य प्रसन्नत्वाद्वरानने ।**
**तुर्येति नाम विख्यातं तस्य देव्या निरन्तरम् ॥'**इत्युक्तम् ।

***अथ चत्वारिंशन्नामानि परिभाषायां विभजते—***

***दिविभारतभुविताडघमृदुजंगमभोवदार्थदिवा ।***
***वाक्चतुरंघ्रिद्वर्धर्धातत्फलमूलं तदेव वादबलम् ॥ १४ ॥***

स्पष्टोऽर्थः ॥ १४ ॥

अस्ति पञ्चमी जीवस्यावस्था । तस्याश्च रूढ्या नामान्तराभावात्तुर्यावस्थामतिक्रान्तत्वात्तुर्यातीतेत्येव यौगिको व्यवहार इत्याशयेनाह—

**—सर्वावस्था विवर्जिता ।**

सर्वेति । तुर्यावस्थामतिक्रान्ते पुरुषे प्राथमिकावस्थात्रयातिक्रमस्यावश्यकत्वात्सर्वाभिश्चतसृभिरवस्थाभिर्विशेषेण पुनरावृत्त्यभावपूर्वकं वर्जितो रहितो जीवस्तुर्यातीतस्तत्समष्टिव्यष्ट्यभेदादियमपि सर्वावस्थाविवर्जितेत्यर्थः । सा च तुर्यावस्थादाढर्याद्भवति । **'तुर्यावष्टम्भवो लभ्यं तुर्यातीतं परं पद'**मिति वचनात् । **वरदराजो**ऽप्याह—

**'तुर्याभ्यासप्रकर्षेण तुर्यातीतात्मकं पदम् ।**
**सम्प्राप्तः साधकः साक्षात्सर्वलोकान्तरात्मना ॥**
**तुल्यः शिवेन चिन्मात्रस्वच्छन्दानन्दशालिना ।'**

---

शुद्धसंविन्मात्ररूपत्वात्सर्वाभि उक्तावस्थाभिर्विशेषेण वर्जिता वर्जितायै इति ।

इति । पञ्चमदशापन्नस्य स्वरूपकथनाय सूत्रत्रयम्– **'शरीरवृत्तिर्व्रतम् । कथा जपः । दानमात्मज्ञानमि**'ति । स्वात्मांनुसन्धानरूपशिवपूजासाधनत्वाच्छरीरधारणं व्रतरूपं न तुच्छम् । अतएव **भट्टोत्पलेन** शरीरधारणं प्रार्थितम्–

**'अन्तरुल्लसितस्वच्छशक्तिपीयूषपोषितम् ।**
**भवत्पूजोपभोगाय शरीरमिदमस्तु मे ॥'**

इति । स्वैराभिलापमात्रं जपः । तच्चित्तस्य सत्यग्राहित्वात् । तदुक्तं **योगसूत्रद्वये**– **'निर्विचारवैशारद्येऽध्यात्मप्रसादः , ऋतम्भरा तत्र प्रज्ञे**'ति । **'यद्धि मनसा ध्यायति तद्वाचा वदती**'ति **श्रुत्या** तदुक्तेः सर्वस्या अपि यथार्थरूपत्वेन मन्त्ररूपत्वात् । तदुक्तं **योगवासिष्ठे**–

**'सदा सन्तोऽभिगन्तव्या यद्यप्युपदिशन्ति नो ।**
**या हि स्वैरकथास्तेषामुपदेशा भवन्ति ता ॥'**

इति । परेभ्य आत्मोपदेश एव दानम् । तदुक्तं **कृष्णदासेन**–

**'प्रोक्तचैतन्यरूपस्य साक्षात्करणमात्मनः ।**
**यत्तज्ज्ञानं तदेवास्य दानं यत्तेन दीयते ॥**

इति । एतत्सूत्रत्रयमुपलक्षणपरत्वेन व्याख्येयमिति मन्वानैरुक्तं **भगवत्पादैः**– **'जपो जल्पः शिल्पं सकलमपि मुद्राविरचन**'मित्यादि । **वार्तिकेऽपि**–

**'इति प्रोक्तं व्रतं कुर्वञ्जपं चर्यां च पालयन् ।**
**शिवतुल्यः सदा स्वात्मा शिवाराधनतत्परः ॥**
**अयमेव महायोगी महामन्त्रधुरन्धरः ।**
**अन्तेवासिजनस्यान्तस्तत्वतस्तत्वबोधकः ॥' इति ।**

एवमविद्यावशीकृतस्य जीवस्य पाञ्चविध्यमुक्त्वा वशीकृतमायावच्छिन्नस्येश्वरस्य कृत्यभेदेन तथात्वमाह–

**सृष्टिकर्त्री ब्रह्मरूपा गोप्त्री गोविन्दरूपिणी ॥ ११४ ॥**

सृष्टीत्यादिना । आचार्य**भगवत्पादै**रयमर्थो **'जगत्सूते धाते**'ति श्लोके निरूपितः । सृष्टिर्जगन्निर्माणं रजोगुणप्रधानस्येश्वरस्य कृत्यम् । तस्य कर्त्री । ब्रह्मा चतुर्मुखस्तादृश ईश्वरः स एव रूपं यस्याः । तदुक्तं **विष्णुपुराणे**–**'ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना**

---

सृष्टेः जगन्निर्माणस्य कर्त्री । कर्त्र्यै इति ॥ अत एव ब्रह्मा विधाता, सः रूपं यस्याः सा । रूपायै इति ॥ गोप्त्री रक्षणकर्त्री । गोप्त्र्यै इति ॥ अत एव गोविन्दः विष्णुः रूपं अस्याः । रूपिण्यै इति ॥ ११४ ॥

**ब्रह्मशक्तयः** इति । गोपनं जगतः स्थितिः सा च सत्त्वगुणप्रधानस्येश्वरस्य कृत्यम् । तस्य कर्तृत्वाद्गोप्त्री । गोविन्दस्तादृश ईश्वरो विष्णुः स एव रूपमस्याः । तथा च **हरिवंशे** नारदवाक्यम्–

**'प्रकृत्याः प्रथमो भाग उमादेवी यशस्विनी ।**
**व्यक्तः सर्वमयो विष्णुः स्त्रीसंज्ञो लोकभावनः ॥'**

इति । गोविन्दपदनिरुक्तिर्**विष्णुभागवते**–

**'अहमिन्द्रो हि देवानां त्वं गवामिन्द्रतां गतः ।**
**गोविन्द इति नाम्ना त्वां भुवि गास्यन्ति मानवाः ॥'**

इति । **भारते मोक्षधर्मे**ऽपि–

**'नष्टां च धरणीं पूर्वमविन्दं वै गुहागताम् ।**
**गोविन्द इति तेनाहं देवैर्वाग्भिरभिष्टुतः ॥'**

इति । **हरिवंशे**ऽपि–

**'गौरेषा तु तथा वाणी तां च विन्दयते भवान् ।**
**गोविन्दस्तु ततो देव मुनिभिः कथ्यते भवान् ॥'**

इति । **'गवादिषु विदेः संज्ञाया'**मिति शः । **'गोविन्दो वासुदेवे स्याद्गवाध्यक्षे बृहस्पता'**विति **विश्वप्रकाशकोशाद्** बृहस्पतिरूपेति वा ॥ ११४ ॥

## संहारिणी रुद्ररूपा तिरोधानकरीश्वरी ।

संहारो जगतः परमाण्वादिसावशेषो ध्वंसस्तमोगुणप्रधानस्येश्वरस्य कृत्यं तत्करोतीति संहारिणी । रुद्रस्तादृश ईश्वरः । रुजं द्रावयतीति वा रोदयतीति वा । संवर्तकालीनाया वृष्टेरेतत्सूर्याख्यनेत्रजन्यत्वेनाश्रुरूपत्वात् । **'सोरोदीद्यदरोदीतद्रुद्रस्य रुद्रत्व'**मिति **श्रुतेः** । **'रुजं द्रावयते तस्माद्रुद्रः पशुपतिः स्मृत'** इति **शिवरहस्याच्च** । **'प्राणा वाव रुद्रा एते हीदं सर्वे रोदयन्ती'**ति **छान्दोग्यात्** । **'रोदेर्णिलुक्‌चे'**त्यौणादिको रक् । अण्यन्तादपि रगित्याहु–

**'तुष्ट्यर्थे ब्रह्मणः पुत्रो ललाटादुत्थितः स्वयम् ।**
**अरुदत्सुस्वरं घोरं जगतः प्रभुरव्ययः ॥'**

---

संहारः जगत् ध्वसनम् । तं करोतीति सा । संहारीण्यै इति ॥ रुद्रः पशुपतिः रूपं यस्याः सा । **रूपायै** इति ॥ तिरोधानं निःशेषेण नाशनम् । तत्करोतीति सा । **कर्यै** इतिं ॥ **ईश्वरी** तिरोधान **कर्त(र्तृ)रूपा** । **ईश्वर्यै** इति ॥

इति **भारते** । **वायवीयसंहितायां** तु–

**'रुद्दुःखं दुःखहेतुर्वा तद्द्रावयति यः प्रभुः ।**
**रुद्र इत्युच्यते तस्माच्छिवः परमकारणम् ॥'**

इत्युक्तं स एव रूपं यस्यास्तथा । तिरोधानमाच्छादनं निरवशेषो ध्वंसः । परमाण्वादेरपि प्रकृतौ लयो दीपनाशतुल्यो घनतरशुद्धसतत्त्वप्रधानस्येश्वरस्य कृत्यं तत्करोतीति तिरोधानकरी । तिरस्करिण्याख्यशक्तिविशेषरूपा वा । तदुक्तं **त्रिपुरासिद्धान्ते**–

**'अभक्तानां च सर्वेषां तिरोधानकरी यतः ।**
**श्रीस्तिरस्करिणी तस्मात्प्रोक्ता सत्यं वरानने ॥'**

इति । ईश्वरपदेन घनतरशुद्धसत्वप्रधान ईश्वर उच्यते । ईश्वरपदस्य मायाया इव तादृशसत्त्वगुणस्यापि शक्यतावच्छेदकत्वेनानेकार्थत्वात् । तदभिन्नत्वादीश्वरी । **'वनोरचे'**ति ङीप् । वस्तुतः **'स्थेशभासे'**ति वरचि गौरादित्वान्ङीप् । अश्नोतेर्वा वरट् इच्चोपधायाः टित्वान्ङीप् । पराहन्तेवैश्वरत्वं तद्वतीत्यर्थः । उक्तञ्च **विरूपाक्ष-पञ्चाशिकायां** विश्वशरीरस्कन्धे–

**'ईश्वरता कर्तृत्वं स्वतन्त्रता चित्स्वरूपता चेति ।**
**एते चाहन्तायाः पर्यायाः सद्भिरुच्यन्तः ॥'** इति ।

## सदाशिवानुग्रहदा पञ्चकृत्यपरायणा ॥ ११५ ॥

विरलतरशुद्धसत्त्वप्रधान ईश्वरः सदाशिवस्तदभेदात्सदाशिवा । अदन्तत्वाट्टाप् । अनुग्रहो निरवशेषध्वंसमापन्नस्य जगतः सृष्ट्यादौ पुनः परमाण्वादिरूपतापत्तिः । सा च तावदुक्तविधस्येश्वरस्य कृत्यं तद्ददाति कुरुत इत्यनुग्रहदा । तिरोधानानुग्रहौ बन्धमोक्षौ वा । एतत्पक्षे बहिरन्तरुन्मेषनिमेषलक्षणयोरीश्वरसदाशिवयोरेतत्प्रदत्वं स्वारसिकं भवति । पञ्चविधानामुक्तरूपाणां कृत्यानां परायणम् आश्रयस्तेषु तत्परा वा । तान्यभीष्टानि यस्या इति वा । **'परायणमभीष्टं स्यात्तत्पराश्रययोरपी'**ति **विश्वः** । उक्तञ्च **मृगेन्द्रसंहितायाम्**–

**'जगज्जन्मस्थितिध्वंसतिरोधानैककारणम् ।**
**भूतभौतिकभावानां नियमस्यैतदेव हि ॥'**

---

सदाशिवा अनुग्रहकर्तृरूपा । शिवायै इति । अनुग्रहः तिरोहितस्य जगतः सृष्टेरादौ प्राथमिकव्यापाररूपः । तं ददाति कुरुते इति सा । अनुग्रहदायै इति ॥ पञ्चसूक्तेषु सृष्ट्यादिकृत्येषु परायणा तत्परा । परायणायै इति ॥ ११५ ॥

इति । आगमान्तरेऽपि–

**'पञ्चविधं तत्कृत्यं सृष्टिः स्थितिसंहृती तिरोभावः ।**
**तद्वदनुग्रहकरणं जगतः सततोदितस्यास्य ॥'**

इति । **देवीभागवते**ऽपि चतुर्थस्कन्धे–

**'सा विश्वं कुरूते कामं सा पालयति पालितम् ।**
**कल्पान्ते संहरत्येव त्रिरूपा विश्वमोहिनी ॥**
**तया युक्तः सृजेद् ब्रह्मा विष्णुः पाति तयान्वितः ।**
**रुद्रः संहरते कामं तया सम्मिलितो जगत् ॥**
**सा बध्नाति जगत्कृत्स्नं मायापाशेन मोहितम् ।**
**अहं ममेति पाशेन सुदृढेन नराधिप ॥**
**योगिनो मुक्तसङ्गाश्च मुक्तिकामा मुमुक्षवः ।**
**तामेव समुपासन्ते देवीं विश्वेश्वरीं शिवाम् ॥'**

इति । आचार्य**भगवत्पादै**रप्युक्तं 'जगत्सूते धाता हरिरवती'त्यादिना । **शक्तिसूत्रे**ऽपि– 'तथापि तद्वत्पञ्चविधकृत्यानि करोती'ति । कृत्यलक्षणान्यप्येतदुत्तर**सूत्रे**–'आभासनरक्ति-विमर्शनबीजा वस्थापनविलापनतस्तानी'ति । एतदर्थः **प्रत्यभिज्ञाहृदये** द्रष्टव्यः ॥ ११५ ॥

## भानुमण्डलमध्यस्था भैरवी भगमालिनी ।

भानुमण्डलस्य सूर्यमण्डलस्य मध्ये तिष्ठतीति तथा । सन्ध्यासमये देव्यास्तत्र ध्येयत्वात् । अन्तरधिकरणे 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यत' इति **श्रुतौ** प्रतिपादितस्य रूपस्य परमेश्वरत्वनिर्णयाच्च । तथा च **कूर्मपुराणे** हिमवत्कृते देवीस्तवे–

**'अशेषवेदात्मकमेकवेद्यं स्वतेजसा पूरितलोकभेदम् ।**
**त्रिलोकहेतुं परमेष्ठिसंज्ञं नमामि रूपं रविमण्डलस्थम् ॥'**

इति । भानुमण्डलमनाहतकमलं वा । भैरवस्य परशिवस्य स्त्री भैरवी । यद्वा भीरूणां स्त्रीणां संहतिर्भैरवी । **'तस्य समूह'** इत्याणि ङीप् । न च काकं शौकं यौवतं गार्भिणमितिवन्नपुंसकापत्तिः । भैरवपदाद्विभूतिसम्बन्धे पुनरणि ङीप्सम्भवात् । तथा च **लैङ्गे**–'**अर्थः शम्भुः शिवा वाणी दिवा शम्भुः शिवा निशे**'त्यारभ्यारुन्धत्यनसूया-शच्यादीनां गौरीरूपत्वं विशिष्यविशिष्योक्त्वान्ते उपसंहृतम् । **'स्त्रीलिङ्गशब्दवाच्या याः सर्वा गौर्या विभूतय'** इति । त्रिपुराम्बाचक्रेश्वरीमन्त्रे मध्यकूटे रेफनिष्कासे तस्य

---

भानोर्यन्मण्डलं तन्मध्ये तिष्ठतीति सा । मध्यस्थायै इति ॥ भैरवस्य परशिवस्य स्त्री भैरवी । भैरव्यै इति ॥ भगं षाड्गुण्यं मलति धारयतीति सा । मालिन्यै इति ॥

भैरवीति संज्ञा । तन्मन्त्रात्मिकेति वा । द्वादशवर्षकन्यारूपा वा । '**द्वादशाब्दा तु भैरवी**'ति कन्यां प्रकृत्य **धौम्योक्तेः** । भगं षाड्गुण्यं मलति धारयतीति भगमालिनी । '**मल मल्ल धारण**' इति धातुः । मालापदाद्वा समष्टिवाचिनो व्रीह्यादित्वादिनिः । भगाङ्कवस्तुमात्ररूपा वा । तथा च **लैङ्ग-देवीभागवतयोः**–

**'ये ये पदार्था लिङ्गाङ्कास्ते ते शर्वविभूतयः ।**
**अर्था भङ्गाङ्किता ये ये ते ते गौर्या विभूतयः ॥'**

इति । तिथिनित्या विशेषरूपा वा । अस्या मन्त्रे **तन्त्रराज-ज्ञानार्णवो**द्धृतप्रकारमपेक्ष्य **दक्षिणामूर्तिसंहितो**द्धृतप्रकारे बहवो भगशब्दाः पठ्यन्ते । तदावरणदेवतानामान्यपि प्रायेण भगशब्दपूर्वाण्येवेति तद्बाहुल्याद्भगमालिनीवेयम् । ब्रह्मरूपत्वात्पद्मासना । प्रकृतिमयपत्रविकारमयकेसरसंविन्नालादिविशेषणशीलं पद्ममेवासनं पीठं यस्या वा । पद्मां लक्ष्मीं सनति भक्तेभ्यो विभज्य ददातीति वा । '**वन षण सम्भक्तौ**' । तदुक्तमभियुक्तैः –

**'असौभाग्यं धत्ते परमसुखभोगास्पदमयं**
**विचित्रं तद्गेहं भवति पृथुकार्तस्वरभृतम् ।**
**निविष्टः पल्यङ्के स कलयति कान्तारतरणं**
**प्रसादं कोपं वा जननि भवतो यत्र कुरुते ॥'**

इति । प्रसादपक्षे असौ इति छेदः । कार्तस्वरं सुवर्णम् । पल्यङ्को मञ्चः । कान्तारस्य तरणमिति । कोपपक्षे असौभाग्यमित्येकं पदम् । अयं इति छेदः । विचित्रं विगतचित्रम् । पृथुकानामार्तस्वरः । पल्या अङ्के कान्ताया रते रणमिति श्लेषेण योज्यम् ।

**पद्मासना भगवती पद्मनाभसहोदरी ॥ ११६ ॥**

पद्मः शूरः पद्मासुरस्तमस्यति क्षिपतीति वा । बिन्द्वादिसम्भवदर्थान्तरमपि योज्यम् । '**पद्म स्यादम्बुजव्यूहनिधिसंख्या हि बिन्दुष्वि**'ति **रभसः** ।

**'ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः ।**
**ज्ञानविज्ञानयोश्चैव षण्णां भग इतीरणा ॥'**

इति । **कालिकापुराणे**–

**'भगमैश्वर्यमाहात्म्यज्ञानवैराग्ययोनिषु ।**
**यशोवीर्यप्रयत्नेच्छाधर्मश्रीरविमुक्तिषु ॥'**

---

पद्मम् आसनं पीठं यस्याः सा । आसनायै इति ॥ भग ऐश्वर्यं अस्या अस्तीति सा । भगवत्यै इति ॥ पद्मनाभस्य विष्णोः सहोदरी सहजाता । सहोदर्यै इति ॥ ११६ ॥

इति । कोशे च प्रसिद्धा भगपदार्था अस्यां सन्तीति भगवती । **देवीभागवते** तु–

**'उत्पत्तिं प्रलयं चैव भूतानां गतिमागतिम् ।**
**अविद्याविद्ययोस्तत्त्वं वेत्तीति भगवत्यसौ ॥'**

इत्युक्तम् । **शक्तिरहस्ये** तु–

**'पूज्यते या सुरैः सर्वैस्तांश्चैव भजते यतः ।**
**सेवायां भजतिर्धातुर्भगवत्येव सा स्मृता ॥'**

इत्युक्तम् । पद्मनाभस्य विष्णोः सहोदरी एकोदरभवा भगिनी । एकमेव ब्रह्म धर्मो धर्मीति रूपद्वयं प्रापत् । तत्र धर्मः पुमान् स्त्रीति द्विधाभवत् । तत्र पुमान् विष्णुः सकलजगदुत्पादनभावं स्त्री तु परमशिवमहिषीभावं प्रापत् । एतत्त्रयमपि मिलित्वैकमखण्डं ब्रह्मेति **शैवमतरहस्यं कूर्मपुराणादिषु** प्रसिद्धं **रत्नत्रयपरीक्षायां दीक्षितै**र्विस्तरेण निरूपितम् । एतदभिप्रायेणैव **ब्रह्मपुराणे** पुरुषोत्तमक्षेत्रमाहात्म्ये–

**'या मेनाकुक्षिसम्भूता सुभद्रा पूर्वजन्मनि ।**
**कृष्णेन सह देवक्याः सास्मिञ्जन्मनि कुक्षिगा ॥'**

इत्यादि स्मर्यते । यत्तु '**सुभद्राप्राणनाथाय जगन्नाथाय मङ्गल**'मिति तत्रैव पठ्यते । तत्र सुभद्रापदं लक्ष्मीपरं तात्त्विकाभेदाभिप्रायं वेति न कश्चिद्विरोध इति । अन्यत्रापि–

**'काञ्चीक्षेत्रे पुरा धाता सर्वलोकपितामहः ।**
**श्रीदेवीदर्शनार्थाय तपस्तेपे सुदारुणम् ॥**
**आत्मैक्यध्यानयुक्तस्य तस्य प्रतपतो मुनेः ।**
**प्रादुर्बभूव त्रिपुरा पद्महस्ता ससोदरा ॥**
**पद्मासने च तिष्ठन्ती विष्णुना जिष्णुना सह ।'**

इति । अत्र कादिविद्याया वाग्भवकूटोद्धारः । पद्मासनः ककारः । भग एकारः । तद्वतीत्यत्र कामकलायाः प्रश्लेषः । पद्मनाभस्योपेन्द्रस्य सहोदर इन्द्रो लकारः । हश्च उदञ्च होदे हकारबिन्दू ताभ्यां सहिता सहोदा । सहोदा च सा रीचेत्यनेन ह्ल्लेखेति रहस्यम् ॥ ११६ ॥

## उन्मेषनिमिषोत्पन्नविपन्नभुवनावली ।

उन्मेषनिमिषौ नेत्रविकाससङ्कोचौ ताभ्यामेव क्रमेणोत्पन्ना विपन्नाश्च सृष्टा नष्टाश्च भुवनानां ब्रह्माण्डानामावल्यः 'पङ्क्तयो' यस्यास्तथा । देव्या अनिमिषत्वेऽपि प्राणिकर्मवशेन तयोरुत्पत्तिसम्भवात् । इच्छामात्रे तात्पर्यात् । तदुक्तमा**ज्ञावतारे**–

---

उन्मेषनिमेषौ नेत्रोन्मीलननिमीलने क्रमेण ताभ्यां उत्पन्नाः सृष्टाः विपन्नाः नष्टाः भुवनानां लोकानाम् आवल्यः पङ्क्तयो यस्याः सा । आवल्यै इति ॥

'**इच्छयैव जगत्सर्वं निगिरत्युद्गिरत्यपी**'ति । '**इच्छामात्रं प्रभोः सृष्टि**'रिति च । **कालिदासेना**प्युक्तम्–

**'दृष्टदृश्यदृशिलक्षणं जगत्प्राक्स्मृतेस्त्वयि तदम्ब संहृतम् ।**
**उन्मिषत्यपि पुनस्त्वदुद्गमे त्वल्लये निमिषति त्वदिच्छया ॥**

इति । **गोरक्षेणाप्युक्तं** महार्थमञ्जर्याम्–

**'विसुउम्मेसदसाए देसिअणाहस्स जंतयोऽवसरो ।**
**कालावत्थप्पढियो विस्सणिमेसेवि तेत्तियो होई ॥'**

इति । [छाया–

**विश्वोन्मेषदशायां देशिकनाथस्य यावानवसरः ।**
**कालावस्थाप्रथितो विश्वनिमिषेऽपि तावानेव भवती ॥**' इति । ]

## सहस्रशीर्षवदना सहस्राक्षी सहस्रपात् ॥ ११७ ॥

'**सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादि**'ति श्रुतौ सहस्रशब्दोऽनन्तपरः । शीर्षशब्दो मुखादेरुपलक्षणम् । लिङ्गं त्वविवक्षितम् ।

**'सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुखम् ।**
**सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति ॥'**

इति **गीतासूपबृंहणदर्शनादित्याशयेनाह**– सहस्रशीर्षवदनेति । '**बहुव्रीहौ सक्थ्यक्ष्णो**'रिति षच्प्रत्ययान्तान्ङीषि सहस्राक्षी । सहस्राणि पादा यस्याः सहस्रपात् । सहस्रपदे नम इति प्रयोगः । '**संख्यासुपूर्वस्ये**'ति समासान्तो लोपः । **देवीभागवते** तृतीयस्कन्धे–

**'सहस्रनयनारामा सहस्रकरसंयुता ।**
**सहस्रशीर्षचरणा भाति दूरादसंशयम् ॥'**

इति । अत्र भुवनस्यावलीत्यनेन भुवनेश्वरीबीजद्वयम् । सहस्राक्षीत्यनेन लकारः । सहस्रशब्दो हकारसकारसाहित्यपरः । तेन द्वितीयतृतीयकूटयोरुद्धारः ॥ ११७ ॥

## आब्रह्मकीटजननी वर्णाश्रमविधायिनी ।

ब्रह्मा सर्वजीवसमष्टिः स्थूलतमो हिरण्यगर्भाख्यो जीवः कीटः अतीन्द्रियतर ऊर्णाभक्षको **वैद्यकतन्त्रे**ककेरुकमकेरुकेति द्वैविध्येन प्रतिपादितः स्तम्बाख्यो जीवविशेषः।

---

सहस्राणि अनन्तानि शीर्षाणि मस्तकानि वदनानि आस्यानि यस्याः सा । वदनायै इति । सहस्राण्यनन्तान्यक्षीणि नेत्राणि यस्याः सा । अक्ष्यै इति ॥ सहस्राणि पादानि चरणानि यस्याः सा । पदे इति ॥ ११७ ॥

ब्रह्मा स्थूलसमष्टिरूपो हिरण्यगर्भाख्यो जीवः । कीटः स्तम्बाख्यो अति सूक्ष्मजीवः । ब्रह्मादिस्तम्बान्तजीवानां जननी । जनन्यै इति ॥ वर्णाश्रमयोः वर्णाश्रमधर्मयोः विधायिनी व्यवस्थापिका । विधायिन्यै इति ॥

आद्यन्तग्रहणेन प्रत्याहारन्यायेन तन्मध्यपतिताः सर्वेऽपि तन्मध्यमपरिमाणकशरीरधारिणो जीवा गृह्यन्ते । आङभिविधौ । ब्रह्मादिस्तम्बान्तजीवजातजनयित्रीत्यर्थः । एवं निर्मितानां जीवानां सन्मार्गप्रदर्शनाय स्वाज्ञारूपवेदात्मिका जाता ।

तत्र कर्मकाण्ड-ब्रह्मकाण्डभेदेन द्विविधे वेदे कर्मणि तिर्यगधिकरणन्यायेन देवानां तिरश्चां चाधिकाराभावान्मनुष्यानेव वर्णाश्रमभेदेन चतुर्धा विभज्य कर्मकाण्डेन मातेव तत्तद्धर्मानपि व्यवस्थापयामासेत्याह–वर्णाश्रमेति । तथा च **कूर्मपुराणे** हिमवत्कृतदेवीस्तवानन्तरम्–

**'अथ सा तस्य वचनं निशम्य जगतोऽरणिः ।**
**सस्मितं प्राह पितरं स्मृत्वा पशुपतिं पतिम् ॥**
**शृणुष्व चैतत्परमं गुह्यमीश्वरगोचरम् ।**
**उपदेशं गिरिश्रेष्ठ ! सेवितं ब्रह्मवादिभिः ॥'**

इत्यादिना साधनान्युक्त्वा–

**'ध्यानेन कर्मयोगेन भक्त्या ज्ञानेन चैव हि ।**
**प्राप्याहं ते गिरिश्रेष्ठ ! नान्यथा कर्मकोटिभिः ॥'**

इत्युपसंहृत्य कर्मयोगनिरूपणार्थं पुनरप्युक्तम्–

**'श्रुतिस्मृत्युदितं सम्यक्कर्म वर्णाश्रमात्मकम् ।**
**अध्यात्मज्ञानसहितं मुक्तये सततं कुरु ॥**
**धर्मात्सञ्जायते भक्तिर्भक्त्या सञ्जायते परम् ।**
**श्रुतिस्मृतिभ्यामुदितो धर्मो यज्ञादिको मतः ॥**
**नान्यतो ज्ञायते धर्मो वेदाद्धर्मो हि निर्बभौ ।**
**तस्मान्मुमुक्षुर्धर्मार्थं मद्रूपं वेदमाश्रयेत् ॥**
**मदाज्ञयैव गुप्त्यर्थं वेदानां भगवानजः ।**
**ब्राह्मणादीन्ससर्जाथ स्वे स्वे कर्मण्ययोजयत् ॥'** इत्यादि ।

**निजाज्ञारूपनिगमा पुण्यापुण्यफलप्रदा ॥ ११८ ॥**

निजां स्वीयामाज्ञां वेदविद्भिः शब्दभावनात्वेन व्यवहृतां रूपयन्ति साध्यसाधनेतिकर्तव्यतारूपांशत्रयविशिष्टामर्थभावनार्थवादादिभिः कुर्वन्ति तादृशा निगमाः

---

निजा स्वकीया या आज्ञा तद्रूपाः । मिगमा वेदादिविद्याः यस्याः सा । निगमायै इति ॥ पुण्यपापयोः विहितनिषिद्धकर्मजन्ययोरदृष्टयोः फलं सुखदुःखरूपं प्रददानिति सा । प्रदायै इति ॥ ११८ ॥

कर्मकाण्डात्मका वेदा यस्यांस्तथा । अत एव '**तद्भूतानां क्रियार्थेन समाम्नाय**' इति **जैमिनिः** । **कौमे**ऽपि–

**'ममैवाज्ञा परा शक्तिर्वेदसंज्ञा पुरातनी ।**
**ऋग्यजुःसामरूपेण सर्गादौ सम्प्रवर्तते ॥'**

इति । [अथवा सन्ति वेदानुयायीनि **शैवतन्त्राणि कामिकादी**न्यष्टाविंशतिः वेदविरुद्धानि कापालभैरवादीनि च ।] तेषु वैदिकानि निगमपदवाच्यानि परमेश्वरस्य मुखादुद्भूतत्वादाज्ञारूपाणि न पुनर्नाभ्यधोभागादुत्पन्नानि वेदविरुद्धानीत्यर्थः । तदुक्तं **देवीभागवत-स्कान्दयोः** –

**'सद्योजातमुखाज्जाताः पञ्चाद्याः कामिकादयः ।**
**वामदेवमुखाज्जाता दीप्ताद्याः पञ्च संहिताः ॥**
**अघोरवक्त्रादुद्भूताः पञ्चाप्तिविजयादयः ।**
**पुंवक्त्रादपि सम्भूताः पञ्च वैरोचनादयः ॥**
**ईशानवदनाज्जाताः प्रोद्गीताद्यष्टसंहिताः ।**
**ऊर्ध्वस्रोतोभवा एते नाभ्यधःस्रोतसः परे ॥'** इत्यादि ।

एवं व्यवस्थापिते वर्णाश्रमधर्मात्मके वेदे विहिताचरणनिषिद्धाचरणाभ्यां सदसत्फलमपि व्यवस्थादार्ढ्यार्थं मातैव ददातीत्याह–

पुण्यापुण्येति । पुण्यपापयोः फले स्वर्गनरकौ प्रददातीति तथा । तदुक्तं **कौर्मे**–

**'ये न कुर्वन्ति तद्धर्मं तदर्थं ब्रह्मणा कृताः ।**
**निरयांस्तेषु शमनः पातयेत्तान्मदाज्ञया ॥**
**धर्मं कुर्वन्ति वेदोक्तं ये मद्भक्तिपरायणाः ।**
**स्वर्गादिषु शचीशाद्यास्तान्नयन्ति मदाज्ञया ॥'**

इति । अन्यत्रापि- '**ईश्वरप्रेरितो गच्छेत्स्वर्गं वा श्वभ्रमेव वे**'ति । '**क्रतौ सुप्ते जाग्रत्त्वमसि फलयोगे क्रतुमता**'मित्यादि । **शिवरहस्ये** श्रुतिरपि–'**एष एव साधु कर्म कारयति यमुन्निनीषत्येष एव ह्यसाधु कर्म कारयति यमधोनिनीषती**'ति । '**फलमत उपपत्ते**'रिति **ब्रह्ममीमांसाधिकरणे**ऽप्ययमेवार्थः साधितः । '**वैषम्यनैर्घृण्ये अपि कर्मसापेक्षत्वान्न भवत**' इति च तत्रैवोक्तम् । **सौरसंहितायामपि**–

**'ननु धर्मो ह्यधर्मश्च स्वस्वकर्ता ह्यधिष्ठितः ।**
**अन्तरेण महादेवं फलं कर्तुः प्रयच्छति ॥**
**इति चेत्तन्न साधूक्तम्..........................।'**

इत्यादिनान्तर्यामिब्राह्मणोपबृंहणपूर्वकं समर्थ्योपसंहृतम् ।

**'श्रुत्यनुग्राहकेणापि ग्राह्यस्तर्केण शङ्करः ।**
**अतः सर्वात्मना साक्षाद्धर्माधर्मफलप्रदः ॥'**

इति ॥ ११८ ॥

## श्रुतिसीमन्तसिन्दूरीकृतपादाब्जधूलिका ।

एवं कर्मकाण्डस्य क्रियार्थत्वमुक्त्वा ब्रह्मकाण्डस्य सिद्धवस्तुप्रतिपादनपरत्वमपि मातुराज्ञैवेत्याह । श्रुतीनां सीमन्ता ऊर्ध्वभागसाम्यादुपनिषदां भागास्तेषु सिन्दूरवत्तदन्तर्गतरहस्यार्थवत्सम्पद्यमाना कृता पादाब्जधूलिश्चरणकमलरजो यया सा तथोक्ता । अत्र विषयस्योपनिषदादेर्निगरणाद्रूपकातिशयोक्तिः । **श्रुतिशब्दस्य** स्त्रीलिङ्गत्वादिवशादप्रस्तुतनायिकामण्डनप्रतीतेश्च समासोक्तिः । ताभ्यामलङ्काराभ्यां वस्तुनो ध्वनिः । वेदा अपि भगवत्याः स्वरूपं शृङ्गग्राहिकया विधिमुखेन प्रतिपादयितुमसमर्था एव । इतरनिषेधमात्रं कुर्वन्तस्तु दूरादेव लज्जिता इव भीता इव वा यथाकथञ्चित्प्रतिपादयन्तीव । तदिदं प्रतिपादनमित्थमिति ज्ञानाजननादत्यल्पतममिति धूलिपदेन ध्वन्यते ।

एतदपि च न वेदानां सामर्थ्यादपि तु मातुराज्ञयैवेति च्विप्रत्ययेन ध्वन्यत इति । तदिदमुक्तमस्माभिः शिवस्तवे—

**'सर्वज्ञाः श्रुतयोऽपि याः परशिव त्वत्प्राणरूपाः प्रियाः**
**शृङ्गग्राहिकया त्रपाभृत इव त्वां न प्रजल्पन्ति ताः ।**
**अन्यानेव तु नेति नेति बहुशो वाचा निषेधन्ति चेत्**
**कोऽन्यस्त्वामिदमित्थमित्यनुवदेत्तत्रापि मादृग्जनः ॥'**

इति । विधिमुखेन प्रतिपादयन्तस्त्वागमाः स्थूलारुन्धतीन्यायेन तटस्थलक्षणरीत्यैव निर्दिशन्तीत्याह ।

## सकलागमसन्दोहशुक्तिसम्पुटमौक्तिका ॥ ११९ ॥

सकलाश्च ते आगमा वेदाश्च तेषां सन्दोहाः समूहा एव शुक्तयस्ताभिः सम्पुटं पुटितं गर्भीकृतं प्रतिपादितं मौक्तिकं नासाभरणं यस्याः सा तथोक्ता । मौक्तिकपदं

---

श्रुतिरूपायाः स्त्रियः सीमन्ते मूर्धभूते उपनिषद्भागे सिन्दूर इव सम्पद्यमाना पदाब्जयोर्धूलिकारजः यस्याः सा । धूलिकायै इति ॥

सकला नाङ्गोपाङ्गसहितानाम् आगमानां वेदानां यः सन्दोहः समुदायः । तद्रूपं यत् शुक्तिसम्पुटं मिलितं मुक्ताशुक्तियुगलं तस्मिन्मौक्तिकमिवस्थिता । मौक्तिकायै इति ॥ ११९ ॥

समीपवर्तिसृष्ट्यादिधर्मोपलक्षकं स्थूलतारकासाम्यात्तन्यायस्मारकञ्च। अम्बामुखसमीपवर्त्यसाधारणं मौक्तिकाद्येव वेदैः प्रतिपाद्यते न तु तस्याः स्वरूपम्। **'यतो वाचो निवर्तन्त'** इत्यादि**श्रुते**रिति भावः। यद्वा मुक्ताशब्दात्स्वार्थे कप्रत्ययोत्तरं तद्धितेन मौक्तिकमिति नपुंसकरूपसिद्धावपि प्रथममेवाणन्तान्ङीपि कृते पश्चात्कप्रत्यये 'ङ्यापोः **संज्ञाच्छन्दसोर्बहुल**'मिति ह्रस्वे घटी घटिकेतिवन्मौक्तिकेति स्त्रीलिङ्गमपि रूपं भवति। मौक्तिकवदाचरतीत्यर्थे क्विबन्तात् **'अप्रत्यया'**दित्यनेनाकारप्रत्यये सत्यदन्ताट्टाब्वा। एवमेव मिथ्याजगदधिष्ठानेत्यादिवक्ष्यमाणनामसु द्रष्टव्यम्। तेनागमसन्दोह एव शुक्तिमयः सम्पुटः समुद्गकस्तत्र मौक्तिकेव मौक्तिकेति तत्पुरुष एवेति न परवल्लिङ्गताविरोधभयेन बहुव्रीहिराश्रयणीय इति रूपकोत्प्रेक्षे। श्रुतिसीमन्तेत्यादिना त्रैवर्णिकोपास्यत्वं सकलागमेत्यादिना चतुर्थवर्णोपास्यत्वं ध्वनितमिति वा। तथा च **रुद्रयामले**—

> **'यद्वेदैर्गम्यते स्थानं तत्तन्त्रैरपि गम्यते।**
> **ब्रह्मक्षत्रियविट्शूद्रास्तेन सर्वेऽधिकारिणः॥'**

इति ॥ ११९ ॥

## पुरुषार्थप्रदा पूर्णा भोगिनी भुवनेश्वरी।

धर्मादींश्चतुरः पुरुषार्थान् प्रददातीति तथा,

> **'येऽर्चयन्ति पराशक्तिं विधिनाऽविधिनापि वा।**
> **न ते संसारिणो नूनं मुक्ता एव न संशयः॥**
> **तस्मादशेषवर्णानां त्रिपुराधनं विना।**
> **न स्तो भोगापवर्गौ तु यौगपद्येन कुत्रचित्॥'**

इति **ब्रह्माण्डपुराणात्**। 'पुरुषो वै रुद्र' इति **श्रुत्या** रुद्रः अर्थप्रदः पुरुषार्थदातृत्ववान्यया सेति वा। निष्कलस्य ब्रह्मण उपास्यत्वं फलप्रदत्वं च शक्त्यायत्तमिति भावः। देशकालवस्तुकृतपरिच्छेदराहित्यात्पूर्णा।

> **'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते।**
> **पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते॥'**

इति **श्रुतेः**। पञ्चमीदशमीपञ्चदशीतिथिस्वरूपा वा। शुक्लपक्षचतुर्दशीरात्रिस्वरूपा वा। नदीविशेषरूपा वा। भोगः सुखसाक्षात्कारस्तद्वती भोगिनी। नागकन्यात्मिका वा। भुवनानां चतुर्दशसंख्याकलोकानामीश्वरी स्वामिनी। भुवनशब्दो

---

पुरुषार्थान् प्रददातीति सा। प्रदायै इति॥ पूर्णा अपरिच्छेद्या। पूर्णायै इति॥ भोगः सुखादिसाक्षात्कर अस्या इति। भोगिन्यै इति॥ भुवनानां लोकानां ईश्वरी स्वामिनी। ईश्वर्यै इति॥

जलपरो वा । हृल्लेखाभिमानिदेवतारूपा वा । हृल्लेखात्मकमन्त्रस्वरूपा वा । **त्रिपुरासिद्धान्ते** तु–

**'भुवनानन्दनाथस्य प्रसन्नत्वान्महेश्वरी ।**
**भुवनेष्वतिविख्याता शाम्भवी भुवनेश्वरी ॥'**

इत्युक्तम् । भुवनानन्दनाथो नाम मानवौघान्तर्गतो गुरुविशेषः । **दक्षिणामूर्ति- संहितायां** तु घटार्गलयन्त्रपटले **'एकाक्षरेऽपि देवेशि सन्त्यत्र भुवनानि त्वि'**त्युपक्रम्य हृल्लेखा-घटकाक्षरेषु हकारादिषु **'व्योमबीजे महेशानि कैलासादिप्रतिष्ठित'**मित्यादिना प्रत्येकं भुवनादिसद्भावं प्रतिपाद्य **'अत एव महेशानी भुवनाधीश्वरी स्मृते'**त्युपसंहृत्य **'हकाराद्व्योमतुर्येण स्वरेणानिलसम्भव'** इत्यादिना भुवनजनकत्वमप्युक्त्वा **'अत एव महेशानी भुवनेशीति कथ्यत'** इत्युपसंहारेण द्वेधा निरुक्तम् ।

## अम्बिकाऽनादिनिधना हरिब्रह्मेन्द्रसेविता ॥ १२० ॥

अम्बैवाम्बिका । जगन्माताभारतीपृथ्वीरुद्राण्यात्मकेच्छाज्ञानक्रियाशक्तीनां समष्टि-रम्बिकेत्युच्यते तद्रूपा वा । रात्रिरूपा निद्रारूपा वा । **'अम्बिका कैतवे सिद्धे निद्रायां निशि कीर्त्यत'** इति **विश्वः** । उक्तञ्च **नवरात्रदीपे स्कान्दे**–**'रात्रिरूपा महादेवी दिवारूपो महेश्वर'** इति । **हरिवंशे**ऽपि–

**'या ह्येषा गह्वरी माया निद्रेति जगति स्थिता ।**
**तस्यास्तनुस्तमोद्वारि निशादिवसनाशिनी ॥**
**जीवितार्धहरी घोरा सर्वप्राणिभृतां भुवि ।**
**नैतया कश्चिदाविष्टो जृम्भमाणो मुहुर्मुहुः ॥**
**सक्तः प्रसहितुं वेगं मज्जन्निव महार्णवे ।**
**देवीष्वपि दधारैनां नान्यो नारायणादृतः ॥'**

इति । **मार्कण्डेयपुराणे**ऽपि–

**'विश्वेश्वरीं जगद्धात्रीं स्थितिसंहारकारिणीम् ।**
**स्तौमि निद्रां भगवतीं विष्णोरतुलतेजसः ॥'**

इत्यादि । आदिर्जननं निधनं मरणञ्च न विद्यते यस्याः साऽनादिनिधना । अथवाऽनादिशब्दादादिशब्दाद्वा **वररुचि**परिभाषानुसारेणाशीतिसंख्योच्यते । आदि-संख्याकानि च तानि निधनानि च । आयुर्घृतमितिवत्साधनलक्षणया मरणसाधनान्य-मृतत्वविघातकानीति यावत् । न विद्यन्ते आदिनिधनानि यस्या उपासनया

---

अम्बैवाम्बिका जगन्माता । अम्बिकायै इति ॥ आदिनिधने जन्ममृत्यू न विद्येते यस्याः सा । निधनायै इति । हरिब्रह्मेन्द्रैः सेविता । सेवितायै इति ॥ १२० ॥

साऽनादिनिधना । निधनसाधनानि तावत्पाशवधभेदेन द्विविधानि । तत्र वधा अष्टाविंशतिविधाः । '**अहंकृता अहंमाना अष्टाविंशद्वधात्मिका**' इति **विष्णुपुराणात्** । पाशास्तु द्विपञ्चाशद्विधाः । '**द्वापञ्चाशदमी पाशा अविद्यापर्वसम्भवा**' इति **लिङ्गपुराणात्** । एवमशीतिः । तेषु वधनिरूपणं **सांख्यतन्त्रे** । तत्र समाससूत्राणि–'**अष्टाविंशतिधा शक्तिः । नवधा तुष्टिः । अष्टधा सिद्धि**'रिति । एतेषामर्थस्तु कारिकाभिरुक्तः–

**'एकादशेन्द्रियवधाः सहबुद्धिवधैरशक्तिरुद्दिष्टा ।**
**सप्तदशधा तु बुद्धेर्विपर्ययात्तुष्टिसिद्धीनाम् ॥**
**आध्यात्मिकाश्चतस्रः प्रकृत्युपादानकालभाग्याख्याः ।**
**बाह्या विषयोपरमात्पञ्चान्यास्तुष्टयोऽभिहिताः ॥**
**ऊहः शब्दोऽध्ययनं दुःखविघातास्त्रयः सुहृत्प्राप्तिः ।**
**दानं च सिद्धयोऽष्टौ सिद्धेः पूर्वाङ्कुशस्त्रिविधः ॥'**

इति । अयमर्थः । मुक्तेः पूर्वाङ्कुशः प्रतिघातकस्त्रिविधः अशक्तिस्तुष्टिः सिद्धिश्चेति । तत्राशक्तिर्नामेन्द्रियाणां स्वार्थग्रहणासामर्थ्यमान्ध्यबाधिर्यादिवैकल्यकृतम् । सा चेन्द्रियाणामेकादशत्वादेकादशधा । तुष्टिस्तावद्द्विविधा–आध्यात्मिकबाह्यभेदात् । तत्राद्या प्रकृत्यादिभेदाच्चतुर्धा । अष्टविधायां प्रकृत्यां चित्तलयान्मुक्तोऽस्मीति तुष्टिः प्रकृत्याख्या । संन्यासवेषमात्रोपादानात्कृतार्थोऽस्मीति तुष्टिरुपादानाख्या । कालत एव सेत्स्यति किं ध्यानक्लेशेनेति तुष्टिः कालाख्या । दैवोदयादेव सेत्स्यतीति तुष्टिर्भाग्याख्या । एताश्चात्मानमधिकृत्य भवन्तीत्याध्यात्मिकाः । बाह्यास्तु शब्दादिविषयपञ्चकभेदेन पञ्चविधाः अर्थानामर्जनरक्षणव्ययनाशादिदोषाणां शब्दादिषु विद्यमानानां कतिपयेषां दोषाणां च दर्शनेन तत्तद्विषयेष्वलंबुद्धिरूपाः । एवं नव तुष्टयः । एतासां सलिलाद्युत्तमाम्भःपर्यन्तानि नामानि तारादिसमुदितान्तानि सिद्धिनामानि चाकर एव द्रष्टव्यानि । सिद्धिरष्टविधा । ऊहादिभेदात् । उपदेशानपेक्षमेवार्थोन्नयनमूहसिद्धिः । प्रासङ्गिकाच्छब्दश्रवणादर्थज्ञानं शब्दसिद्धिः । गुरूपदेशादेव ततो विवेकार्थज्ञानमध्ययनसिद्धिः । आध्यात्मिकाधिदैविकाधिभौतिकरूपदुःखत्रयविघातात्मिकास्तिस्रः सिद्धयः । सुहृत्प्राप्तितोऽर्थसिद्धिरेका विद्वत्तपस्विशुश्रूषालभ्यार्थसिद्धिरेकेत्यष्टौ सिद्धयो नव तुष्टयश्च । एतासां सप्तदशानां विपर्ययोऽपि सप्तदशविधः । अस्तेत्यादिप्रमुदितान्तानि तन्नामान्याकरे द्रष्टव्यानि । एतेऽप्यशक्तिबुद्धिपदवाच्याश्चेति सप्तदश । एकादशभिरिन्द्रियशक्तिभिः सहाष्टाविंशतिर्वधा इति । एतेषां च व्यवस्थोक्ता **वायुपुराणे**–

**'अष्टमोऽनुग्रहः सर्गः स चतुर्धा व्यवस्थितः ।**
**विपर्ययेण चाशक्त्या सिद्ध्या तुष्ट्या तथैव च ॥**
**स्थावरेषु विपर्यासात्तिर्यग्योनिस्वशक्तितः ।**
**सिद्ध्यात्मना मनुष्येषु तुष्ट्या देवेषु कृत्स्नशः ॥'**

इति दिक् । हरिब्रह्मेन्द्रैर्विष्णुविधिशक्रैः सेवितोपासिता । श्रीनगरेऽष्टादशसप्तदशप्राकारयोर्मध्ये विष्णोः सप्तदशषोडशयोर्मध्ये ब्रह्मणः पञ्चदशचतुर्दशयोर्मध्ये चेन्द्रादिलोकपालानां देवीसेवार्थं निवासस्मरणात् । **देविभागवते**ऽपि–

**'ब्रह्मा विष्णुस्तथाशम्भुर्वासवो वरुणो यमः ।**
**वायुरग्निः कुबेरश्च त्वष्टा पूषाश्विनौ भगः ॥**
**आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ।**
**सर्वे ध्यायन्ति तां देवीं सृष्टिस्थित्यन्तकारिणीम् ॥'**

इति । एतेन विष्णुब्रह्मादिमात्रविषयकागमद्रष्टॄणां विष्ण्वादिविषयकतत्त्वज्ञानाभावात्तदुपासनायां प्रवृत्तावपि देव्यागमदर्शिनां विशेषदर्शनान्न तदुपासनायां प्रवृत्तिः । न हि भिक्षुको भिक्षुकान्याचितुमर्हति सत्यस्मिन्नभिक्षुक इति न्यायविरोधादिति ध्वन्यते । तदिदमुक्तमस्माभिः **शिवस्तवे**–

**'त्वद्दत्तैश्वर्यभाजः परमशिव कथङ्कारमन्यानमर्त्यान्**
**याचे देहीति शक्रद्रुहिणहरिमुखान्भिक्षुकान्भिक्षुकोऽहम् ।**
**अज्ञोऽपि द्वादशाहक्रतुविकृतिशतोक्थ्याङ्गभूतोपि चोक्थ्यो**
**ज्योतिष्टोमोक्थ्यधर्मानभिलषति न तु द्वादशाहोक्थ्यधर्मान् ॥'**

इति ॥ १२० ॥

## नारायणी नादरूपा नामरूपविवर्जिता ।

नरस्यापत्यमित्यर्थे नडादित्वात्फकि नारायणः शिवो विष्णुर्वा तस्येयं नारायणी । नारायणपदनिरुक्तिस्तावन्मनुस्मृतौ–

**'आपो नारा इति प्रोक्ता आपो वै नरसूनवः ।**
**अयनं तस्य ता यस्मात्तेन नारायणः स्मृत ॥'**

इति । **ब्रह्मवैवर्ते**ऽपि– **'नराणामयनं यस्मात्तस्मान्नारायणः स्मृत'** इति । अत्र नारशब्दो जीवपरः । **'नॄ नये'** इति धातुमभिप्रेत्य **'नयतीति नरः प्रोक्तः परमात्मा सनातन'** इति **देवीभागवतात्** । नरस्येमे नारा इति व्युत्पत्तिसम्भवात् । **महाभारते** तु–

**'नराज्जातानि तत्त्वानि नाराणीति विदुर्बुधाः ।**
**तान्येव चायनं तस्य तेन नारायणः स्मृतः ॥'**

---

नारायणस्य स्त्री भगिनी वा नारायणी । नार[ाय]ण्यै इति ॥ नादः शक्तिः बिन्दुनादमणिपीठमण्डलमित्यत्र तथा व्याख्यानात् संरूपं यस्याः सा । रूपायै इति ॥ नामरूपाभ्यां विशेषेण वर्जिता रहिता । वर्जितायै इति ॥

इत्युक्तस्य नारायणस्य परमशिवस्य स्त्री नारायणी । तुरीयं प्रकृत्य '**सः श्रीपतिः सोऽपि च पार्वतीपति**'रिति **काशीखण्डात्** । लक्ष्म्यभेदाभिप्रायेण वेयमुक्तिः । वस्तुतस्तु '**पुंयोगादाख्याया**'मिति सूत्रे पुंयोगपदेन न वधूवरभाव एव विवक्षितः । पितृ-पुत्रीभावरूपसम्बन्धस्यापि तत्रोदाहरणदर्शनात् । तेनेह भ्रातृभगिनीभावरूपे पुंयोगे ङीप् । नारायणभगिनीत्यर्थः । अत एव '**नारायणीसहचराय नमः शिवाये**'-त्यत्रैवमेव व्याचक्षते । नारायणस्य गौर्या सहाभेदादपि नारायणी । तदुक्तं **कूर्मपुराणे** गुणिशिवेन—

**'अहं नारायणो गौरी जगन्माता सनातनी ।**
**विभज्य संस्थितो देवः स्वात्मानं परमेश्वरः ॥**
**न मे विदुः परं तत्त्वं देवाद्या न महर्षयः ।**
**एकोऽहं वेद विश्वात्मा भवानी विष्णुरेव च ॥'**

इति । **देवीपुराणे** तु—

**'जलायनानले (?) कुर्यात्समुद्रशयनाथवा ।**
**नारायणी समाख्याता नरनारीः प्रकुर्वति ॥'**

इति । इयं च सुपार्श्वक्षेत्रे प्रसिद्धा । उक्तञ्च **पाद्मे** देवीक्षेत्राध्याये— '**नारायणी सुपार्श्वे तु त्रिकूटे भद्रसुन्दरी**'ति ।

ह्रींकारादिषु बिन्दोरुपर्यर्धचन्द्ररोधनीनादनादान्तशक्तिव्यापका समनोन्मन्याख्याः सूक्ष्मसूक्ष्मतरसूक्ष्मतमरूपा अष्टौ वर्णा वर्तन्ते तेषु तृतीयो वर्णो नाद इत्युच्यते । तत्स्वरूपं च **महास्वच्छन्दतन्त्रे**—

**'रोधिन्याख्यं यदुक्तं ते नादस्तस्योर्ध्वसंस्थितः ।**
**पद्मकिञ्जल्कसङ्काशः सूर्यकोटिसमप्रभः ॥**
**पुरैःपरिवृतोऽसंख्यैः............................।'**

इत्यारभ्य

**'तस्योत्सङ्गगतामूर्ध्वगामिनीं परमां शिवाम् ।**
**ध्यायेत्.......................................॥'**

इत्यन्तं तादृशे नादे रूपं यस्याः सा । नाद एव रूपं यस्या इति वा । सन्ति हि परस्परविवेकेन चिदचिद्ग्रन्थिरूपेण भासमानानि जगतः पञ्च रूपाणि ।

**'अस्ति भाति प्रियं नाम रूपं चेत्यंशपञ्चकम् ।**
**आद्यत्रयं ब्रह्मरूपं जगद्रूपं ततो द्वयम् ॥'**

इत्य**भियुक्तै**र्विवेचितानि । तत्र जगद्रूपयोर्नामरूपयोर्मिथ्यात्वात्ताभ्यं विवर्जिता । असत्यसत्ययोः सम्बन्धस्यापि मिथ्यात्वेन वास्तविकस्ताभ्यां सम्बन्धः सत्येन स भवतीति भावः । आमनन्ति च छन्दोगाः । '**अकाशो ह वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्मे**'ति । चिच्छक्तिरूप आकाश एव नामरूपयोर्निर्वाहकस्तदुभयं विना यदधिष्ठानमात्रमवशिष्यते तदेव ब्रह्मेति तदर्थः ॥

**इति भास्कररायेण कृते सौभाग्यभास्करे ।**
**मरीच्याख्या कला तुर्या जाता नाम्नां शतत्रयात् ॥ ३०० ॥**

**इति श्रीपदवाक्येत्यादिभास्कररायोन्नीते ललितासहस्रनामभाष्ये**
**तृतीयशतकं नाम चतुर्थी मरीचिः कला ॥ ४ ॥**



# चतुर्थशतकं नाम पञ्चमी ज्वालिनी कला

**—ह्रींकारी ह्रीमती**

ह्रीं लज्जां करोतीति ह्रींकारी। कर्मण्यणन्ताण्डीप्। द्वितीयाया अलुक्। यद्वा ह्रीमिति स्वरादेराकृतिगणत्वादव्ययम्। अत एव **त्रिशत्यामेकोनशततमस्य** नाम्नश्च-तुर्थ्यन्तो 'ह्रीं नम' इत्येव प्रयोगः। तस्यार्थस्तु **स्वतन्त्रतन्त्रे** व्याकुलाक्षरश्लोकेनोक्तः—

**'त्वंकामाम्नानप्रशव्यो नानमसग्निमात्वग्रा।**
**रोमईयोकार्विर्शतानन्तफादुलनान्निबिम्** ॥' इति।
**'देवतारथगो इति यो वेत्ति न क्रमम्।**
**स व्याकुलाक्षरे मूको देवतारथगोऽपि सन्॥'**

इति तु वाचनक्रमः। सृष्टिस्थितिसंहारास्तदर्थत्वेन पर्यवस्यन्ति तान्करोतीति ह्रींकारी। अथवा वर्णात्कारप्रत्ययोऽयम्। गौरादेराकृतिगणत्वान्ङीप्। भुवनेश्वरी-बीजस्वरूपेत्यर्थः। ह्रीरस्या अस्तीति ह्रीमती। तथा च श्रूयते—'**लज्जामती तुष्टिरिष्टा च पुष्टे**'ति॥

*अथ परिभाषायामष्टत्रिंशन्नामानि विभजते—*

***राजतरेखितलिङ्गैरहरत्तैर्द्विर्विभूरतौ रेतः।***
***हालामदभुविरक्तो गुणदम्भो वाजिगीर्णं द्विः॥ १५॥***

*द्विर्द्विरिति चतुश्चतुरक्षरे द्वे द्वे नामनी॥ १५॥*

**—हृद्या हेयोपादेववर्जिता॥ १२१॥**

हृदि भवा हृद्या मुनिहृन्निवासिनी, रमणीया वा। हातुमुपादातुञ्च योग्ये हेयोपादेये ताभ्यां वर्जिता। प्रवृत्तिनिवृत्तिबोधकशास्त्राणामविद्यावद्विषयत्वात्॥ १२१॥

**राजराजार्चिता राज्ञी रम्या राजीवलोचना।**

---

ह्रींकारी मायाबीजरूपा। ह्रींकार्यै इति॥ ह्रीरस्यास्तीति ह्रीमती। ह्रीमत्यै इति॥

हृद्या रमणीया। हृद्यायै इति। हेयोपादेयाभ्यां हानोपादानविषयाभ्यां वर्जिता रहिता। वर्जितायै इति॥ १२१॥

राजराजैरिन्द्रादिभिरर्चिता। अर्चितायै इति॥ राज्ञः कामेश्वरस्य महिषीत्वाद्राज्ञी। राज्ञ्यै इति॥ रम्या सुन्दरी। रम्यायै इति। राजीवः कमलं तत्तुल्यानि लोचनानि यस्याः सा। लोचनायै इति॥

राजराजो मनुः कुबेरश्च ताभ्यामर्चितोपासिता, कुबेरादिविद्यारूपा वा। अतएव चतुर्दश-पञ्चदशप्राकारयोर्मध्यभूमिं वर्णयतोक्तं **दुर्वासामुनिना**—

**'तल्लोकपूर्वभागे धनदं ध्यायामि शेवधिकुलेशम्।**
**अपि माणिभद्रमुख्यानम्बाचरणावलम्बिनो यक्षान्॥'**

इति। तल्लोकेति तत्पदस्य वायुरर्थः। राजराजेश्वरस्य पट्टमहिषीत्वाद्राज्ञी। रम्या सौन्दर्यवती। राजीवशब्देन पद्मं हरिणो मत्स्यो वा गृह्यते। तद्वल्लोचने यस्याः सा राजीवलोचना। '**राजीवाख्या मृगे मत्स्ये पद्मे राजोपजीविनी**'ति **विश्वः**। राजोपजीविनो लोचयति पश्यतीति वा।

## रञ्जनी रमणी रस्या रणत्किङ्किणिमेखला॥ १२२॥

भक्तान् रञ्जयतीति रञ्जनी। शुद्धस्फटिकसंकाशं परमशिवमरुणादेवीजपाकुसुमवत्सान्निध्यमात्रेण रञ्जयतीति वा। भक्तान् रमयति तैः सह क्रीडतीति रमणी। '**जक्षन् क्रीडन् रममाण**' इति **श्रुतेः**। रसयितुमास्वादितुं योग्या रस्या। '**रसो वै स**' इति **श्रुतेः**। रणन्त्यः किङ्किणयः क्षुद्रघण्टिका यस्यां तादृशी मेखला रशना यस्याः सा॥ १२२॥

## रमा राकेन्दुवदना रतिरूपा रतिप्रिया।

**सूतसंहितायाम्**— '**लक्ष्मीवागादिरूपेण नर्तकीव विभाति ये**'त्युक्तरीत्या लक्ष्मीस्वरूपत्वाद्रमा। '**कलाहीने सानुमतिः पूर्णे राका निशाकरे**' इत्याग्नेयपुराणस्थकोशबलाद्राकेन्दुवत्पूर्णचन्द्रवद्वदनं यस्याः। रतिरेव रूपं यस्याः कामपत्नीत्वात्। रमा ईकारः। राकेन्दुवदना अनुस्वारसहिता चेद्रतिरूपा कामकला भवतीत्युद्धारः। रतिः कामपत्नी रतं वा प्रियं यस्याः।

## रक्षाकरी राक्षसघ्नी रामा रमणलम्पटा॥ १२३॥

---

भक्तान् रञ्जयतीति सा। रञ्जिन्यै इति॥ भक्तान् रमयतीति सा। रमण्यै इति॥ योगिभिः रसयितुम् आस्वादयितुं योग्या। रस्यायै इति॥ रणत्किङ्किणीयुक्ता मेखला यस्याः सा। मेखलायै इति॥ १२२॥

श्रीरूपत्वाद्रमा। रमायै इति॥ राकेन्दुः पूर्णचन्द्रः तत्तुल्यं वदनं यस्याः सा। वदनायै इति॥ रतिरिव कामपत्नीव जगन्मोहनं रूपं यस्याः सा। रूपायै इति॥ रतिः प्रिया यस्याः सा। प्रियायै इति॥

भक्तानां रक्षां करोतीति सा। कर्यै इति॥ राक्षसान् हन्तीति सा। राक्षसघ्न्यै इति॥ स्त्रीरूपत्वाद्रामा। रामायै इति॥ रमणे पुरुषे कामेश्वरे लम्पटा लालसा। लम्पटायै इति॥ १२३॥

रक्षा रक्षणं भस्म वा तत्कर्तृत्वाद्रक्षाकरी स्थितिसंहारकर्त्री । रक्षांस्येव राक्षसास्तान्हन्तीति राक्षसघ्नी । रामा स्त्रीमात्रस्वरूपा । रमन्तेऽस्यां योगिन इति वा '**ज्वलितिकसन्तेभ्यो ण**' इति णः । '**स्त्रीलिङ्गमखिलं गौरी**'ति लैङ्गात् । तत्रैव स्थलान्तरे–

**'शङ्करः पुरुषाः सर्वे स्त्रियः सर्वा महेश्वरी ।**
**पुंल्लिङ्गशब्दवाच्या ये ते च रुद्राः प्रकीर्तिताः ॥**
**स्त्रीलिङ्गशब्दवाच्या याः सर्वा गौर्या विभूतयः ।**
**एवं स्त्रीपुरुषाः प्रोक्तास्तयोरेव विभूतयः ॥'**

इति । **विष्णुपुराणे**ऽपि–

**'देवतिर्यङ्मनुष्यादौ पुंनाम्नि भगवान्हरिः ।**
**स्त्रीनाम्नि लक्ष्मीर्मैत्रेय नानयोर्विद्यते परम् ॥'**

इति । **ब्रह्मवैवर्ते**ऽपि–

**'यत्किञ्चित्त्रिषु लोकेषु स्त्री रूपं देवि दृश्यते ।**
**तत्सर्वं त्वत्स्वरूपं स्यादिति शास्त्रेषु निश्चयः ॥'**

इति । अतएव बृहत्पराशरस्मृतौ–

**'स्त्रियस्तुष्टाः स्त्रियो रुष्टास्तुष्टा रुष्टाश्च देवताः ।**
**वर्धयन्ति कुलं तुष्टा नाशयन्त्यपमानिता ॥'**

इति । निखिलस्त्रीरूपत्वादेव स्वस्वरमणेषु पतिषु रमणे सम्भोगे वा क्रीडायां वा लम्पटा लालसा सतृष्णा ॥ १२३ ॥

**काम्या कामकलारूपा कदम्बकुसुमप्रिया ।**

ज्ञानेन प्राप्तव्यत्वेन मुमुक्षुभिः काम्यामानत्वात्काम्या । कृष्णपक्षद्वादशीरात्रिरूपा वा । बिन्दुत्रयं हार्धकला चेत्यत्र प्रथमो बिन्दुः कामाख्यश्चरमा कला चेति प्रत्याहारन्यायेन कामकलेत्युच्यते । तस्याः स्वरूपं '**स्फुटशिवशक्तिसमागमबीजाङ्कुररूपिणी पराशक्ति**'रित्यारभ्य '**कामः कमनीयतया कला च दहनेन्दुविग्रहौ बिन्दू**' इत्यन्तेन निर्णीतं **कामकलाविलासे** तद्रूपेत्यर्थः । कामो योनिः कमलेति वा । तदुक्तं **त्रिपुरासिद्धान्ते**–

**'तस्य कामेश्वराख्यस्य कामेश्वर्याश्च पार्वति ।**
**कलाख्या सविलासा च ख्याता कामकलेति सा ॥'**

---

योगिभिः काम्यमानत्वात्काम्या । काम्यायै इति ॥ कामस्य मन्मथस्य या जगन्मोहिनी कलाशक्तिः तद्रूपं यस्याः सा । रूपायै इति ॥ कदम्बकुसुमानि प्रियाणि यस्याः सा । प्रियायै इति ॥

इति । कामा चासौ कलारूपा चेति वा । कामपदमात्रवाच्यतायाः **कालीपुराणे** प्रतिपादनात्–

**'कामार्थमागता यस्मान्मया सार्धं महागिरौ ।**
**कामाख्या प्रोच्यते देवी नीलकूटरहोगता ॥**
**कामदा कामिनी काम्या कान्ता कामाङ्गदायिनी ।**
**कामाङ्गनाशिनी यस्मात्कामाख्या तेन कथ्यते ॥'**

इति । कदम्बकुसुमानि नीपपुष्पाणि प्रियाणि यस्याः सा ।

## कल्याणी जगतीकन्दा करुणारससागरा ॥ १२४ ॥

मङ्गलस्वरूपत्वात्कल्याणी । **पाद्मे देवीपुराणे** च **'कल्याणी मलयाचल** 'इति परिगणितमूर्तिविशेषरूपा । शुभात्मका वाणी कल्या तामेवाणति शब्दायतेऽसौ कल्याणी । जगत्याः कन्दः पूरणं मूलं वा यस्याः सा । **'कन्दः स्यात्पूरणे सस्यमूले जलधरेऽपि चे**'ति **यादवः** । करुणैव रसो येषु तादृशाः सागराः यस्यां सा । सागरेभ्योऽप्यधिकतमकरुणाशीलेति यावत् । तत्पुरुषपक्षे कन्दसागरपदयोः परवल्लिङ्गतया पुंस्त्वापत्तिः ॥ १२४ ॥

## कलावती कलालापा कान्ता कादम्बरीप्रिया ।

चतुःषष्टिसंख्याः कला अस्यां सन्तीति कलावती । कल एवालापो भाषणं यस्याः सा । कलो मञ्जुल आलापो यस्या इति वा । **'ध्वनौ तु मधुरास्फुटे । कल'इत्यमरः** । कं ब्रह्म तस्य लालावत् लक्षणया अतिसुलभः आपः प्राप्तिर्यस्याः सकाशादिति वा । कं लालापं लालाजलप्रायं ययेति वा । अपां समूह आपम् **'ऋक्पूरब्धू'**रिति समासान्तो वा । कान्ता कमनीयत्वात् । कं ब्रह्मैवान्तः सिद्धान्तो यस्या इति वा । कृष्णैकादशीरात्रिरूपा वा । कादम्बरी उत्तमा मदिरा सैव प्रिया यस्याः । अत एव **श्रुतिः**–

**परिस्रुतं झषमाद्यं पलं च भक्तानि योनीः सुपरिष्कृतानि ।**
**निवेदयन्देवतायै महत्यै स्वात्मीकृत्य सुकृती सिद्धिमेति ॥'** इति ।

---

कल्याणी शुभरूपा । कल्याण्यै इति ॥ जगत्याः प्रपञ्चस्य कन्दं मूलं यस्याः सा । कन्दायै इति ॥ करुणैव रसो येषु तादृशाः सागराः यस्या सा । सागरायै इति ॥ १२४ ॥

कलाश्चतुःषष्टिसंख्याः अस्यां सन्तीति सा । कलावत्यै इति ॥ कला मधुरा आलापाः वचनानि यस्याः सा । अलापायै इति ॥ कान्ता कमनीयत्वात् । कान्तायै इति ॥ कादम्बरी मदिरा प्रिया यस्याः सा । प्रियायै इति ॥

## वरदा वामनयना वारुणीमदविह्वला ॥ १२५ ॥

ब्रह्मविष्ण्वादिभ्य उपासकेभ्यो वरान् दत्त इति वरदा । तदुक्तं **मात्स्य-पाद्मयोर्नारदेन**–

**'यच्चाहमुक्तवानस्या उत्तानकरतां सदा ।**
**उत्तानो वरदः पाणिरेष देव्याः सदैव तु ॥**
**सुरासुरमुनिव्रातवरदेयं भविष्यति ।'**

इति । अत्र दानस्य प्रायेण हस्तकरणकत्वाद्वरदः पाणिरित्युक्तम् । वस्तुतो देवकामनापूर्तिमात्रे तात्पर्यं न तु वरदमुद्राधारणेऽपि । **भगवत्पादाचार्यै**–

**'त्वदन्यः पाणिभ्यामभयवरदो दैवतगण-**
**स्त्वमेका नैवासि प्रकटितवराभीत्यभिनया ॥'**

इत्युक्ते

**'वरार्थिभ्य सुरादिभ्यः कामान्पूरयतीश्वरी ।**
**धातुर्वृञ् वरणे प्रोक्तस्तेन सा वरदा स्मृता ॥'**

इति **देवीभागवताच्च** वाराहेऽपि वेत्रासुरवधप्रकरणे–

**'नवम्यां च सदा पूज्या इयं देवी समाधिना ।**
**वरदा सर्वलोकानां भविष्यति न संशयः ॥'**

इति । वामानि सुन्दराणि नयनानि नेत्राणि प्रमाणानि वा यस्याः । वामं मार्गविशेषं नयतीति वा । अथवा कर्मजन्यफलं वाममित्युच्यते । **'एष उ एव वामनिः'** इति **श्रुतौ** संयद्वामादिश्रुतौ च वामपदस्य तथा व्याख्यानदर्शनात्तन्नयति प्रापयतीति वामनयना । वरुणस्येयं वारुणी सास्यास्तीति वारुणीमान्सहस्रफणः शेषः । शेषं प्रस्तुत्य **विष्णुपुराणे-'उपास्यते स्वयं कान्त्या यो वारुण्या च मूर्तये'**ति पाठात्स यथा भूधरणे विह्वलो न भवति तद्वदविह्वला । यद्वा खर्जूरीसमुद्भवो रसो वरुणप्रियत्वाद्वारुणी तस्या मदेन पानजन्यानन्देन विह्वला बाह्यपदार्थविस्मरणशीला । स्वात्मानन्दै-कचर्वणतीति यावत् । वारुणीमन्तः अविह्वला ययेति वा । वारुण्याख्यां वायुदेवत्यां नाडीं जितवन्तो वारुणीमन्त इत्युच्यन्ते । उक्तञ्च **योगशास्त्रे**–

**'अधश्चोर्ध्वं स्थिता नाडी वारुणी सर्वगामिनी ।**
**पूषा दिग्देवता प्रोक्ता वारुणी वायुदेवता ॥'** इति ॥ १२५ ॥

---

भक्तेभ्यो वरान् ददातीति सा । वरदायै इति ॥ वामानि सुन्दराणि नयनानि यस्याः सा । नयनायै इति ॥ वारुणी सुरा तस्याः पानेन यो मदः मत्तता । तेन विह्वला बाह्यपदार्थे विस्मरण-वती । विह्वलायै इति ॥ १२५ ॥

## विश्वाधिका वेदवेद्या विन्ध्याचलनिवासिनी ।

विश्वस्मात्क्षित्यादिशिवान्तादधिकोत्कृष्टा । **'विश्वाधिपो रुद्रो महर्षि'**रिति **श्रुतेः** । वेदै ऋग्यजुःसामाथर्वणैर्वेद्या ज्ञेया । **'वेदैश्च सर्वैरहमेव वेद्य'** इति **श्रुतेः स्मृतेश्च** । यद्वा चिन्तामणिगृहस्य चत्वारि द्वाराणि चतुर्वेदरूपाणि । द्वारप्रवेशमन्तरेण देवता-दर्शनाभावाद्वेदैकवेद्यत्वम् । तथा च **श्रुतिः** –

**'ऋचां प्राची महती दिगुच्यते दक्षिणामाहुर्यजुषामपाराम् ।**
**अथर्वणामङ्गिरसां प्रतीचीं साम्नामुदीची महती दिगुच्यते ॥'**

इति । शुद्धविद्यादिभिः सौभाग्यादिभिर्लोपामुद्रादिभिस्तुरीयाम्बादिभिश्चर्ग्य-जुषाथर्वसामदेवताभिर्वेद्येत्यप्यर्थः । विन्ध्याख्ये अचले पर्वते निवसतीति तथा । तथाच **पाद्मे** देवीक्षेत्रगणनायाम्- **'त्रिकूटे च तथा सीता विन्ध्ये विन्ध्याधिवासिनी'**ति । **पाञ्चरात्र-लक्ष्मीतन्त्रे**ऽपि–

**वैवस्वतेऽन्तरे तौ च पुनः शुम्भनिशुम्भकौ ।**
**उत्पत्स्येते वरान्मत्तौ देवोपद्रवकारिणौ ॥**
**नन्दगोपकुले जाता यशोदागर्भसम्भवा ।**
**तावहं नाशयिष्यामि नन्दाख्या विन्ध्यवासिनी ॥'**

इति । **मार्कण्डेयपुराणे**ऽप्येषोऽर्थः प्रसिद्धः ।

## विधात्री वेदजननी विष्णुमाया विलासिनी ॥ १२६ ॥

विदधाति धारयति पोषयति वा जगदिति विधात्री । **'धात्री माता समाख्याता धारणाच्चोपगीयत'** इति **देवीपुराणात्** । विधातुर्ब्रह्मणः पत्नी वा । विशिष्टा विशेष-प्रीतिविषया धात्री आमलकी यस्या इति वा । वेदानां जननी उत्पादिका । **'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेद** इत्यादि **श्रुतेः** । **'ऋचः सामानि जज्ञिर'** इत्यादि**श्रुते**श्च । **देवीपुराणे** तु

**यतः शृङ्गाटकाकारकुण्डलिन्याः समुद्गताः ।**
**स्वराश्च व्यञ्जनानीति देवमाता ततः स्मृता ॥**

---

विश्वस्मादधिका सर्वोत्कृष्टा । अधिकायै इति ॥ वेदैश्चतुःसंख्यैर्वेद्या ज्ञेया । वेद्यायै इति ॥ विन्ध्याख्ये अचले पर्वते निवसतीति सा । निवासिन्यै इति ॥

जगद्विदधाति धारयतीति सा । विधात्र्यै इति ॥ वेदानां जननी । जनन्यै इति ॥ विष्णो-र्व्यापनशीलस्य भगवतः माया स्वभावावरणकर्त्रीशक्तिः । मायायै इति ॥ विलासः क्रीडा अस्या अस्तीति विलासिनी । विलासिन्यै इति १२६ ॥

इत्युक्तम् । विष्णोर्व्यापनशीलस्य देशकालादिभिरनवच्छिन्नस्यापि माया आवरण-कर्त्री । परिच्छेदिकेति यावत् । तत्सम्बन्धिनी मायेति वा । '**दैवी ह्येषा गुणमयी मम माया दुरत्यये**'ति भगवद्वचनात् । कालिकापुराणेऽप्युक्तम्—

**'अव्यक्तव्यक्तरूपेण रजःसत्त्वतमोगुणैः ।**
**विभज्य यार्थं कुरुते विष्णुमायेति सोच्यते ॥'**

इति । विलासो विक्षेपशक्तिरस्या अस्तीति तथा । पीठशक्तिविशेषरूपा वा । '**नित्या विलासिनी दोग्ध्री**'त्यादिना तासु परिगणनात् । बिले ब्रह्मरन्ध्रे आस्त इति वा विलासिनी । तदुक्तं **स्वच्छन्दतन्त्रे**-'**तत्र ब्रह्मविलं ज्ञेयं रुद्रकोट्यर्बुदैर्वृत**'मिति प्रस्तुत्य-

**'ब्रह्माणीत्यपरा शक्तिर्ब्रह्मणोत्सङ्गगामिनी ।**
**द्वारं सा मोक्षमार्गस्य रोधयित्वा व्यवस्थिता ॥'** इति ॥ १२६ ॥

*अथ परिभाषायामष्टत्रिंशन्नामानि विभजते—*

***मृगजो द्विर्बालः खे जीवाभं पञ्चपादार्धम् ।***
***गुणभूवरतेजोर्धं रतिगुणलेशो दहेद्रणं दुरितम् ॥ १६ ॥***

*द्विरित्यष्टाक्षरे द्वे नामनी ॥ १६ ॥*

**क्षेत्रस्वरूपा क्षेत्रेशी क्षेत्रक्षेत्रज्ञपालिनी ।**

क्षेत्रं कामरूपादिकं वसुधादिशिवान्तषट्त्रिंशत्तत्त्वात्मकं शरीरं वा । तत्स्वं निजं रूपं यस्याः सा । तथा च **लैङ्गे**—

**'बिभर्ति क्षेत्रतां देवी त्रिपुरान्तकवल्लभा ।**
**क्षेत्रज्ञत्वमजो धत्ते भगवानन्तकान्तकः ॥'**

इति क्षेत्रस्य शरीरस्येशः शिवस्तस्येयं क्षेत्रेशी । क्षेत्रज्ञो जीवस्तं क्षेत्रञ्च पालयतीति क्षेत्रक्षेत्रज्ञपालिनी । तथा च **विष्णुस्मृतौ**—

**'इदं शरीरं वसुधे क्षेत्रमित्यभिधीयते ।**
**एतद्यो वेत्ति तं प्राहुः क्षेत्रज्ञ इति तद्विदः ॥**
**क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत ।'**

इति **गीतास्वप्येवमेव** कौन्तेयभारतसम्बोधनाभ्यां घटितमिदमेव । **लैङ्गे**ऽपि—

---

क्षेत्रं शरीरं स्वरूपं यस्याः सा । स्वरूपायै इति ॥ क्षेत्रस्य शरीरस्येशः शिवः तस्य पत्नी । ईश्यै इति ॥ क्षेत्रक्षेत्रज्ञौ शरीरजीवौ पालयतीति सा । पालिन्यै इति ।

**'चतुर्विंशतितत्त्वानि क्षेत्रशब्देन सूरयः ।**
**आहुः क्षेत्रज्ञशब्देन भोक्तारं पुरुषं तथा ॥'**

इति । **वायुपुराणे** तु **'अव्यक्तं क्षेत्रमुद्दिष्टं ब्रह्मा क्षेत्रज्ञ उच्यत'** इत्युक्तम् । **ब्रह्मपुराणे**ऽपि–

**'क्षेत्राख्यानि शरीराणि तेषां चैव यथासुखम् ।**
**तानि वेत्ति स योगात्मा ततः क्षेत्रज्ञ उच्यते ॥'**

इति । **मनुस्मृतौ** तु–

**'योऽस्यात्मनः कारयिता तं क्षेत्रज्ञं प्रचक्षते ।**
**यः करोति तु कर्माणि स भूतात्मोच्यते बुधैः ॥**
**जीवसंज्ञोऽन्तरात्मान्यः सहजः सर्वदेहिनाम् ।**
**येन वेदयते सर्वं सुखं दुःखं च जन्मसु ॥**
**तावुभौ भूतसम्पृक्तौ महान् क्षेत्रज्ञ एव च ।**
**उच्चावचेषु भूतेषु स्थितं तं व्याप्य तिष्ठतः ॥**
**असंख्या मूर्तयस्तस्य निःपतन्ति शरीरतः ।**
**उच्चावचानि भूतानि सन्ततं चेष्टयन्ति याः ॥'** इत्युक्तम् ।

## क्षयवृद्धिविनिर्मुक्ता क्षेत्रपालसमर्चिता ॥ १२७ ॥

क्षयवृद्ध्योः क्षेत्रसम्बन्धिभावविकाररूपत्वेन तदधिष्ठातृत्वेऽपि ताभ्यां विनिर्मुक्ता । **'नैनं छिन्दन्ति शस्त्राणी'**त्यादिस्मृतेः । कर्मकृताभ्यां वा ताभ्यां विनिर्मुक्ता । **'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयानि'**ति **काठकश्रुतेः** । **'स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानि'**ति **वाजसनेयश्रुतेश्च** । दारुकासुरवधार्थं शिवेन काली निर्मिता सती दारुकं हतवती । तदुत्तरमप्यशान्तेन तस्याः क्रोधाग्निना जगदाकुलमालोक्य शिवस्तत्क्रोधनिरासाय बालो भूत्वाऽरोदीत् । सा तं बालं स्तनावपाययत् । स पयोद्वारा तस्याः क्रोधाग्निमपि पपौ सोयं क्षेत्रपालः शिवावतारविशेष इति कथा **लैङ्गा**दिषु प्रसिद्धा । क्षेत्रं यागायतनं पालयतीति व्युत्पत्तिः । तेन सम्यगर्चिता ॥ १२७ ॥

## विजया विमला वन्द्या वन्दारुजनवत्सला ।

---

क्षयवृद्धिभ्यां भावविकाराभ्यां विनिर्मुक्ता । मुक्तायै इति ॥ क्षेत्रपालः शिवावतारविशेषः तेन सम्यगर्चिता । अर्चितायै इति ॥ १२७ ॥

विशिष्टो जयो यस्याः सा । जयायै इति ॥ विगतः मलः आणवादिर्यस्याः सा । विमलायै इति ॥ वन्दितुं योग्या वन्द्या । वन्द्यायै इति ॥ वन्दारवः वन्दनकर्त्तारो ये जनाः तेषु वत्सला अनुग्रहदृष्टियुता । वत्सलायै इति ॥

विशिष्टो जयो यस्याः सा विजया संविद्रूपा वा । **देवीपुराणे**ऽष्टषष्टिशिवतीर्थेषु **'विजयं चैव काश्मीर'** इति गणित इति शिवस्वरूपा वा । तत्रैव निर्वचनाध्याये–

**'विजित्य पद्मनामानं दैत्यराजं महाबलम् ।**
**त्रिषु लोकेषु विख्याता विजया चापराजिता ॥'**

इति । **विश्वकर्मशास्त्र**प्रसिद्धविजयाख्यगृहविशेषरूपा वा । विजयाख्यो मुहुर्त उक्त**श्चिन्तामणौ**–

**'आश्विनस्य सिते पक्षे दशम्यां तारकोदये ।**
**स कालो विजयो ज्ञेयः सर्वकार्यार्थसिद्धिदः ॥**

इति । **रत्नकोशे** तु–

**'ईषत्सन्ध्यामतिक्रान्तः किञ्चिदुन्निद्रतारकः ।**
**विजयो नाम कालोऽयं सर्वकार्यार्थसाधकः ॥**
**एकादशो मुहूर्तो यो विजयः परिकीर्तितः ।**
**तस्मिन्यात्रा विधातव्या सर्वैर्विजयकाङ्क्षिभिः ॥'**

इति तादृशकालरूपेत्यर्थः । विगतो मल आविद्यको यस्याः सा विमला । **पाद्मे**– **'विमला पुरुषोत्तमे'** इति देवीतीर्थेषु परिगणितमूर्तिविशेषरूपा वा । गृहविशेषरूपा वा । तदुक्तं **विश्वकर्मशास्त्रे** गृहानधिकृत्य–

**'ध्रुवं धान्यं जयं कान्तं विपुलं विजयं तथा ।**
**सुमुखं विमलं नन्दं निधनं च मनोरमम् ॥'**

इति । वन्दितुं योग्या वन्द्या । योग्यतामेवाह–वन्दार्विति । वन्दन्ते ते वन्दारवः । **'शृवन्द्योरारु'**रित्यारुप्रत्ययः । तादृशान् जनान्वत्सवल्लात्यनुगृह्णाति **'वत्सांसाभ्यां कामबल'** इति लप्रत्ययो वा ।

**वाग्वादिनी वामकेशी वह्निमण्डलवासिनी ॥ १२८ ॥**

वाचं वदतीति वाग्वादिनी काचिद्देवता तद्रूपा वा । वाचं वादयतीति वा । एतन्निर्वचनं च **त्रिपुरासिद्धान्ते**–

**'सर्वेषां च स्वभक्तानां वादरूपेण सर्वदा ।**
**स्थिरत्वाद्वा च विख्याता लोके वाग्वादिनीति सा ॥'**

---

वाचं वदति यस्याः सा । वाग्वादिन्यै इति ॥ वामाः सुन्दराः केशाः यस्याः सा । केश्यै इति ॥ वह्नेर्मण्डले प्रातःसन्ध्यायां ध्येयत्वेन वसतीति सा ।वासिन्यै इति ॥ १२८ ॥

इति । **'शब्दानां जननी त्वमेव भुवने वाग्वादिनीत्युच्यस'** इति **लघुस्तवे**ऽपि । वामाः सुन्दराः केशा यस्याः सा । वामा एव वामकास्तेषामीशः शिवः । **देवीपुराणे**ऽष्टषष्टिशिवतीर्थेषु **'जटे वामेश्वरं विद्यादि'**ति प्रतिपादितस्तस्य स्त्री वा । वामकेशेन प्रोक्तं तन्त्रं वामकेशं तत्र प्रतिपाद्यतया तत्सम्बन्धिनी वा । वह्नेर्मण्डलं मूलाधारे परमाकाशे वा विद्यमानं तत्र वसतीति तथा । वह्निशब्दस्त्रित्वसंख्यावच्छिन्नपरो वा । तेन सोमसूर्याग्निमण्डलत्रयवासिनीत्यर्थः ॥ १२८ ॥

## भक्तिमत्कल्पलतिका पशुपाशविमोचिनी ।

भक्तिमतां जनानां कल्पलतिकेव अभिमतार्थदातृत्वात् । अथवा ईषदसमाप्तौ कल्पप्रत्ययेनाऽपूर्णभक्ता भक्तिमत्कल्पाः तेषां लतिकेव विस्तारकारिणी । कस्तूरिकेवामोदयित्री वा । **'ज्योतिष्मत्यां च कस्तूर्यां माधवीदूर्वयोर्लते'**ति **रभसः** । अर्धभक्तानां भक्तिपूर्तिदानद्वारा सन्तोषिकेति यावत् । तदुक्तं **शक्तिरहस्ये**–

**'अक्रमेणार्धभक्त्या वा भवान्याः कृतमर्चनम् ।**
**जन्मान्तरे क्रमप्राप्त्यै पूर्णभक्त्यै च कल्पते ॥'**

इति । अभेदज्ञानरूपविद्याविहीनाः पशवः । तदुक्तं **बृहदारण्यके**- **'योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशु'**रिति । इह योन्यां त्रिकोणचक्र इत्यर्थः । **'तस्मिन् हिरण्मये कोशे त्र्यरे त्रिप्रतिष्ठित'** इति **श्रुत्यन्तरात्** । ईदृशानां पशूनां विद्याविहीनानां पाशे पिपासाऽशनाये विशिष्य मोचयतीति तथा । पिबतेरश्नातेश्च धातुद्वयस्य पाशपदेन निर्देशः । पातेरश्नातेश्च क्विपि पा अश् हलन्ताट्टापि तयोः समाहारे पाशमिति रूपम् । तावन्मात्रवत्त्वादेव हि पशुत्वं निर्विद्यानाम् । तथा च श्रूयते–**'अथतरेषां पशूनामशनापिपासे एवाभिज्ञानं न विज्ञातं वदन्ति न विज्ञातं पश्यन्ति न विदुः श्वस्तनं न लोकालोका'**विति । अथवा पशु इत्यव्ययं सम्यगर्थे **'लोधं नयन्ति पशु मन्यमाना'** इति **श्रुतौ** तथा व्याख्यानदर्शनात् । पशु यथा भवति तथा पाशान् वरुणपाशान् विमोचयतीति । यद्वा सम्यक्पाशानक्षान्पातयतीति । शिवेन सह द्यूतक्रीडायां सम्यक्पाशान् फलके पातयित्वा शिवं जयतीति यावत् । अथवा पशुपस्य परशिवस्याशा प्रेप्सा येषां ते पशुपाशास्तान् विशेषेण मोचयति प्राप्तशिवांस्तनोतीति । अथवा ब्रह्मादिस्थावरान्ताः पशुसमानधर्मत्वात्पशवः तेषां बन्धसाधनत्वादविद्यैव पाशः । तदुक्तं **सौरसंहिता**यामविद्यानामनिर्वचनप्रकरणे **'सर्वाधारतयाधारः पाशोर्बन्धस्य हेतुत'** इति । तद्विकारास्तत्त्वादयो वा पाशास्तान् शिवभक्त्या मोचयति । तदुक्तं **लैङ्गे**–

---

भक्तिमतां कल्पलतिका । अभीष्टदानात् । लतिकायै इति । आणवादिमलयुताः जीवाः पशवः । तेषां पाशाः आत्मविद्याकर्माख्या देहान्ता स्वरूपाख्यातिः पुण्यपापकर्मरूपाः । तेभ्यः भक्तान् मोचयतीति सा । मोचिन्यै इति ॥

**ब्रह्माद्याः स्थावरान्ताश्च देवदेवस्य शूलिनः ।**
**पशवः परिकीर्त्यन्ते समस्ताः पशुवर्तिनः ॥**
**चतुर्विंशतितत्त्वानि मायाकर्मगुणा इति ।**
**विषया अपि कीर्त्यन्ते पाशजीवनिबन्धनात् ॥**
**तैर्बद्धाः शिवभक्त्यैव मुच्यन्ते सर्वदेहिनः ।'**

इति । अथवा अविद्याऽस्मिता रागो द्वेषोऽभिनिवेशश्चेति पञ्चविधः क्लेशः । आत्मानात्मविवेकाभावोऽविद्या । अनात्मनि देहादावात्मत्वविपर्ययोऽस्मिता । तेन च देहोपभोगकरणे स्रक्चन्दनादावभिलाषो रागः । तत्प्राप्तिपरिपन्थिनि क्रोधो द्वेषः । तदिदमहितमिंति ज्ञात्वाप्यज्ञवत्तदपरित्यागोऽभिनिवेश इति । तदिदं **योगसूत्रे** प्रथमपादोपान्त्यसूत्रेणोद्देशमात्रं कृत्वा द्वितीयपादे पञ्चभिः सूत्रैः सलक्षणमुक्तम् । यत्तूक्तं **देवीभागवते**—

**'तमोविवेको मोहः स्यादन्तःकरणविभ्रमः ।**
**महामोहस्तु विज्ञेयो ग्राम्यभोगसुखैषणा ॥**
**मरणं त्वन्धतामिस्रं तामिस्रं क्रोध उच्यते ।**
**अविद्या पञ्चपर्वैषा प्रादुर्भूता महात्मनः ॥'**

इति। तत्र तमःप्रभृतीन्यविद्यादीनामेव नामान्तराणि। मरणशब्दो मिथ्याभिनिवेशपरः । तदिदमुक्तं **लैङ्गे**—

**'अविद्यामस्मितां रागं द्वेषं च द्विपदां वर ।**
**वन्दत्यभिनिवेशं च क्लेशान्पाशत्वमागतान् ॥**
**तमो मोहो महामोहस्तामिस्रमथ पण्डिताः ।**
**अन्धतामिस्रमित्याहुः क्लेशान्वै पञ्चधास्थितान् ॥**
**अविद्या तम इत्याहुरस्मिता मोह इत्यपि ।**
**रागं चैव महामोहं द्वेषस्तामिस्रमित्यपि ॥**
**अन्धतामिस्रकं मिथ्याभिनिवेशं प्रचक्षते ।**

इति । एतेषा पञ्चानां क्लेशाना प्रभेदा अपि तत्रैव—

**'तमसोऽष्टविधो भेदो मोहश्चाष्टविधः स्मृतः ।**
**महामोहप्रभेदास्तु बुधैर्दश विचिन्तिताः ॥**
**अष्टौ विधास्तथा प्राहुस्तामिस्रस्य विचक्षणाः ।**
**अन्धतामिस्रभेदाश्च तथाष्टादश कीर्तिताः ॥'**

इति संहत्य द्विपञ्चाशत् । तामिस्रस्याप्यष्टादशविधत्वमाश्रित्य द्विषष्टिः पाशा इति केचित् । एते च क्लेशा वैषयिकयोगितत्त्वज्ञरूपपशुत्रैविध्यात्तांस्तान्प्रति विलक्षणाः । तदुक्तं **देवीभागवते**—

**'प्रसुप्तास्तत्त्ववेत्तॄणां दग्धदेहास्तु योगिनाम् ।**
**अविच्छिन्नोदाररूपाः क्लेशा विषयसङ्गिनाम् ॥'**

इति । यत्तु **कुलार्णवे**—

**'घृणा शङ्का भयं लज्जा जुगुप्सा चेति पञ्चमी ।**
**कुलं शीलं च जातिश्चेत्यष्टौ पाशाः प्रकीर्तिताः ॥'**

इति तदविद्यादिक्लेशपञ्चकस्योक्तेष्वेव द्विपञ्चाशद्भेदेषु कतिपयानामवयुत्यानुवादः । ते च भेदा विस्तारभयोन्नोक्ताः । इत्थञ्च मूले पशुशब्द उक्तपरिभाषयैकपञ्चाशत्संख्यापरोऽपि प्रत्यासत्तिसम्बन्धेन लक्षणया द्विपञ्चाशत्परः । **'नित्यानन्दवपुर्निरन्तरगलत्पञ्चाशदर्णैः क्रमा**'दिति **शारदातिलक**श्लोके पञ्चाशत्पदस्येदृशलक्षणयैव **हर्षदीक्षिता**दिभिरेकपञ्चाशत्परत्वेन व्याख्यानात् । तेन पशुसंख्यान् द्विपञ्चाशत्पाशान्विमोचयतीत्यर्थः । तदुक्तं **शिवरहस्ये**—

**'पञ्चक्लेशैर्द्विपञ्चाशत्पाशैर्बध्नाति यः पशून् ।**
**स एव मोचकस्तेषां भक्त्या सम्यगुपासिते ॥'**

इति तु पौराणिकरीत्या निष्कर्षः । अथवा अणुर्भेदः कर्म चेति त्रयः पाशाः तत्राज्ञानमणुः । तच्च चैतन्यस्वरूपे आत्मन्यात्मत्वज्ञानाभावो देहादावनात्मन्यात्मत्वज्ञानं चेति द्विविधम् । द्विविधमप्येतत्सम्भूयाणवं मलमित्युच्यते । अणुपदवाच्यत्वं चास्यापरिच्छिन्नस्याप्यात्मनः परिच्छेदकत्वात् । तदुक्तं सौरसंहितायाम् **'आत्मनोऽणुत्वहेतुत्वादणुर्मालिन्यतो मल**'मिति । एकस्यैवात्मनो नानात्वं तु भेदः । तत्र मूलकारणं मायाख्यं तत्त्वेषु षष्ठमेकम् । तज्जन्यं सप्तमादिषट्त्रिंशान्तंतत्ववृन्दमपरमिति द्विविधमपि मायीयं मलमुच्यते । विहितनिषिद्धक्रियाजन्यं शरीरदानक्षममदृष्टं तु कर्म । तदपि पुण्यपापभेदेन द्विविधमपि सम्भूय कार्मणं मलमुच्यते । एतेष्वणुकर्मभेदेषूत्तरोत्तरं पूर्वपूर्वव्याप्यं सर्वमिदमभिहितं **प्रत्यभिज्ञाशास्त्रे**—

**'स्वातन्त्र्यहानिर्बोधस्य स्वतन्त्रस्याप्यबोधता ।**
**द्विधाणवं मलमिदं स्वस्वरूपापहारतः ॥**
**भिन्नवेद्यप्रथात्मैव मायीयं जन्मभोगदम् ।**
**कर्तव्यबोधकार्मं तु मायाशक्त्यैव तत्त्रयम् ॥'**

इति । स्पष्टतरमुक्तं शैवसूत्रवार्तिके–

**'नन्वेवंविधविश्वस्य चैतन्यं चेद्वपुस्तदा ।**
**कथं बन्धस्य सम्बन्ध इति शङ्कां व्यपोहितुम् ॥**
**अश्लेषश्लेषपाठाभ्यां सूत्रमाह महेश्वरः ।'**

**अज्ञानं बन्धः ।**

**'अज्ञानमिति तत्राद्यं चैतन्यस्फाररूपिणी ।**
**आत्मन्यनात्मताज्ञानं ज्ञानं पुनरनात्मनि ॥**
**देहादावात्ममानित्वं द्वयमप्येतदाणवम् ।**
**मलं स्वकल्पितं स्वस्मिन्बन्धस्वेच्छाविभाविताः ॥**
**किमाणवमलात्मैव बन्धोऽयं नेत्युदीर्यते ।'**

**योनिवर्गः कलाशरीरम् ।**

**'योनिर्भेदप्रथाहेतुर्मायावर्गस्तदुत्थितः ।**
**कालादिक्षितिपर्यन्ततत्त्वराशिस्तदात्मकः ॥**
**मायीयाख्यं मलं तत्तद्भिन्नवेद्यप्रथामयम् ।**
**कलेति कायमाविश्य परिच्छेदकरी नृणाम् ॥**
**व्यावृत्तिः पुण्यपापात्मा शरीरं यस्य तत्पुनः ।**
**कार्मणं मलमेतस्मिन्द्वये बन्धोऽनुवर्तते ॥**

इति । एवंभूतेषु त्रिषु पाशेष्वेकेन द्वाभ्यां त्रिभिरपि बन्धप्रयुक्ता जीवा अपि त्रिविधाः पशुपदेनोच्यन्ते । यद्यपि त्रयाणां प्रस्तारेष्वेककास्त्रयो द्विकास्त्रयस्त्रिक एक इति सप्तधा जीवाः सम्पद्यन्ते तथाप्यणुकर्मभेदानामुत्तरोत्तरस्य पूर्वपूर्वव्याप्यत्वनियमात्तिस्र एव पशोर्विधाः । ते च पशवो **नित्याहृदये** शुद्धमिश्राशुद्धपदैर्व्यवह्रियन्ते । **स्वच्छ-न्दतन्त्रादौ** तु विज्ञानकेवलाः प्रलयाकलाः सकला इति व्यवहृताः । तथा चोक्तम्–

**'पशवस्त्रिप्रकाराः स्युस्तेष्वेके सकला मताः ।**
**प्रलयाकलनामानस्तेषां केचिन्महेश्वरि ॥**
**विज्ञानकेवलास्त्वन्ये तेषां रूपं क्रमाच्छृणु ।'**

इति । तेषु त्रिभिरपि पाशैर्बद्धः सकलः । तदुक्तम्–

**'अनादिमलसञ्छन्नो मायाकर्मावृतो विभुः ।**
**शरीरशिवतत्त्वज्ञो भेदैकरसिको लघुः ॥**
**सर्वदा कर्मकर्ता च स्वकर्मफलभोजकः ।**
**नित्यं विषयसंरक्तः सकलः पशुरुच्यते ॥'**

इति । अत्र मलमायाशब्दावणुभेदपरौ । एते च सकलाः पशवो मलपाकापाकाभ्यां द्विविधाः । तत्र ये पक्वमलास्त्रयस्तेषां मध्येऽष्टादशोत्तरशतसंख्याकाः सिद्धाः परिपूर्ण-शिवानुग्रहवशान्मन्त्रेश्वरतामाप्ता वर्तन्ते। ते च शतरुद्राख्या अष्टौशतमण्डलिनोऽष्टौ क्रोधभट्टारकादयो वीरेश्वरः श्रीकण्ठेश्चेति द्वाविति । अन्यानप्याचार्यरूपेण शिव एवानुगृह्णाति अपरिपक्वमलत्रयांस्तु भोगेन मलपाकाय नानायोनिषु विनियुङ्क्ते सोऽपि चानुग्रह एव । तदुक्तम्—

**'मलादीनामपाके तु सामान्यानुग्रहो भवेत् ।**
**अधिकारिकमैश्वर्यं शिवानुग्रहमात्रतः ॥**
**पशवस्त्रिप्रकारास्तु प्राप्नुयुः परमेश्वरि ॥'**

इति । **'नानायोनिषु पाकाय नियुङ्क्तेऽनुजिघृक्षये'**ति च । अणुकर्माख्यपाशद्वयबद्धास्तु प्रलयाकलाः । तेऽपि तयोः परिपाकतदभावाभ्यां द्विविधाः । तेष्वन्त्याः कर्मवशादुत्तम-योनिषु जायन्ते । आद्येषु यत्रेश्वरानुग्रहस्ते भुवनेश्वरा भवन्ति । तदुक्तं **स्वच्छन्द-संग्रहे**—

**'मिश्राः प्रमातृरूपाः स्युः प्रलयाकलसंज्ञकाः ।**
**पुर्यष्टकशरीराश्च पृथक्कर्मवशात्प्रिये ॥**
**सर्वयोनिषु सम्प्राप्य भोगाद्यं स्वस्वकर्मणाम् ।**
**भुक्त्वा भोगानि तेषां तु कर्मसाम्ये शिवः स्वयम् ॥**
**सुपक्वमलकर्माणस्तान्किञ्चिदनुगृह्य च ।**
**जलतत्त्वादितत्त्वानां मध्ये लोकेश्वरास्त्रिधा ॥'**

इति । आणवमलमात्रबद्धा विज्ञानकेवलाः । तदुक्तम्—

**'मलमात्रेण सम्बद्धः पशुर्विज्ञानकेवलः ।**
**सुपक्वमलविज्ञानकेवलः स स्वयं प्रिये ॥'**

इति । तेऽपि समाप्तकलुषा असमाप्तकलुषाश्चेति द्विविधाः । तत्राद्या विद्येश्वराः । अन्त्यास्तु सप्तकोटिमहामन्त्रात्मकाः । न च तेषां जडत्वमिति शङ्क्यम् । शब्दरूपशरीराणां जडत्वेऽपि शरीरिणामस्माकमिव चेतनत्वोपपत्तेः । अत एव **मृगेन्द्रसंहितायाम्**—

**'अथानादिमलापेतः सर्वकृत्सर्वदृक् शिवः ।**
**पूर्वं व्यत्यासितस्याणोः पाशजालमपोहति ॥'**

इति । **आगमिका** अप्याहुः—

**'भुक्तिं मुक्तिमणूनां स्वव्यापारे समर्थानाम् ।**
**जडवर्गस्य विधत्ते सर्वनुग्राहकः शम्भुः ॥'**

इति । अपक्वाणवमलवज्जीवत्वादेव मन्त्राणामणुसंज्ञपि । एवं षड्विधानामपि पशूनां मलपाकतारतम्यानन्त्यादनन्ता भेदाः । तेषां च तत्तत्तारतम्यार्हयोनिप्रापणैश्वर्य-दानान्यपि भोगेन मलपाकार्थत्वात्पाशविमोचनरूपाण्येव । तथा च पशूनामुक्तरूपाणां पाशान्मलान्विशेषेण तत्तद्योग्यतानुसारेण मोचयतीति पशुपाशविमोचिनी । न च मोचनस्य शिवकार्यत्वात्कथं तत्र देव्याः कर्तृत्वमिति वाच्यम् । मोचकत्वशक्ति-मन्तरेण शिवस्य तदयोगेन मोचनकर्तृताया अन्वयव्यतिरेकाभ्यां शक्तावेव स्वीकर्तुं युक्तत्वात् । तदुक्तम**भियुक्तैः**—

**'शक्तो यया स शम्भुर्भुक्तौ मुक्तौ च पशुगणस्यास्य ।**
**तामेनां चिद्रूपामाद्यां सर्वात्मनास्मि नत ॥'**

इति । किञ्च स्वातन्त्र्यं हि कर्तृत्वम् । **'स्वतन्त्रः कर्त्ता'**इति **पाणिनिसूत्रात्** । तच्च शक्तिमतमेव । तथा च **शक्तिसूत्रम्—'चितिः स्वतन्त्रा विश्वसिद्धिहेतु'**रिति । यत्तु **'चैतन्यमात्मे'**ति **शिवसूत्रं** तत्स्वातन्त्र्यानिर्देशान्नपुंसकलिङ्गबलाच्च कर्तृत्वादिधर्माभाव-परम् । यत्तु—

**'चितिः स्वतन्त्रा विश्वसिद्धिहेतुरित्याद्यसूत्रं किल शक्तिशास्त्रे ।**
**चैतन्यमात्मेति तु शैवशास्त्रे शिवश्च शक्तिश्च चिदेव तस्मात् ॥'**

**इत्यभियुक्तैरुच्यते तत्तु शक्तिमतोरभेदाभिप्रायेणेति तु शैवरहस्यनिष्कर्षः ।**

**संहृताशेषपाखण्डा सदाचारप्रवर्तिका ॥ १२९ ॥**

संहृता नाशिता अशेषाः समस्ताः पाखण्डा यया सा तथोक्ता । पाखण्डस्वरूपं च **लैङ्गे**—

**'वेदबाह्यव्रताचाराः श्रौतस्मार्तबहिष्कृताः ।**
**पाखण्डिन इति ख्याता न संभाष्या द्विजातिभिः ॥'**

इति । **ब्रह्मवैवर्ते**ऽपि—

**'पुराणन्यायमीमांसा धर्मशास्त्राङ्गमिश्रिताः ।**
**वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥'**

इति । परिगणितानि विद्यास्थानान्यधिकृत्य—

**'एतत्सत्यमितश्चान्यत्पाखण्डं बुद्धिकल्पितम् ।**
**दैत्यानां मोहनार्थाय महामोहेन निर्मितम् ॥'**

---

संहृता नाशिता अशेषा अखिलाः पाखण्डा वेदार्थदूषकाः यया सा । पाखण्डायै इति । सन्तः उत्तमा ये आचाराः तेषां प्रवर्तिका । प्रवर्तनकर्त्री । प्रवर्तिकायै इति ॥ १२९ ॥

इति । '**पाशब्देन तु वेदार्थः पाखण्डास्तस्य खण्डका**' इति तु निरुक्तिः । अत एवाह सदाचारप्रवर्तिकेति । सन्नुत्तमः सतां शिष्टानां वा सतो ब्रह्मणो वा आचारः सदाचारस्तस्य प्रवर्तिका । कर्मकाण्डोक्ते धर्मे ब्रह्मकाण्डोक्तेऽद्वैतब्रह्मणि चाभिरतिपूर्वकं तत्तत्प्राप्तिसाधनानि पुराणदिषूपदिशत्यनुष्ठापयतीति यावत् । उक्तञ्च **कूर्मपुराणे** भगवत्यैव–

**'अष्टादश पुराणानि व्यासेन कथितानि तु ।**
**नियोगाद्ब्रह्मणो राजंस्तेषु धर्मः प्रतिष्ठितः ॥**
**अन्यान्युपपुराणानि तच्छिष्यैर्व्याकृतानि तु ।**
**युगे युगे तु सर्वेषां कर्ता वै धर्मशास्त्रवित् ॥**
**शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च ।**
**ज्योतिःशास्त्रं न्यायविद्या सर्वेषामुपबृंहणम् ॥**
**एवं चतुर्दशैतानि विद्यास्थानानि सत्तम ।**
**चतुर्वेदैः सहोक्तानि धर्मो नान्यत्र विद्यते ॥**
**एवं पैतामहं धर्मं मनुव्यासादयः परम ।**
**स्थापयन्ति ममादेशाद् यावदाभूतसंप्लवम् ॥'**

इति ॥ १२९ ॥

## तापत्रयाग्निसन्तप्तसमाह्लादनचन्द्रिका ।

आध्यात्मिकाधिभौतिकाधिदैविकाख्यानां तापानां त्रयं यस्य तेनाग्निना संसार-लक्षणेन सम्यक् तप्तानां जनानां सम्यगाह्लादनेनापहरणपूर्वकानन्दनविषये चन्द्रिकेव वा ।

## तरुणी तापसाराध्या तनुमध्या तमोपहा ॥ १३० ॥

**अजरोऽमृत**' इति **श्रुते**र्नित्यतारुण्यवत्वात्तरुणी । '**–तरुणतलुनानामुपसंख्यान**'मिति वार्तिकावयवेन ङीप् । तापसैस्तपस्विभिराराध्या । तापस्तज्जनकः संसारस्तत्र सारभूता आध्या आसमन्ताद् ध्यानं यस्या इति वा । तनुः कृशो मध्यो यस्याः सा । काञ्चीदेशे तनुमध्याख्या देवी प्रसिद्धा । यदाह–'**मां पातु निवायास्तीरे निवसन्ती । बिल्वेश्वरकान्ता देवी तनुमध्या** ।' तनुमध्याख्यसमवृत्तविशेषरूपा वा । तथा च **पिङ्गलसूत्रम्**–'**तनुमध्या**

---

आध्यात्मिकादि यत्तापानां त्रयं तत्कर्ता अग्निः संसाररूपः तेन सन्तप्तानां समाह्लादने तापनिवारणेनानन्दोत्पादने चन्द्रिकेव स्थिताः । चन्द्रिकायै इति ॥

तरुणी जरामरणाभावेन नित्यतारुण्यात् । तरुण्यै इति ॥ तापसैस्तपस्विभिराध्या । आराध्यै इति ॥ तनुः कृशो मध्यो यस्याः सा । मध्यायै इति ॥ भक्तानां तमांसि अविद्यावृत्तीर्हन्तीति सा । अपहायै इति ॥ १३० ॥

**त्यौ** ।' पदचतुरूर्ध्वसूत्रात्प्रतिपादमित्यस्यानुवृत्त्या प्रतिपादं तगणयगणौ चेत्सा तनुमध्येत्युच्यत इति सूत्रार्थः। पूर्वोक्तमुदाहरणम्–'**गायत्री छन्दसामह**'मिति **कौर्मे** देवीवचनादस्य वृत्तस्य तच्छन्दस्कत्वात्तद्रूपता। तमोऽविद्यामपहन्तीति तमोपहा। तथा चे**शावास्ये** श्रूयते–'**अन्धंतमः प्रविशन्ति येऽविद्यामुपासत**' इति। अविद्यामिति पदकाराणां पाठः। '**विद्यान्योपासनामेवं निन्दत्यारण्यकश्रुति**' रिति **ब्रह्माण्डपुराणस्थ**-मुपबृंहणञ्च॥ १३०॥

## चितिस्तत्पदलक्ष्यार्था चिदेकरसरूपिणी।

अत एवाह–चितिः अविद्यापरिपन्थिज्ञानस्वरूपा। '**चितिः स्वतन्त्रा विश्वसिद्धि-हेतु**'रिति **शक्तिसूत्रो**क्तस्वरूपेत्यर्थः। '**सैषा चितिरिति प्रोक्ता जीवनाज्जीवितैषिणा**'-मिति **महावासिष्ठे**। तत्त्वमस्यादिमहावाक्यघटकतत्पदस्य जगज्जन्मादिकर्तृत्वविशिष्टं शबलं ब्रह्म वाच्योऽर्थः। तदेवेह स्तूयमानं धर्मिमात्रं तु शुद्धं ब्रह्म लक्ष्योऽर्थः। अनयोश्च विशिष्टकेवलयोस्तादात्म्यं सम्बन्धः। तदेतदाह। तदितिपदेन लक्षणी-योऽर्थः यस्याः यत्तादात्म्यापन्नः सा तत्पदलक्ष्यार्था। धर्मिमात्रपरत्वे तु तत्पुरुषापत्त्या '**परवल्लिङ्गं द्वन्द्वतत्पुरुषो**'रिति नियमात्पुल्लिङ्गतापत्तिः। ननु केवलमपि रूपमानन्दादि-धर्मविशिष्टमेवेति वाच्यमेवास्त्वत आह। चिता सहैको रसः स्वरूपं येषां, चिदेव मुख्यो रसो येषां तानि चिदेकरसानि रूपाण्यानन्दचैतन्यादिधर्मा अस्याः सन्तीति चिदेकरसरूपिणी। स्वाभिन्नधर्मवतीति यावत्। उक्तञ्च **पञ्चपादिकायाम्**–'**आनन्दो विषयानुभवो नित्यत्वं चेति सन्ति धर्मा अपृथक्त्वेऽपि चैतन्यात्पृथगिवावभासन्त**' इति। तथा च शक्यतावच्छेदकभूतसृष्टिकर्तृत्वादिधर्माणां स्वरूपानन्तर्गतत्वात्त-दन्तर्गतधर्माणां चात्यन्ताभेदेन शक्यतावच्छेदकत्वाभावाद्भागत्यागलक्षणावश्यकीति भावः। यद्वा केवलं ब्रह्म नेश्वरस्य धर्मीति तयोर्भेदादुक्तः सम्बन्धो न घटत इत्यत आह। चिदेकरसं चिन्मात्राभिन्नं रूपमस्या एवेत्यर्थः। तयोर्भेदेऽप्यभेदस्यापि सत्त्वाद्भेदसमानाधिकरणाबेदस्यैव तादात्म्यरूपत्वादुक्तसम्बन्धो घटत एवेति भावः। ननु सृष्टिकर्तृत्वादिधर्माणां स्वरूपानन्तर्गतत्वेऽपि शक्यतावच्छेदकत्वसम्भवात्त-द्विशिष्टस्यैव तत्पदेन प्रतिपादेन तदभेद एव वाक्यार्थोऽस्तु। वचनबलाद्विशिष्टयोरपि तादात्म्यस्वीकारसम्भवात्। '**यो यच्छ्रद्धः स एव सः**' इत्यादिवचनानामुपास्यो-पासकत्वादिधर्मविशिष्टयोरेवाभेदप्रतिपादने स्वारस्यात्।

---

चितिः ज्ञानरूपा। चित्यै इति॥ तत्त्वमस्यादिवाक्यस्य तत्पदलक्ष्य अर्थः यस्याः सम्बन्धी सा। अर्थायै इति॥ चिदेकरसः ज्ञानघनरूपं अस्या अस्तीति सा। रूपिण्यै इति॥

एतेनैतदन्यथानुपपत्त्या कल्प्यमानस्य निर्गुणस्यापि निरासाद्विशिष्टकेवलयोः सम्भवन्नपि सम्बन्धोऽप्रयोजक एवेत्यत् आह–

**स्वात्मानन्दलवीभूतब्रह्माद्यानन्दसन्ततिः ॥ १३१ ॥**

स्वात्मेति । स्वस्या आत्मरूपो य आनन्दस्तस्य लवीभूता इन्द्राद्यानन्दबिन्दु-पर्यालोचनया सागरायमाणत्वेनालवा अपि देव्यानन्दसागरस्य लवाः सम्पद्यमानाः ब्रह्मादीनां सृष्टिकर्तृत्वादिधर्मविशिष्टानां ब्रह्मविष्णुरुद्राणामानन्दानां सन्ततयः सम्यक्-समूहा यस्याः सा । '**एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती**'ति **श्रुतेः** । **तैत्तिरीये** मानुषानन्दमारभ्योत्तरोत्तराधिक्येन वर्ण्यमानानामानन्दानां मध्ये परिगणितानां प्रजा-पत्याद्यानन्दानामपि परिच्छिन्नत्वेनापरिच्छिन्नब्रह्मानन्दतोऽल्पत्वेन पुरुषार्थत्वायोगेना-परिच्छिन्नानन्दस्य निर्गुणस्य सिद्धत्वाच्च पुरुषार्थसाधनज्ञानोपक्रमादितात्पर्यनिर्णायक-प्रमाणविरोधाय तत्पदस्य निर्धर्मकात्मलक्षकत्वमेव युक्तमित्याशयः । '**लवो लेशे विलासे चे**'ति **विश्वः** ॥ ३३१ ॥

**परा प्रत्यक्चितीरूपा पश्यन्ती परदेवता ।**

ननु शब्दार्थयोस्तादात्म्यस्यैव शक्तिपदार्थत्वान्निर्गुणस्यापि ब्रह्मणः शब्दब्रह्मा-भिन्नत्वेन किमिति तत्र सत्यादिशब्दानां लक्षणेत्याशङ्क्य वैखर्यात्मकपदानां विराट्-पुरुषेणैव सह तादात्म्येन शुद्धब्रह्मतादात्म्यं नास्त्येवेति समाधित्सया वाचं विभजते । अत्रेदं बोध्यम् । प्रलये सृज्यमानप्राणिकर्मणामपरिपाकदशायां तादृशकर्माभिन्न-मायावच्छिन्नं ब्रह्म घनीभूतमित्युच्यते । कालवशात्कर्मणां परिपाके सति विनश्यद-वस्थः परिपाकप्रागभावो विचिकीर्षेत्युच्यते । ततः परिपाकक्षणे मायावृत्तिरुत्पद्यते तादृशं परिपक्वकर्माकारपरिगणितमायाविशिष्टं ब्रह्माव्यक्तपदवाच्यम् । अतएव तस्योत्पत्तिरपि स्मर्यते–'**तस्मादव्यक्तमुत्पन्नं त्रिगुणं द्विजसत्तमे**'ति। स एव जगदङ्कुरकन्द-रूपत्वात्कारणबिन्दुपदेन व्यवह्रियते । तदुक्तं **प्रपञ्चसारे**–'**विचिकीर्षुर्घनीभूता सा चिदभ्येति बिन्दुता**'मिति। अस्माच्च कारणबिन्दोः सकाशात्क्रमेण कार्यबिन्दुस्ततो

---

स्वस्य य आत्मभूत आनन्दः तस्य लवीभूताः ब्रह्मादीनाम् आनन्दानां सन्ततयः समूहाः यस्याः सा । सन्तत्यै इति ॥ १३१ ॥

परा मूलाधारोत्थितभावात्मककारणबिन्दुः शब्दब्रह्मेति प्रसिद्धं तद्रूपा । परायै इति ॥ प्रति प्रातिलोम्येन स्वात्माभिमुखमञ्चतीति प्रतीची सा च सा चितिः संवित्तिः तद्रूपं यस्याः सा । रूपायै इति ॥ पूर्वोक्तं शब्दब्रह्म मनोयुक्तं नाभिस्थं पश्यन्तीत्युच्यते । तद्रूपा । पश्यन्त्यै इति ॥ परा उत्कृष्टा देवता । देवतायै इति ॥

नादस्ततो बीजमिति त्रयमुत्पन्नम् । तदिदं परमसूक्ष्मस्थूलपदैरप्युच्यते । चिदंशश्चिदचिन्मिश्रोऽचिदंशश्चेति तेषां रूपाणि । तदुक्तं **रहस्यागमे**—

**'कालेन भिद्यमानस्तु स बिन्दुर्भवति त्रिधा ।**
**स्थूलसूक्ष्मपरत्वेन तस्य त्रैविध्यमिष्यते ॥**
**स बिन्दुनादबीजत्वभेदेन च निगद्यते ।'**

इति । एते च कारणबिन्द्वादयश्चत्वारोऽधिदैवतमव्यक्तेश्वरहिरण्यगर्भविराट्स्वरूपाः, शान्तवामाज्येष्ठारौद्रीरूपा अम्बिकेच्छाज्ञानक्रियारूपाश्च । अधिभूतं तु कामरूपपूर्णगिरिजालन्धरोड्याणपीठरूपा इति तु **नित्याहृदये** स्पष्टम् । अध्यात्मं तु कारणबिन्दुः शक्तिपिण्डकुण्डल्यादिशब्दवाच्यो मूलाधारस्थः—

**'शक्तिः कुण्डलिनीति विश्वजननव्यापारबद्धोद्यमां**
**ज्ञात्वेत्थं न पुनर्विशन्ति जननीगर्भेऽर्भकत्वं नराः ।'**

इत्यादिरीत्याचार्यैर्व्यवहृतः सोऽयमविभागावस्थः कारणबिन्दुः । अयमेव च यदा कार्यबिन्द्वादित्रयजननोन्मुखो भिद्यते तद्दशायामव्यक्तः शब्दब्रह्माभिधेयो रवस्तत्रोत्पद्यते । तदप्युक्तम्—

**'बिन्दोस्तस्माद्भिद्यमानादव्यक्तात्मा रवोऽभवत् ।**
**स रवः श्रुतिसम्पन्नैः शब्दब्रह्मेति गीयते ॥'**

इति । सोयं रवः कारणबिन्दुतादात्म्यापन्नत्वात्सर्वगतोऽपि व्यञ्जकयत्नसंस्कृतपवनवशात्प्राणिनां मूलाधार एवाभिव्यज्यते । तदुक्तम्—

**'देहेऽपि मूलाधारेऽस्मिन्समुदेति समीरणः ।**
**विवक्षोरिच्छयोत्थेन प्रयत्नेन सुसंस्कृतः ॥**
**स व्यञ्जयति तत्रैव शब्दब्रह्मापि सर्वगम् ।'**

इति । तदिदं कारणबिन्द्वात्मकमभिव्यक्तं शब्दब्रह्म स्वप्रतिष्ठतया निष्पन्दं तदेव च परावागित्युच्यते । अथ तदेव नाभिपर्यन्तमागच्छता तेन पवनेनाभिव्यक्तं विमर्शरूपेण मनसा युक्तं सामान्यस्पन्दप्रकाशरूपकार्यबिन्दुमयं सत्पश्यन्तीवागुच्यते । अथ तदेव शब्दब्रह्म तेनैव वायुना हृदयपर्यन्तमभिव्यज्यमानं निश्चयात्मिकया बुद्ध्या युक्तं विशेषस्पन्दप्रकाशरूपनादमयं सन्मध्यमावागित्युच्यते । अथ तदेव वदनपर्यन्तं तेनैव वायुना कण्ठादिस्थानेष्वभिव्यज्यमानमकारादिवर्णरूपपरं श्रोत्रग्रहणयोग्यस्पष्टतरप्रकाशरूपबीजात्मकं सद्वैखरीवागुच्यते । तदुक्तमा**चार्यैः**—

**'मूलाधारात्प्रथममुदितो यश्च भावः पराख्यः**
**पश्चात्पश्यन्त्यथ हृदयगो बुद्धियुङ्मध्यमाख्यः ।**
**व्यक्ते वैखर्यथ रुरुदिषोरस्य जन्तोः सुषुम्णा-**
**बद्धस्तस्माद्भवति पवने प्रेरिता वर्णसंज्ञाः ॥'**

इति । **नित्यातन्त्रे**ऽपि—

**'मूलाधारे समुत्पन्नः पराख्यो नादसम्भवः ।**
**स एवोर्ध्वतयानीतः स्वाधिष्ठाने विजृम्भितः ॥**
**पश्यन्त्याख्यामवाप्नोति तथैवोर्ध्वं शनैः शनैः ।**
**अनाहते बुद्धितत्त्वसमेतो मध्यमाभिधः ॥**
**तथा तयोर्ध्वनुन्नः सन्विशुद्धौ कण्ठदेशतः ।**
**वैखर्याख्य.......................................... ॥'**

इत्यादि । इत्थं चतुर्विधासु मातृकासु परादित्रयमजानन्तो मनुष्याः स्थूलदृशो वैखरीमेव वाचं मन्वते । तथा च श्रुतिः—**'तस्माद्यद्वाचो नाप्तं तन्मनुष्या उपजीवन्ती'**ति । अनाप्तं अपूर्णं तिसृभिर्विरहितमित्यर्थ इति **वेदभाष्ये** । **श्रुत्यन्तरे**ऽपि—

**'चत्वारि वाक्परिमिता पदानि तानि विदुर्ब्राह्मणा ये मनीषिणः ।**
**गुहा त्रीणि निहिता नेङ्गयन्ति तुरीयं वाचो मनुष्या वदन्ति ॥'**

इति । **स्कान्दे** यज्ञवैभवखण्डेऽपि—

**'अपदं पदमापन्नं पदं चाप्यपदं भवेत् ।**
**पदापदविभागञ्च यः पश्यति स पश्यति ॥'**

इति । अपदं गतिरहितं निःस्पन्दं शब्दब्रह्मैव परादिपदचतुष्टयं जातं तदिदं पदचतुष्टयमेव ज्ञातं सदपदं ब्रह्मैव भवतीति तदर्थः । एवं **श्रुतिस्मृतिभ्यां** तदिति पदस्य चातुर्विध्यात् **'ते विभक्त्यन्ताः पद'**मिति **गौतमसूत्रेण**, **'सुप्तिङन्तं पद'**मिति **पाणिनिसूत्रेण** च प्रतिपादितपदलक्षणान्तर्गतसुप्रत्ययादेरपि चातुर्विध्यात्परात्मकतत्पदस्यापि त्रिगुणाव्यक्तमात्रतादात्म्यवत्त्वेन ततोऽपि परतरनिर्गुणब्रह्मतादात्म्याभावेन वैखर्यात्मकतत्पदस्य कैमुतिकन्यायेन दूरापास्तं तत्तादात्म्यमिति शब्दार्थयोस्तादात्म्यमेव शक्तिरिति पक्षेऽपि तत्पदस्य केवले लक्षणैव स्वीकार्येति भावः । मातृकाभेदेषु तिसृभ्यः परत्वात्परा । **त्रिपुरासिद्धान्ते** तु प्रकारान्तरैरपि निरुक्तिरुक्ता—

**'श्रीपरानन्दनाथस्य प्रसन्नत्वात्परेति .सा ।**
**परानन्दाभिधे तन्त्रे प्रसिद्धत्वाच्च सा परा ॥**
**प्रासादरूपिणी चेति परा सा शाम्भवीपरा ॥'**

इति । प्रतिकूलं स्वात्माभिमुखमञ्चतीति प्रतीची सा च सा चिती च प्रत्यक्चिती अव्यक्तसंज्ञं ब्रह्म सैव रूपं यस्यास्तथा । चिनोतेः क्तिजन्तात् **'कृदिकारादि'**ति ङीष् । पश्यतीति पश्यन्ती । अस्या एवोत्तीर्णेत्यपि संज्ञा । उक्तञ्च **सौभाग्यसुधोदये**—

**'पश्यति सर्वं स्वात्मनि करणानां सरणिमपि यदुत्तीर्णा ।**
**तेनेयं पश्यन्तीत्युत्तीर्णेत्यप्युदीर्यते माता ॥'**

इति । परा उत्कृष्टा चासौ देवता च परदेवता । उपास्येश्वरस्वरूपेत्यर्थः ।

**मध्यमा वैखरीरूपा भक्तमानसहंसिका ॥ १३२ ॥**

मध्ये स्थिता मध्यमा । तदुक्तम्–

**'पश्यन्तीव न केवलमुत्तीर्णा नापि वैखरीव बहिः ।**
**स्फुटतरनिखिलावयवा वाग्रूपा मध्यमा तयोरस्मात् ॥'**

इति । विशेषेण खरः कठिनस्तस्येयं वैखरी सैव रूपं यस्याः । घनभावमापन्नेति यावत् । वै निश्चयेन खं कर्णविवरं राति गच्छतीति व्युत्पत्तिः **सौभाग्यसुधोदये** कथिता । '**प्राणेन विखराख्येन प्रेरिता वैखरी पुन**रिति **योगशास्त्र**वचनाद्विखरवायुनुन्नेति वा । भक्ता[नां मानसे चित्ते श्लेषभित्तिकाभेदाध्यवसायेन सरोविशेषे हंसीव हंसिका । परैरज्ञातत्वात्कप्रत्ययः॥ १३२ ॥

**कामेश्वरप्राणनाडी कृतज्ञा कामपूजिता ।**

कामेश्वरस्य शिवकामस्य प्राणनाडी जीवनाडीव । तदुक्तमाचार्य**भगवत्पादैः** –

**'करालं यत्क्ष्वेलं कवलितवतः कालकलना**
**न शम्भोस्तन्मूलं तव जननि ताटङ्कमहिमा ।'**

इति । कृते सुकृतदुष्कृते जानातीति कृतज्ञा ।

**'सूर्यः सोमो यमः कालो महाभूतानि पञ्च च ।**
**एते शुभाशुभस्येह कर्मणो नव साक्षिणः ॥'**

इत्युक्तनवकाभिन्नेति वा । कृतस्योपकारस्य ज्ञानेन प्रत्युपकर्त्री वा । कृतवत् ज्ञा ज्ञानं यस्या इति वा । कृतादियुगेषु धर्मस्येव ज्ञानस्याप्युत्तरोत्तरं ह्रासात्कृते यथा पूर्णं ज्ञानं तादृशज्ञानवतीत्यर्थः । यद्वा **द्यूतशास्त्रे** कृतत्रेताद्वापरकलिसंज्ञानि चत्वारि द्यूतानि प्रसिद्धानि । तानि चतुस्त्रिद्व्येकाङ्कघटितान्यापि दशषट्त्र्येकरूपाणि । पूर्वपूर्वद्यूते उत्तरोत्तरद्यूतानामन्तर्भावात् । तथा च श्रूयते–'**ते वा एते पञ्चान्ये पञ्चान्ये दश सन्तस्तत्कृत**'मिति दशानां कृतसंज्ञा । अत एव कृतद्यूतं जितवता त्रेतादिद्यूतत्रयमपि जितं भवतीति द्यूतशास्त्रमर्यादापि । श्रूयते च '**कृतायविजितायाधरेऽयाः संयन्ती**'ति ।

---

तदेव शब्दब्रह्म हृदिस्थितं बुध्यायुतं मध्यमेत्युच्यते । तद्रूपा । मध्यमायै इति ॥ तदेवत्तत्तत्स्थानाभिघातेनाभिव्यक्तं श्रोत्रन्द्रियग्रहणयोग्यं वर्णात्मकं वैखरीत्युच्यते । तद्रूपं यस्याः सा । रूपायै इति ॥ भक्तानां मानसे मनोरूपे मानससरोवरे हंसीव विराजमाना । हंसिकायै इति ॥ १३२ ॥

कामेश्वरस्य परमशिवस्य प्राणनाडी जीवनाडीवत्सत्त्वानुमायिका । नाड्यै इति ॥ भक्तैः कृतं यदुपासनादि तत्तेषु अनुगुणफलदानाय जानीतीति सा । कृतज्ञायै इति ॥ कामेन मन्मथेन पूजिता । पूजितायै इति ।

अयो द्यूतक्रीडाकृतरूपोऽयो विजितो येन तस्मै अधरे तदधस्तना अयास्त्रेतादिक्रीडाः संयन्ति उपनमन्ते जिता भवन्तीति तदर्थात् । तेन कृतं यथा सर्वव्यापकमेवं सर्वविषयकं ज्ञानं यस्या इत्यर्थः । कृतं जानातीति वा । शिवेन सह द्यूतक्रीडायामवश्यं कृतज्ञत्वाद्देव्या एव जय इति ध्वन्यम् । कामेन मन्मथेन पूजितोपासिता । अतएव **वारुणोपनिषदि**–

**'पुत्रो निर्ऋत्या वैदेह अचेता यश्च चेतनः ।**
**स तं मणिमविन्दत्.......................... ॥'**

इति श्रूयते । लक्ष्म्याः पुत्रोऽनङ्गो विद्यारत्नं प्राप्तवानित्यर्थः ।

## शृङ्गाररससम्पूर्णा जया जालन्धरस्थिता ॥ १३३ ॥

शृङ्गाराख्यरसेन सम्यक् पूर्णा । अथवा उत्तरत्र जालन्धरोड्याणपीठयोः परामर्शदर्शनादनयोर्नाम्नोः कामरूपं पूर्णगिरिपरत्वं नामैकदेशन्यायेनास्थेयम् । सम्यक् पूर्णे आस्ते इति सम्पूर्णास् । आस्तेः क्विपि रुत्वयत्वयलोपाः । शृङ्गपदेन द्विसंख्या । अररपदेन दलम् । रसाः षट् । द्विदलषट्कं द्वादशदलमनाहतचक्रमिति यावत् । अधिभूतं प्रसिद्धस्य पीठचतुष्कस्याध्यात्मं मूलाधारानाहतविशुद्ध्याज्ञास्थिते **तन्त्रेषु** कथनाद् द्वाशदलेति पूर्णगिरिविशेषणम् । यद्वा शृङ्गं प्रधानभूतं अररं कवाटम् आवरकाविद्येति यावद्यस्याः सा शृङ्गाररा । सम्पूर्णेन ब्रह्मणा सहिता ससम्पूर्णा । उभयोः कर्मधारये शबलब्रह्म-शुद्धब्रह्मोभयवतीति यावत् । जयस्वरूपत्वाज्जया । **पाद्मे**–'**जया वराहशैले त्वि**'ति परिगणिता । जालन्धरे पीठविशेषे स्थिता । **पाद्मे**–'**जालन्धरे विष्णुमुखी**'ति प्रतिपादितविष्णुमुख्याख्या ॥ १३३ ॥

*अथ नामपरिभाषामण्डले चतुश्चत्वारिंशत्पदानि विभजते–*

***द्वे द्वे चेद्वेद्वेभवदोहदभुविलेशशीलजलमोहैः ।***
***द्व्यर्धचतुर्भवगाः स्मो भुवि जलशोभा भगोलः खे ॥ १७ ॥***

*अत्र तृतीयं द्वे इति पदं षडक्षरनामद्वयपरं इतराणि त्वष्टाक्षरपराणि । चतुःपदं चतुरक्षरकनामचतुष्टयपरम् ॥ १७ ॥*

## ओड्याणपीठनिलया बिन्दुमण्डलवासिनी ।

---

शृङ्गाराख्यो यो रसः तेन सम्यक्पूर्णा । पूर्णायै इति ॥ जयरूपत्वाज्जया । जयायै इति ॥ जालन्धराख्ये पीठे स्थिता । स्थितायै इति ॥ १३३ ॥

ओड्याणाख्यं पीठं निलयो यस्याः सा । निलयायै इति ॥ बिन्दुमण्डलं सर्वानन्दमयं बिन्दुचक्रं तत्र वसतीति सा । वासिन्यै इति ॥

ओड्याणाख्यं पीठमेव निलयो वासस्थानं यस्याः । बिन्दुरेव मण्डलं सर्वानन्दमयात्मकं चक्रवालं तत्र वसति । बिन्दुः शुक्लं तस्य मण्डलं ब्रह्मरन्ध्रमित्यन्ये । **'सहस्रारे पद्मे सह रहसि पत्या विहरसे'** इत्याचार्योक्तेः ।

**रहोयागक्रमाराध्या रहस्तर्पणतर्पिता ॥ १३४ ॥**

रहसि विविक्ते क्रियमाणो यागश्चिदग्नौ अनच्ककुण्डलन्यधिष्ठिते पुण्यादिहोमाष्टकरूपो रहोयागस्तस्य क्रमेण प्रयोगेणाराध्या । **'यज देवपूजासङ्गतिकरणदानेषु'**ति धातुपाठादेकान्तसङ्गतिरेव वा रहोयागः तत्र क्रमेण पादविक्षेपेणाराध्या प्राप्या । यदाहापस्तम्बः–

**'न शब्दशास्त्राभिरतस्य मोक्षो न चैव रम्यावसथप्रियस्य ।**
**न भोजनाच्छादनतत्परस्य न लोकचित्तग्रहणे रतस्य ॥**
**एकान्तशीलस्य दृढव्रतस्य मोक्षो भवेत्प्रीतिनिवर्तकस्य ।**
**अध्यात्मयोगे निरतस्य सम्यङ्मोक्षो भवेन्नित्यमहिंसकस्य ॥'**

इति । **अरुणोपनिषदपि–'यदि प्रविशेत् मिथो चरित्वा प्रविशेदिति** । श्रीविद्योपासनामार्गे रहःसम्पाद्यैव प्रविशेदिति तदर्थः । **'मिथोऽन्योन्यं रहस्यपी'**ति कोशात् ।

**'प्रकाशामर्शहस्ताभ्यामवलम्ब्योन्मनी स्रुचम् ।**
**धर्माधर्मकलास्नेहं पूर्णवह्नौ जुहोम्यहम् ॥'**

इति । मन्त्रोक्तार्थविभावनम्–

**'अन्तर्निरन्तरनिरिन्धनमेधमाने मोहान्धकारपरिपन्थिनि संविदग्नौ ।**
**कस्मिंश्चिदद्भुतमरीचिविकासभूमौ विश्वं जुहोमि वसुधादिशिवावसानम् ॥'**

इति । मन्त्रार्थविभावनञ्च च रहस्तर्पणं तेन तर्पिता ॥ १३४ ॥

**सद्यःप्रसादिनी विश्वसाक्षिणी साक्षिवर्जिता ।**

तादृशयागतर्पणाभ्यां सद्यस्तदात्व एव प्रसीदतीति तथा । विश्वस्य द्रष्ट्री साक्षादव्यवधानेन स्वरूपात्मकबोधेनेति विश्वसाक्षिणी । **'साक्षाद्द्रष्टरि संज्ञाया'**मितीन् ।

---

रहसि एकान्ते उपासकैराधारादिचक्रेषु क्रियमाणो भावनामयो यागो रहोयागः तस्य यः क्रमः परिपाटी तेन आराध्या । आराध्यायै इति ॥ तादृश पूजने नानाविधद्रव्यैर्यत्तर्पणं तेन तर्पिता । तर्पितायै इति ॥ १३४ ॥

तादृशोपासकेषु सद्यस्तत्काल एव प्रसादं करोतीति सा । प्रसादिन्यै इति ॥ विश्वस्याखिलप्रपञ्चस्य साक्षाद्द्रष्ट्री । साक्षिण्यै इति ॥ स्वेतरसाक्षिणा वर्जिता । वर्जितायै इति ॥

सर्वसाक्षिण्याः साक्ष्यन्तरायोगात्साक्षिवर्जिता। षडवयवकान्यङ्गानि हृदयशिरःशिखा-नेत्रकवचास्त्राणि तेषां देवताभिः शक्तिभिर्युक्ता आवृता। **ज्ञानार्णवादिषु**–

**'अथाङ्गवरणं कुर्याच्छ्रीविद्यामनुसम्भवम्।**
**षडङ्गावरणाद्बाह्यसमीपे क्रमतोऽर्चयेत्॥**
**परिवारार्चनं पश्चादादावङ्गावृतिः प्रिये।'**

इत्यादिव्यवहारदर्शनेन तासामप्यावरणदेवतात्वात्, ताभिः सहैव नवावरणसंख्यापूर्तेः सम्भवाच्च।

## षडङ्गदेवतायुक्ता षाड्गुण्यपरिपूरिता॥ १३५॥

षण्णामङ्गानामधिष्ठात्री देवता महेश्वर एव। तेन युक्ता वा। उक्तञ्च **देवीभागवते**–

**'सर्वज्ञता तृप्तिरनादिबोधः स्वतन्त्रता नित्यमलुप्तशक्तिः।**
**अनन्तता चेति विधेर्विधिज्ञाः षडाहुरङ्गानि महेश्वरस्य॥'**

इति। शिक्षाकल्पादिषडङ्गाभिमानिदेवतासाहित्याच्छ्रुतिस्वरूपेति वार्थः। सन्धि-विग्रहयानासनद्वैधीभावसमाश्रयाणां कामन्दकोक्तानामैश्वर्यधर्मयशःश्रीज्ञानवैराग्याणां पुराणप्रसिद्धानां वा षण्णां गुणानां समूहः षाड्गुण्यं तेन परितः पूरिता॥ १३५॥

## नित्यक्लिन्ना निरुपमा निर्वाणसुखदायिनी।

नित्यं दयया क्लिन्ना सार्द्रा। तृतीयातिथिनित्या नित्यक्लिन्नेत्युच्यते। इयं **गरुडपुराणे**–'**नित्यक्लिन्नामथो वक्ष्ये त्रिपुरां भुक्तिमुक्तिदा**'मित्यादिना प्रपञ्चिता तद्रूपा वा। निर्गतोपमा सादृश्यं यस्याः सा निरुपमा। '**न तस्य प्रतिमास्ति**' इति श्रुतेः। निर्गतं बाणं शरीरं यस्मिंस्तदशरीरम्। '**एतद्बाणमवष्टभ्ये**'ति **श्रुतौ** वेदान्तिभि-र्गीर्वाणपदे च मीमांसकैर्बाणशब्दस्य शरीरपरत्वेन व्याख्यानात्। '**शरीरे बाण-मुद्गला**'वित्य**मरशेषा**च्च। अशरीरं इयत्तानवच्छिन्नं सुखं मोक्षाख्यं ददातीति तथा। **कौर्मे** हिमवन्तंप्रति देवीवाक्यम्–

**'मामनादृत्य परमं निर्वाणममलं पदम्।**
**प्राप्यते नहि शैलेन्द्र ततो मां शरणं व्रज॥**
**एकत्वेन पृथक्त्वेन तथा चोभयतोऽपि वा।**
**मामुपास्य महाराज ततो यास्यसि तत्पदम्॥'** इति।

---

षट्संख्याकानि हृदयादीन्यङ्गानि तेषां देवताभिर्युक्ता। युक्तायै इति॥ षण्णां ऐश्वर्यादिगुणानां समूहः षाड्गुण्यम्, तेन परितः पूरिता। पूरितायै इति॥ १३५॥

नित्यक्लिन्ना दयार्द्रा। क्लिन्नायै इति॥ उपमा सादृश्यम्, तन्निर्गतं यस्याः सा। उपमायै इति। निर्वाणं अपरिच्छिन्नं यत्सुखं तद् ददातीति सा। दायिन्यै इति॥

**नित्याषोडशिकारूपा श्रीकण्ठार्धशरीरिणी ॥ १३६ ॥**

षोडशैवषोडशिकाः नित्याश्च ताः षोडशिकाश्च कामेश्वर्यादित्रिपुरसुन्दर्यन्तास्तासां रूपाणि यस्याः सा । उक्तञ्च **तन्त्रराजे**–

**'आद्याया ललितायाः स्युरन्याः पञ्चदशाङ्गगाः ।**
**ललिताङ्गित्वरूपेण सर्वासामात्मविग्रहा ॥'**

इति । षोडश्येव षोडशिकेति वा । नित्यो विकल्परहित आसमन्तात्षोडशिको ग्रहयागाभ्यासविशेषो येषु क्रतुषु तैरासमन्ताद्रूप्यते प्रीयत इति वा । **'अतिरात्रे विकल्पितस्यापि षोडशिग्रहस्योत्तरेहन् द्विरात्रस्य गृह्यत'** इत्यादिवचनैरुत्तरक्रतुषु नित्यत्वात् । उक्तञ्च **शक्तिरहस्ये**–

**'कोटिभिर्वाजपेयानां यथा षोडशकोटिभिः ।**
**प्रियतेऽम्बा तथैकेन षोडश्युच्चारणेन सा ॥'**

इति । श्रीर्विषं कण्ठे यस्य सः श्रीकण्ठः शिवस्तस्यार्धं शरीरमस्याः । श्रीकण्ठेनार्धशरीरवतीति वा । तदभिन्नार्धशरीरशालिनीति यावत् । अत एवैकस्यैव द्व्यात्मकत्वं **बृहदारण्यके** श्रूयते–**'आत्मैवेदमग्र आसी'**दिति प्रक्रम्य **'स इममेवात्मानं द्वेधाऽपातयत्ततः पतिश्च पत्नी चाभवतामि'**ति । अथवा । श्रीकण्ठवदर्धे शरीरे अस्याः । श्रीकण्ठस्य यथा किञ्चिन्नीलं किञ्चिच्छुक्लं शरीरं तद्वदुभयरूपेति यावत् । तदुक्तं **वायुपुराणे**–

**'तत्र या सा महाभागा शङ्करस्यार्धकायिनी ।**
**कायार्धं दक्षिणं तस्याः शुक्लं वामं तथा सितम् ॥**
**आत्मानं विभजस्वेति प्रोक्ता देवी स्वयम्भुवा ।**
**तदैव द्विविधा भूता गौरी कालीति सा द्विजा ॥'**

इति । यद्वा । **'अः श्रीकण्ठः सुरेशश्च ललाटं केशवोऽमृते'**ति **मातृकाकोशा**च्छ्रीकण्ठोऽकारः स एवार्धं शरीरमस्या वाग्रूपाया इत्यर्थः । तथा च श्रूयते–**'अकारो वै सर्वा वाक्सैषा स्पर्शोष्मभिर्व्यज्यमाना बह्वी नानारूपा भवती'**ति । अकाररूपा पराख्या प्रथमा वागेव वैखर्यात्मिका जातेति फलितार्थः । उक्तञ्च **सूतसंहितायाम्**–

**'वागुद्भुता पराशक्तिर्या चिद्रूपा पराभिधा ।**
**वन्दे तामनिशं भक्त्या श्रीकण्ठार्धशरीरिणीम् ॥'**

इति । यद्वा एकार्धरूपाया देव्या अर्धान्तरः श्रीकण्ठः परिपूर्तिकर इति यावत् । तदपि तत्रैवोक्तम्–**'इच्छासंज्ञा च या शक्तिः परिपूर्णा शिवोदरे'**ति । शैवे मातृकान्यासेऽर्धं पूर्णोदर्यादिशक्तिभिरर्धं श्रीकण्ठादिशिवैः पूर्यत इति फलितार्थः । यद्वा अकारस्य यल्लेखनदशायां कामकला समानजातीयमर्धं तदभिन्नशरीरवतीति । १३६ ॥

---

नित्यायाः षोडशिकाः षोडशसंख्याः तासां रूपं यस्याः सा । रूपायै इति ॥ श्रीकण्ठस्य गरलकण्ठस्य अर्धशरीरं अस्या अस्तीति सा । शरीरिण्यै इति ॥ १३६ ॥

## प्रभावती प्रभारूपा प्रसिद्धा परमेश्वरी ।

प्रभा अणिमाद्या आवरणदेवताः । **'अणिमादिभिरावृतां मयूखै'**रिति वचनात् । तद्वती ताभिरावृता । किरणास्तावद्गुणस्वरूपा न पुनर्द्रव्यान्तराणीति प्राचां पक्षः । **'किरणा गुणा न दव्वं तेसु पयासो गुणो न सो दव्वो'** इति धर्मसंग्रहिण्यादौ ग्रन्थे **हरिभद्रादिभिर्जैनसूरिभिरुट्टङ्कितः** । **'किरणा गुणा न द्रव्यं तेषु प्रकाशो गुणो न स द्रव्य'**मिति तु तच्छाया । ततश्च गुणगुणिनोरभेदादाह । प्रभारूपा अणिमाद्या देवता, स्वरूपमेव यस्याः । **''मनोमयो भारूप'** इति श्रुतेः । सर्वैरहमिति वेद्यत्वात्प्रसिद्धा । तथा च **देवीभागवते**–**'तामहं प्रत्ययव्याजात्सर्वे जानन्ति जन्तव'** इति । तत्रैव प्रथमस्कन्धारम्भे–**'सर्वचैतन्यरूपां तामाद्या विद्यां च धीमही'**ति । परमा उत्कृष्टा स सेश्वरी स्वामिनी च ।

## मूलप्रकृतिरव्यक्ता व्यक्ताव्यक्तस्वरूपिणी ॥ १३७ ॥

मूलस्य श्रीविद्यामन्त्रस्य प्रकृतिः कारणभूतप्रकाशविमर्शाख्याक्षरद्वयरूपा । सांख्यमतप्रसिद्धा वा मूलप्रकृतिः । यदाहुः–

**'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त ।**
**षोडशकस्तु विकारो न प्रकृतिर्न विकृतिः पुरुषः ॥'**

इति । **मृगेन्द्रसंहितायां** तु **'महदादिसप्तकरूपसुषुम्णावेष्टिता कुण्डलिन्येवाष्टप्रकृतिरूपा मूलप्रकृतिरुच्यत'** इत्युक्तं तेन तद्रूपा वा । अथवा पृथिव्यादीनामाकाशान्तानां मध्ये पूर्वपूर्वस्य विकृतिभूतस्योत्तरोत्तरं भूतं प्रकृतिः । आकाशस्य तु ब्रह्मैव प्रकृतिः । **'आत्मन आकाशः सम्भूत'**इति श्रुतेः । तस्य तु न प्रकृत्यन्तरमतो मूलस्थानीया प्रथमा प्रकृतिरित्यर्थः । अत एव **पञ्चरात्रागमे** शिववाक्यम्–

**'प्रादुरासीज्जगन्मार्ता वेदमाता सरस्वती ।**
**यस्या न प्रकृतिः सेयं मूलप्रकृतिसंज्ञिता ॥**
**तस्यामहं समुत्पन्नस्तत्त्वैस्तैर्महदादिभिः ।'**

इति । अत्रैदं बोध्यम्–नियतकालपरिपाकानां हि कर्मणां मध्ये परिपक्वानामुपभोगेन क्षयादितरेषां च पक्वानां भोगसम्भवेन तदर्थायाः सृष्टिरनुपयोगात्प्राकृतप्रलयो भवति । तदा ग्रस्तसमस्तप्रपञ्चा माया स्वप्रतिष्ठे परमशिवे निष्कले विलीना सती

---

प्रभा कान्तिरस्यास्तीति सा । प्रभावत्यै इति ॥ प्रकृष्टं सूर्याद्यपेक्षया भारूपं प्रकाशरूपं यस्याः सा । रूपायै इति ॥ अत एव प्रकाशकान्तरानपेक्षया प्रसिद्धा । प्रसिद्धायै इति ॥ परमेश्वरस्य स्त्री । ईश्वर्यै इति ॥

मूलस्य जगत्कारणस्येश्वरस्य प्रकृतिः स्वभावभूता । प्रकृत्यै इति ॥ अव्यक्ता मायारूपा । अव्यक्तायै इति ॥ व्यक्ताव्यक्ते कार्यकारणे । तदुभयं स्वरूपं अस्या अस्तीति सा । स्वरूपिण्यै इति ॥ १३७ ॥

यावदवशिष्टकर्मपरिपाकं तथैव तिष्ठति । तदुक्तम्—'**प्रलये व्याप्यते तस्यां चराचरमिदं जग**'दिति । **विष्णुपुराणे**ऽपि—

**'जगत्प्रतिष्ठा देवर्षे पृथिव्यप्सु प्रलीयते ।**
**तेजस्यापः प्रलीयन्ते तेजो वायौ प्रलीयते ॥**
**वायुः प्रलीयते व्योम्नि तदव्यक्ते प्रलीयते ।**
**अव्यक्तं पुरुषे ब्रह्मन्निष्कले संप्रलीयते ॥'**

इति । अव्यक्तं माया । तस्याश्च लयो नाम मुक्ताविव नात्यन्तिको नाशः किन्तु सुषुप्तावन्तःकरणवृत्तीनामिव मायावृत्तीनामनुदयादत्यन्तनिर्विकल्पात्मनः परमात्मप्रकाशस्य बलाद्भानसत्त्वेऽप्यप्रतिभातप्रायत्वम् । सर्वथा भानाभावे वस्तुन एवाभावापत्तेः । इष्टापत्तावुत्तरत्र सर्गानुपपत्तेः । अवशिष्टैः प्राणिकर्मभिश्च तस्यां मायायां विलीयैव क्रमेण प्राप्तपरिपाकैः स्वफलप्रदानाय परशिवस्य सिसृक्षात्मिका मायावृत्तिरुत्पाद्यते । सैषा मायावस्था ईक्षणकामतोपोविचिकीर्षादिशब्दैरुच्यते । '**स ईक्षत लोकान्नु सृजा**' इत्यै**तरेये** । '**तदैक्षत बहु स्यां प्रजायेये**'ति **छान्दोग्ये** । '**सोऽकामयत बहु स्यां प्रजायेये**'ति **तैतिरीये** । '**तपसा चीयते ब्रह्मे**'ति **मुण्डके** । तादृशवृत्तिविषयतया सविकल्पकत्वेन मायाया यत्स्फुरणं सोऽयमबुद्धिपूर्वकस्तमसः सर्गः प्रथमः । '**नासदासीन्नो सदासी**'दित्यारभ्य '**तमासीत्तमसा गूळहमग्र**' इत्यन्ता **श्रुतिः** '**तस्मादव्यक्तमुत्पन्न**'मित्यादि**स्मृति**रप्येतत्परैव । एतस्मादविभागापन्नगुणत्रयादव्यक्ततमःपदवाच्यादन्तर्विभागस्थगुणत्रयात्मकस्येषदव्यक्तस्य महतः सर्गो द्वितीयः । तदुक्तम्—

**'अव्यक्तादन्तरुदितत्रिभेदग्रहणात्मकम् ।**
**महन्नाम भवेत्तत्वं महतोऽहंकृतिस्तथा ॥'**

इति । तस्माद्बहिर्विभागगुणत्रयावस्थस्याहङ्कारस्य सर्गस्तृतीयः ।

**'वैकरिकस्तैजसश्च भूतादिश्चैव तामसः ।**
**त्रिविधोऽयमहङ्कारो महत्तत्वादजायते ॥'**

इति वचनात् । अत्र भूतादेस्तामसत्वेन विशेषणादन्ययोः सात्त्विकराजसत्वे सूचिते । तत्र भूतादिनामकात्तामसादहङ्काराद्रजसावष्टब्धात्पञ्चतन्मात्राणां सर्गश्चतुर्थः। वैकारिकनाम्नः सात्त्विकादहङ्काराद्रजोवष्टब्धादेकादशेन्द्रियगणस्य सर्गः पञ्चमः। राजसात्तैजसादहङ्कारादुभयाधिष्ठातृदिग्वातार्कप्रचेतोश्व्यादिदेवतासर्गः षष्ठः । यदाहुः **सांख्याः** —

**'सात्त्विक एकादशकः प्रवर्तते वैकृतादहङ्कारात् ।**
**भूतादेस्तन्मात्रः स तामसस्तैजसादुभयम् ॥'**

इति । **शैवमते** तु सात्त्विकादहमो मनो राजसादहमो दशेन्द्रियाणीति विशेषः । यदाहुः **शैवाः** –

**'सात्त्विकराजसतामसभेदेन स जायते पुनस्त्रेधा ।**
**स च तैजसवैकारिकभूतादिकनामभिः समुल्लसति ॥**
**तैजसतस्तत्र मनो वैकारिकतो भवन्ति चाक्षाणि ।**
**भूतादेस्तन्मात्राण्येषां सर्गोऽयमेतस्मात् ॥'**

इति । एते च षट्सर्गाः प्राकृताः । वृक्षादिरूर्ध्वस्रोतोरूपः पश्वादिस्तिर्यक्स्रोतोरूपो भूतप्रेतादिरर्वाक्स्रोत इति त्रयो वैकृताः । प्राकृतवैकृतात्मक एकः कौमारसर्ग इति । तदुक्तं **विष्णुभागवते**–

**'आद्यास्तु महतः सर्गो गुणवैषम्यमात्मनः ।**
**द्वितीयस्त्वहमो यत्र द्रव्यज्ञानक्रियोदयः ॥**
**भूतसर्गस्तृतीयस्तु तन्मात्रो द्रव्यशक्तिमान् ।**
**चतुर्थ ऐन्द्रियः सर्गो यस्तु ज्ञानक्रियात्मकः ॥**
**वैकारिको देवसर्गः पञ्चमो यन्मयं मनः ।**
**षष्ठस्तु तमसः सर्गो यस्त्वबुद्धिकृतः प्रभोः ॥**
**षडिमे प्राकृताः सर्गा वैकृतानपि मे शृणु ।'**

इत्यादि । अत्राव्यक्ताख्यतमःसर्गस्य पष्ठत्वोक्तिः पाठक्रमानुसारेण । आर्थक्रमात्तु तस्य प्रथमत्वमेव । अस्मन्नेवार्थे **वायुपुराणादीन्यप्युदाहार्याणि** । एवं चाव्यक्तादिसर्गाणां मध्ये उत्तरोत्तरस्य पूर्वपूर्वं प्रकृतिः अव्यक्तस्य तु ब्रह्मैव प्रकृतिरिति सर्वसृष्टीनां मूलभूतत्वात्तस्य मूलान्तराभावाच्च मूलप्रकृतिरित्यर्थः । अत एव श्रूयते–**'इन्द्रियेभ्यः परा ह्यर्था'** इत्यारभ्य

**'महतः परमव्यक्तमव्यक्तात्पुरुषः परः ।**
**पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः ॥'**

इति । अथवा मूकारः पञ्चसंख्यानां तन्मात्राणाम् । लकारस्त्वव्यक्तमहदहङ्काराणां त्रयाणां बोधकः । तेनाष्टविधा प्रकृतिरित्यर्थः । तथा च समाससूत्रम्–**'अष्टौ प्रकृतय'** इति । अथ क्रमेण सर्वस्वरूपैः स्तोतुमुपक्रमते ।

अव्यक्ता प्राथमिकमायास्फूर्तिरूपा । **सांख्यमते** प्रधानप्रकृत्यादिपदवाच्यमव्यक्तं तद्रूपा वा । तदुक्तं **सांख्यसप्तत्याम्**–

**'सूक्ष्ममलिङ्गमचेतनमनादिनिधनं तथा प्रसवधर्मि ।**
**निरवयवमेकमेव हि साधारणमेतदव्यक्तम् ॥'**

इति । **पञ्चशिखाचार्यैरपि**—'**अनादिमध्यं महतः परं ध्रुवं प्रधानमव्यक्तमुशन्ति सूरय**' इति । तच्च गुणत्रयसमष्टिरूपमेवेति '**सत्त्वादीनामतद्धर्मत्वं तद्रूपत्वादि**'ति **सांख्यप्रपञ्चनसूत्रे** स्पष्टम् । ब्रह्मैव वाऽव्यक्तपदेनोच्यते । '**तदव्यक्तमाह ही**'त्यधिकरणे '**न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वे**'त्यादिश्रुतिभिस्तथा निर्णयात् । विष्णुस्वरूपेति वार्थः ।

**प्रधानमव्ययं योनिरव्यक्तं प्रकृतिस्तमः ।**
**विष्णोरेतानि नामानि नित्यं प्रभवधर्मिणः ॥'**

इति **लैङ्गात्** । व्यक्तं महत्तत्त्वं पूर्वस्मादभिव्यक्तत्वान्महत्वाच्च । आसमन्ताद्व्यक्त आव्यक्तस्तज्जन्योऽहङ्कारः तदुभयस्वरूपिणीत्येकं पदम् । व्यक्तेत्यस्य भिन्नपदत्वं स्वीकृत्योत्तरत्र ब्रह्मजननीति नामद्वयस्यैक्यमपि कर्तुं युक्तं पौनरुक्त्यादिदोषाप्रसरात् । प्रत्युत वकारबकारादिनामप्रायपाठानुगुण्याच्च । अस्मिन्पक्षे व्यक्तं स्वरूपमहन्तात्मकमस्या इति योज्यम् । पराहन्तायास्त्रिपुरसुन्दरीरूपत्वाद् अहङ्काराख्यतत्त्वे तदभिव्यक्तेः । व्यक्तमव्यक्तं चेति स्वरूपे अस्या इति वा । भूतभावविकारसाहित्यराहित्यवतीत्यर्थः । तदप्युक्तं **लैङ्गे**—

**'भूतभावविकारेण द्वितीयेन सदुच्यते ।**
**व्यक्तं तेन विहीनत्वादव्यक्तमसदित्यपि ॥'**

इति । क्षराक्षररूपेति वाऽर्थः । '**उक्तमक्षरमव्यक्तं व्यक्तं क्षरमुदाहृत**'मिति **मत्स्यपुराणात्** । समष्टिव्यष्टिरूपेति वा । '**समष्टिं विदुरव्यक्तं व्यक्तं व्यष्टिं मुनीश्वरा**' इति **नृसिंहपुराणात्** । त्रयोविंशतितत्त्वप्रकृतिरूपा वा ।

**'त्रयोविंशतितत्त्वानि व्यक्तशब्देन सूरयः ।**
**वदन्त्यव्यक्तशब्देन प्रकृतिं च परां तथा ॥'**

इति **ब्रह्माण्डपुराणात्** । अथवा व्यक्ताव्यक्ते च व्यक्ताव्यक्तं चेति पुनरेकशेषान्तरेण व्यक्तमव्यक्तं व्यक्ताव्यक्तं चेति त्रिविधलिङ्गरूपेत्यर्थः । तल्लक्षणानि **ब्रह्मवैवर्तपुराणे**—

**'स्वायम्भुवं बाणलिङ्गं शैललिङ्गमिति त्रिधा ।**
**कीर्तितं व्यक्तमव्यक्तं व्यक्ताव्यक्तमिति क्रमात् ॥**
**व्यक्तं भुक्तिप्रदं मुक्तिप्रदमव्यक्तमुच्यते ।**
**भुक्तिमुक्तिप्रदं लिङ्गं व्यक्ताव्यक्तं प्रचक्षते ॥**
**द्वित्रिस्तुलां समारूढं वृद्धिमेति न हीयते ।**
**तद्बाणलिङ्गमुदितं शेषं शैलं विदुर्बुधाः ॥'**

इति । अथवा पक्वमलेषु सुव्यक्तं पाशबद्धेष्वव्यक्तं स्वरूपमस्याः । तदुक्तं **शक्तिरहस्ये** शक्तिपातशब्दार्थनिरूपणावसरे–

**'व्यापिनी परमा शक्तिः पतितेत्युच्यते कथम् ।**
**ऊर्ध्वादधोगतिः पातो मूर्तस्यासर्वगस्य च ॥**
**सत्यं सा व्यापिनी नित्या सहजा शिववत्स्थिता ।**
**किं त्वियं मलकर्मादिपाशबद्धेषु संवृता ॥**
**पक्वदोषेषु सुव्यक्ता पतितेत्युपचर्यते ।'** इति ॥

**व्यापिनी–**

अहङ्कारत्रयकार्यरूपावशिष्टप्राकृतसर्गत्रितयात्मकतया परिणामाद्व्यापिनी । सर्वजगद्व्यापिका वा ।

**इति भास्कररायेण कृते सौभाग्यभास्करे ।**
**चतुर्थशतकेनाभूत्पञ्चमी ज्वालिनी कला ॥ ४०० ॥**

**इति श्रीमल्ललितासहस्रनामभाष्ये चतुर्थशतकं नाम पञ्चमी कला ॥ ५ ॥**



---

व्यापिनी व्यापनशीला जगद्व्यापिकेति । व्यापिन्यै इति ॥

# पञ्चमशतकं नाम षष्ठी रुच्याख्या कला

**—विविधाकारा विद्याविद्यास्वरूपिणी ।**

प्राकृता वैकृताः सर्गाः कौमारसर्गश्चेत्येवं विविधा आकारा यस्याः सा ।

**'विद्यां चाविद्यां च यस्तद्वेदोभयं सह ।**
**अविद्यया मृत्युं तीर्त्वा विद्ययाऽमृतमश्नुते ॥'**

इति **श्रुतौ** प्रसिद्धे विद्याविद्ये । विद्या स्वात्मरूपं ज्ञानम् । अविद्या चरमवृत्तिरूपं ज्ञानम् । तदुभयं स्वरूपमस्याः । उक्तञ्च **बृहन्नारदीये**—

**'तस्य शक्तिः परा विष्णोर्जगत्कार्यपरिक्षमा ।**
**भावाभावस्वरूपा सा विद्याविद्येति गीयते ॥'**

इति । **देवीभागवते**ऽपि—'**ब्रह्मैव साति दुष्प्रापा विद्याविद्यास्वरूपिणी**'ति । तत्रैव स्थलान्तरे—

**'विद्याविद्येति देव्या द्वे रूपे जानीहि पार्थिव ।**
**एकया मुच्यते जन्तुरन्यया बध्यते पुनः ॥'**

इति । यद्वा । विद्यैव चरमवृत्तिरूपं ज्ञानम् । अविद्या भेदभ्रान्तिरूपं ज्ञानम् । स्वः परब्रह्मात्मकं ज्ञानम् । स्वपदस्यात्मवाचित्वात् । '**स्वो ज्ञातावात्मनी**'ति **कोशात्** । एतत्त्रयं रूपमस्याः । उक्तञ्च **लैङ्गे**—

**'भ्रान्तिर्विद्या परं चेति शिवरूपमिदं त्रयम् ।**
**अर्थेषु भिन्नरूपेषु विज्ञानं भ्रान्तिरुच्यते ॥**
**आत्माकारेण संवित्तिर्बुधैर्विद्येति कथ्यते ।**
**विकल्परहितं तत्त्वं परमित्यभिधीयते ॥'** इति ॥

**महाकामेशनयनकुमुदाह्लादकौमुदी ॥ १३८ ॥**

महांश्चासौ कामेशश्चेति वा महाकामो महेच्छो महाशयश्चासावीशश्चेति वा महाकामेशस्तस्य नयने एव कुमुदे कैरवे रक्तपङ्कजे वा तयोराह्लादे विकासे सुखातिशयकृतनिमीलने वा कौमुदी चन्द्रिकेव । कार्तिकपूर्णिमेवेति वा ।

---

विविधः विचित्रः कालीतारादिभेदभिन्नः आकारः स्वरूपं यस्याः सा । आकारायै इति ॥ विद्या मोचकं ज्ञानम्, अविद्या बन्धनं ज्ञानम्, तदुभयं स्वरूपमस्याः । स्वरूपिण्यै इति ॥

महाकामेशः परशिवः तस्य नयनान्येव कुमुदानि तेषामाह्लादने कौमुदी ज्योत्स्नेव स्थिता । कौमुद्यै इति ॥ १३८ ॥

**'कुमुदं कैरवे रक्तपङ्कजे कुमुदः कपौ ।**
**कामुदः कार्तिके मासि चन्द्रिकायां च कौमुदी ॥'**

इति **यादवः** । अथवा । कुत्सिता नश्वरत्वाधिकदुःखसंमिश्रत्वादिहेतुभिर्निन्द्या मुत्प्रीतिर्येषां ते कुमुदो वैषयिकाः अतएव तेषामनुकम्प्यत्वाभिप्रायेण '**कृपणे कुमुदे कुमुदि**'ति **शाश्वतः** । '**स्यात्कुमुत्कृपणेऽन्यवदि**'ति **विश्वश्च** । तेषामासमन्ताद्व्याप्तो ह्लादः सुखातिशयो मोक्षरूप इति यावत् । स च महाकामेशंप्रति नयनेन प्रापणेनेति तृतीयासमासः । शिवप्रापणजन्यस्य वैषयिकनिष्ठस्य सुखस्य कौमुदी प्रकाशिका ॥ १३८ ॥

**भक्तहार्दतमोभेदभानुमद्भानुसन्ततिः ।** श्रुतः

भक्तानां हृदि भावनी यानि तमांस्यावरणशक्तिमन्त्यज्ञानानि तेषां भेदे नाशने भानुमतः सूर्यस्य भानुसन्ततिः किरणपरम्परेव । '**हृदयस्य हृल्लेखयदण्लासेष्वि**'ति हृदादेशः । '**तत्र भव**' इत्यण् ।

**शिवदूती शिवाराध्या शिवमूर्तिः शिवङ्करी ॥ १३९ ॥**

शिवो दूतोऽल्पं यथा भवति तथा सन्देशप्रापको यस्याः सा शिवदूती । '**दूञ् उपतापे**' । यथोक्तवत्कृत्वा दूतोऽप्युपतापकः । '**दूती सञ्चारिके समे**' इति **कोशे**, सञ्चारशब्दोऽपि सन्देशसञ्चारणपरः । दुनोतेर्निष्ठायां '**दुतनिभ्यां दीर्घश्चे**'ति दीर्घः । '**क्तादल्पाख्याया**'मिति ङीप् । बहुव्रीहेः क्तान्ताददन्तादल्पत्वे द्योत्ये स्त्रियां ङीषिति तदर्थः । उक्तञ्च **मार्कण्डेयपुराणे**–

**'यतो नियुक्तो दौत्येन तया देव्या शिवः स्वयम् ।**
**शिवदूतीति लोकेऽस्मिंस्ततः सा ख्यातिमागता ॥'**

इति । एतद्व्याख्याकारास्तु शिवेन सन्देशं प्रापयतति शिवदूती । गौरादेराकृतिगणत्वान्ङीप् बहुव्रीहौ तु टाप् स्यादित्याहुस्तच्चिन्त्यम् । इयं च पुष्कराख्ये तीर्थे स्थिता । तदुक्तं **पद्मपुराणे** पुष्करखण्डे–'**अथ तेऽन्याः प्रवक्ष्यामि पुष्करे या व्यवस्थिता**' इति प्रकृत्य '**शिवदूती तथा वेदी क्षेमा क्षेमङ्करी सदे**'त्यादि । शिवेनाराध्योपास्या । तदुक्तं **ब्रह्माण्डपुराणे**–

**'शिवोऽपि यां समाराध्य ध्यानयोगबलेन च ।**
**ईश्वरः सर्वसिद्धीनामर्धनारीश्वरोऽभवत् ॥'**

---

भक्तानां हृदि चित्ते भवानि यानि तमांस्य ज्ञानानि तेषां भेदने ध्वंसने भानुमतोरवेर्भानूनां किरणानां सन्ततिः समूह इव । सन्तत्यै इति ॥

शिवदूतः आज्ञाकारी यस्याः सा । दूत्यै इति ॥ शिवेन आराध्या । आराध्यायै इति ॥ शिवस्य मूर्तिः शरीरम् । मूर्त्यै इति ॥ भक्तेषु शिवं मङ्गलं करोतीति सा । कार्यै इति ॥ १३९ ॥

इति । शङ्करोपासितचतुष्कूटविद्यास्वरूपा वा । शिव एव मूर्तिः स्वरूपं यस्याः शिवशक्त्ययोरभेदात् । तदुक्तम्—

**'एको रुद्रः सर्वभूतेषु गूढो माया रुद्रः सकलो निष्कलश्च ।**
**स एव देवी न च तद्विभिन्ना ह्येतज्ज्ञात्वैवामृतत्वं व्रजन्ति ॥'**

इति । शिवा मङ्गलमयी मूर्तियस्या इति वा । शिवो मोक्ष एव रूपं यस्या वा । मोक्षस्यात्ममात्रस्वरूपत्वात् । तदुक्तं **सौरसंहितायां** चतुर्दशाध्याये—'**अथ मुक्तेः स्वरूपं ते प्रवक्ष्यामि समासत**' इत्यारभ्य

**'तस्मादात्मस्वरूपैव परा मुक्तिरविद्यया ।**
**प्रतिबद्धा विशुद्धस्य विद्यया व्यज्यतेऽनघ ॥'**

इत्यन्तम् । भक्तं शिवमेव करोति अविद्यापाशनिरासेन मुक्तप्राप्यं ब्रह्म करोतीवेत्युपचारात् । मङ्गलं करोतीति वा शिवङ्करी । '**कृञो हेतुताच्छील्यानुलोम्येष्वि**'ति टः । '**शिवशमरिष्टस्य कर**' इति मुम् ॥ १३९ ॥

**शिवप्रिया शिवपरा शिष्टेष्टा शिष्टपूजिता ।**

शिवस्य प्रिया । शिवः प्रियो यस्या इति वा । शिवात्परा शिवस्य शक्त्यधीनात्मलाभकत्वात् । शिवः परो यस्या इति वा । शिवप्रतिपादकत्वाद्वा शिवपरा । अयं शिवशब्द एतत्पर इत्यत्रैवमेव व्याख्यादर्शनात् । शिष्टान्यनुशिष्टानि विहितकर्माणि इष्टानि इच्छाविषयाः प्रियाणि यस्याः सा शिष्टेष्टा । '**इषु इच्छाया**'मिति धातोः कर्मणि निष्ठायामिष्टमिति रूपम् । यद्वा शिष्टैर्विहितकर्मभिरिष्टा पूजिता । यजतेर्निष्ठायां संप्रसारणे '**व्रश्चे**'ति षत्वे च रूपम् ।

**'स्वस्ववर्णाश्रमैर्धर्मैः सम्यग्भगवदर्पितैः ।**
**यत्पूजनं न तद्गन्धमाल्यादीनां समर्पणैः ॥'**

इति वचनात् । 'आचारप्रभवो धर्मो धर्मस्य प्रभुरच्युत' इति **महाभारतबृहन्नारदीय**योर्वचनात्त्च । यद्वा—

**'न पाणिपादचपलो न नेत्रचपलो भवेत् ।**
**न च वागङ्गचपल इति शिष्टस्य गोचरः ॥**
**पारम्पर्यागतो येषां वेदः सपरिबृंहणः ।**
**ते शिष्टा ब्राह्मणा ज्ञेयाः श्रुतिप्रत्यक्षहेतवः ॥'**

---

शिवस्य प्रिया कान्ता । प्रियायै इति ॥ शिवस्यापि परा उत्कृष्टा जीवभूता । परायै इति ॥ शिष्टा इष्टा यस्याः । इष्टायै इति ॥ शिष्टैः पूजिता । पूजितायै इति ॥

इति **वसिष्ठसूत्रो**क्तलक्षणकाः शिष्टास्ते इष्टा यस्याः सा । यद्वा शिष्टैरिष्टा पूजिता । इममेवार्थं स्पष्टमाचष्टे शिष्टपूजिता ।

**अप्रमेया स्वप्रकाशा मनोवाचामगोचरा ॥ १४० ॥**

प्रमातुं योग्या प्रमेया प्रमेया न भवतीत्यप्रमेया । अकारार्थैर्ब्रह्मविष्ण्वादिभिः प्रमेया वा । अप्सु प्रमेया वा । **'मम योनिरप्स्वन्तः समुद्र'** इति **श्रुतेः** । स्वः आत्माभिन्नः प्रकाशो यस्याः । दृश्यत्वाभावेन पराप्रकाश्यत्वात् । **'अत्रायं पुरुषः स्वयंज्योति'**रिति **श्रुतेः** । सुषु अप्सु प्रकाशो यस्या वा । मनांसि च वाचश्च मनोवाचस्तेषां तासां चागोचरा अविषयः । **'यतो वाचो निवर्तन्ते अप्राप्य मनसा सहे'**ति **श्रुतेः** । **विष्णुपुराणे** प्रह्लादवचनञ्च–

**'यातीतगोचरा वाचां मनसां चाविशेषणा ।**
**ज्ञानिज्ञानपरिच्छेद्या वन्दे तामीश्वरीं पराम् ॥'**

इति । **'स्त्रीशूद्रद्विजबन्धूनां त्रयी न श्रुतिगोचरे'**त्यादाविव गोचरशब्दस्य स्त्रीलिङ्गत्वम् । न विद्यते गोचरो यस्यामिति वा । वाङ्मनसविषय एकोऽपि पदार्थो यस्यां नास्ति । तद्गुणानामप्यानन्त्येन वाङ्मनसाऽतीतत्वादिति भावः । यत्तु अन्त्या इत्यधिकृत्य **'निर्मन् द्वे', 'क्तिष्ठे'** इति **छलाक्षरसूत्र**द्वयं पठ्यते । निः मन् क्तिः ष्ठा इत्येतदक्षरान्तानि चत्वार्येव नामानि द्विद्विपदघटितानि भवन्तीति तदर्थः । तत्समानविभक्तिकपदद्वयपरम् । **'अप्राप्ते वाक्यमर्थ'**वदिति न्यायेन तादृशस्थल एव नामद्वयभ्रमनिरासकत्वेन सार्थक्यात् । यथा **'परं ज्योतिः परं धाम परा शक्तिः परा निष्ठे**ति । इदं तु भिन्नविभक्ति-पदद्वयघटितमेकं नामेत्यदोषः । यद्यपि मनश्च वाचा च मनोवाचे ते च ते आमे च अपक्वे च मनोवाचामे । **'विशेषणं विशेष्येण बहुल'**मित्युक्तेर्न पूर्वनिपातः । ते न भवत इत्यमनोवाचामे । तयोर्गोचरेत्येकपदमेवेदं नाम सुवचम् । **'यतो वाचो निर्वतन्ते'** इति **श्रुते**र्वेदैकवेद्यत्वश्रुत्या **'मनसैवानुद्रष्टव्य'**इत्यादिश्रुत्या च सह विरोधस्य भामत्यां शक्ति-लक्षणापरतया पक्वापक्वमनःपरतया च व्यवस्थाकल्पनेन परिहृतत्वात् । तथापि **'गस्वियादृढीठकां पृण्'** इति **छलाक्षरसूत्र**विरुद्धम् । तस्य च छाया 'पृकिकुरवीरिव-दृढीठकांपृ'इत्येकादशभिरक्षरै**र्भाष्यकारै**रुक्ता । तेषु च प्रकृतं नामारभ्य पञ्चकोशान्तर-स्थितेत्यन्तानि चतुर्दश नामानि प्रतिपाद्यन्ते । पवर्गीयाद्यक्षरकाष्टाक्षरनामभ्यां संपुटी-कृतानि द्वादश नामानीत्यर्थः । प्रकृतनामन्येकाक्षरप्रश्लेषे तु नवाक्षरत्वं स्वरादित्वं च

---

न प्रमातुं योग्या अपरिच्छिन्ना । प्रमेयायै इति ॥ स्वप्रकाशो यस्याः सा पराप्रकाशत्वात् । प्रकाशायै इति ॥ मनसां वचसां अगोचरः अविषयः स्वरूपं यस्याः सा । गोचरायै इति ॥ १४० ॥

स्यादिति तादृशेन संपुटीकरणाभावाद्भवति सूत्रविरोधः । सूत्राणामपि दृष्टोपाय-निबन्धनमात्ररूपत्वेन तदुक्तोपायस्योपायान्तरादूषकत्वपर्यालोचने तु सोऽपि पक्षः साधुरेव । एवमन्यत्रापि द्रष्टव्यम् ॥ १४० ॥

**चिच्छक्तिश्चेतनारूपा जडशक्तिर्जडात्मिका ।**

चिच्छक्तिरौपम्यशक्तिः । **चिदित्युपमाया**'मिति **यास्कस्मृतेः** । '**चिदिति चोपमार्थे प्रयुज्यमान**' इति **पाणिनिस्मरणाच्च** ।

**'द्वे अक्षरे ब्रह्मपरे अनन्ते विद्याऽविद्ये निहिते यत्र गूढे ।**
**क्षरं त्वविद्या ह्यमृतं तु विद्या विद्याऽविद्ये ईशते यस्तु सोऽन्य ॥'**

इति **श्वेताश्वतर**निर्दिष्टं विद्यापदेनोच्यते । अविद्यानिवारकत्वरूपं सामर्थ्यं चैतन्यापरंपर्यायं वा चिच्छक्तिः । **देवीभागवते** पञ्चमस्कन्धे-

**'वर्तते सर्वभूतेषु शक्तिः सर्वात्मना नृप ।**
**शववच्छक्तिहीनस्तु प्राणी भवति सर्वथा ॥**
**चिच्छक्तिः सर्वभूतेषु रूपं तस्यास्तदेव हि ।'**

इति । तदेवाह चेतनारूपा । '**चिच्छक्तिः परमेश्वरस्य विमला चैतन्यमेवोच्यत**' इति **संक्षेपशारीरकाचार्याः** । '**चैतन्यस्वरूपा शक्ति**'रिति **गौडपादीयसूत्रञ्च** । **देवीभागवते** प्राथमिकश्लोकेऽपि–'**सर्वचैतन्यरूपां तामाद्यां विद्यां च धीमहि । बुद्धिं या नः प्रचोदया**'दिति । इयञ्च त्रिचरणा गायत्री । अत एव **मात्स्ये**–'**गायत्र्या च समारम्भस्तद्वै भागवतं विदु**'रिति । "**सैषानन्दस्य मीमाँसा भवती**' ति श्रुतिरपि । आनन्दस्य ब्रह्मणः सैषा चिद्रूपा शक्तिर्मीमांसा भवति विमर्शात्मिका भवतीति **शंकरारण्यचरणैर्विद्यारत्ने** व्याख्यानदर्शनात् ।

स्रष्टव्यजगदात्मकशक्यप्रतियोगिको मायापरिणामविशेषो जडशक्तिः । सृज्यशक्ति-मात्रोपलक्षणमेतत् । उक्तञ्च **विष्णुपुराणे**–

**'शक्तयः सर्वभावानामचिन्त्यज्ञानगोचराः ।**
**शतशो ब्रह्मणस्तास्तु सर्गाद्या भावशक्तयः ॥**
**भवन्ति तपसां श्रेष्ठ पावकस्य यथोष्णता ।**
**निमित्तमात्रमेवासौ सृज्यानां सर्गकर्मणि ॥**

---

चितः ज्ञानात्मनः शक्तिः चैतन्यरूपा । शक्त्यै इति ॥ चेतना चैतन्यम्, तद्रूपं यस्याः सा । रूपायै इति ॥ जडस्य पृथिव्यादेः शक्तिः धारणदाहनादि तद्रूपा । शक्त्यै इति ॥ जडस्य दृश्यस्य आत्मैका(वा)त्मिका । चिदतिरेकेण जडस्य रूपाभावात् । आत्मिकायै इति ॥

**प्रधानकारणीभूता यतो वै सृज्यशक्तयः ।**
**निमित्तमात्रं मुक्त्वैकं नान्यत्किञ्चिदपेक्षते ॥**
**नीयते तपसां श्रेष्ठ स्वशक्त्या वस्तुतस्तु ताम् ।'**

इति । जडं दृश्यमात्रमात्मा स्वरूपं यस्या मायायाः सा जडात्मिका ।

**गायत्री व्याहृतिः सन्ध्या—**

चतुर्विंशत्यक्षरं छन्दो गायत्री । '**गायत्री छन्दसामह**'मिति **गीता** । '**गायत्री छन्दसामसी**'ति **कौर्मे देवीस्तवे** च । यद्वा गायत्र्याख्या गोपकन्या ब्रह्मणः कनिष्ठपत्नी । तदुक्तं **पद्मपुराणे** पुष्करक्षेत्रे ब्रह्मणि यागं कुर्वति सति समाहूता सावित्री, लक्ष्म्यादिका अद्यापि नागतास्ताभिः सहागच्छामीत्युत्तरमदात् । तेन वचनेन कुपितो ब्रह्मा शक्तिहस्तात्काञ्चिद्गोपकन्यामानाय्य विष्णुं प्रत्युक्तवानिति प्रकृत्य

**'तावद् ब्रह्मा हरिं प्राह यज्ञार्थं सत्वरं च नः ।**
**दैवी चैषा महाभाग गायत्री नामतः प्रभो ॥**
**एवमुक्ते तदा विष्णुर्ब्रह्माणं प्रोक्तवानिदम् ।**
**तदेनामुद्वहस्वाद्य मया दत्तां तव प्रभो ॥**
**गान्धर्वेण विवाहेन विकल्पं मा कृथाश्चिरम् ।**
**गृहाण गोपकन्याया अस्याः पाणिमनाकुलम् ॥**
**गान्धर्वेण ततो गोपीमुपयेमे पितामहः ।'**

इत्यादि । तेन तादृशगोपकन्यारूपेत्यर्थः । अथवा '**गायन्तं त्रायते यस्माद्गायत्री तेन कथ्यत**' इति **गायत्रीकल्पे भारद्वाजस्मृत्युक्तनिर्वचनाद्वेदमातरि** प्रसिद्धो गायत्रीशब्दस्तदभेदादम्बाया अपि वाचकः । '**आतोऽनुपसर्गे क**' इति कः । गौरादित्वान्ङीष् । तदुक्तं **पद्मपुराणे—**

**'विशेषात्पुष्करे स्नात्वा जपेन्मां वेदमातरम् ।**
**अष्टाक्षरा स्थिता चाहं जगद्व्याप्तं मया त्विदम् ।'**

इति । **देवीपुराणे** तु—'**गायनाद्गमनाद्वापि गायत्री त्रिदशार्चिते**'त्युक्तम् । '**गायति च त्रायते चे**'ति तु **छान्दोग्यम्** । '**गायत्री गायनात्मत्वा**'दिति **महावासिष्ठरामायणञ्च** । व्याहृतिव्याहरणमुच्चारणं तद्रूपा । मन्त्रविशेषरूपा वा । **वायुपुराणे** तु—

**'मयाभिव्याहृतं यस्मात्त्वं चैव समुपस्थिता ।**
**तेन व्याहृतिरित्येवं नाम ते सिद्धिमेष्यति ॥'**

---

गायन्तं त्रायते इति गायत्री । गायत्र्यै इति ॥ व्याह(हृ)तिः व्याहरणरूपा । व्याहृत्यै इति ॥ सन्धिकालोपास्या । सन्ध्यायै इति ॥

इति निरुक्तम् । आदित्यावच्छिन्नचैतन्यस्य स्वस्य चाभेदभावनं सन्ध्यापदार्थः । सम्यग्ध्यायन्त्यस्यामिति व्युत्पत्तेश्च । तदुक्तं **महाभारते**–

**'सन्ध्येति सूर्यगं ब्रह्म सन्ध्यानांदविभागतः ।**
**ब्रह्माद्यैः सकलैर्भूतैस्तदंशैः सच्चिदात्मनः ॥**
**तस्य दासोऽहमस्मीति सोऽहमस्मीति या मतिः ।**
**भवेदुपासकस्येति ह्येवं वेदविदो विदुः ॥'**

इति । तदभेदादियमपि सन्ध्या । तथा च व्यासः –

**'न भिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ।**
**साहमस्मीत्युपासीत विधिना येन केनचित् ॥'**

इति । **भारद्वाजस्मृतावपि**–

**'ब्रह्माद्याकारभेदेन या भिन्ना कर्मसाक्षिणी ।**
**भास्वतीश्वरशक्तिः सा सन्ध्येत्यभिहिता बुधैः ॥'** इति ।
**'गायत्री सशिरास्तुरीयसहिता संध्यामयीत्यागमै-**
**राख्याता त्रिपुरे त्वमेव महतां शर्मप्रदा कर्मणाम् ।'**

इत्य**भियुक्तोक्तिरि**ति । अत एव सन्धिकालोपास्यदेवतापरोऽयं शब्द इति **माधवः** । सम्यग्ध्येयत्वात्सन्ध्या । 'आतश्चोपसर्ग' इति 'कर्मण्यणि'ति **पारिजातकारः** । इयञ्च ब्रह्मणो मानसपुत्री । तदुक्तं **कालिकोपपुराणे**–

**'तदा तन्मनसो जाता चारुरूपा वराङ्गना ।**
**नाम्ना सन्ध्येति विख्याता सायंसन्ध्या जयन्तिका ॥**
**ब्रह्मणो ध्यायतो यस्मात्सम्यग्जाता वराङ्गना ।**
**अतः सन्ध्येति लोकेऽस्मिन्नस्याः ख्यातिर्भविष्यति ॥'**

इति । **भगवतीपुराणेऽपि**–

**'या सा सन्ध्या ब्रह्मसुता मनोजाता पुराभवत् ।**
**तपस्तप्त्वा तनुं त्यक्त्वा सैव भूता ह्यरुन्धति ॥'**

इति । **रेणुकापुराणे** तु–

**'इडैकास्य महाकाली महालक्ष्मीस्तु पिङ्गला ।**
**एकवीरा सुषुम्णेयमेवं सन्ध्यात्रयात्मिका ॥'**

इत्युक्तम् । एकवर्षात्मककन्यारूपा वा '**एकवर्षा भवेत्सन्ध्ये**'ति कन्याप्रकरणे **धौम्य-वचनात्** ।

*अथ परिभाषायां षट्त्रिंशत्पदानि विभजते—*

***दिवि कूटैरुदिते द्वे द्विर्द्विर्गीर्णा विभाति नदी।***
***चत्वारो रूढफलं शम्भुर्भोजो बली राजा॥ १८॥***

*द्वे इति पञ्चाक्षरे नामनी। चत्वार इति द्व्यक्षराः शब्दाः **'एकस्मिन्नर्थेऽविशिष्टेषु समं स्या'**दिति न्यायेन तथैव पर्यवसानात् नकारस्य दशाक्षरं नामेत्यर्थः। स्पष्टमन्यत्॥ १८॥*

**—द्विजवृन्दनिषेविता॥ १४१॥**

द्विजवृन्दैस्त्रैवार्णिकसमूहैर्निषेवितोपास्या सन्ध्यात्वादेव। उक्तञ्च **रेणुकापुराणे** —

**'सन्ध्यैका सर्वदा दैवैर्द्विजैर्वन्द्या महात्मभिः।**
**आसने शयने याने भोजने रेणुकैव हि॥'**

इति। अथवा व्याहृत्यादिनामत्रयमवस्थात्रयवत्परम्। व्याहृतिर्वाग्व्यापारो जाग्रदवस्थोपलक्षकः। सन्ध्याशब्दोऽवस्थयोः सन्धौ जात इति व्युत्पत्त्या **'सन्ध्ये सृष्टिराह ही'**ति **व्याससूत्रे** प्रयोगाच्च स्वप्नपरः अवस्थाविशेषत्वाभिप्रायेण तदवच्छिन्न-देव्यभिप्रायेण च स्त्रीलिङ्गः। द्विजाः पक्षिण इव द्विजा जीवास्तेषां वृन्देन नितराम-भेदेन सेविता सम्बद्धेति सुषुप्तिदृशोक्तिः। यथा पक्षिणः सञ्चारेण श्रान्ताः पक्षौ सङ्कोच्य नीडे लीयन्ते तथा जीवा अपि श्रान्ता जागरस्वप्नौ सङ्कोच्य परब्रह्मणि निलीयन्त इत्युक्तेः। यच्छ्रुतं **बृहदारण्यके—'तद्यथास्मिन्नाकाशे श्येनो वा सुपर्णो वा विपरिपत्य श्रान्तः संहत्य पक्षौ संल्लयायैव ध्रियत एवमेवायं पुरुष एतस्मा अन्ताय धावति यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यती'**ति। **'सता सोम्य तदा सम्पन्नो भवती'**ति श्रुतेश्च। **'तदभावो नाडीषु तच्छ्रुतेरात्मनि चे'**ति **तार्तीयीकाधिकरणे** तथा निर्णयाच्च॥ १४१॥

**तत्त्वासना तत्त्वमयी पञ्चकोशान्तरस्थिता।**

शिवादिक्षित्यन्तानि षट्त्रिंशत्तत्त्वान्येवासनं योगपीठाख्यमासनं यस्याः। तत्त्वा-न्यस्यति क्षिपतीति वा। तत्पदस्य बुद्धिविपरिवृत्तिविषये शक्तिः। भगवत्यपि सर्वेषां बुद्धौ विपरिवर्तत एवेति भवति तत्पदवाच्या। एवमेव चोक्तं **'यत्तत्पदमनुत्तम'**मिति

---

द्विजानां वृन्देन समूहेन निषेविता नितरामुपासिता। सेवितायै इति॥ १४१॥

तत्त्वानि शिवादिक्षित्यन्तानि आसनं आसनवदधःस्थितं यस्याः सा। आसनायै इति॥ तत् ईश्वररूपा। तस्मै इति॥ त्वं जीवरूपा। तुभ्यं इति॥ अयः शुभावहविधिः तद्रूपस्य शिवस्य स्त्री। अय्यै इति॥ पञ्चानां अन्नमयादिकोशानां अन्तःसाक्षित्वेन स्थिता। स्थितायै इति॥

**विष्णुसहस्रनामभाष्ये** आचार्यभगवत्पादैः । ततश्च तत्र '**यदे नमस्तदे नम**' इति केषाञ्चिच्चतुर्थ्यन्तमन्त्रकल्पनं चिन्त्यम्, यत्तत्पदशक्यतावच्छेदकापरित्यागेनैव ब्रह्मणि प्रवृत्तौ संज्ञात्वाभावेन सर्वनामत्वानपायात् । किञ्च तवर्गीयाक्षरचतुष्टयान्यत-मान्तत्वेऽपि चर्त्वेन यत्तत्पदमिति संहितोपपत्तेर्दकारान्तत्वमेवेति तयोः प्रातिपदिक-योर्दुरुपपादम् । तस्माद्यस्मैनमस्तस्मैनम इत्येव प्रयोगः । ब्रह्मविशेष्यकत्वाभिप्रायेण नपुंसकलिङ्गोपपत्तिः । एवमेव त्वं पदेनापि भगवती वाच्येति तुभ्यं नम इत्येव प्रयोगः । यदा तु तत्त्वमसीत्यत्रेव निर्गुणब्रह्मलक्षके तत्त्वं पदे तदापि सर्वनामतानपायादुक्तविध एव प्रयोगः । नहि संकुचितवृत्तिकमपि विश्वपदं विश्वेदेवा इत्यादौ सर्वनामतां जहाति । अयीति कोमलामन्त्रणेऽव्ययम् । गौरादेराकृतिगणत्वात्ततो ङीषि रूपमिदम् । जनमातृत्वाज्जनैरामन्त्रणीयेत्यर्थः । अयः शुभावहो विधिस्तद्रूपा वा । असीति पदार्थस्यैक्यस्य वाचकं वाऽयीति पदम् । '**अयपयगता**'विति धातुपाठेन गत्यर्थस्य तत्रैव पर्यवसानात् अय्यै नम इति प्रयोगः । चरमशतकान्तर्गतेन नाम्ना पौनरुक्त्य-परिजिहीर्षयेयं कल्पना सूत्रकृतामित्युपपत्तिः । एवमन्यत्राप्यूह्यम् । पञ्चसंख्याकाः कोशाः पञ्चकोशा इति मध्यमपदलोपी समासः । ते च पञ्चपञ्चिकापूजने प्रसिद्धा मन्त्रविशेषाः । तदभेदात्तद्देवता अपि । ताश्च **ज्ञानार्णवे**–

**'श्रीविद्या च परंज्योतिः परा निष्कलशाम्भवी ।**
**अजपा मातृका चेति पञ्च कोशाः प्रकीर्तिताः ॥'**

इति । एतासु पञ्चदेवतासु श्रीचक्रराजेऽर्च्यमानासु परंज्योतिराद्याश्चतस्रो देवता अभितः सृष्ट्यादिचक्रेषु व्यष्टिसमष्टिभेदेन पूज्यन्ते । श्रीविद्या तु मध्ये बिन्दाविति स्थितिः । तेन पञ्चकोशानामन्तरे मध्ये स्थितेत्यर्थः । यद्वा सन्ति तावदस्मदादि-शरीरेष्वन्नमय-प्राणमय-मनोमय-विज्ञानमयानन्दमयाख्या अन्तरन्तःकक्ष्याक्रमेण पञ्च-कोशपदवाच्याः पदार्थाः । एतेषां पञ्चानां मध्ये आन्तर आनन्दमयः कोशस्तत्राभेदेन स्थिता । आनन्दमयाधिकरणे **वृत्तिकारैः**–'**अन्योन्तरात्मानन्दमय**' इत्यादि**श्रुति**ष्वानन्द-मयस्य ब्रह्मरूपतोक्तेः । आचार्य**भगवत्पादै**स्त्वानन्दमयस्य शोधनीयेषु गणनादशुद्धत्वे सिद्धे ब्रह्मता नोपपद्यत इत्याशयेन ब्रह्मपुच्छवाक्य एव ब्रह्मनिर्देशो व्यवस्थापितः । तत्पक्षे '**यदयमाकाश आनन्दो न स्या**'दिति सामानाधिकरण्येन प्रयोगादानन्दमयकोशस्य पराकाशात्मकब्रह्मशरीरभूतचिच्छक्तिरूपत्वम् । **श्रीकण्ठभाष्ये तट्टीका**दावयमर्थः स्पष्टः । पुच्छब्रह्मपक्षे तु पञ्चानामन्तरे मध्ये स्थितेत्यर्थः । युक्तञ्चैतत् । **ब्रह्मगीतायां** तथैवोपबृंहणदर्शनात् । तदुक्तम्–

**'तथानन्दमयश्चापि ब्रह्मणान्येन साक्षिणा ।**
**सर्वोत्तरेण सम्पूर्णो ब्रह्म नान्येन केनचित् ॥**
**यदिदं ब्रह्मपुच्छाख्यं सत्यज्ञानाद्वयात्मकम् ।**
**सरसः सर्वदा साक्षान्नान्यथा सुरपुङ्गवा ॥'**

इति । क्रोधभट्टारका अप्याहुः—

**'अन्नप्राणमनःप्रबोधपरमानन्दैः शिरःपक्षयुक्**
**पुच्छात्मप्रकटैर्महोपनिषदां वाक्यैः प्रसिद्धीकृतैः ।**
**कोशैः पञ्चभिरेभिरेव भवतीमेतत्प्रलीनामिति**
**ज्योतिः प्रज्वलदुज्ज्वलात्मचपलां यो वेद स ब्रह्मवित् ॥'** इति ।

**निःसीममहिमा नित्ययौवना मदशालिनी ॥ १४२ ॥**

निष्क्रान्तः सीमानं सीमां वा निःसीमा निःसीमो वा निरवधिको महिमा यस्याः । 'मन' इति निषेधान्न ङीप् । वैकल्पिको डाप् । अतो 'निःसीममहिम्ने नम' इति वा 'निःसीममहिमायै नम' इति वा प्रयोगः । कालत्रयेऽपि रजसोऽविरहान्नित्ययौवना । विषयान्तरसम्पर्कशून्य आनन्दैकविषयको वृत्तिविशेषो मदस्तेन शालते शोभत इति तथा ॥ १४२ ॥

**मदाघूर्णितरक्ताक्षी मदपाटलगण्डभूः ।**

मदेन घूर्णितानि रक्तानि चाक्षीणि यस्याः । बाह्यविषयवैमुख्यं घूर्णनम् । मदेन पाटले श्वेतरक्ते गण्डभुवौ कपोलभित्ती यस्याः । मदो मद्यं लक्षणया तत्पानम् । यद्वा मदः कस्तूरी । पाटलं पुष्पविशेषः । मत्वर्थीयोऽच् । तद्वत्यौ मकरिकाचित्रिते कर्णावतंसवत्यौ च गण्डभुवौ यस्याः ।

**'मदो रेतसि कस्तूर्यां गर्वे हर्षेभदानयोः ।**
**मद्येऽपि मद आख्यात..................... ॥'**

इति **विश्वः** ।

**चन्दनद्रवदिग्धाङ्गी चाम्पेयकुसुमप्रिया ॥ १४३ ॥**

चन्दनस्य मलयजस्य द्रवेण घृष्टसारेण दिग्धानि लिप्तान्यङ्गानि यस्याः । चाम्पेयकुसुमं नागकेसरपुष्पं चम्पासम्बन्धिपुष्पं वा प्रियं यस्याः ॥ १४३ ॥

---

निःसीम निरवधिको महिमा यस्याः सा । महिम्ने इति ॥ नित्यं यौवन(नं)(स्य?) यस्याः सा । यौवनायै इति ॥ स्वात्मानन्दानुभवजन्यमदयुक्ता । शालिन्यै इति ॥ १४२ ॥

तेनैव मदेन घूर्णितानि रक्तान्यक्षीणि यस्याः सा । अक्ष्यै इति ॥ तेनैव मदेन पाटला श्वेतरक्तागण्डभूः कपोलप्रदेशो यस्याः सा । भुवे इति ॥

चन्दनस्य द्रवेण पङ्केन दिग्धानि लिप्तान्यङ्गानि यस्याः सा । अङ्ग्यै इति ॥ चाम्पेयं चम्पासम्बन्धिकुसुमं प्रियं यस्याः सा । प्रियायै इति ॥ १४३ ॥

**कुशला कोमलाकारा कुरुकुल्ला कुलेश्वरी ।**

सृष्ट्यादिनिर्माणकौशलवत्त्वात्कुशला । कुशं जलं लाति आदत्ते इति वा । आदन्तत्वात्कः । कुत्सितः शलश्चन्द्रमा यस्या अग्रे तदधिककान्तिमत्त्वादिति वा । **'शलं तु शल्लकीलोम्नि शलो भृङ्गीगणे विधा'**विति **विश्वः** । कोमलः सुकुमार आकारोऽवयवविन्यासो यस्याः । कुरुकुल्लाख्यदेवी श्रीपुरेऽहङ्कारचित्तमयप्राकारयोर्मध्ये विमर्शमयवाप्यामधिकृता । तदुक्तं **ललितास्तवरत्ने** वापीं प्रकृत्य–

**'कुरुविन्दतरणिनिलयां कुलाचलस्पर्धिकुचनमन्मध्याम् ।**
**कुङ्कुमविलिप्तगात्रीं कुरुकुल्लां मनसि कुर्महे सततम् ॥'**

इति । **तन्त्रराजे** च द्वाविंशे पटले निरूपिता तद्रूपा । सजातीयानां मातृमानमेयानां समूहः कुलं तस्येश्वरी ।

**कुलकुण्डालया कौलमार्गतत्परसेविता ॥ १४४ ॥**

मूलाधारकार्णिकामध्यगतो बिन्दुः कुलकुण्डं कमलकन्दमध्यस्थितछिद्रतुल्यं तदेवालयः स्वापस्थानं यस्याः । तस्मिन्नासमन्ताल्लयः सुषुप्तिरिव यस्या इति वा । सा कुण्डलिनीति यावत् । तदुक्तमाचार्य**भगवत्पादैः**–

**'अवाप्य स्वां भूमिं भुजगनिभमध्युष्टवलयं**
**स्वमात्मानं कृत्वा स्वपिषि कुलकुण्डे कुहरिणी ।'**

इति । स्वस्ववंशपरम्पराप्राप्तो मार्गः कुलसम्बन्धित्वात्कौलः । तदुक्तं व्रतखण्डे–

**'यस्य यस्य हि या देवी कुलमार्गेण संस्थिता ।**
**तेन तेन च सा पूज्या बलिगन्धानुलेपनैः ॥'**

इति । **'नैवेद्यैर्विविधैश्चैव पूजयेत्कुलमार्गत'** इति च । यद्वा समयमतं कौलमतं मिश्रमतं चेति विद्योपास्तौ मतत्रयम् । शुकवसिष्ठादिसंहितापञ्चकोक्तं वैदिकमार्गकरम्बितमाद्यम् । चन्द्रकुलादितन्त्राष्टकोक्तं तु चरमम् । कुलसमयोभयानुसारित्वात् । एतद्भिन्नतन्त्रोदितं कौलमार्गम् । कौलैर्मृग्यत इत्यर्थे कर्मणि घञ् । तत्तदुपास्तिभेदोऽधिकारभेदश्च तत्तत्तन्त्रेष्वेव स्पष्टः तस्मिंस्तत्परैरासक्तैः सेविता ॥ १४४ ॥

---

कुशला सृष्ट्यादि कर्म चतुरा । कुशलायै इति ॥ कोमलाः सुकुमाराः आकारा अवयवा यस्याः सा । आकारायै इति ॥ कुरुकुल्लाख्यदेवीरूपा । कुरुकुल्लायै इति ॥ कुलं सजातीयतत्त्वसमूहः । तस्य ईश्वरी स्वामिनी । ईश्वर्यै इति ॥

कुलकुण्डं मूलाधारकर्णिकास्थं छिद्रम् । तदेवालयः स्थानं यस्याः कुण्डलिनीरूपायाः सा । आलयायै इति ॥ कुले वंशे भवः कौलमार्गः कुलाचारः तस्मिन् तत्परैरासक्तैः सेविता । सेवितायै इति ॥ १४४ ॥

**कुमारगणनाथाम्बा तुष्टिः पुष्टिर्मतिर्धृतिः ।**

कुमारः स्कन्दो गणनाथो गजाननस्तयोरम्बा माता । कुत्सितो मारगणः स्मरविकारसमूहो येषां तन्नाथानम्बते बध्नातीति वा। '**अबि बन्धन**' इति धातुः । कुमारशब्देन तद्देवत्योऽहङ्कारो वा गृह्यते । तदुक्तं **वराहपुराणे**–

**'पुरुषो विष्णुरित्युक्तः शिवो वा नाम नामतः ।**
**अव्यक्तं तु उमादेवी श्रीर्वा पद्मनिभेक्षणा ॥**
**तत्संयोगादहङ्कारः स च सेनापतिर्गुहः ॥'**

इति । तद्गणैर्नाथानतीवाहन्ताविष्टानम्बत इति । तुष्ट्यादीनि सप्त नामानि तोषपोषज्ञानधैर्यशमकल्याणवत्त्वकमनीयतावाचकानि सन्ति तादृशभगवतीस्वरूपत्वाभिप्रायेण तामप्यभिदधति । तथा च **मार्कण्डेयपुराणे**–

**'या देवी सर्वभूतेषु तुष्टिरूपेण संस्थिता ।**
**नमस्तस्यै नमस्तस्यै नमस्तस्यै नमो नमः ॥'**

इत्यादि । **मल्लारिमाहात्म्येऽपि**–

**'यो देवः सर्वभूतेषु तोषरूपेण संस्थितः ।**
**नमस्तस्मै नमस्तस्मै नमस्तस्मै नमो नमः ॥'**

इत्यादि । **देवीभागवते** तृतीयस्कन्धे–

**'बुद्धिः कीर्तिर्धृतिर्लक्ष्मीः शक्तिः श्रद्धा मतिः स्मृतिः ।**
**सर्वेषां प्राणिनां साम्बा प्रत्यक्षं तन्निदर्शनम् ॥'**

इति । **पद्मपुराणे** देवीक्षेत्रगणनावसरे–'**तुष्टिर्वस्त्रेश्वरे तथा । देवदारुवने पुष्टिः धृतिः पिण्डारकक्षेत्रे**' इत्येवं तत्तत्क्षेत्राधिष्ठात्र्या भगवत्या नामेत्युक्तम् । मतिस्तु **वायुपुराणे** निरुच्यते–

**'बिभर्ति मानं मनुते विभागं मन्यतेऽपि च ।**
**पुरुषो भोगसम्बद्धस्तेन चासौ मतिः स्मृतः ॥'**

इति । तस्याश्च देवीरूपता सूतसंहितायाम्–

**'यानुभूतिरुदिता मतिः परा वेदमाननिरता शुभावहा ।**
**तामतीव सुखदां वयं शिवां केशवादिजनसेवितां नुमः ॥'** इत्यादि ।

---

कुमारगणनाथयोः स्कन्दगणेशयोरम्बा माता । अम्बायै इति ॥ तुष्टिः तोषरूपा । तुष्ट्यै इति ॥ मतिर्ज्ञानरूपा । मत्यै इति ॥ धृतिर्धैर्यरूपा । धृत्यै इति ॥

**शान्तिः स्वस्तिमती कान्तिर्नन्दिनी विघ्ननाशिनी ॥ १४५ ॥**

शान्तिशब्देन वायवीयः कलाविशेषो वा कथ्यते। तदुक्तं **शैवागमे**–

**'मलमायाविकारौघशान्तिः पुंसः पुनर्यया।**
**सा कला शान्तिरित्युक्ता साधिकारास्पदं पदम् ॥'**

इति। **बृहत्पाराशरस्मृतावपि**–

**'दशपञ्चाङ्गुलव्याप्तं नासिकाया बहिःस्थितम्।**
**जीवो यत्र विशुध्येत सा कला षोडशी स्मृता ॥'**

इति प्रकृत्य '**सा च शान्तिः प्रकीर्तिते**'त्यन्तम्। सुष्ठु अस्तिः सत्ता तद्वत्त्वेन वा स्वस्तिमती। सत्तायाः शोभनत्वञ्च पारमार्थिकत्वं व्यावहारिकसत्ताधिकत्वम्। '**प्राणा वै सत्यं तेषामेष सत्यम्**', '**तत्सत्यस्य सत्य**'मिति च **श्रुतेः**। '**स्वस्त्याशीःक्षेमनिष्पापपुण्यमङ्गलवाचक**' इति **रत्नकोशः**। '**स्वस्तीत्यविनाशिनामे**'ति **यास्कश्च**। कान्तिशब्देनेच्छाशक्तिर्वोच्यते। नन्दयितृत्वान्नन्दिनी कामधेनुवंशोद्भवो गोविशेषो वा गङ्गास्वरूपा वा। विशेषेण घ्नन्तीति विघ्ना विद्यान्तरायास्तान्नाशयितुं शीलमस्यास्तथा ॥ १४५ ॥

**तेजोवती त्रिनयना लोलाक्षी कामरूपिणी।**

तेजसामादित्यादीनामाधारभूतत्वात्तेजोवती। '**एतस्मिन् खल्वक्षरे गार्गि सूर्याचन्द्रमसौ विधृतौ तिष्ठत**' इति **श्रुतेः**। त्रीणि सोमसूर्याग्निरूपाणि नयनानि नेत्राणि यस्याः। क्षुभ्नादेराकृतिगणत्वात्संज्ञाशब्दत्वेऽपि णत्वाभावः। वौषडिति शब्दस्य त्रिनयनेति संज्ञा नामपारायणे प्रसिद्धा तद्रूपा वा। यद्वा नयनशब्दो लक्षणया प्रमाणपरः। नयति प्रापयति प्रमाणमिति व्युत्पत्तेश्च। तथा च **शाण्डिल्यसूत्रे** प्रयोगः– '**त्रीण्येषां नेत्राणि शब्दलिङ्गाक्षभेदाद्रुद्रव**'दिति। त्रीणि प्रत्यक्षानुमानशब्दरूपाणि प्रमाणानि यस्याः। यद्विषयकप्रमाजनने त्रिविधमेव प्रमाणम्। श्रवणरूपं शाब्दज्ञानम्। मननं यौक्तिकत्वादानुमानिकम्। निदिध्यासनं तु स्वानुभवरूपं प्रत्यक्षमेव। परन्तु विजातीयप्रत्ययैः कदाचिन्मध्ये मध्येऽन्तरितम्। एतदभिप्रायेणैव **शाण्डिल्यमुनिना** शब्दमारभ्यैव प्रमाणानि गणितानि। उपमानस्य शक्तिग्रहमात्रविषयकत्वेन प्रकृतानुपयोगात्। अत एवोक्तं **मनुस्मृतौ**–

**'प्रत्यक्षं चानुमानं च शास्त्रं च विविधागमम्।**
**त्रयं सुविदितं कार्यं धर्मशुद्धिमभीप्सता ॥'**

---

शान्तिः शमरूपा। शान्त्यै इति ॥ स्वस्ति कल्याणमस्या अस्तीति सा। मत्यै इति ॥ कान्तिर्द्युतिरूपा। कान्त्यै इति ॥ भक्तान् नन्दयतीति सा। नन्दिन्यै इति ॥ भक्तानां विघ्नं नाशयतीति सा। नाशिन्यै इति ॥ १४५ ॥

तेजः अस्या अस्तीति सा। वत्यै इति ॥ त्रीणि नयनानि यस्याः सा। नयनायै इति ॥ लोलाक्षीणां सुन्दरस्त्रीणामपि कामः दर्शनाभिलाषः यस्य ईदृशं रूपमस्येति सा। रूपिण्यै इति।

इति। सांख्यानां **समाससूत्र**मपि–'**त्रिविधं प्रमाण**'मिति । **योगसूत्र**मपि–'**प्रत्यक्षानुमानागमाः प्रमाणानी**'ति । त्रीन्मार्गान्प्रत्यधिकारिणो नयतीति वा । दक्षिणोत्तरमार्गौ ब्रह्म-मार्गश्चेति त्रयो मार्गा उत्तरत्र विवेचयिष्यन्ते । तथा चोक्तं **देवीपुराणे**–

**'दक्षिणं चोत्तरं लोकं तथा ब्रह्मायनं परम् ।**
**नयं सन्मार्गवर्गं च नेत्री त्रिनयना मता ॥'**

इति । लोलाक्षीणां स्त्रीणां यः कामो मन्मथस्तद्रूपिणी । शिवकामनिरासाय लोलाक्षीसम्बन्धित्वं कामविशेषणम् । कामाभिमानियोगेश्वरीरूपा वा । तदुक्तं **वराहपुराणे**–

**'कामः क्रोधस्तथा लोभो मदो मोहश्च पञ्चमः ।**
**मात्सर्यं षष्ठमित्याहुः पैशुन्यं सप्तमं तथा ॥**
**असूया त्वष्टमी ज्ञेया इत्येता अष्ट मातरः ।**
**कामं योगेश्वरीं विद्धि क्रोधं माहेश्वरीं तथा ॥**
**लोभस्तु वैष्णवी प्रोक्ता ब्रह्माणी मद एव च ।**
**मोहः स्वयम्भूः कल्याणी मात्सर्यं चेन्द्रजां विदुः ॥**
**यमदण्डधरा देवी पैशुन्यं स्वयमेव च ।**
**असूया च वराहाख्या इत्येताः परिकीर्तिताः ॥'** इति ।

**मालिनी हंसिनी माता मलयाचलवासिनी ॥ १४६ ॥**

मालावत्त्वान्मालिनी । व्रीह्यादित्वादिनिः । एकपञ्चाशन्मातृकाभिमानिदेवताया मालिनीति संज्ञा तद्रूपा वा । यद्वा अस्ति देव्याः सखी मालिनीनाम्नी तद्रूपा वा । तदुक्तं **वामनपुराणे** पार्वतीविवाहप्रकरणे सप्तपदीक्रमणं प्रकृत्य–

**'ततो हराङ्घ्रिर्मालिन्या गृहीतो दायकारणात् ।**
**किं याचसे ददाम्येष मुञ्चस्वेति हरोऽब्रवीत् ॥**
**मालिनी शङ्करं प्राह मत्सख्यै देहि शङ्कर ।**
**सौभाग्यं निजगोत्रीयं ततो मोक्षमवाप्स्यसि ॥**
**अथोवाच महादेवो दत्तं मालिनि मुञ्च माम् ।'**

इत्यादि । वृत्तविशेषरूपा मन्दाकिनीरूपा वा ।

**'मालिनी वृत्तभेदे स्यान्मालाकारस्त्रियामपि ।**
**चम्पानगर्यां गौर्यां च मन्दाकिन्यां च मालिनी ॥'**

---

मालिनी मालायुतत्वात् । मालिन्यै इति ॥ वाहने हंसत्वाद्धंसिनी । हंसिन्यै इति ॥ माता मातृकारूपा । मात्रे इति ॥ मलयाचले वसतीति सा । वासिन्यै इति ॥ १४६ ॥

इति **विश्वः** । सप्तवर्षा कन्या मालिनीत्युच्यते तद्रूपा वा । '**सप्तभिर्मालिनी सा स्यादि**'ति कन्याप्रकरणे **धौम्य**वचनात् । हंसा यतिविशेषा अस्यामभेदेन सन्तीति हंसिनी । हंस इत्यजपामन्त्रो वा । सर्वजनयितृत्वान्माता । मातृकारूपा वा । '**मन्त्राणां मातृभूता च मातृका परमेश्वरी**'ति **स्कान्दात्** । प्रमात्रर्थकं पुंलिङ्गः वा । प्रकाशोऽत्र विशेष्यः । अथवा दशमीतिथिनित्यामन्त्रस्य मातेति संज्ञा । नामपारायणे तथा दर्शनात् तद्रूपेत्यर्थः । कायावरोहणाख्यक्षेत्राधिष्ठात्रीयं '**माता कायावरोहण**' इति **पाद्मात्** । लक्ष्मीबीजस्यापि मातेति संज्ञा । '**श्रीर्मा रमा च कमला माता लक्ष्मीश्च मङ्गले**'ति **विश्वाख्योक्तेः** । **शाबरचिन्तामणौ** प्रसिद्धा मलयालयभगवती तद्रूपत्वान्मलयाचले वसतीति तथा ॥ १४६ ॥

*अथ परिभाषायां पञ्चत्रिंशन्नामानि विभजते—*

***गलफफशोभावेगः शंभोर्वेदे चतुर्होमः ।***
***भूर्द्विस्ताद्राजैको मोदाङ्गणवासतो नतिहृत् ॥ १९ ॥***

*अत्र स्ताद्राजेत्यनेनार्धसमाप्त्युत्तरमेकपदेनैकं नामेत्येतावन्मात्रोक्तावपि परत्र मोदाङ्गणेति पञ्चाक्षरनामकीर्तनबलात्प्रथमस्यैकादशाक्षरात्मत्वलाभो न्यायगम्यः । तावत एव परिशेषात् । चरमतकारस्य स्वरयोगाभावान्नाक्षरसंख्यापरता ॥ १९ ॥*

**सुमुखी नलिनी सुभ्रूः शोभना सुरनायिका ।**

शोभनं मुखं यस्याः सा सुमुखी । ज्ञानेन मुखकान्तेराधिक्यात् । '**शोभतेऽस्य मुखं य एवं वेदे**'ति **श्रुतेः** । '**ब्रह्मविद इव ते सौम्य मुखमाभाती**'ति **श्रुते**श्च । षोडश्यङ्गत्वेनोपास्यदेवताविशेषो वा सुमुखी । करचरणमुखनेत्राद्यवयवानां कमलरूपत्वात्सृष्टिन्यायेन नलिनी । भागीरथीरूपत्वाद्वा । '**नन्दिनी नलिनी गङ्गे**'ति तदीयद्वादशनामसु गणनात् । नलाख्यो राजा यस्यामुपासनया तादात्म्येन निविष्टः सेति वा । शौभने भ्रुवौ यस्याः सा सुभ्रूः सौन्दर्यशीलत्वाच्छोभना । '**सुषुमं साधु शोभन**'मिति **कोशः** । सुराणां नायिकेश्वरी '**महत्तरा महिमा देवताना**'मिति **श्रुतेः** ।

**कालकण्ठी कान्तिमती क्षोभिणी सूक्ष्मरूपिणी ॥ १४७ ॥**

---

शोभनं मुखं यस्याः सा । मुख्यै इति ॥ नेत्रादीनां पद्मतुल्यत्वात् । नलिन्यै इति शौभने भ्रुवौ यस्याः सा । सुभ्रुवे इति ॥ शोभना सौन्दर्यशीला । शोभनायै इते । सुराणां नायिका ईश्वरी । नायिकायै इति ।

कालःकण्ठे यस्य तस्य स्त्री । कण्ठ्यै इति ॥ कान्तिरस्या अस्तीति सा । मत्यै इति ॥ दुष्टा[न्] क्षोभयतीति सा । क्षोभिण्यै इति ॥ सूक्ष्मं दुर्ज्ञेयं रूपम् अस्याः सा । रूपिण्यै इति ॥ १४७ ॥

कालः कण्ठो यस्येश्वरस्य तस्य स्त्री । उक्तञ्च **वायुपुराणे**–

**'पश्यतां देवसंघानां पिशाचोरगरक्षसाम् ।**
**धृतं कण्ठे विषं घोरं कालकण्ठस्ततोऽस्म्यहम् ॥'**

इति **देवीपुराणे**ऽष्टषष्टिशिवतीर्थप्रकरणे कालञ्जरे कालकण्ठ इति स्मर्यते । तेन तत्क्षेत्राधिष्ठात्रीत्यर्थः । मधुरोऽस्फुटो ध्वनिः कलः स एव कालः स्वार्थिकोऽण् कालः कण्ठो यस्या इति वा । अङ्गगात्रकण्ठेभ्य वा ङीप् । दारुकासुरवधार्थं **'ससर्ज कालीं कामारिः कालकण्ठीं कपर्दिनी'**मिति **लैङ्गे** कथायाः प्रसिद्धेस्तद्रूपा वा । कलपदादेव स्वार्थिकोऽण्वा । मञ्जूध्वनिरिति तदर्थः । कान्तिरस्या अस्तीति कान्तिमती । परमेश्वरौ सृष्ट्यौन्मुख्येन क्षोभयतीति क्षोभिणी । तदुक्तं **विष्णुपुराणे**–

**'प्रकृतिं पुरुषं चैव प्रविश्यात्मेच्छया हरिः ।**
**क्षोभयामास भगवान्सर्गकाले व्यपाश्रितः ॥'**

इति । यद्वा । मनःक्षोभात्कांश्चिद्गणानजनयदिति क्षोभिणी । तदुक्तं **वराहपुराणे** मूर्तित्रयं प्रकृत्य–

**'या मन्दरं गता देवी तपस्तप्तुं तु वैष्णवी ।**
**तस्यास्तपन्त्याः कालेन महता क्षुभितं मनः ॥**
**तस्मात्क्षोभात्समुत्तस्थुः कुमार्यः सौम्यदर्शनाः ।**
**नीलकुञ्चितकेशान्ता बिम्बोष्ठ्यः पद्मलोचनाः ॥**
**इन्दीवरसमा दामनूपुराढ्याः सुवर्चसः ।**
**एवंविधाः स्त्रियो देव्यः क्षोभिते मनसि द्रुतम् ॥**
**उत्तस्थुः शतसाहस्राः कोटिशो विविधानना ।'**

इत्यादि । सूक्ष्मं दुर्ज्ञेयं रूपमस्याः । **'सूक्ष्मात्सूक्ष्मतरं नित्यम्', 'अणोरणीया'**निति च **श्रुतेः** । सूक्ष्म इति होमविशेषस्य संज्ञा । **तन्त्रराजे**– **'नित्यानित्योदिते मूलाधारमध्येऽस्ति पावक'**इत्यादिना **'एवं द्वादशधा होममक्षरैः स्यादुदीरितै'**रित्यन्तेन ग्रन्थेनोक्ता तदेव रूपमस्या इति वा । देव्या अपि त्रीणि रूपाणि स्थूलसूक्ष्मपरभेदात्सन्त्येवेति व्यक्तमेव ॥ १४७ ॥

## वज्रेश्वरी वामदेवी वयोवस्थाविवर्जिता ।

षष्ठीतिथिनित्या जालन्धरपीठाधिष्ठात्री वज्रेश्वरी । अथवा श्रीपुरस्य द्वादशः प्राकारो वज्रमणिमयस्तस्यैकादशस्य मध्ये वज्राख्या नदी तदधिपतिः । उक्तञ्च **दुर्वाससा**–

**'तत्र सदा प्रवहन्ती तटिनी वज्राभिधा चिरं जीयात् ।**
**चटुलोर्मिजालनृत्यत्कलहंसीकुलकलक्वणितपुष्टा ॥**

---

वज्रेश्वरी देवीरूपा । ईश्वर्यै इति ॥ वामा सुन्दरी चासौ देवी च । देव्यै इति ॥ वयसां या अवस्थाः बाल्यादिरूपाः । ताभिर्विशेषेण वर्जिता । वर्जितायै इति ॥

**रोधसि तस्य रुचिरे वज्रेशी जयति वज्रभूषाढ्या ।**
**वज्रप्रदानतोषितवज्रिमुखत्रिदशविनुतचारित्रा ॥'**

इति । इन्द्राय वज्रोऽपि देव्यैव दत्तः । तदुक्तं ब्रह्माण्डे शक्रस्य जले तपः प्रकृत्य—

**'तज्जलादुत्थिता देवी वज्रं दत्वां बलद्विषे ।**
**पुनरन्तर्दधे सोऽपि कृतार्थः स्वर्गमेयिवान् ॥'**

इति । वामो वननीयो देवो वामदेवः । **'तं देवा अब्रुवन्नयं वै नः सर्वेषां वाम इति तस्माद्वामदेव'** इत्यैतरेयश्रुतेः । वामेन भागेन दीव्यतीत्यर्धनारीश्वरो वा वामदेवः ।

**'कुङ्कुमक्षोदसङ्काशं वामाख्यं वनवेषधृत् ।**
**वक्त्रमुत्तरमीशस्य प्रतिष्ठायां प्रतिष्ठितम् ॥'**

इति **शिवपुराणो**क्तः सदाशिवव्यूहान्तर्गतो मूर्तिविशेषोऽपि वामदेवस्तस्येयं वामा सुन्दरी च सा देवी वा । वामानां कर्मफलानां वा देव्यधिष्ठानदेवता । वामाचारे रता वामाः । **'पूजकोऽपि भवेद्वामस्तन्मार्गे सततं रत'** इति **कालिकापुराण**वचनात् तेषां देवीति वा । उक्तञ्च **देवीपुराणे**—

**'वामं विरुद्धरूपं तु विपरीतं तु गीयते ।**
**वामेन सुखदा देवी वामदेवी ततः स्मृता ॥'**

इति । बाल्यपौगण्डकैशोरादिवयोविशेषाणामवस्थाभिर्विवर्जिता । सदातनत्वात् ।

## सिद्धेश्वरी सिद्धविद्या सिद्धमाता यशस्विनी ॥ १४८ ॥

गोरक्षप्रमुखानां सिद्धानामीश्वरी स्वामिनी एतन्नाम्नैव काश्यां प्रसिद्धा । सिद्ध च सा विद्या च सिद्धविद्या । अत एव पञ्चदश्याः सिद्धारिचक्रशोधो नास्तीत्युक्तं **कादिमते— 'नित्यानां सिद्धमन्त्रत्वान्नावेक्ष्यास्त्वंशकादय'** इति । सिद्धानां माता रक्षकत्वात् । यशोऽस्या अस्तीति यशस्विनी । **'अस्मायामेधास्रजो विनिः'** । **'तस्य नाम महद्यश'** इति श्रुतेः ॥ १४८ ॥

अथ द्विषष्टिनामभिर्योगिनीन्यासक्रमेण विशुद्ध्यादिसप्तचक्राधिष्ठातृडरलक-सहयाद्ययोगिनीसप्तकस्वरूपेण भगवतीं स्तोतुमारभते—

## विशुद्धिचक्रनिलया रक्तवर्णा त्रिलोचना ।

विशुद्धीत्यादिना । तत्रेदं डाकिनीध्यानम्—

**'ग्रीवाकूपे विशुद्धो नृपदलकमले श्वेतरक्तां त्रिनेत्रां**
**हस्तैः खट्वाङ्गखड्गौ त्रिशिखमपि महाचर्म सन्धारयन्तीम् ।**

---

सिद्धानां ईश्वरी स्वामिनी । ईश्वर्यै इति ॥ सिद्धानां विद्यामन्त्ररूपेण जप्या । विद्यायै इति ॥ सिद्धानां मातेव रक्षणकर्त्री । मात्रे इति ॥ यशः अस्याः अस्तीति सा । यशस्विन्यै इति ॥ १४८ ॥

विशुद्धिचक्रं षोडशदलं कण्ठस्थं निलयः स्थानं यस्याः सा । निलयायै इति । आरक्तः लोहितो वर्णो यस्याः सा । वर्णायै इति ॥ त्रीणि लोचनानि यस्याः सा । लोचनायै इति ॥

**वक्त्रेणैकेन युक्तां पशुजनभयदां पायसान्नैकसक्तां**
**त्वक्स्थां वन्देऽमृताद्यैः परिवृतवपुषं डाकिनीं वीरवन्द्याम् ॥'**

इति । विशुद्धिचक्रं षोडशदलकमलस्य कर्णिकैव निलयो यस्याः । आरक्तो वर्णो यस्या इति पञ्चाक्षरं नाम । आङीषदर्थे । तेन **'श्वेतरक्तस्तु पाटल'** इत्युक्तलक्षणकंपाटलीकुसुमसमानवर्णेत्यर्थः । लाकिनीप्रकरणगतनाम्ना पौनरुक्त्याभावाच्च । त्रीणि लोचनानि यस्याः ।

**खट्वाङ्गादिप्रहरणा वदनैकसमन्विता ॥ १४९ ॥**

खट्वाङ्गं खट्वापादः । दण्डारोपितनरकपालं वा । तदादि येषां चतुर्णां मध्ये तानि प्रहरणान्यायुधानि यस्याः । वदनं च तदेकं च । **'पूर्वकालैके'**ति समासः । अनित्यत्वान्न पूर्वनिपातः । तेन समन्विता युक्ता ॥ १४९ ॥

**पायसान्नप्रिया त्वक्स्था पशुलोकभयङ्करी ।**

पयोविकारः पायसश्च तदन्नं च तत्परमान्नं प्रियं यस्याः । त्वचि धातौ तिष्ठतीति त्वक्स्था । तदभिमानित्वात् । अद्वैतविद्याविहीनाः पशवस्त एव लोकास्तेषां भयङ्करी । **'योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशु'**रिति श्रुतेः । **'द्वितीयाद्वै भयं भवति', 'य एतस्मिन्नुदरमन्तरं कुरुतेऽथ तस्य भयं भवती'**ति च श्रुतेः ।

**अमृतादिमहाशक्तिसंवृता डाकिनीश्वरी ॥ १५० ॥**

अमृताख्या शक्तिरादिर्यासां ताभिः षोडशभिर्महाशक्तिभिः **'अमृतकर्षिणीन्द्राणी'**-त्यादिभिरक्षरान्ताभिरेकैकदलनिष्ठाभिः संवृता । उक्तञ्च **स्वच्छन्दतन्त्रे**—

**'तस्मादेकाङ्गुलादूर्ध्वं विशुद्धं षोडशाक्षरम् ।**
**मध्यगा डाकिनी बाह्यपत्रेषु परमेश्वरी ॥**
**अमृताद्यक्षरान्ताः स्युश्चन्द्रबिम्बं तदूर्ध्वतः ।'**

इति । नवानां विशेषणानां विशेष्यं नाम्ना निर्दिशति—डाकिनीश्वरीति । डाकिन्याख्येश्वरीत्यर्थः ॥ १५० ॥

---

खट्वाङ्गः खट्वा पादः तदादीनि प्रहरणानि यस्याः सा।प्रहरणायै इति ॥ वदनैकेन समन्विता । समन्वितायै इति ॥ १४९ ॥

पायसं पयोविकारं अन्नं प्रियं यस्याः सा । प्रियायै इति ॥ त्वचि त्वग्धातौ तिष्ठतीति सा । त्वक्स्थायै इति ॥ पशवः दुष्टचिता ये लोकाः तेषां भयं करोतीति सा । कार्यै इति ॥

अमृता आदिर्यासां तादृशीभिर्महाशक्तिभिः समन्ताद्वृता परिवृता । वृतायै इति ॥ डाकिन्याख्या ईश्वरी तच्चक्राधिष्ठात्री । ईश्वर्यै इति ॥ १५० ॥

**अनाहताब्जनिलया श्यामाभा वदनद्वया ।**

हृदये द्वादशदलकमलेऽनाहताख्यचक्रे राकिण्याख्या योगिनी तिष्ठति । तस्या ध्यानं यथा–

**हृत्पद्मे भानुपत्रे द्विवदनलसितां दंष्ट्रिणीं श्यामवर्णा-**
**मक्षं शूलं कपालं डमरुमपि भुजैर्धारयन्तीं त्रिनेत्राम् ॥**
**रक्तस्थां कालरात्रिप्रभृतिपरिवृतां स्निग्धभक्तैकसक्तां**
**श्रीमद्वीरेन्द्रवन्द्यामभिमतफलदां राकिनीं भावयामः ॥'**

इति । अनाहताब्जं तत्कर्णिका निलयो यस्याः । श्यामा षोडशवार्षिकी तया तुल्या श्यामाभा । श्यामा आभा कान्तिर्यस्या इति वा । वदनयोर्द्वयं यस्याः ।

**दंष्ट्रोज्ज्वलाक्षमालादिधरा रुधिरसंस्थिता ॥ १५१ ॥**

दंष्ट्राभिर्वराहसमानदन्तैरुज्ज्वला शोभमाना । अक्षमाला आदिर्येषां तेषां चतुर्णामायुधानां धरा । पचाद्यच् । कर्मण्यणि धारेति स्यात् । उक्तश्लोके यदि चक्रं शूलमित्येव पाठस्तदाऽक्षस्य रथाङ्गस्य मां शोभां लाति आदत्त इत्यक्षमालं चक्रमित्याख्येयम् । रुधिरे शोणिते संस्थिता तदभिमानित्वेन ॥ १५१ ॥

**कालरात्र्यादिशक्त्यौघवृता स्निग्धौदनप्रिया ।**

अस्ति कालरात्र्याख्या काचन शक्तिः । तदुक्तं **वराहपुराणे** मूर्तित्रयं प्रकृत्य–

**'या सा नीलगिरिं याता तपसे धृतमानसा ।**
**रौद्री तमोभवा शक्तिस्तस्याः शृणु धरे व्रतम् ॥'**

इत्यारभ्य

**'रौद्री तपोरता देवी तामसी शक्तिरुत्तमा ।**
**संहारकारिणी नाम्ना कालरात्रीति तां विदुः ॥'**

इति । सा आदिर्यासां तासां ठंकार्यन्तद्वादशशक्तीनामोघेन समूहेन वृता । पत्रेषु वेष्टिता । स्निग्धो घृतप्लुत ओदनः प्रियो यस्याः ।

---

अनाहताब्जं हृदि स्थितं द्वादशदलम्, तन्निलयो यस्याः सा । निलयायै इति ॥ श्यामा आभा कान्तिर्यस्याः सा । आभायै इति ॥ वदनयोर्द्वयं यस्याः सा । द्वयायै इति ॥

दंष्ट्राभिर्वराहसमानदन्तैरुज्ज्वला शोभमाना । उज्ज्वलायै इति ॥ अक्षमाला जपमाला तदाद्यानामायुधानां धरा । धरायै इति ॥ रुधिरे रक्तधातौ संस्थिता । संस्थितायै इति ॥ १५१ ॥

कालरात्रिरादौ यासां तादृशशक्त्यौघेन वृता । वृतायै इति ॥ स्निग्धं घृतयुतं यदोदनं तत्प्रियं यस्याः सा । प्रियायै इति ॥

**वक्त्रेणैकेन महावीरेन्द्रवरदा—**

विविधा ईरा वा इरा वा येषां ते वीराः । पक्षद्वयेपि चमत्कृतवाणीकाः स्तावका इति यावत् । अथवा महावीरं सौमिकः पात्रविशेषः । '**महावीरं तु विबाधमृजीष**'मित्यादि**श्रुति**प्रसिद्धः लक्षणया च पानपात्रपरः । तस्मान्मत्वर्थीयोऽच् । ब्रह्मरसामृतपानशीला इति यावत् । अत एवेन्द्रा ब्रह्मविदः । इदमित्यापरोक्ष्येण ये साक्षिणः स्वात्मभूतं ब्रह्माहमस्मीति साक्षात्कुर्वन्ति ते इन्द्राः । तथा च श्रूयते— '**इदमदर्शमिदमदर्शमिति तस्मादिन्द्रो नामे**'ति । अथवा '**त्रितयाभोक्ता वीरेश**' इति **शिवसूत्रो**क्तलक्षणा जागराद्यवस्थात्रऽयेपि तुर्यानुसन्धानपरा वीरेन्द्राः । उक्तञ्च **वरदराजेन**—

**'वीरेश इति वीराणां भेदव्यसनकारिणाम् ।**
**अन्तर्बहिर्विसरतामिन्द्रियाणामधीश्वरः ॥"**

इति । अथवा महावीरः प्रह्लाद इन्द्रः शक्रश्च । **देवीभागवते** चतुर्थस्कन्धे शक्रप्रह्लादयोर्दिव्यवर्षशतं युद्धे जाते पश्चादुभाभ्यां स्तुता भगवती द्वयोरपि वरमदादिति कथानकस्मरणात् तेभ्यो वरं ददातीति तथा ॥

*अथ परिभाषायामेकोनचत्वारिंशन्नामानि विभजते—*

***पञ्चपदी भाविचतुष्पदी द्विचरणीव शम्भोर्वाक् ।***
***चतुरङ्घ्रिवशे पञ्चाङ्घ्रिभवे द्वैकं चतुष्पदं च मम ॥ २० ॥***

*षट्पदीति वक्तव्ये चतुर्णां द्वयोश्च विभज्योक्तिः छन्दःपूरणाय । एकपदेन द्वादशाक्षरमेकं नाम । अर्धे तावत एव परिशेषात् ॥ २० ॥*

**—राकिण्यम्बास्वरूपिणी ॥ १५२ ॥**

राकिणीनामिकाया अम्बायाः स्वरूपमस्याः ॥ १५२ ॥

**मणिपूराब्जनिलया वदनत्रयसंयुता ।**

मणिपूराख्यं दशदलं नाभौ पद्मं तत्र लाकिन्याख्या योगिनी तिष्ठति । तदुक्तम्—

**'दिक्पत्रे नाभिपद्मे त्रिवदनविलसद्दंष्ट्रिणीं रक्तवर्णां**
**शक्तिं दम्भोलिदण्डावभयमपि भुजैर्धारयन्तीं महोग्राम् ॥**
**डामर्याद्यैः परीतां पशुजनभयदां मांसधात्वेकनिष्ठां**
**गौडान्नासक्तचित्तां सकलसुखकरीं लाकिनीं भावयामः ॥'**

---

वीरा अन्तर्मुखाः तेषु महान्तः श्रेष्ठाश्च ये विश्वाहन्ताभावनाशीलाः तेभ्यो वरान् ददातीति सा । वरदायै इति ॥

राकिण्यम्बायाः स्वरूपमस्याः । स्वरूपिण्यै इति ॥ १५२ ॥

मणिपूराब्जं नाभिस्थं दशदलं तन्निलयो यस्याः सा । निलयायै इति ॥ वदनानां त्रयेण संयुता । युतायै इति ॥

इति । मणिपूराख्यमब्जं निलयो यस्याः । वदनानां त्रयेण संयुता ।

**वज्रादिकायुधोपेता डामर्यादिभिरावृता ॥ १५३ ॥**

वज्रादिकैश्चतुर्भिरायुधैरुपेता । डामर्याद्याभिः फट्कारिण्यन्ताभिर्दशभिः शक्तिभिरावृता ॥ १५३ ॥

**रक्तवर्णा मांसनिष्ठा–**

रक्तो वर्णो यस्याः । मांसे नितरां तिष्ठति तद्धात्वभिमानित्वेनेति तथा ॥

**इति श्रीभासुरानन्दकृते सौभाग्यभास्करे ।**
**पञ्चभिः शतकैरासीत्षष्ठी नाम्ना रुचिः कला ॥ ५०० ॥**

**इति श्रीललितासहस्रनामभाष्ये पञ्चमशतकं नाम षष्ठी कला ॥ ६ ॥**



---

वज्रादिकानि यान्युधानि तैरुपेता । उपेतायै इति ॥ डामरी आदिर्यासां शक्तीनां ताभिरावृता । आवृतायै इति ॥ १५३ ॥

रक्तो वर्णः अङ्गकान्तिर्यस्याः सा । वर्णायै इति ॥ मांसे नितरां तिष्ठति सा । निष्ठायै इति ॥

## षष्ठशतकं नाम सप्तमी सुषुम्णा कला

**—गुडान्नप्रीतमानसा ।**

गुडेन मिश्रमन्नं गुडान्नम् । '**भक्ष्येण मिश्रीकरण**'मिति समासः । तेन प्रीतं मानसं यस्याः ।

**समस्तभक्तसुखदा लाकिन्यम्बास्वरूपिणी ॥ १५४ ॥**

समस्तेभ्यो भक्तेभ्यः सुखं ददातीति तथा । लाकिन्याख्याया अम्बायाः स्वरूपमस्याः ॥ १५४ ॥

**स्वाधिष्ठानाम्बुजगता चतुर्वक्त्रमनोहरा ।**

स्वाधिष्ठानाख्ये षड्दले पद्मे काकिन्याख्या योगिनी तिष्ठति । तदुक्तम्—

**'स्वाधिष्ठानाख्यपद्मे रसदललसिते वेदवक्त्रां त्रिनेत्रां**
**हस्ताभ्यां धारयन्तीं त्रिशिखगुणकपालाभयान्यात्तगर्वाम् ।**
**मेदोधातुप्रतिष्ठामलिमदमुदितां बन्धिनीमुख्ययुक्तां**
**पीतां दध्योदनेष्टामभिमतफलदां काकिनीं भावयामः ॥'**

इति । स्वाधिष्ठानाख्यमम्बुजं गता प्राप्ता । चतुर्भिर्वक्त्रैर्मनोहरा रुचिरा ।

**शूलाद्यायुधसम्पन्ना पीतवर्णातिगर्विता ॥ १५५ ॥**

शूलादिभिरुक्तसंख्याकायुधैः सम्पन्ना । पीतो वर्णो यस्याः सा । अतीव सौन्दर्यादिकृतो गर्वो यस्याः । सञ्जातो गर्वधातोर्निष्ठया वातिगर्विता ॥ १५५ ॥

---

गुडेन मिश्रितान्ने प्रीतं सन्तुष्टं मानसं यस्याः सा । मानसायै इति ॥

समस्तेभ्यो भक्तेभ्यः सुखं ददातीति सा । सुखदायै इति ॥ लाकिन्यम्बायाः स्वरूपम् अस्याः । स्वरूपिण्यै इति ॥ १५४ ॥

स्वाधिष्ठानाम्बुजं लिङ्गदेशस्थितं षड्दलम्, तद्गता प्राप्ता । गतायै इति ॥ चतुःसंख्यैर्वक्त्रैर्वदनैः मनोहरा शोभमाना । मनोहरायै इति ॥

शूलं आदिर्येषां तैरायुधैः सम्पन्ना युता । सम्पन्नायै इति ॥ पीतोवर्णः अङ्गकान्तिर्यस्याः सा वर्णायै इति ॥ अत्यन्तं सौन्दर्यादिना गर्वोऽभिमानोऽस्याः सञ्जात इति सा । गर्वितायै इति ॥ १५५ ॥

**मेदोनिष्ठा मधुप्रीता बन्धिन्यादिसमन्विता ।**

मेदसि धातुविशेषे निष्ठा स्थितिर्यस्याः । मधुना मद्येन क्षौद्रेण वा प्रीता । तथा च श्रुतिः– '**यन्मधुना जुहोति महतीमेव तद्देवतां प्रीणाती**'ति । महादेवीं प्रीणयतीत्यर्थः । बन्धिन्यादिभिर्लम्बोष्ठ्यन्ताभिः षड्भिः समन्विता ।

**दध्यन्नासक्तहृदया काकिनीरूपधारिणी ॥ १५६ ॥**

दध्ना अन्नं दध्यन्नम् । '**अन्नेन व्यञ्जन**'मिति समासः । दधिसिक्त ओदन इति यावत् तस्मिन्नासक्तं हृदयं यस्याः । काकिन्या रूपं स्वरूपं धारयतीति तथा ॥ १५६ ॥

**मूलाधाराम्बुजारूढा पञ्चवक्त्रास्थिसंस्थिता ।**

मूलाधाराख्ये चतुर्दले कमले साकिन्याख्या योगिनी तिष्ठति । तदुक्तम्–

**'मूलाधारस्थपद्मे श्रुतिदललसिते पञ्चवक्त्रां त्रिनेत्रां**
**धूम्राभामस्थिसंस्थां सृणिमपि कमलं पुस्तकं ज्ञानमुद्राम् ।**
**बिभ्राणां बाहुदण्डैः सुललितवरदापूर्वशक्त्या वृतां तां**
**मुद्गान्नासक्तचित्तां मधुमदमुदितां साकिनीं भावयामः ॥'**

इति । मूलाधाराख्येऽम्बुजे आरूढा तत्कर्णिकायां स्थिता । पञ्चसंख्यानि वक्त्राणि यस्याः । अस्थि अस्थिषु वा संस्थिता ।

**अङ्कुशादिप्रहरणा वरदादिनिषेविता ॥ १५७ ॥**

अङ्कुशादीनि चत्वारि प्रहरणानि यस्याः । वरदादिभिः सरस्वत्यन्ताभिश्चतसृभिः शक्तिभिर्निषेविता ॥ १५७ ॥

---

मेदसि मेदोधातौ नितरां तिष्ठतीति सा । निष्ठायै इति ॥ मधुना प्रीता सन्तुष्टा । प्रीतायै इति ॥ बन्धिनी आदिर्यासां ताभिः शक्तिभिः समन्विता । अन्वितायै इति ॥

दध्ना सहिते ओदने आसक्तं हृदयं मनो यस्याः सा । हृदयायै इति ॥ काकिन्या रूपं धारयतीति सा । धारिण्यै इति ॥ १५६ ॥

मूलाधाराम्बुजे स्वाधिष्ठानाधो विद्यमाने चतुर्दले आरूढा स्थिता । आरूढायै इति ॥ पञ्चसख्या[का]नि वक्त्राणि यस्याः सा । वक्त्रायै इति ॥ अस्थिनि अस्थिधातौ संस्थिता । संस्थितायै इति ॥

अङ्कुशः आदौ येषां तानि प्रहरणान्यायुधानि यस्याः सा । प्रहरणायै इति ॥ वरदा आदि यासां ताभिः शक्तिभिर्निरन्तरं सेविता । सेवितायै इति ॥ १५७ ॥

**मुद्गौदनासक्तचित्ता साकिन्यम्बास्वरूपिणी ।**

मुद्गसूपमिश्र ओदने आसक्तं चित्तं यस्याः । तल्लक्षणं च कुमारसंहितायाम्–

**'सुशालितण्डुलप्रस्थं तदर्धं मुद्गभिन्नकम् ।**
**चतुःपलं गुडं प्रोक्तं तन्मानं नालिकेरकम् ॥**
**मुष्टिमात्रं मरीचं स्यात्तदर्धं सैन्धवं रजः ।**
**तदर्धं जीरकं विद्यात्कुडवं गोघृतं विदुः ॥**
**गोक्षीरेण स्वमात्रेण संयोज्या कमलासनम् ।**
**मन्दाग्निपचनादेव सिद्धान्नमिदमुत्तमम् ॥'**

इति । साकिन्यम्बायाः स्वरूपमस्याः भ्रूमध्ये आज्ञाचक्रं नाम द्विदलं पद्मं तत्र हाकिन्याख्या योगिनी तिष्ठति । तदुक्तम्–

**'भ्रूमध्ये बिन्दुपद्मे दलयुगकलिते शुक्लवर्णां कराब्जै-**
**र्बिभ्राणां ज्ञानमुद्रां डमरुकममलामक्षमालां कपालम् ।**
**षट्चक्राधारमध्यां त्रिनयनलसितां हंसवत्यादियुक्तां**
**हारिद्रान्नैकसक्तां सकलसुखकरीं हाकिनीं भावयामः ॥'** इति ।

**आज्ञाचक्राब्जनिलया शुक्लवर्णा षडानना ॥ १५८ ॥**

आज्ञाचक्राब्जमेव निलयो यस्याः । शुक्लो वर्णो यस्याः । षट्संख्यान्याननानि यस्याः ॥ १५८ ॥

**मज्जासंस्था हंसवती मुख्यशक्तिसमन्विता ।**

मज्जशब्दो नकारान्तः पुंलिङ्गः । **'सारो मज्जा नरी'**त्यमरात् । तदुत्तरमाङ्प्रश्लेषेण मज्ज्ञि आसमन्तात्सम्यक् तिष्ठतीति विग्रहे मज्जधात्वभिमानिनीत्यर्थः । आबन्तो वा मज्जाशब्दः । तथा **'चिद्बिल्वफलमज्जेयम्', 'चिन्मज्जारूपमखिलं निजमज्जाचमत्कृति'** – रित्यादेर्ज्ञार्नवासिष्ठे प्रयोगात् । **'मज्जा स्यान्मज्जया सहे'**ति कोशाच्च टाबन्त एव वा । तेन नाङ्प्रश्लेषः । मुखे भवा मुख्या हंसवत्येव मुख्या आदिर्ययोस्ताभ्यां शक्तिभ्यां हंसवतीक्षमावतीभ्यां समन्विता ।

---

मुद्गमिश्रितौदने आसक्तं चित्तं यस्याः सा । चिता(त्ता)यै । इति ॥ साकिन्यम्बायाः स्वरूपम् अस्याः । स्वरूपिण्यै इति ॥

आज्ञाचक्राब्जं भ्रूमध्यस्थं द्विदलं तन्निलयो यस्याः सा । निलयायै इति ॥ 'शुक्लः वर्णः अङ्गकान्तिर्यस्याः सा । वर्णायै इति ॥ षट्संख्यान्याननानि यस्याः सा । अ[ा]ननायै इति ॥ १५८ ॥

मज्जि मज्जात्मकधातौ आसमन्तात् सम्यक् तिष्ठतीति सा । संस्थायै इति ॥ हंसवती मुख्यामुख्यैन वा ययोः शक्त्योः तादृशाभ्यां समन्विता । समन्वितायै इति ॥

**हरिद्रान्नैकरसिका हाकिनीरूपधारिणी ॥ १५९ ॥**

हरिद्रामिश्रेऽन्ने एको मुख्यो रसो रसवत्ता बुद्धिः प्रीतिर्यस्याः । हाकिन्याख्याया देव्या रूपं धारयितुं शीलमिति तथा ॥ १५९ ॥

**सहस्रदलपद्मस्था सर्ववर्णोपशोभिता ।**

ब्रह्मरन्ध्रे सहस्रदलं पद्मं तत्र याकिन्याख्या योगिनी तिष्ठति । तदुक्तम्—

**'मुण्डव्योमस्थपद्मे दशशतदलके कार्णिकाचन्द्रसंस्थां**
**रेतोनिष्ठां समस्तायुधकलितकरां सर्वतोवक्त्रपद्माम् ।**
**आदिक्षान्तार्णशक्तिप्रकरपरिवृतां सर्ववर्णां भवानीं**
**सर्वान्नासक्तचित्तां परशिवरसिकां याकिनीं भावयामः ॥'**

इति । सहस्रदले पद्मे तिष्ठतीति तथा । सर्वैर्वर्णैः पाटलश्यामरक्तपीतादिरूपैरुपशोभिता । चित्रवर्णेति यावत् । यद्वा सर्वाण्यकारादिक्षकारान्तानि वर्णा अक्षराणि यासां ताभिरमृतादिक्षमावत्यन्ताभिः पञ्चाशच्छक्तिभिरुपसमीपे दलेषु शोभिता आवृता अनुलोमविलोमरीत्या शतसंख्याभिस्ताभिर्दशवारं दलेषु स्थिताभिः परिवृतेति यावत् । उपशब्दस्योक्तपरिभाषया दशसंख्याबोधकत्वासम्भवाच्च । अत एव योगिनीन्यासे दशवारं तासां न्यासं केचिदिच्छन्ति ।

**सर्वायुधधरा शुक्लसंस्थिता सर्वतोमुखी ॥ १६० ॥**

सर्वेषामायुधानां धरा धारयित्री । **'सहस्राणि सहस्रधा बाह्वोस्तव हेतय'** इति श्रुतेः । शुक्ले वीर्याख्यधातौ सम्यक् तदभिमानित्वेन स्थिता । **भविष्योत्तरपुराणे** रमणकालीनध्यानविशेषः शुक्लसंज्ञः कथितस्तत्र स्थिता वा । सर्वतः सर्वासु दिक्षु मुखानि यस्याः सा । **'सर्वतोऽक्षिशिरोमुखमि'**तिवचनात् ॥ १६० ॥

*अथ परिभाषायां द्वात्रिंशन्नामानि विभजते—*

***हेदाराः फलरेखारम्भविवादे तमोंऽशोस्ति ।***
***खेदो देहे भीष्मो देवे वा त्र्यङ्घ्रिलिङ्गफले ॥ २१ ॥***

*स्पष्टार्थः ॥ २१ ॥*

---

हरिद्रामिश्रितान्नस्य एका मुख्या रसिका रसज्ञा । रसिकायै इति । हाकिन्याः रूपं धारयतीति सा । धारिण्यै इति ॥ १५९ ॥

सहस्रदलपद्मं ब्रह्मरन्ध्रस्थं यत्र तिष्ठतीति सा । स्थायै इति ॥ सर्वैर्वर्णैरुक्तैरारक्तादिभिः उपशोभिता शोभमाना । शोभितायै इति ॥

सर्वेषामुक्तानां खट्वाङ्गादीनामायुधानां धरा । धरायै इति ॥ शुक्ले शुक्लधातौ सम्यक् स्थिता । स्थितायै इति ॥ सर्वतः सर्वदिक्षु मुखानि यस्याः सा । मुख्यै इति ॥ १६० ॥

**सर्वौदनप्रीतचित्ता याकिन्यम्बास्वरूपिणी ।**

सर्वैः पायसादिभिर्हरिद्रान्नान्तैरविशेषादन्यविधैरप्योदनैः प्रीतं तुष्टं चित्तं यस्याः । याकिन्याख्याया अम्बायाः स्वरूपमस्याः ।

एवं योगिनीस्वरूपतया वर्णयित्वा प्रकारान्तैरपि वर्णयितुमारभते–

**स्वाहा स्वधा मतिर्मेधा श्रुतिस्मृतिरनुत्तमा ॥ १६१ ॥**

स्वाहा स्वधेत्यादिना । '**स्वाहा देवहविर्दाने श्रौषट्वौषड्वषट्स्वधे**'ति **कोशा**दुद्देश्यकद्रव्यत्यागवचनौ स्वाहास्वधाशब्दौ । तदर्थरूपापि देव्येव । तदुक्तं **मार्कण्डेयपुराणे**–

**'सोमसंस्था हविःसंस्थाः पाकसंस्थाश्च सप्त याः ।**
**तास्त्वदुच्चारणाद्देवि क्रियन्ते ब्रह्मवादिभिः ॥'**

इति । अन्यत्रापि–

**यस्याः समस्तसुरता समुदीरणेन**
**तृप्तिं प्रयाति सकलेषु मखेषु देवि ।**
**स्वाहासि वै पितृगणस्य च तृप्तिहेतु-**
**रुच्चार्यसे त्वमत एव जनैः स्वधा च ॥'**

अस्मिन्पक्षेऽनयोरव्ययत्वात् 'स्वाहानमः, स्वधानम' इति प्रयोगः । तन्निरुक्तिः **प्रपञ्चसारे**–

**'स्वेति स्वर्गे स्वेति चात्मा प्रदिष्टो हेत्याहेती हेति विद्याद्गतिं च ।**
**स्वर्गात्मा च स्वात्मना सामशाखा वह्नेर्जाया हूयते यत्र सर्वम् ॥'**

इति । '**सैव ते वागित्यब्रवीदि**'ति **तैत्तरीयश्रुतौ** स्वाहापदस्य स्वीया वागित्यर्थ उक्तः । **सामब्राह्मणे** स्वाहा कत्यक्षरेत्यादिप्रश्नात्तदुत्तराणि च श्रूयन्ते । एतेषु निर्वचनेषु पृषोदरादिप्रवेश एव गतिः । एवं **यास्कस्य निरुक्ता**वपि सु आहेति स्वमाहेति वेत्यादौ बोध्यम् । अन्ये त्वाहुः । सुष्ठु आहूयतेऽनयेति व्युत्पत्तिः । '**अन्येभ्यो दृश्यत**' इति डप्रत्ययः । स्वान् स्वकीयान् आजिहीते गच्छति स्वीयत्वेन सम्यग्जानातीति वा

---

सर्वैः पायसादिभिरुक्तैरोदनैः प्रीतं सन्तुष्टं चित्तं यस्याः सा । चित्तायै इति ॥ याकिन्यम्बायाः स्वरूपमस्याः । स्वरूपिण्यै इति ॥

दैवपित्रुद्देश्येकद्रव्यत्यागार्थकौ स्वाहास्वधाशब्दौ । तादृशार्थरूपत्वाद्देव्यास्तद्वाच्यम्, तयोरव्ययत्वात्स्वाहा स्वधा इत्येव चतुर्थ्यन्तम् । स्वाहा इति ॥ स्वधा इति ॥ अमितिरविद्या तद्रूपा । अमत्यै इति । मेधा धारणवती बुद्धिः, तद्रूपा । मेधायै इति ॥ श्रुतिः श्रुतिरूपा । श्रुत्यै इति ॥ स्मृतिः स्मृतिरूपा । स्मृत्यै इति ॥ न उत्तमं वस्तु यस्याः सकाशात्सा । उत्तमायै इति ॥ १६१ ॥

स्वाहा । सुष्ठ आं पितामहं जिहीत इति वा । इयञ्च वह्निमूर्तेः शिवस्य भार्या स्कन्दमाता । तदुक्तं **लिङ्गपुराणे**–

**'स्वाहा वह्न्यात्मनस्तस्य प्रोक्ता पशुपतेः प्रिया ।**
**षण्मुखो भगवान् देवो बुधैः पुत्र उदाहृतः ॥'**

इति । **वायवीये**ऽपि–

**'नाम्ना पशुपतेर्या तु तनुरग्निर्द्विजैः स्मृता ।**
**तस्य पत्नी स्मृता स्वाहा स्कन्दश्चापि सुतः स्मृतः ॥'**

इति । एषा च माहेश्वरपीठाधिष्ठात्री । **'स्वाहा माहेश्वरे पुर'** इति **पाद्मात्** । सुष्ठु आधीयतेऽनयेति वा । सुष्ठु अं विष्णुं स्वान्वा दधाति पोषयतीति स्वधा । अस्मिन्पक्षे 'स्वाहायै नमः, स्वधायै नम' इति प्रयोगः । **'यन्न व्येति तदव्यय'**मिति **आथर्वणश्रुतौ** न व्येतीत्यस्य लिङ्गसंख्याकारकरूपान् सत्त्वधर्मान् गृह्णातीति व्याख्यानेन हविर्दानेऽथर्व एव तयोरसत्वार्थकत्वात् । अमतिरिति त्र्यक्षरं नाम । अविद्येत्यर्थः । नञोऽल्पार्थकत्वमाश्रित्य वृत्त्यात्मकज्ञानरूपेति वा । **वैदिकनिघण्टु**गतोऽयममितिशब्दः स्वात्मविज्ञानपरत्वेन **नैरुक्ते दुर्गभट्टेन** व्याख्यातः । तत्रैव स्थलान्तरे रूपपरत्वेनोक्तः । यद्वा पूर्वोक्ते सृष्टिक्रमे प्राथमिकी सृष्टिरबुद्धिपूर्वा तद्रूपा वा । क्रमप्राप्तत्वाद्बुद्धिपूर्वक-सृष्टिरूपापि देव्येवेत्याह । मेधा **'मेधासि देवि विदिताखिलशास्त्रसारे'**ति च । **'या देवी सर्वभूतेषू मेधारूपेण संस्थिते'**ति वचनात् । **'धीर्धारणावती मेधे'**त्याग्निपुराणवचनाच्च बुद्धिविशेषरूपा वा । **'मेधा काश्मीरमण्डल'** इति **पद्मपुराणो**क्तदेवीरूपा वा । वेदा मन्वादिस्मृतयश्चैतद्रूपा एवेत्याह **श्रुतिः**। **स्मृतिः** –

**'ऋचो यजूंषि सामानि तथैवाथर्वणानि च ।**
**ब्रह्मणः सहजं रूपं नित्यैषा शक्तिरव्यय ॥'**

इति **कौर्मे** । श्रवणस्मरणात्मकज्ञानरूपा वा । **वायुपुराणे** तु–

**'वर्तमानान्यतीतानि तथैवानागतान्यपि ।**
**स्मरते सर्वकार्याणि तेनासौ स्मृतिरुच्यते ॥'**

इत्युक्तम् । **देवीपुराणे** तु– **'स्मृतिः संस्मरणाद्देवी'**ति । यदपेक्षयोत्तममन्यद्वस्तु नास्ति सानुत्तमा । **'न तत्समश्चाभ्यधिकश्च दृश्यत'** इति **श्रुतेः** । **'न त्वत्समोऽस्त्यभ्यधिकः कुतोऽन्य'** इति **स्मृतेश्च** । **देवीभागवते** तृतीयस्कन्धेऽपि–

**'रुद्रहीनं विष्णुहीनं न वदन्ति जनास्तथा ।**
**शक्तिहीनं यथा सर्वे प्रवदन्ति नराधमम् ॥'**

इति । न नुत्ता परप्रेरिता मा बुद्धिरैश्वर्यं वा यस्या इति वा । स्वतन्त्रबुद्धिः सहजैश्वर्या चेति यावत् ॥ १६१ ॥

**पुण्यकीर्तिः पुण्यलभ्या पुण्यश्रवणकीर्तना ।**

पुण्या पुण्यप्रदा कीर्तिर्यस्याः । पुण्यैः प्राक्तनैर्लभ्या । उक्तञ्च **देवीभागवते** तृतीयस्कन्धे—

**'पश्यन्ति पुण्यपुञ्जा ये ये वेदान्तास्तपस्विनः ।**
**रागिणो नैव पश्यन्ति देवीं भगवतीं शिवाम् ॥'**

इति । पुण्ये विहितकर्मरूपे श्रवणकीर्तने यस्याः । षष्ठ्यर्थश्चरित्रद्वारकः सम्बन्धः ।

**पुलोमजार्चिता बन्धमोचनी बर्बरालका ॥ १६२ ॥**

पुलोमतो जातया इन्द्राण्यार्चिता । तथा च **देवीभागवते** षष्ठस्कन्धे कथा स्मर्यते । नहुषे स्वाराज्यं शासति शक्रप्राप्त्यर्थमिन्द्राण्या भगवत्याराधितेति—

**'इत्युक्ता सा तदा तेन शक्रपत्नी सुमानसा ।**
**जग्राह मन्त्रं विधिवद्गुरोर्देव्याः सुसाधनम् ॥**
**विद्यां प्राप्य गुरोर्देवी देवीं त्रिपुरसुन्दरीम् ।**
**सम्यगाराधयामास बलिपुष्पार्चनैः शुभैः ॥'**

इत्यादि । बन्धमाविद्यकं मोचयति । कारागृहादपि मोचयति । तदुक्तं **हरिवंशे** अनिरुद्धेन—

**'एभिर्नामभिरन्यैश्च कीर्तिता ह्यसि शाङ्करि ।**
**त्वत्प्रसादादविघ्नेन क्षिप्रं मुच्येय बन्धनात् ॥**
**अवेक्षस्व विशालाक्षि पादौ ते शरणं व्रजे ।**
**सर्वेषामेव बन्धानां मोक्षाणां कर्तुमर्हसि ॥'**

इत्यारभ्य

**'एवं स्तुता तदा देवी दुर्गा दुर्गपराक्रमा ।**
**बद्धं बाणपुरे वीरमनिरुद्धं व्यमोचयत् ॥'**

---

पुण्या पुण्यप्रदा कीर्तिर्यस्याः सा । कीर्त्यै इति ॥ पुण्यैः सुकृतैर्लभ्या प्राप्या । लभ्यायै इति ॥ पुण्यं पुण्यप्रदं नामादीनां श्रवणं कीर्तनं यस्याः सा । कीर्तनायै इति ॥

पुलोमजा इन्द्राणी तया अर्चिता । अर्चितायै इति ॥ बन्धं आणवादिरूपं मोचयतीति सा । मोचिन्यै इति ॥ बन्धुराः उन्नतानता अलकाः चूर्णकुन्तलाः यस्याः सा । अलकायै इति ॥ १६२ ॥

इत्यन्तम् । एवं **देवीभागवते** षष्ठस्कन्धे एकावलीनामिका राजकन्या कालकेतुना दानवेन बद्धा यशोवत्या तत्सख्या स्वोपासितभगवतीमन्त्रबलान्मोचितेति कथा स्मर्यते साप्यत्रोदाहर्तव्या । बन्धुरा उन्नतानता अलकाश्चूर्णकुन्तला यस्याः । बर्बरालकेति तु सम्प्रदायागतपाठः । बर्बरशब्दः संकुचिताग्रह्रस्वकेशेषु रूढः । '**आनीलस्निग्धबर्बरकचाना**'मिति **ललितास्तवरत्ने** प्रयोगात् । बर्बरेति पाठेऽपि स एवार्थः । बाबरेत्यपभ्रंशदर्शनाच्च वस्तुतोऽयमेव बहुसंमतः पाठो न बन्धुरेति ॥ १६२ ॥

**विमर्शरूपिणी विद्या वियदादिजगत्प्रसूः ।**

प्रकाशात्मकस्य परब्रह्मणः स्वाभाविकं स्फुरणं विमर्श इत्युच्यते । तदुक्तं **सौभाग्यसुधोदये**–

**'स्वाभाविकी स्फुरत्ता विमर्शरूपास्य विद्यते शक्तिः ।**
**सैव चराचरमखिलं जनयति जगदेतदपि च संहरति ॥'**

इति । स एव रूपं शक्तिरस्याः । विमर्शो वाचकः शब्दो वा स एव रूपं निरूपकं निरूप्यं चास्याः । तदुक्तं **मातृकाविवेके**–

**'वाचकेन विमर्शेन विना किंवा प्रकाश्यते ।**
**वाच्येनापि प्रकाशेन विना किंवा विमृश्यते ॥**
**तस्माद्विमर्शो विस्फूर्तौ प्रकाशं समपेक्षते ।**
**प्रकाशश्चात्मनो ज्ञाने विमर्शं समपेक्षते ॥'**

इति । मोक्षप्रदज्ञानस्वरूपत्वाद्विद्या । '**विद्यासि सा भगवती परमा हि देवी**'ति **देवीमाहात्म्यात्** । तथा च **गौडपादीयं सूत्रम्**-'**सैव विद्ये**'ति । चैतन्यस्वरूपाशक्तिरिति पूर्वसूत्रोपस्थितायाः शक्तेस्तत्पदेन परामर्शः । तेजोनिष्ठकलाविशेषरूपा वा । तल्लक्षणं च **शैवतन्त्रे**–

**'मायाकार्यविवेकेन वेत्ति विद्यापदं यया ।**
**सा कला परमा ज्ञेया विद्या ज्ञानक्रियात्मिका ॥'**

इति । वियद्व्योम आदिर्यस्य तज्जगत्प्रसूते । '**आत्मन आकाशः सम्भूत**' इत्यादिश्रुतेः ।

---

विमर्शः प्रकाशरूपस्य चिदात्मनः अन्तःसंरम्भरूपा क्रियाशक्तिः । सः रूपं स्वभावः अस्याः । रूपिण्यै इति ॥ विद्या मोक्षसाधनज्ञानरूपिणी । विद्यायै इति ॥ वियदाकाशादिर्यस्य तस्य जगतः प्रसूर्जननी । जगत्प्रसवे इति ॥

**सर्वव्याधिप्रशमनी सर्वमृत्युनिवारिणी ॥ १६३ ॥**

सर्वेषां व्याधीनां ज्वरादिरूपाणां प्रशमनी नाशकारणम् । अपमृत्युकालमृत्व्यादिरूपसर्वमृत्यून्निवारयति । **'ज्ञात्वा देवं मृत्युमुखात्प्रमुच्यत'** इति श्रुतेः ॥ १६३ ॥

**अग्रगण्याऽचिन्त्यरूपा कलिकल्मषनाशिनी ।**

सर्वस्य जगतो मूलकारणत्वादग्रे प्रथमतो गण्या गणयितुमर्हा । गणं लब्ध्री गण्या । अग्रे च सा गण्या चेति वा । **'धनगणं लब्धे'**ति यत्प्रत्ययः । गुणसम्पर्कशून्यत्वादचिन्त्यं चिन्तयितुमशक्यं रूपमस्याः । कलियुगे कल्मषाधिक्यस्यावश्यकत्वात्तन्नाशमन्यसाध्यमेषैव करोति । तदुक्तं **कूर्मपुराणे**—

**'शमायालं जलं वह्नेस्तमसो भास्करोदयः ।**
**शान्त्यै कलेरघौघस्य देवीनामानुकीर्तनम् ॥'** इति ।
**'कृतस्याखिलपापस्य ज्ञानतोऽज्ञानतोऽपि वा ।**
**प्रायश्चितं परं प्रोक्तं पराशक्तेः पदस्मृतिः ॥'**

इति **ब्रह्माण्डपुराणे**ऽपि ।

**कात्यायनी कालहन्त्री कमलाक्षनिषेविता ॥ १६४ ॥**

कतो नामर्षिः तस्यापत्यं स्त्रीत्यर्थे गर्गादित्वाद्यञि कात्यः ततः **'सर्वत्र लोहितादिकतन्तेभ्य'** इति ष्फः । षित्वान्डीष् । सर्वदेवतेजःसमूहात्मिकाया देव्या इयं संज्ञा । तदुक्तं **वामनपुराणे**—

**'तच्चापि तेजो वरमुत्तमं महन्नाम्ना पृथिव्यामभवत्प्रसिद्धम् ।**
**कात्यायनीत्येव तदा बभौ सा नाम्ना च तेनैव जगत्प्रसिद्धा ॥'**

इति ।इयञ्च ओड्यानपीठाभिमानिनी । तदुक्तं **कालिकापुराणे**—

**'कात्यायनी चोड्डियाने कामाख्या कामरूपके ।**
**पूर्णेश्वरी पूर्णगिरौ चण्डी जालन्धरे स्मृता ॥'**

इति । **देवीपुराणे** तु—

**'कं ब्रह्म कं शिरः प्रोक्तमश्मसारं च कं मतम् ।**
**धारणाद्वासनाद्वापि तेन कात्यायनी मता ॥'**

---

भक्तानां सर्वव्याधीन् प्रशमयतीति सा । प्रशमन्यै इति ॥ सर्वान् मृत्यून् मृत्यु तत्कारणकामादींश्च निवारयतीति सा । निवारिण्यै इति ॥ १६३ ॥

अग्रे वस्तूनां गणनारम्भे सर्वोत्कृष्टत्वान्मूलकारणत्वाच्च गण्या गणयितुं योग्या । गण्यायै इति ॥ मलिनचितैः चिन्तितुमशक्यं रूपं यस्याः सा । रूपायै इति ॥ कले युगस्य सम्बन्धिकल्मषपातकं अतिप्रबलमपि नाशयतीति सा । नाशिन्यै इति ॥

ओड्याणपीठाभिमानिनी कात्यायनी, तद्रूपा । कात्यायिन्यै इति ॥ कालस्य मृतयोर्हन्त्री नाशिनी । हन्त्र्यै इति ॥ कमलाक्षो विष्णुस्तेन नितरां सेविता । सेवितायै इति ॥ १६४ ॥

इत्युक्तम् । कालस्य मृत्योर्हन्त्री । **'ज्ञः कालकालो गुणी सर्वविद्य'** इति **श्रुतेः** । कमलाक्षेण विष्णुना नितरां सेवितोपासिता । उक्तञ्च **पद्मपुराणे**–

**'इन्द्रनीलमयीं देवीं विष्णुरर्चयते सदा ।**
**विष्णुत्वं प्राप्तवांस्तेन ..................॥'**

इत्यादि ॥ १६४ ॥

**ताम्बूलपूरितमुखी दाडिमीकुसुमप्रभा ।**

ताम्बूलेन पूरितं मुखं यस्याः । अस्ति फलविरहितः पुष्पमात्रशाली दाडिमीत्वव्याप्यजातिमान् वृक्षविशेषस्तस्य कुसुमस्येव प्रभा यस्याः ।

**मृगाक्षी मोहिनी मुख्या मृडानी–**

मृगस्येवाक्षिणी यस्याः । मोहयतीति मोहिनी । तदुक्तं **लघुनारदीयपुराणे**–

**'यस्मादिदं जगत्सर्वं त्वया सुन्दरि मोहितम् ।**
**मोहिनीत्येव ते नाम स्वगुणोत्थं भविष्यति ॥'**

इति । अथवा अमृतमथने यद्विष्णुना मोहिनीरूपं धृतं प्रवरानदीतीरे निवासपुरे निवसति तदस्या एवाभेदभावनया व्यक्तिमापन्नम् । तदुक्तं **ब्रह्माण्डपुराणे**–

**'आदौ प्रादुरभूच्छक्तिर्ब्रह्मणो ध्यानयोगतः ।**
**प्रकृतिर्नाम सा ख्याता देवानामिष्टसिद्धिदा ॥**
**द्वितीयमुदभूद्रूपं प्रवृत्तेऽमृतमन्थने ।**
**सर्वसम्मोहजनकमवाङ्मनसगोचरम् ॥**
**यद्दर्शनादभूदीशः सर्वज्ञोऽपि विमोहितः ।'**

इत्यादि । तत्रैवाध्यायान्तरे मोहिनीरूपं प्रक्रम्य–

**'यद्ध्यानवैभवाल्लब्धं रूपमद्वैतमद्भुतम् ।**
**तामेवानन्यमनसा ध्यात्वा किञ्चिद्विहस्य स ॥'**

इत्यादि । मुखे सर्वादौ भवा मुख्या । **'अहमस्मि प्रथमजा ऋतस्ये'**ति **श्रुतेः** । **'मृड सुखने'** । **'जनसुखकृते सत्त्वोद्रिक्तौ मृडाय नमो नम'** इति **शिवरहस्यात्** । सुखप्रदस्य मृडस्य परमशिवस्य पत्नीत्यर्थे आनुगागमविशिष्टो ङीष् ।

---

ताम्बूलेन पूरितं मुखं यस्याः सा । मुख्यै इति ॥ दाडिमस्य यत्कुसुमं तस्येव प्रकृष्टाभा अङ्गकान्तिर्यस्याःसा । प्रभायै इति ॥

मृगस्य हरिणस्येवाक्षिणी यस्याः सा । अक्ष्यै इति ॥ दुष्टान् मोहयति भ्रामयतीति सा । मोहिन्यै इति ॥ मुख्ये सर्वादौ भवा मुख्या । मुख्यायै इति ॥ मृडस्य शिवस्य स्त्री इति । मृडान्यै इति ॥

*अथ परिभाषायामेकत्रिंशत्पदानि विभजते–*

**शम्भोर्भाले मज्जज्जीवाभेदाच्चरे त्र्यङ्घ्रिः ॥**
**भवदृढभण्डो मन्दो गौणार्धं भूशिलाषाढे ॥ २२ ॥**
**–मित्ररूपिणी ॥ १६५ ॥**

मित्राणां सूर्याणामिव रूपमस्याः । **'सुहृत्स्वरूपे'**ति वा ॥ १६५ ॥

**नित्यतृप्ता भक्तनिधिर्नियन्त्री निखिलेश्वरी ।**

नित्यं सर्वकालं तृप्ता । नित्येन स्वरूपानन्देन वा तृप्ता । भक्तानां निधिरिव । कामपूरकत्वात् । नात्र पाक्षिकोऽपि 'निध्यै नम' इति प्रयोगः । जगन्नियामकत्वा–न्नियन्त्री । निखिलस्य कृत्स्नप्रपञ्चस्येश्वरी ।

**मैत्र्यादिवासनालभ्या महाप्रलयसाक्षिणी ॥ १६६ ।**

मैत्रीकरुणामुदितोपेक्षा चेति चतस्रो वासनाः । सुखिषु मैत्री दुःखिषु करुणा पुण्येषु मुदिता पापिषूपेक्षेति व्यवस्थिता इति **विष्णुभागवते** प्रसिद्धाः । एताश्चित्तस्य शोधिकाः । तदुक्तम**भियुक्तैः**–

**'मैत्र्यादिचित्तपरिकर्मविदो विधाय**
**क्लेशप्रहाणमिह लब्धसबीजयोगाः ।**
**ख्यातिं च सत्त्वपुरुषान्यतयाधिगम्य**
**वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥'**

इति । तथा च **योगसूत्रमपि**– **'मैत्रीकरुणामुदितोपेक्षाणां सुखदुःखपुण्यापुण्यविषयाणां भावना- तश्चित्तप्रसादन'**मिति। इह सुखादिशब्दैस्तद्वन्तः प्रतिपादिता इति **राजमार्तण्डः** । मैत्र्यादिभिश्चतसृभिर्वासनाभिर्लभ्या । परमशिवस्य महाप्रलयकालीने ताण्डवे ब्रह्म-विष्ण्वादेरपि नाशात्तदैषैव तत्साक्षिणी । उक्तञ्च–

**'कल्पोपसंहरणकल्पितताण्डवस्य**
**देवस्य खण्डपरशोः परभैरवस्य ।**

---

मित्रस्य सूर्यस्येव रूपम् अस्याः सा । रूपिण्यै इति ॥ १६५ ॥

नित्यं सर्वदा तृप्ता तृप्तमती । तृप्तायै इति ॥ भक्तानां इष्टार्थदाने निधिः शेवधिः । निधये इति ॥ जगन्नियामकत्वान्नियन्त्री । नियन्त्र्यै इति ॥ निखिलस्य जगत ईश्वरी स्वामिनी । ईश्वर्यै इति ॥

मैत्री आदिर्यासां करुणामुदितशान्तानां वासनानां चित्तवृत्तीनां ताभिरभ्यस्ताभिर्लभ्या । लभ्यायै इति ॥ महाप्रलयस्य आत्यन्तिकजगन्नाशस्य साक्षिभूतां । साक्षिण्यै इति ॥ १६६ ॥

**पाशाङ्कुशैक्षवशरासनपुष्पबाणैः**
**सा साक्षिणी विजयते तव मूर्तिरेका ॥'**

इति । गुरुकलायामपि–

**'सुरेन्द्ररुद्रपद्मजाच्युतादयोऽपि ये मृते-**
**र्वशंवदा न तत्स्त्रियः सुवासिनीपदस्पृशः ।**
**महेश्वरस्य मृत्युघस्मरस्य साक्षिणी तु या**
**सुमङ्गलीरियं वधूरिमां समेत पश्यते ॥'**

इति ॥ १६६ ॥

**पराशक्तिः परानिष्ठा प्रज्ञानघनरूपिणी ।**

देहे दशमधातुः पराशक्तिरित्युच्यते । तदुक्तं कामिकागमे–

**'त्वगसृङ्मांसमेदोस्थिधातवः शक्तिमूलकाः ।**
**मज्जशुक्लप्राणजीवधातवः शिवमूलकाः ॥**
**नवधातुरयं देहो नवयोनिसमुद्भवः ।**
**दशमी धातुरेकैव पराशक्तिरितीरिता ॥'**

इति । यद्वा परोत्कृष्टा शक्तिः । शक्तिमात्रस्वरूपत्वादेवोत्कर्षः **'अन्येभ्योऽपि दृश्यत'** इति दीर्घः । **'परास्य शक्तिर्विविधैव श्रूयत'** इति श्रुतिः । लैङ्गेऽपि–

**'यस्य यस्य पदार्थस्य या या शक्तिरुदाहृता ।**
**सा सा विश्वेश्वरी देवी शक्तः सर्वो महेश्वरः ॥**
**शक्तिमन्तः पदार्था ये ते वै सर्वविभूतयः ।**
**पदार्थशक्तयो यायास्तास्ता गौरीं विदुर्बुधाः ॥'**

इति । परा निष्ठा उत्कृष्टा समाप्तिर्ज्ञानविशेषरूपा । सर्वकर्मणां सर्वजगतां चात्रैव समाप्तेः । उक्तञ्च गीतासु– **'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत'** इति । स च ज्ञानविशेषः सूतगीतायामुक्तः–

**'शास्त्राचार्योपदेशेन तर्कैः शास्त्रानुसारिभिः ।**
**सर्वसाक्षितयाऽऽत्मानं सम्यङ्निश्चित्य सुस्थिरः ॥**
**स्वात्मनोऽन्यतया भातं समस्तमविशेषतः ।**
**स्वात्ममात्रतया बुद्ध्वा पुनः स्वात्मानमद्वयम् ॥**
**शुद्धं ब्रह्मेति निश्चित्य स्वयं स्वानुभवेन च ।**
**निश्चयं च स्वचिन्मात्रे विलाप्याविक्रियेऽद्वये ॥**

---

परा उत्कृष्टा शक्तिः । परस्यै शक्त्यै इति ॥ परा उत्कृष्टा निष्ठा स्वरूपे स्थितिः, तद्रूपा । परस्यै निष्ठायै इति ॥ प्रज्ञानस्य शुद्धसंविदो घनं एकरसं रूपम् अस्याः । रूपिण्यै इति ।

**विलापनं च चिद्रूपं बुद्ध्वा केवलरूपतः ।**
**स्वयं तिष्ठेदयं साक्षाद्ब्रह्मवित्प्रवरो मुनिः ॥**
**ईदृशीयं परा निष्ठा श्रौती स्वानुभवात्मिका ॥'**

इति । अत्र परस्यै शक्त्यै नम इति । परायै निष्ठायै नम इत्याकारकः प्रयोगः । **'अग्नये पवमानायेद'**मित्यादाविवोभयत्र चतुर्थ्यन्तताया न्यायसिद्धत्वात् । **'पराशक्तिमित्रं नुमः पञ्चवक्त्र'**मिति **भगवत्पादानां** प्रयोगाद्यद्येकं पदं तदा पराशक्त्यै नम इत्येव प्रयुज्य- ताम् । परा मन्त्रस्य या शक्तिस्तद्रूपेत्यर्थः । प्रकृष्टेन वृत्तिभिन्नेन नित्येन ज्ञानेन घनं निरन्तरमविद्यालेशेनाप्यस्पृष्टं रूपमस्याः । तथा च **काण्वेषु** श्रूयते– **'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एवे'**ति ।

## माध्वीपानालसा मत्ता मातृकावर्णरूपिणी ॥ १६७ ॥

माध्वीशब्दः परिपन्थिशब्दवच्छान्दसोऽपि लोके प्रयुज्यते ।

**'स्वब्रह्मभावहन्त्रीं साधुविनिन्द्यां सुरां च सरणिं च ।**
**अहह कथं नु भजध्वे माध्वीं गौडीं च मोहिनीं मन्दा ॥'**

इति । तेन **'छन्दसि परिपन्थिपरिपरिणा'**वितिवत् **'ऋत्व्यवास्त्व्यवास्त्वमाध्वीहिरण्ययानि छन्दसी'**त्यपि प्रयोगवशाद्भाषासमुच्चयपरं सूत्रैकदेशांशे व्याख्येयम् । छान्दसत्वेऽपि वा नात्र दुष्यति । माध्व्या द्राक्षाजन्यमदिरायाः पानेनालसा । अन्तरेकनिष्ठतया शीतला । अत एव मत्तेव मत्ता । यद्वा मच्छब्दोऽहमर्थकस्तस्य भावो मत्ता । परशिवनिष्ठ-पराहन्तारूपेत्यर्थः । मातृका अकारादिक्षकारान्तास्तासां वर्णाः शुक्लादिरूपाणि तान्येव रूपं स्वरूपमस्याः । तानि च **सनत्कुमारसंहितायाम्**–

**'अकाराद्याः स्वरा धूम्राः सिन्दूराभास्तु कादयः ।**
**डादिफान्ता गौरवर्णा अरुणाः पञ्च बादयः**
**लकाराद्याः काञ्चनाभा हकारान्त्यौ तटिन्निभौ ।'**

इति । तन्त्रान्तरे तु–

**'स्फटिकाभाः स्वराः प्रोक्ताः स्पर्शा विद्रुमसन्निभाः ।**
**यादयो नव पीताः स्युः क्षकारस्त्वरुणो मतः ॥'**

इति । सर्वे वर्णाः शुक्ला इत्यपि क्वचित् । **मातृकाविवेके** तु– **'अकारं सर्वदेवत्यं रक्तं सर्ववशङ्कर'**मित्यादिना प्रत्यक्षरं वर्णविशेष उक्तः । यद्वा एकपञ्चाशन्मातृकावर्णा एव

---

माध्व्या मदिरा सदृशानन्दरस्य पानेनास्वादनेन अलसा बाह्यव्यापारविरहिता । अलसायै इति ॥ अत एव मत्ता मदवतीव स्थिता । मत्तायै इति ॥ मातृकावर्णानां अक्षराणां रूपं स्वरूपं अस्याः । रूपिण्यै इति ॥ १६७ ॥

रूपमस्या इति । अथवा वर्णा एव रूपा निरूपका वाचका यस्याः । तदुक्तं **यज्ञवैभवखण्डे**–

**'यथा परतरः शम्भुर्द्विधा शक्तिशिवात्मना ।**
**तथैव मातृकादेवी द्विधाभूता सती स्वयम् ॥**
**एकाकारेण शक्तेस्तु वाचिका चेतरेण तु ।**
**शिवस्य वाचिका साक्षाद्विद्येयं पदगामिनी ॥'**

इति। अकारादयः श्रीकण्ठादिवाचकाः पूर्णोदर्यादिवाचकाश्चेत्यस्यार्थ उक्तस्**तट्टीकायाम्**। अक्षमालास्वरूपिणीति वा । उक्तञ्च **ज्ञानार्णवे**–

**'अकारः प्रथमो देवी क्षकारोन्त्यस्ततः परम् ।**
**अक्षमालेति विख्याता मातृकावर्णरूपिणी ॥**
**शब्दब्रह्मस्वरूपेयं शब्दातीतं तु जप्यते ।'**

इति । मातृकावर्णान् रूपयति जनयतीति वा । अनुत्तराख्यंशिवस्येच्छाशक्त्या योगादिक्रमेण वर्णोत्पत्तिप्रकारः **सौभाग्यसुधोदये** द्रष्टव्यः । मातृकावर्णानामेव श्रीचक्रात्मकत्वं **मातृकाविवेके** षष्ठे पटले विस्तरेण प्रतिपादितम् । अत एव **सनन्दन-संहितायां** मातृकाचक्रयोरैक्यविभावनं कैलासप्रस्तार इति व्यवहृतं तादृशरूपवतीति वा । प्रचण्डाज्ञेति वक्ष्यमाणनाम्नोरन्ययोर्वैक्यमुरीकृत्य **'स्कन्दोत्पादेन मातृके'**ति **देवी-पुराणे** निरुक्तदर्शनाच्च मातृकेत्यवर्णरूपिणीति च नामद्वयं सुवचम् ॥ १६७ ॥

**महाकैलासनिलया मृणालमृदुदोर्लता ।**

महाकैलासो नाम कैलासादतीव परतो लोकः परमशिवावासस्थानत्वेन **शिवपुराणा**दौ प्रसिद्धः । पूर्वनामोक्ताभेदभावनाविशेषो कैलासः । **'एतत्कैलाससंज्ञं पदमकलपदं बिन्दुरूपी स्वरूपी यत्रास्ते देवदेव'** इत्यादि**त्रिपुरासारो**क्तेर्ब्रह्मरन्ध्रस्थसहस्रारमेव वा कैलासः।सर्वाशन्यादितादात्म्यनित्यातादात्म्याख्यप्रस्तारान्तरापेक्षयोत्तम-त्वान्महान् । स एव निलयो यस्याः। मृणालं बिसतन्तुः तद्वन्मृद्व्यो दोर्लता यस्याः ।

**महनीया दयामूर्तिर्महासाम्राज्यशालिनी ॥ १६८ ॥**

पूज्यत्वान्महनीया । दयैव मूर्तिः स्वरूपं यस्याः । महाकैलासाधिपत्यं महासाम्राज्यं तच्छालिनी ॥ १६८ ॥

---

महाकैलासः परशिवस्थानं स निलयो यस्याः सा । निलयायै इति ॥ मृणालं विसं तद्वत् मृद्व्यः दोर्लता भुजलता यस्याः सा । लतायै इति ॥

महनीया सर्वपूज्या । महनीयायै इति ॥ दयैव मूर्तिः शरीरं यस्याः सा । मूर्त्यै इति ॥ महासाम्राज्यमखिलजगदैश्वर्यं तच्छालिनी तद्वती । शालिन्यै इति ॥ १६८ ॥

**आत्मविद्या महाविद्या श्रीविद्या कामसेविता ।**

आत्मज्ञानरूपत्वादात्मविद्या । आत्माष्टाक्षरमन्त्ररूपा वा । अत एव महाविद्या । महती च सा विद्या च । सर्वानर्थनिवारकत्वान्महत्त्वम् । नवदुर्गाविद्याया अपि महाविद्येति संज्ञा तद्रूपा वा । श्रीविद्या पञ्चदशीस्वरूपा । उक्तञ्च **विष्णुपुराणे**–

**'यज्ञविद्या महाविद्या गुह्यविद्या च शोभने ।**
**आत्मविद्या च देवि त्वं विमुक्तिफलदायिनी ।**
**आन्वीक्षिकी त्रयी वार्ता दण्डनीतिस्त्वमेव च ॥'**

इति । अत्र व्याख्यातारः । कर्मविद्या विश्वरूपाद्युपासना मन्त्रविद्या ब्रह्मविद्या चेति विद्यापदचतुष्टयार्थः । वार्ता शिल्पशास्त्रायुर्वेदादिः । दण्डनीती राजनीतिरिति । कामो महाकामेशस्तेन सेवितोपासिता । यद्वा । कामोऽनङ्गस्तेन सेविता स्यूता । **'सीवनं सेवनं स्यूति'**रिति **कोशात्** । श्रूयते **चारुणोपनिषदि**– **'पुत्रो निर्ऋत्या वैदेहः । अचेता यश्च चेतनः । स तं मणिमविन्दत् । सोऽनङ्गुलिरावयवत् । सोऽग्रीवः प्रत्युमुञ्चत् । सोऽजिह्वो असश्चत । नैनमृषिं विदित्वा नगरं प्रविशेत् । यदि प्रविशेत् मिथो चरित्वा प्रविशेत् । तत्सम्भवस्य व्रतमि'ति** । निर्ऋत्या लक्ष्म्याः पुत्रो वैदेहो विदेहोऽनङ्गो मन्मथः अनङ्गत्वादेवाचेता नेत्राङ्गुलिग्रीवाजिह्वारहितश्च सोऽन्धो मणिं विद्यारत्नमविन्दत् । तत आवयद् असीव्यत् । ततो ग्रीवायां धृतवानास्वादितवांश्च । तेन मन्त्रद्रष्टृत्वा-दयमेवर्षिः । अस्य ज्ञानोत्तरं नगरे बाह्यचक्रे प्रवेशः । पूजाटोपो व्यर्थत्वात्कृत-कार्यत्वाच्च न कार्यः । यदि सर्वथा पूजनेच्छा तदा शिवशक्तिसामरस्यात्मकं मिथुनीभावं विज्ञाय कुर्यात् । तत्सामरस्यमेव चित्तसम्भवस्य मन्मथस्य रहस्यतरं व्रतमिति श्रुत्यर्थः । शिवशक्तिसामरस्यमविज्ञाय क्रियमाणं पूजनं न तथा फलतीति तात्पर्यार्थः ।

**श्रीषोडशाक्षरीविद्या त्रिकूटा कामकोटिका ॥ १६९ ॥**

षोडशानामक्षराणां समाहारः षोडशाक्षरी । श्रीयुक्ता च सा षोडशाक्षरी च सा विद्या चेति तथा । यद्यपि **गौडपादीयसूत्र**मप्यविद्याष्टाविंशतिवर्णविशिष्टेति पठ्यते तथापि तत्रत्य कूटत्रयस्य पञ्चदशाक्षररूपतया विभज्य गणनाभिप्रायमित्यविरोधः । श्रीति षोडशमक्षरं यस्यां तादृशी च सा विद्या चेति वा । गौराद्यन्तर्गतस्य

---

आत्मनो विद्या विज्ञानरूपा । विद्यायै इति ॥ अत एव महती सर्वोत्कृष्टा विद्या । विद्यायै इति ॥ श्रीविद्या सौभाग्यरूपा विद्या । विद्यायै इति ॥ कामेन मन्मथेन सेविता । सेवितायै इति ॥

श्रीमती सर्वपूज्या षोडशाक्षरीरूपविद्या यस्याः सा । विद्यायै इति ॥ त्रीणि वाग्भवादीनि कूटानि यस्याः सा । कूटायै इति ॥ कामानां कोटिः यस्याः सौन्दर्योपमाभूताः सा । कोटिकायै इति ॥ १६९ ॥

पिप्पल्यादेराकृतिगणत्वान्ङीष् । त्रयाणां ब्रह्मादीनामवस्थापीठलोकगुणादीनां वा कूटं समूहो यस्याम् । वाग्भवादिकूटत्रयाभिन्ना वा । कामः परशिव एव कोटिरेकदेशो यस्याः सैव कामकोटिका । शिवशक्तिसामरस्यपरब्रह्मरूपत्वात् ॥ १६९ ॥

**कटाक्षकिङ्करीभूतकमलाकोटिसेविता ।**

कटाक्षस्य दृगेकदेशपातस्य किङ्करीभूताभिः कमलानां लक्ष्मीणां कोटिभिः सेविता। यस्मिन्नीषदवलोकनं तं पारेपरार्धं लक्ष्म्यो वृणत इति तात्पर्यम् ।

**शिरःस्थिता चन्द्रनिभा भालस्थेन्द्रधनुष्प्रभा ॥ १७० ॥**

शिरसि ब्रह्मरन्ध्रे गुरुरूपतया स्थिता । ब्रह्मरन्ध्रस्याधोभागे चन्द्रोऽस्ति स च विद्यातृतीयकूटात्मक इत्याशयेनाह । चन्द्रनिभा भालहृल्लेखा बिन्दुरूपेण तिष्ठतीति भालस्था । तदुपर्यर्धचन्द्ररूपेण तिष्ठतीति द्योतनायाह । इन्द्रधनुष्प्रभा । उक्तञ्च **नित्याहृदये–**

**'दीपाकारोऽर्धमात्रश्च ललाटे वृत्त इष्यते ।**
**अर्धचन्द्रस्तथाकारः पादमात्रस्तदूर्ध्वतः ॥'**

इति ॥ १७० ॥

**हृदयस्था–**

हृदये ध्येयत्वेन तिष्ठतीति तथा । यद्वा पराबीजं हृदयमित्युच्यते । **'प्रभुहृदयज्ञातुः पदे पदे सुखानि भवन्ती'**ति **कल्पसूत्रे** प्रयोगात् । परमेश्वरहृदयाख्योपनिषदेव वा हृदयेनोच्यते । तत्रान्तर्यामितया प्रतिपाद्यतया वा तिष्ठति । अथवा हृदयस्य सर्वजगद्बीजत्वात्तत्र जगद्रूपेण स्थिता । तदुक्तम**नुत्तरत्रिंशिकाशास्त्रे–**

**'यथा न्यग्रोधबीजस्थः शक्तिरूपो महाद्रुमः ।**
**तथा हृदयबीजस्थं जगदेतच्चराचरम् ॥'** इति ।

---

कटाक्षस्य दृगेकदेशपातस्य किङ्करीभूताः आज्ञाकर्यः ताभिः कमलाकोटिभिः सेविता सदाशिवादयो यस्याः सा । सेवितायै इति ॥

विद्याया वाग्भवादिकूटत्रयं तुरीयकूटं च मूलाधारानाहताज्ञाब्रह्मरन्ध्रेषु क्रमेण अग्नि-सूर्येन्द्रधनुःपूर्णचन्द्रनिभं भावनीयमिति तन्त्रप्रसिद्धम्, तदेतत्सप्तभिर्नामभिराह । शिरःस्थिता ब्रह्मरन्ध्रे स्थिता । स्थितायै इति ॥ चन्द्रस्य पूर्णचन्द्रस्येव नितरां भा कान्तिर्यस्याः सा । निभायै इति ॥ फा(भा)ले आज्ञाचक्रे तिष्ठतीति सा । फा(भा)लस्थायै इति ॥ इन्द्रधनुरिव प्रभा यस्याः सा । प्रभायै इति ॥ १७० ॥

हृदये अनाहते तिष्ठतीति सा । हृदयस्थायै इति ॥

*अथ परिभाषायां पञ्चत्रिंशत्पदानि विभजते—*

***भेदभुवि त्र्यंघ्रिभुवो गुणगणजार्धं विभेजेर्धम् ।***
***भर्गो रोयेणैको मूलगुरोर्दण्डमुण्डशिला ॥***

*अत्रैकपदेनैकादशाक्षरमेकं नामेत्यर्थः ॥ २३ ॥*

**—रविप्रख्या त्रिकोणान्तरदीपिका ।**

हृदये तावत्सूर्यमण्डलमस्ति तच्च विद्याद्वितीयकूटमित्याशयेनाह— रविप्रख्या । निभप्रख्यशब्दौ सादृश्यपरावपीह तृतीयद्वितीयकूटयोस्तदभेदादभेदपरौ । स्वस्मिन्नेव मादृशः पुरुष इति व्यवहारदर्शनात् । सूर्यसमानकान्तिमतीति वा । मूलाधार-पद्मकर्णिकामध्ये त्रिकोणमस्ति । तदन्तरग्निमण्डलम् । तच्च प्रथमकूटस्वरूपं तदेतदाह । त्रिकोणस्यान्तरे मध्ये दीपवद्दीपिका तदभिन्नेत्यर्थः । तदुक्तं **तन्त्रराजे—**

**'नित्यानित्योदिते मूलाधारमध्येऽस्ति पावकः ।**
**सर्वेषां प्राणिनां तद्वद्धृदये च प्रभाकरः ॥**
**मूर्धनि ब्रह्मरन्ध्राधश्चन्द्रमाश्च व्यवस्थितः ।**
**तत्त्रयात्मकमेव स्यादाद्या नित्या त्रिखण्डकम् ॥'**

इति । अथवा पूर्वोक्तं रवितुल्यत्वमुपमानोपमेयनिष्ठयोर्वस्तुतो भिन्नयोरपि धर्मयोः श्लेषभित्तिकाभेदाध्यवसायेनैकीकुर्वन्साधारणधर्मं निर्दिशति—त्रिकोणेति । देवीपक्षे तु पूर्वयोजनैव । रविपक्षे यथा । मेरुं प्रदक्षिणीकुर्वन् रविरष्टकोणात्मकस्य मेरोस्त्रीं-स्त्रीनेव कोणानवभासयति । तथाहि— **'इन्द्रपुरे मध्याह्ने सूर्ये स्थिते सौम्ययाम्यपुरयोस्त-मयोदयौ** । एवं कोणत्रयतया स्थितं पुरत्रयमेव भासयति । ईशाग्निकोणौ तु त्रिकोणरेखामध्यपतिताविति तद्भासनमर्थायातम् । ईशे तदानीं तृतीयो यामः । आग्नेये तु प्रथमो यामः । एवं दिक्त्रयं मध्यपतितत्वाद्विदिग्द्वयं च भासयति । अग्नि-पुरे यदा मध्याह्नेऽस्तस्तद्देशनिर्ऋत्योरस्तमयोदयौ । इन्द्रयमपुरयोस्तृतीयप्रथमयामौ । एवं षट्कोणत्रयतया स्थितं विदिक्त्रयं तद्रेखास्थानापन्नं दिग्द्वयं च भासयति । एवं याम्यादिपुरेषु मध्याह्नकाल ऊह्यम् । तदुक्तं **विष्णुपुराणे—**

**'शक्रादीनां पुरे तिष्ठन् स्पृशत्येष पुरत्रयम् ।**
**त्रिकोणौ द्वौ विकोणस्थस्त्रीन्कोणान्द्वे पुरे तथा ॥'**

इति । स्वावस्थितिकोण एकः । स्वदक्षिणवामकोणौ द्वौ । एवं त्रीन् कोणान् तदन्तरे च तन्मध्यस्थिते स्वदक्षिणवामरेखे चेति पुरपञ्चकं दीपयति प्रकाशयतीति त्रिकोणान्तरदीपिका ।

---

रविरिव प्रकर्षेण स्थानं प्रकाशो यस्याः सा । प्रख्यायै इति ॥ त्रिकोणस्य मूलाधारमध्यस्थितस्य अन्तरे मध्ये दीपिकेव स्थिता । दीपिकायै इति ॥

**दाक्षायणी दैत्यहन्त्री दक्षयज्ञविनाशिनी ॥ १७१ ॥**

दक्षस्य कन्या दाक्षायणी । लोहितादित्वात्ष्फः । अश्विन्यादिरूपा वा । '**दाक्षायणी त्वपर्णायां रोहिण्यां तारकासु चेति विश्वः** । दर्शपूर्णमासयोरावृत्तिर्दाक्षायणयज्ञपदेनोच्यते तद्रूपा वा । दैत्यानां भण्डासुरादीनां हन्त्री । दक्षो द्विविधः– एकः प्रजापतित्वेन प्रसिद्धः, अन्यो मानुषो राजा तस्यैवावतारविशेषः । उभयोरपि यज्ञं विनाशयितुं शीलमस्याः । ताच्छील्ये णिनिः । शिवकृतेऽपि यज्ञनाशे देव्या निमित्तत्वात्कर्तृत्वव्यपदेशः । तदुक्तं **ब्रह्मपुराण-वायुपुराणयोः** –

**'अभिव्याहृत्य सप्तर्षीन् दक्षं सोऽभ्यशपत्पुनः ।**
**भविता मानुषो राजा चाक्षुषस्य त्वमन्वये ॥**
**प्राचीनबर्हिषः पौत्रः पुत्रश्चैव प्रचेतसः ।**
**दक्ष इत्येव नाम्ना त्वं मारिषायां जनिष्यसि ॥**
**कन्यायां शाखिनां चैव प्राप्ते वै चाक्षुषान्तरे ।**
**अहं तत्रापि ते यज्ञं हन्मि देव्याः प्रियेप्सया ॥'**

इति । यद्यत्रोपान्त्यस्वरोऽकारः पठ्यते तदा विनाशनशब्दाल्ल्युडन्तान्ङीप् । इकारपाठे तु णिन्यन्तात् । एवमन्यत्राप्यूह्यम् ॥ १७१ ॥

**इति भास्कररायेण कृते सौभाग्यभास्करे ।**
**षष्ठेन शतकेनाभूत्सुषुम्णा सप्तमी कला ॥ ६०० ॥**

**॥ इति श्रीसौभाग्यभास्कराभिख्ये ललितासहस्रनामभाष्ये**
**षष्ठशतकं नाम सप्तमीकला ॥ ७ ॥**

●

---

दक्षस्यापत्यं स्त्री । दाक्षायण्यै इति ॥ दैत्यानां हननकर्त्री । हन्त्र्यै इति ॥ दक्षस्य यज्ञो मखः, तं विनाशयतीति सा । विनाशिन्यै इति ॥ १७१ ॥

# सप्तकशतकं नाम अष्टमी भोगदा कला

**दरान्दोलितदीर्घाक्षी दरहासोज्ज्वलन्मुखी ।**

दरमीषद्यथा स्यात्तथा आन्दोलितानि चञ्चलानि दीर्घाणि आकर्णान्तिकविश्रान्तीन्यक्षीणि यस्याः । यद्वा दरं भयमान्दोलितमस्थिरीकृतं नाशितं यैस्तादृशानि दीर्घाक्षीणि यस्याः । कटाक्षपातमात्रेण भयनाश इतियावत् । दरहासेनेषत्स्मितेनोज्ज्वलच्छोभमानं मुखं यस्याः ।

**गुरुमूर्तिर्गुणनिधिर्गोमातागुहजन्मभूः ॥ १७२ ॥**

गुरुरेव मूर्तिः शरीरं यस्याः । अतएव **सुन्दरीतापिनीये** श्रूयते—

**'यथा घटश्च कलशः कुम्भश्चैकार्थवाचकाः ।**
**तथा मन्त्रो देवता च गुरुश्चैकार्थवाचकाः ॥'**

इति । गुरुपदनिरुक्तिरपि **शक्तिरहस्ये**— **'गुरस्त्वन्धकारः स्याद्रुकारस्तन्निवर्तक'** इति । अन्यत्रापि—

**'गुकारः सदिति प्रोक्तो रुकारो ज्ञानवाचकः ।**
**ब्रह्मज्ञानैकरूपत्वाद् गुरुरित्यभिधीयते ॥'**

इति । '**तामिच्छाविग्रहां देवीं गुरुरूपां विभावये**'दिति **नित्याहृदये**ऽपि । गुणानां निधिः शेवधिः । '**कर्मण्यधिकरणे च**'ति किः । सत्त्वादिगुणानां सत्त्वत्वादिजातिभिस्त्रित्वेऽपि व्यक्त्यानन्त्यमिति सांख्यसिद्धान्तात् । अत एव **सांख्यप्रवचनसूत्रम्**— '**लघुत्वादिधर्मैरन्योन्यं साधर्म्यं वैधर्म्यं च गुणाना**'मित्युपपद्यते । सत्त्वादयश्च द्रव्यत्वेऽपि पुरुषोपकरणत्वाद्गुणा इत्युच्यन्ते । ईदृशानां गुणानां निधिर्वा । यद्वा गुणा व्यूहरूपा निधिसंख्या यस्याः । नवव्यूहात्मकत्वरूपगुणवतीति यावत् । यदाहुः— '**नवव्यूहात्मको देवः परानन्दः परात्मकः**' इति ।

---

दरमीषदान्दोलितानि चपलानि अक्षीणि यस्याः सा । अक्ष्यै इति ॥ दरहासेन मन्दस्मितेन उज्ज्वच्छोभमानं मुखं यस्याः सा । मुख्यै इति ॥

गुरुरेव मूर्तिः शरीरं यस्याः सा । मूर्त्यै इति ॥ गुणानां सौन्दर्यसौशील्यादीनां निधिः शेवधि । निधये इति ॥ गवां वाचां वेदादीनां माता जननी । मात्रे इति ॥ गुहस्य स्कन्दस्य जन्मन उत्पत्तेर्भूः स्थानम् । भुवे इति ॥ १७२ ॥

**'कालव्यूहः कुलव्यूहो नामव्यूहस्तथैव च ।**
**ज्ञानव्यूहस्तथा चित्तव्यूहः स्यात्तदनन्तरम् ॥**
**नादव्यूहस्तथा बिन्दुव्यूहः स्यात्तदनन्तरम् ।**
**कल्पाव्यूहस्तथा जीवव्यूहः स्यादिति ते नव ॥'**

इति च। एतल्लक्षणानि च **सौन्दर्यलहर्याम्**– **'तवाज्ञाचक्रस्थ'**मिति श्लोकव्याख्यानावसरे **लल्लेन** प्रपञ्चितानि। यद्वा। गुणो रज्जुः सा चेह नौकाबन्धनी वटीरिकानाम्नी लक्षणया गृह्यते। सा नितरां धीयतेऽस्यामिति गुणनिधिः। एवं हि **मात्स्य-कालीपुराणयोः** कथा स्मर्यते। प्रलयकाले मनुना भगवदाज्ञानुसारेण सर्वाणि बीजानि ॠषींश्च नौकायां निवेश्य मत्स्यावतारस्य भगवतः शृङ्गे सा नौका रज्ज्वा बद्धा। सा रज्जुरम्बयाधिष्ठिता सती दार्ढ्यमापेद इति। तदुक्तम्–

**'नवयोजनदीर्घां तु यामत्रयसुविस्तृताम् ।**
**कुरुष्व चर्मणा तूर्णं बृहतीमिरिकावटिम् ॥**
**जगद्धात्री महामाया लोकमाता जगन्मयी ।**
**दृढयिष्यति तां रज्जुं न त्रुट्यति यथा तथा ॥**

इति मनुंप्रति विष्णोर्वचनेन। तत्रैव स्थलान्तरे–**'योगनिद्रा जगद्धात्री समासीदद्व-टीरिका'**मिति। गवां धेनूनां माता सुरभिरूपा। सम्भवन्तोऽन्येऽपि गोपदस्यार्था वागादयो ग्राह्याः। तथा च **विश्वः**–

**'गौः स्वर्गे वृषभे रश्मौ वज्रे चन्द्रमसि स्मृतः ।**
**अञ्जनीनेत्रदिग्बाणभूवाग्वारिषु गौर्मता ॥'**

इति। **अनेकार्थध्वनिमञ्जरी** च–

**'बाणे वाचि पशौ भूमौ दिशि रश्मौ जलेऽक्षिणि ।**
**स्वर्गे मातरि वज्रेऽग्नौ मुखे सत्ये च गोध्वनिः ॥'**

इति। गुहस्य स्कन्दस्य जन्मभूरुत्पत्तिस्थानम्। यद्वा **'गुहू संवरण'** इति धातोर-विद्यासंवृता गुहा जीवाः तेषां जन्मस्थानम्। **'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ती'**-त्यादि**श्रुतेः**। **याज्ञवल्क्यस्मृतिरपि**–

**'निःसरन्ति यथा लोहपिण्डात्तप्तात्स्फुलिङ्गिकाः ।**
**सकाशादात्मनस्तद्वदात्मानः प्रभवन्ति हि ॥'**

इति ॥ १७२ ॥

## देवेशी दण्डनीतिस्था दहराकाशरूपिणी ।

देवानां ब्रह्मविष्ण्वादीनामीशी ईश्वरी । दण्डनीतावर्थशास्त्रे तिष्ठति इति तथा । नीतिशास्त्रोक्तज्ञापि देव्येवेति यावत् । तदुक्तं **देवीपुराणे**–

**'नयानयगताँल्लोकानविकल्पे नियोजनात् ।**
**दण्डनाद्दमनाद्वापि दण्डनीतिरिति स्मृता ॥'**

इति । दहरमल्पमाकाशं हृदयकुहरवर्ति तदेव रूपमस्याः । **'दहर उत्तरेभ्यः,'** इत्यु**त्तरमीमांसाधिकरणे, 'अथ यदस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्मदहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्य'**मिति श्रुतौ दहराकाशस्यैव परब्रह्मत्वनिरूपणात् ।

## प्रतिपन्मुख्यराकान्ततिथिमण्डलपूजिता ॥ १७३ ॥

प्रतिपत्तिथिर्मुख्या आद्या यस्मिन् राका पूर्णिमातिथिरन्ते यस्मिस्तस्मिंस्तिथिमण्डले पञ्चदशतिथिसमूहे पूजिता । तिथिभेदेन पूजाभेदस्य तन्त्रेषु कथनात्तादृशप्रकारविशेषैरर्चितेत्यर्थः । यद्वा प्रतिपद्राकाशब्दौ कामेश्वरीचित्रापरौ । तिथिशब्दो नित्यापरः । तेन नित्यामण्डलेन पूजिता त्रिकोणरेखात्रयरूपेणावृता । अथवा प्रतिपन्मुख्या राकान्ताश्च तिथयो यासां देवतानां तासां मण्डलेन समूहेन पूजिता । ताश्च **वराहपुराणे**–

**'कथमग्नेः समुत्पत्तिरश्विनोर्वा महामुने ।**
**गौर्या गणपतेर्वापि नागानां वा गुहस्य च ॥**
**आदित्यस्य च मातॄणां दुर्गाया वा दिशां तथा ।**
**धनदस्य च विष्णोर्वा धर्मस्य परमेष्ठिनः ॥**
**शम्भोर्वापि पितॄणां वा तथा चन्द्रमसो मुने ।**
**शरीरे देवताश्चैताः कथं मूर्तित्वमागताः ॥**
**किञ्च तासां मुने भोज्यं काश्च संज्ञा तिथिश्च का ।"**

इति प्रश्ने षोडशभिरध्यायैः प्रतिपदातिथिदेवतात्वेन क्रमेणाग्न्यादीनामुत्पत्तय उक्ताः । अत्र परमेष्ठिशब्दो विशेषणमात्रम् । अत एवोक्तं **कादिमतेऽपि**–

**'वह्निर्दस्रावुमा विघ्नो भुजङ्गः षण्मुखो रविः ।**
**मातरश्च तथा दुर्गा दिशो धनदकेशवौ ॥**
**यमो हरः शशी चेति तिथीशाः परिकीर्तिताः ।**

---

देवानां ब्रह्मादीनां ईशी ईश्वरी । ईश्यै इति ॥ दण्डनीतिः नीतिशास्त्रम्, तत्राज्ञारूपेण तिष्ठतीति सा । स्थायै इति ॥ दहराकाशो हृदयकमलान्तरवृत्यवकाशः स रूपं अस्या इति । रूपिण्यै इति ॥

प्रतिपन्मुखे भवा यासां ईदृश्यः राका पूर्णिमा अन्ते यासां तासां तिथीनां यन्मण्डलं तस्मिन् तत्तन्नित्यारूपेण पूजिता । पूजितायै इति ॥ १७३ ॥

इति । तत्र त्वमावास्या पञ्चदशस्थाने गणिता पूर्णिमा तु षोडशस्थाने अत्र तु राकैव पञ्चदशीति विशेषः । प्रकृते त्वविशेषाद् वाराहोक्ताः षोडशापि देवता गृह्यन्ते ॥ १७३ ॥

**कलात्मिका कलानाथा काव्यालापविमोदिनी ।**

अत्र कलाशब्देन वह्नेर्दशकलाः सूर्यस्य द्वादशकलाश्चन्द्रस्य षोडशकलाश्चतुःषष्टिसंख्याकत्वादिना प्रसिद्धाः । अन्याश्च कला गृह्यन्ते–

**'उत्पत्तिर्जागरो बोधो व्यावृत्तिर्मनसः सदा ।**
**कलाचतुष्टयं जाग्रदवस्थायां व्यवस्थितम् ॥**
**जाग्रत्सर्वगुणैः प्रोक्ता केवलं शक्तिरूपिणी ।'**

इति । तथा–

**'मरणं विस्मृतिर्मूर्च्छा निद्रा च तसमा वृता ।**
**सुषुप्तेषु कला ज्ञेयास्ताः सर्वाः श्रीकलात्मिकाः ॥**

तथा –

**'अभिलाषो भ्रमश्चिन्ता विषयेषु पुनः स्मृतिः ।**
**कलाचतुष्टयं देवी स्वप्नवस्था विधीयते ॥**
**शिवरूपाः शक्तिरूपास्ताः कलास्त्रिपुरात्मिकाः ।'**

तथा –

**'वैराग्यं च मुमुक्षुत्वं समाधिविमलं मनः ।'**
**सदसद्वस्तुनिर्धारस्तुर्यावस्थाः कला इमाः ॥'**

दूतीयागप्रकरणे षोडश कामकला उक्ताः । अन्तरदूतीप्रकरणे श्रीविद्यायाः षोडशकला उक्ताः । एवं बिन्द्वर्धचन्द्ररोधिन्यादीनां पार्थक्येन काश्चन कलाः स्वच्छन्दभैरवादावुक्तास्तादृशनिखिलकलास्वरूपेत्यर्थः । एतासां कलानां नाथा स्वामिनी च । चन्द्रमण्डलस्य श्रीचक्रस्वरूपत्वाच्चन्द्ररूपेत्यर्थो वा । काव्यानां वाल्मीक्यादिमहाकविकृतप्रबन्धविशेषाणामष्टादशलक्षणलक्षितानां रूपकभेदभिन्नानामालापेन विशिष्य मोदत इति तथा ।

**सचामररमावाणीसव्यदक्षिणसेविता ॥ १७४ ॥**

चामराभ्यां सहिते सचामरे तादृशीभ्यां रमावाणीभ्यां लक्ष्मीसरस्वतीभ्यां सव्ये दक्षिणे क्रमेण सेविता वीजिता ॥ १७४ ॥

---

कलाः अग्न्यादीनां कला, तदात्मिका । आत्मिकायै इति ॥ तासामेव नाथा स्वामिनी । नाथायै इति ॥ काव्यानां कविकृतप्रबन्धानां आलापे त यो विनोदः तद्वती । विनोदिन्यै इति ॥

चामराभ्यां सहित रमावाणीभ्यां लक्ष्मीसरस्वतीभ्यां सव्यदक्षिणभागयोः सेविता । सेवितायै इति ॥ १७४ ॥

**आदिशक्तिऽरमेयाऽत्मा परमा पावनाकृतिः ।**

सर्वजगतामुत्पादकत्वादादिः कारणभूता च सा शक्तिश्च । मातुमशक्या अमेयां । न विद्यते मेयं यस्या इति वा । यदपेक्षयाऽतिरिक्तं मेयं नास्तीत्यर्थः । तदुक्तं **लिङ्गपुराणे**–

**'स्वर्गपाताललोकान्तब्रह्माण्डावरणाष्टके ।**
**मेयं सर्वमुमारूपं माता देवो महेश्वरः ॥'**

इति । आत्मशब्देन जीवः परमशब्दोत्तरं चात्मानुषङ्गात्परमात्मा चेति नामद्वयेन कथ्यते । उक्तञ्च **लैङ्गे**–

**'विष्णुलिङ्गा यथा तावदग्नौ च बहुधा स्मृताः ।**
**जीवाः सर्वे तथा शर्वाः परमात्मा च स स्मृतः ॥'**

इति । **शिवपुराणे**ऽपि–

**'आत्मा तस्याष्टमी मूर्तिः शिवस्य परमा तनुः ।**
**व्यापिकेतरमूर्तीनां विश्वं तस्माच्छिवात्मकम् ॥'**

इति । अस्मिन्पक्षे आत्मने नमः, परमायात्मने नम इति नामद्वयप्रयोगः । '**नमो भवाय च रुद्राय च नम**' इत्यादिमन्त्राणामप्युभयतो नमस्कारत्वपक्षे सकृत्पठितस्यापि नमः-शब्दस्य रुद्रशब्दस्य सर्वशब्दोभयशेषत्वेन पुनरावृत्तिवदात्मशब्दस्य वृत्तिः । यद्वा । आत्मशब्देन ब्रह्मैव ।

**'यच्चाप्नोति यदादत्तेयच्चात्ति विषयानिह ।**
**यच्चास्य सततो भावस्तस्मादात्मेति कीर्त्यते ॥'**

इति वचनात् । आत्मशब्देन शरीरमेवोच्यते । तथा च **वासिष्ठलैङ्गे**–

**'गौरीरूपाणि सर्वाणि शरीराणि शरीरिणाम् ।**
**शरीरिणस्तथा सर्वे शङ्करांशा व्यवस्थिता ॥'**

इति । एवं आत्मा '**देहमनोब्रह्मस्वभावधृतिबुद्धिष्वि**'ति **विश्वप्रकाशो**क्तान्यर्थान्तराण्यपि योज्यानि । '**या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिते**'त्यादिवचनात् । परं ब्रह्म माति परिच्छिनत्तीति परमा । परस्य शिवस्य मा लक्ष्मीर्वा । यद्वा परब्रह्मणो रूप-चतुष्कमस्ति तस्मात्परमोत्कृष्टा । तदुक्तं **विष्णुपुराणे**–

**'परस्य ब्रह्मणो रूपं पुरुषः प्रथमं द्विजाः ।**
**व्यक्ताव्यक्ते तथैवान्ये रूपे कालस्तथा परम् ॥**

---

आदिः सर्वकारणभूता च सा शक्तिश्च । शक्त्यै इति ॥ न मातुं शक्या । अमेयायै इति ॥ आत्मा जीवः तद्रूपा सा । आत्मने इति ॥ परमा उत्कृष्टा । परमायै इति ॥ पावनी पवित्रकर्त्री आकृति मूर्तिर्यस्याः सा । आकृत्यै इति ॥

**प्रधानपुरुषव्यक्तकालानां परमं हि यत् ।**
**पश्यन्ति सूरयः शुद्धं तद्विष्णोः परमं पदम् ॥**
**प्रधानपुरुषव्यक्तकालास्तु प्रविभागशः ।**
**रूपाणि स्थितिसर्गान्तव्यक्तिसद्भावहेतवः ॥'**

इति । पावनी पावयित्री आकृतिः शरीरं चरित्रं वा ज्ञानं वा यस्याः । तथा च **याज्ञवल्क्यस्मृतिः**—

**'भूतात्मनस्तपो विद्ये बुद्धेर्ज्ञानं विशोधनम् ।**
**क्षेत्रज्ञस्येश्वरज्ञानाद्विशुद्धिः परमा मता ।**

## अनेककोटिब्रह्माण्डजननी दिव्यविग्रहा ॥ १७५ ॥

अनेका अनन्ताः कोटयो ये ब्रह्माण्डास्तेषां जननी जनयित्री । यद्वा अनेककोटयो ब्रह्माण्डा येषां ते तथा । अभिमन्यमानत्वादिरूपः सम्बन्धः षष्ठ्यर्थः । तेषां विराडादीनां जननीं । विकारषोडशान्तर्वर्तिपञ्चीकृतस्थूलभूतकार्यो हि ब्रह्माण्डः । तदभिमानी विराडुच्यते । ब्रह्माण्डान्तर्वर्तिसमष्टिलिङ्गशरीराभिमानी स्वराट् । तदुभयकारणाव्याकृताभिमानी सम्राट् । तदुक्तम्—

**'प्राधान्येन विराडात्मा ब्रह्माण्डमभिमन्यते ।**
**स्वराट् स्वरूपमुभयं सम्राडित्यब्रवीच्छ्रुतिः ॥'**

इति । दिव्यो रमणीयो विग्रहो देहो यस्याः । दिव्यन्तरिक्षे भवो दिव्यो विग्रहो रणो यस्या वा । '**तत्रापि सा निराधारा युयुधे तेन चण्डिके**'ति **मार्कण्डेयपुराण**वचनात् । विस्तारः प्रविभागो वा विग्रहपदार्थः । '**विग्रहः समरे देहे विस्तारः प्रविभागयो**'रिति **मेदिनी** ॥ १७५ ॥

## क्लींकारी केवला गुह्या कैवल्यपददायिनी ।

कामं बीजं करोतीति वा कामबीजस्वरूपेति वा क्लींकारस्य शिवकामस्य स्त्रीति वा क्लींकारी । निखिलधर्मराहित्येनैकाकित्वात्केवला । '**तद्विमुक्तस्तु केवली**'ति **शिवसूत्र**प्रसिद्धज्ञानविशेषो वा केवली । कात्स्न्र्यं निर्णीतार्थश्च केवलम् । मत्वर्थीयेऽचि तद्वती तदभिन्ना वा ।

**'केवलं ज्ञानभेदे स्यात्केवलश्चैककृत्स्नयोः ।**
**निर्णीते केवलं प्रोक्तं केवलः कुहने क्वचित् ॥'**

---

अनेकानां ब्रह्माण्डकोटीनां जननी । जनन्यै इति ॥ दिव्यः सुन्दरो विग्रहो देहो यस्याः सा । विग्रहायै इति ॥ १७५ ॥

क्लींकारी कामबीजरूपा । कार्यै इति ॥ गुणदोषादिरहितत्वात् केवला । केवलायै इति ॥ गुह्या अतिरहस्यरूपा । गुह्यायै इति ॥ कैवल्यं मोक्षं पदं स्वर्गादिस्थानं च ददातीति सा । दायिन्यै इति ॥

इति **विश्वः**। यद्वा पूर्वोक्तकामबीजे केवलत्वं ककारलकारात्मकव्यञ्जनराहित्यम्। तेन केवलतुर्यस्वरूपा कामकलेत्यर्थः। **'यदीं शृणोत्यलकं शृणोति न हि प्रवेद सुकृतस्य पन्था'**मिति **श्रुतेः**। ईकारमात्रश्रवणं तु लकारककाररराहित्येन श्रवणम् अतस्तद्वान्। सुकृतस्य सत्कर्मणः पन्थानमुत्तमलोकान्नायाति किन्तु निर्गुणज्ञानस्यैव लोकं प्राप्नोति। कामबीजमात्रेण त्रिवर्गः कामकलामात्रेण तु मोक्ष इति पर्यवसितोऽर्थः। तमेवाह नामद्वयेन गुहां प्रविष्टा गुह्या। अतिरहस्यार्था इति यावत्। केवलस्य भावो धर्मिमात्रावशेषः कैवल्यं पञ्चमी मुक्तिस्तदेव पदं ददाति। अथवा कैवल्यं च पदानि च स्थानानि च दातुं शीलमस्याः। कैवल्यशब्देन योगशास्त्रान्तिमसूत्रेण कैवल्यं स्वरूपं **'प्रतिष्ठा चितिशक्ते'**रित्येतेन प्रतिपादितस्वरूपो मोक्ष उच्यते। **'चितिशक्तेर्वृत्तिसारूप्यनिवृत्तौ स्वरूपमात्रेणावस्थानं कैवल्यमुच्यत'** इति **भोजराजवृत्तौ**। पदशब्देन सालोक्यादिमुक्तिचतुष्टयं तासां स्थानविशेषरूपत्वात्। अत्रेदं बोध्यम्। प्रतीकाद्युपासनया सालोक्यम्। अन्तरेण प्रतीकं स्वात्मनः पृथक्त्वेनैश्वर्यविशेषविशिष्टतया देवताया उपासकस्य च रूपतः साम्यं सारूप्यम्। इयमेव सार्ष्टितेत्युच्यते। समानर्धितेत्यर्थः। सगुणं देवतारूपमहंग्रहेणोपास्यदेवतातादात्म्यं प्राप्नोति। तदिदं सायुज्यमूर्ध्वरेतसां स्वाश्रमे युक्तधर्मानुष्ठानवतां सामीप्यम्। **'एतासामेव देवतानां सायुज्यं सार्ष्टितां समानलोकतामाप्नोती'**ति **तैत्तिरीयश्रुति**रुक्तमुक्तित्रये प्रमाणम्। चतुर्थ्यां तु **मण्डूकश्रुतिः**—

**तपःश्रद्धे ये ह्युपवसन्त्यरण्ये शान्ता विद्वांसो भैक्षचर्यां चरन्तः।**
**सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा॥'**

इति। सूर्यद्वारेणेत्यस्य सूर्योपलक्षितेऽर्चिरादिमार्गेण गत्वा यत्र सत्यलोके स पुरुषो ब्रह्म वर्तते तत्र यान्तीत्यर्थात्। एताः कर्मफलभूता अनित्याः सातिशया मुक्तयः। अत एव स्थानवाचिना पदपदेनेह निर्दिष्टाः। या. तु ज्ञानफलं निरतिशयानन्दलक्षणं कैवल्याख्या मुक्तिस्तस्यां तु **तैत्तिरीयश्रुति**रेव प्रमाणम्। **'य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वादित्यस्य सायुज्यं गच्छति। अथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चन्द्रमसः सायुज्यꣳलोकतामाप्नोत्येतौ वै सूर्याचन्द्रमसोर्महिमानौ ब्राह्मणौ विद्वानभिजयति तस्माद् ब्रह्मणो महिमानमाप्नोती'**ति। अत्र केवलकर्मणां चन्द्रलोकप्राप्तिः। य एवं विद्वानिति विद्वच्छब्दाभिहितप्रतीकाद्युपासनात्रयवतो देवानां महिमानमित्यनेन सालोक्यादित्रयम्। ब्राह्मणो विद्वानित्यनेन ब्रह्मज्ञानवांस्तु एतौ कर्मोपासनप्राप्यौ सूर्यचन्द्रयोर्महिमानौ सातिशयत्वादिदोषवन्तौ

बुध्वा अभिजयत्यभितः पराकरोति । तस्मादधिकं निरतिशयं ब्रह्मणो महिमानमाप्नोतीत्यर्थः । तदिदमुपबृंहितं **शक्तिरहस्ये**–

**'आत्मबुद्ध्या प्रतीकेन मातृबुद्ध्याप्यहंधिया ।**
**कर्मणापि भजन्मर्त्यः कैवल्यपदमश्नुते ॥'** इति ।

**त्रिपुरा त्रिजगद्वन्द्या त्रिमूर्तिस्त्रिदशेश्वरी ॥ १७६ ॥**

तिसृभ्यो मूर्तिभ्यः पुरातनत्वात् त्रिपुरा । तदुक्तम्– **'मूर्तित्रयस्यापि पुरातनत्वात्तदम्बिकायास्त्रिपुरेति नामे'**ति । **गौडपादीयसूत्रमपि**–**'तत्त्वत्रयेण भिदे'**ति । एकमेव ब्रह्म तत्त्वत्रयेणाभिद्यतेत्यर्थः । तद् **भाष्ये** तु तत्त्वपदं गुणमूर्तिबीजजगत्पीठखण्डादिपरत्वेन बहुधा व्याख्यातमिति गुणादिभ्यः पुरेत्यर्थः । **त्रिपुरार्णवे** तु–

**'नाडीत्रयं तु त्रिपुरा सुषुम्णा पिङ्गला इडा ।**
**मनोबुद्धिस्तथा चित्तं पुरत्रयमुदाहृतम् ॥**
**तत्र तत्र वसत्येषा तस्मात्तु त्रिपुरा मता ॥'**

इत्युक्तम् । **कालिकापुराणे**पि– **'त्रिकोणं मण्डलं चास्या'** इत्यादिप्रस्तुत्य **'सर्वं त्रयं त्रयं यस्मात्तस्मात्तु त्रिपुरा मते'**ति ।

**'देवानां त्रितयं त्रयी हुतभुजां शक्तित्रयं त्रिस्वरा-**
**स्त्रैलोक्यं त्रिपुरी त्रिपुष्करमथ त्रिब्रह्मवर्णास्त्रयः ।**
**यत्किञ्चिज्जगति त्रिधा नियमितं वस्त त्रिवर्गात्मकं**
**तत्सर्वं त्रिपुरेति नाम भगवत्यन्वेति ते तत्त्वतः ॥'**

इति **लघुस्तवे** । **पूर्वचतुःशत्यां** चतुर्थपटले– **'त्रिपुरा परमा शक्ति**रित्यारभ्य **'त्रिपुरा ख्यातिमागते'**त्यन्तेन ग्रन्थेनान्यान्यप्येतन्नामनिर्वचनान्युक्तानि तानि तु **तट्टीकायामेवा-ऽस्माभिः** व्याख्यास्यन्त इति तत्रैव द्रष्टव्यानि । त्रिभिर्जगद्भिर्वन्द्या त्रयो जगद्वन्द्या यस्या वा । त्रैवर्षिककन्यारूपत्वात्त्रिमूर्तित्वं **'त्रिमूर्तिस्तु त्रिवर्षा स्या'**दिति कन्याप्रकरणे **धौम्य**वचनात् । रक्तशुक्लमिश्रात्मकचरणमूर्तित्रयरूपा वा । तत्तन्मन्त्राणामुद्धारस्तत्स्वरूपादिकं **तन्त्रेषु** व्यक्तम् । यद्वा ब्रह्मादिमूर्तित्रयं वामादित्रयमिच्छादिमूर्तित्रयं चास्या एवेति त्रिमूर्तित्वम् । तदुक्तं **वराहपुराणे**–

**'एवमुक्त्वा स्वयं ब्रह्मा वीक्षांचक्रे पिनाकिनम् ।**
**नारायणं च मनसा सस्मार परमेश्वरः ॥**

---

त्रिभ्यः ज्ञातृज्ञानज्ञेयादि त्रित्रिभेदनियतवस्तुभ्यः पुरा पुरातनरूपा । पुरायै इति ॥ त्रयाणां जगतां वन्दितुं योग्या । वन्द्यायै इति ॥ त्रयाणां त्रित्रिभेदनियतानां मूर्तिः यस्याः सा । मूर्त्यै इति ॥ तिसृणां दशानां जाग्रदादीनां ईश्वरी अधिष्ठात्री ॥ १७६ ॥

ततो नारायणो देवो द्वाभ्यां मध्ये व्यवस्थितः ।
एकीभूय ततस्ते तु ब्रह्मविष्णुमहेश्वराः ॥
परस्परं सूक्ष्मदृष्ट्या वीक्षांचक्रुर्मुदान्विताः ।
ततस्तेषां त्रिधा दृष्टिर्भूता वै समजायत ॥
तस्यां दृष्ट्यां समुत्पन्न कुमारी दिव्यरूपिणी ।'

इत्यादिना तां वर्णयित्वा–

'अथ तां वीक्ष्य कन्यां तु ब्रह्मविष्णुमहेश्वराः ।
ऊचुः का त्वमसि ब्रूहि किंवा कार्यं शुचिस्मिते ॥'

इति प्रश्ने

त्रिवर्णा च कुमारी सा कृष्णा शुक्ला च पीतिका ।
उवाच भगवद्दृष्टेर्येन जातास्मि सत्तमाः ॥
किं मां न वेत्थ सुश्रोणीं स्वशक्तिं परमेश्वरीम् ।'

इत्युत्तरिते

'ततो ब्रह्मादयस्तस्यै त्रयस्तुष्टा परं ददुः ।
नाम्नासि त्रिकला देवि पाहि विश्वं च सर्वदा ॥
अपराण्यपि नामानि भविष्यन्ति तवानघे ।
गुणोत्थानि महाभागे सर्वसिद्धिकराणि च ॥'

इत्याद्युक्त्वोक्तम्–

'अन्यच्च कारणं देवि यद्वक्ष्यामि शृणुष्व तत् ।
सितरक्तकृष्णवर्णैस्त्रिवर्णासि वरानने ॥
मूर्तित्रयं त्रिभिर्वर्णैः कुरु देवि स्वविग्रहे ।
एवमुक्ता तदा देवैरकरोत् त्रिविधां तनुम् ॥
सितां रक्तां तथा कृष्णां त्रिमूर्तित्वं जगाम ह ।'

इत्यादि उक्त्वा ब्राह्मीवैष्णवीरौद्रीणां श्वेतमन्दरनीलपर्वतेषु तपश्चर्यादिकमुक्तम् । अन्यत्रापि–

'एषा त्रिमूर्तिरुद्दिष्टा नयसिद्धान्तगामिनी ।
एषा श्वेता परा शक्तिः सात्त्विकी ब्रह्मसंस्थितिः ॥
एषैव रक्ता रजसि वैष्णवी परिकीर्तिता ।
एषैव कृष्णा तमसि रौद्री देवी प्रकीर्तिता ॥
परमात्मा यथा देव एक एव त्रिधा स्थितः ।
प्रयोजनवशाच्छक्तिरेकैव त्रिविधा भवेत् ॥'

इति । **गौडपादीयं सूत्रमपि**– **'शाम्भवीविद्या श्यामा'** इति । **देवीभागवतेऽपि**–

**शाम्भवी शुक्लरूपा च श्रीविद्या रक्तरूपिका ।**
**श्यामला श्यामरूपा स्यादित्येता गुणशक्तयः ॥'**

इति । त्रिदशानां देवानां तिसृणां वा दशानामवस्थानां त्रियुक्तदशानां त्रयोदशानां विश्वेषां देवानां वा त्रिगुणितदशानां त्रिंशता लक्षणया त्रयस्त्रिंशद्गणानां चेश्वरी स्वामिनी ॥ १७६ ॥

**त्र्यक्षरी–**

त्रयाणामक्षराणां वाक्कामशक्तिबीजात्मकानां समाहारः । उक्तञ्च **वामकेश्वरतन्त्रे**–

**'वागीश्वरी ज्ञानशक्तिर्वाग्भवे मोक्षरूपिणी ।**
**कामराजे क्रियाशक्तिः कामेशी कामरूपिणी ॥**
**शक्तिबीजे पराशक्तिरिच्छैव शिवरूपिणी ।**
**एवं देवी त्र्यक्षरी तु महात्रिपुरसुन्दरी ॥'**

इति । शुद्धविद्या कुमारीमन्त्ररूपा वा । तथा च **गौडपादीये**–**'त्र्यक्षरी शुद्धविद्या कुमारी चे**'ति । हृदयरूपा सत्यरूपा वा । **'तदेतत् त्र्यक्षरं हृदय**'मिति । **'तदेतत् त्र्यक्षरं सत्य**'मिति च **बृहदारण्यकात्** । आईपल्लवितयुगाक्षरमासाक्षरनित्याक्षरसमाहारो वा ।

***अथ परिभाषायां पञ्चत्रिंशन्नामानि विभजते–***

***मन्दिरचरतां विभवः शैवो मार्गो महान् हितोऽनुगुणः ।***
***गौणीलीलार्द्रीभावार्धविभेदा भवेदेव ॥ २४ ॥***

*स्पष्टार्थः ॥ १२४ ॥*

**दिव्यगन्धाढ्या सिन्दूरतिलकाञ्चिता ।**

दिवि भवा दिव्या देवादयश्चेतनाचेतनात्मकपदार्थसमूहाः तेषां गन्धैः सम्बन्धैराढ्या परिपूर्णा । न तु राजादिरिव भौमैः पदार्थैः परिवृतेति यावत् । दिव्यगन्धो हरिचन्दनादिपरिमलो वा तेनाढ्या **'गन्धद्वारां दुराधर्षामि**'ति **श्रुतेः** । अथवा श्रोत्राकाशयोः सम्बन्धे **'संयमाद्दिव्य**'मिति **योगसूत्रे** श्रवणेन्द्रियाकाशयोः सम्बन्धे कृतसंयमस्य योगिनो दिव्यं श्रोत्रं भवति तेन दिव्यशब्दश्रवणं भवतीत्युक्तम् । तुल्यन्यायेन तत्सर्वेन्द्रियाणामुपलक्षणम् । तेन दिव्यगन्धा आढ्याः सम्पन्ना यया

---

त्र्यक्षरी अक्षरत्रयरूपा । अक्षर्यै इति ॥

दिव्यो यो गन्धः सुगन्धः तेनाढ्या सम्पन्ना । सिन्दूरस्य यः तिलकः तेनाञ्चिता युता । अञ्चितायै इति ॥

यत्प्रसादात्सेत्यर्थः। सिन्दूरस्य रक्तचूर्णस्य गोरोचनाया वा तिलकेन चित्रकेणाञ्चिता युक्ता। तिलकालकपरो वा तिलकशब्दः। तत्पक्षे सिन्दूरतिलकाभ्यामिति विग्रहः। **'सिन्दूरं रोचनारक्तचूर्णधातकिकासु च'**ेति **रभसः**। **'तिलकं चित्रके प्राहुर्ललामे तिलकालके'**- इति **विश्वः**। नागैः स्त्रीभिश्च परिवृतेति वा। **'सिन्दूरतिलके नागे सिन्दूरतिलका स्त्रिया'**मिति **विश्वः**। **'सिन्दूरतिलको हस्ती सिन्दूरतिलकाङ्गने'**ति **हेमचन्द्रः**। गजगामिनी वा। स्त्रीभिः पूजितेति वा। **'अञ्चु गतिपूजनयो'**रिति धातुपाठात्। तथा च **विष्णु-भागवते** दुःसहप्रेष्ठविरहतीव्रतापधुताशुभा नन्दव्रजकुमारिका उपक्रम्य,

**'कात्यायनि महामाये महायोगिन्यधीश्वरि।**
**नन्दगोपसुतं देवि पतिं मे कुरु ते नमः॥**
**इति मन्त्रं जपन्त्यस्ताः पूजां चक्रुः कुमारिकाः।'**

इत्यादि। रुक्मिण्या अपि उद्वाहप्रकरणे कृष्णागमनविलम्बोत्तरं वचनम्—

**'दुर्भगाया हि मे धाता नानुकूलो महेश्वरः।**
**देवी च विमुखा गौरी रुद्राणी गिरिजा सती॥'**

इत्याद्युक्त्वा,

**'कन्या चान्तःपुरात्प्रागाद्भटैर्गुप्ताम्बिकालयम्।**
**पद्भ्यां विनिर्ययौ द्रष्टुं भवानीपादपल्लवम्॥'**

इत्यादिना तदर्चनान्मनोरथसिद्ध्यादिकं वर्णितम्।

**उमा शैलेन्द्रतनया गौरी गन्धर्वसेविता॥ १७७॥**

उकारः शिववाचकस्तस्य मा लक्ष्मीः। उं परशिवं माति परिच्छिनत्तीति वा। अतसीकुसुमसङ्काशत्वादभेदोपचारादुमा वा। हरिद्रावर्णवत्त्वादप्येवं वा। कीर्तिकान्ति-स्वरूपत्वाद्वा। **'या देवी सर्वभूतेषु कान्तिरूपेणे'**त्यादिवचनात्। **'उमातसीहैमवतीहरिद्राकी-र्तिकान्तिषु'** इति **विश्वः**। उइत्यामन्त्रणे। मेति निषेधे। बाल्ये तपस्यन्ती भगवती मात्रामन्त्र्य निषिद्धेत्युमा वा। तदुक्तं **कालिकापुराणे**—

**'यतो निरस्ता तपसे वनं गन्तुं तु मेनया।**
**उमेति तेन सोमेति नाम प्राप तदा सती॥'**

---

उं परशिवं माति परिच्छिनतीति सा। उमायै इति॥ शैलेन्द्रस्य हिमवतः तनया। तनयायै इति॥ गौरी गौरवर्णत्वात्। गौर्यै इति॥ गन्धर्वैः सेविता। सेवितायै इति॥ १७७॥

इति । **ब्रह्मपुराणे**—

**'अपर्णा तु निराहारा तां माता प्रत्यभाषत ।**
**उमा इति निषेधन्ती उमेत्येव तदाभवत् ॥**
**सा तथोक्त्वा तया मात्रा देवी दुश्चरचारिणी ।**
**तेनैव नाम्ना लोकेषु विख्याता सुरपूजिता ॥'**

इति । **पद्मपुराणे** पुष्करखण्डे—

**'ततोऽन्तरिक्षाद्दिव्या वागब्रवीद्भुवनत्रये ।**
**उमेति तु त्वया मेने यदुक्तं तनयां प्रति ॥**
**उमेति नाम तेनास्या भुवनेषु भविष्यति ।'**

इति । उः उत्तमा च सा मा चित्तवृत्तिश्चेति वा । तदुक्तं **सूतसंहितायाम्**—

**'परानुभूतिं भवपाशनाशिनीं सदाशिवस्याप्यतिशोभनाढ्याम् ।**
**उमाभिधामुत्तमचित्तवृत्तिं नमामि नानाविधलोकवैभवाम् ॥**

इति । अथवा प्रणवघटकैरकारोकारमकारैर्विष्णुशिवब्रह्मवाचकैर्घटितत्वात्त्रिमूर्त्यात्मिकेत्यादयः प्रणवार्था इह जोज्याः । अत एवास्य पदस्य देवीप्रणव इति संज्ञेति रहस्यविदः । उक्तञ्च च **लैङ्गे** भगवतीं प्रति परशिवेनैव—

**'अकारोकारमकारा मदीये प्रणवे स्थिताः ।**
**उकारं च मकारं च अकारं च क्रमेरितम् ॥**
**त्वदीयं प्रणवं विद्धि त्रिमात्रं प्लुतमुत्तमम् ।'**

इति । **महावासिष्ठेऽपि**—'**ओंकारसारशक्तित्वादुमेति परकीर्ति**'ति । तत्रैव—

**'सुप्तानामथ बुद्धीनाममात्रोच्चारणाद्धृदि ।**
**नित्यं त्रैलोक्यभूतानामुमेतीन्दुकलोच्यते ॥'**

इति । सर्वप्राणिनां स्वापे बोधे वा हृद्यनाहतनादात्मना अकारादिमात्रात्रयशून्यस्य प्रणवनादभागस्य शब्दब्रह्मात्मकस्य नित्यमुच्चारणाद्धृदम्बुजच्छिद्राकाशदहराकाशशिवस्य शिरसीन्दुकला बिन्दुरूपेण स्थितेति **तट्टीकायाम्** । **वायवीयसंहितायामपि** '**ओंकाराक्षरं ब्रह्मे**'त्युपक्रम्य तदवयवानुक्त्वा '**अर्धमात्रात्मको नादः श्रूयते लिङ्गमूर्धनी**'त्युक्तम् । **हंसोपनिषद्यपि** हृदयाब्जदलभेदेन हंसावस्थाने मतिभेदानुक्त्वा लिङ्गे सुषुप्तिः पद्मत्यागे तुरीया हंसस्य लिङ्गमूर्धस्थाना देवी लये सति तुर्यातीतावस्थेत्युक्तम् । यद्वा '**इच्छाशक्तिरुमाकुमारी**'ति **शिवसूत्रे** योगिनामिच्छाया उमेति संज्ञोक्ता तद्रूपा वा । उक्तञ्च भगवता **कृष्णदासेन**—

**'परभैरवतामुक्तां ग्रसमानस्य शाश्वतीम् ।**
**तस्यैव योगिनो येच्छाशक्तिस्तां निगदन्त्युमाम् ॥'**

इति । इयं च विनायकपीठाधिष्ठात्री **'उमादेवी विनायके'** इति **पाद्मात्** । **'उमा सिन्धुवने नाम्ने'**त्यपि **पाद्म** एव स्मर्यते । षड्वार्षिककन्यारूपा वा **'उमा षड्वार्षिकी मते'**ति कन्याप्रकरणे **धौम्य**वचनात् । शैलेन्द्रस्य पर्वतराजस्य हिमवतस्तनया पुत्री । **'जाता शैलेन्द्रगेहे सा शैलराजसुता तत'** इति **देवीपुराणे** निर्वचनम् । गौरवर्णत्वाद्गौरी । **'गौरी गौराङ्गदेहत्वा'**दिति **महावासिष्ठात्** । **'षिद्गौरादिभ्यश्चे'**ति ङीष् । **'वरुणस्य प्रिया गौरी'**ति **पाद्मे** । **'नदीभेदेऽपि गौरी स्याद्दशाब्दायां च योषिती'**ति **कोशे** च । तेन तत्तत्स्वरूपेति वा । **देवीपुराणे** तु—

**'योगाग्निना तु या दग्धा पुनर्जाता हिमालयात् ।**
**शङ्खकुन्देन्दुवर्णा चेत्यतो गौरीति सा स्मृता ॥'**

इत्युक्तम् । इयञ्च कान्यकुब्जपीठाधिष्ठात्री । **'कान्यकुब्जे तथा गौरी'**ति **पाद्मात्** । गन्धर्वैर्विश्वावसुप्रभृतिभिः सेविता । गन्धर्वैरश्वैर्वा सेविताऽश्वारूढाख्या देवी वा । दिव्यगानमेव वा गन्धर्वः ॥ १७७ ॥

### विश्वगर्भा स्वर्णगर्भावरदा वागधीश्वरी ।

विश्वं प्रपञ्चजातं गर्भे यस्याः । स्वर्णं हिरण्यं गर्भे यस्याः । स्वर्णस्य गर्भभवा वा । तदुक्तं **वायुपुराणे**—

**'हिरण्यमस्या गर्भोऽभूद्धिरण्यस्यापि गर्भजः ।**
**यस्माद्धिरण्यगर्भः स पुराणेऽस्मिन्निरुच्यते ॥'**

इति । यद्वा अर्णानां वर्णानां मातृकाणां गर्भः शोभनो यया सा । मातृकाप्रतिपाद्येति यावत् । बह्वर्थगर्भितः शब्द इति प्रयोगात् । स्वर्णाः शोभनार्णा मन्त्रा गर्भे यस्या इति वा । अवरदेति चतुरक्षरं नाम । अवराननार्यानसुरान् द्यति खण्डयतीति तथा । अवन्तीत्यवाः कान्तिमन्तो रदा दन्ता यस्या वा । कान्त्यर्थकादवतेः पचाद्यच् । वाचामधीश्वरी स्वामिनी ।

### ध्यानगम्यापरिच्छेद्या ज्ञानदा ज्ञानविग्रहा ॥ १७८ ॥

ध्यानेन विभावनेन गम्या ज्ञेया । **'ते ध्यानयोगानुगता अपश्यन् देवात्मशक्तिं स्वगुणैर्निगूढा'**मिति **श्रुतेः** । अभावप्रतियोगित्वं परिच्छेद्यत्वं तदभावादपरिच्छेद्या ।

---

विश्वं तद्गर्भे यस्याः सा । गर्भायै इति ॥ शोभना अर्णा मातृकारूपार्णा यस्याः सा । गर्भायै इति ॥ अः विष्णुः तस्मै वरं ददातीति सा । अवरदायै इति ॥ वाचां अधीश्वरी स्वमिनी । ईश्वर्यै इति ॥

ध्यानेन भावनेन गम्या ज्ञेया । गम्यायै इति ॥ न देशकालाकारैः परिच्छेतुं योग्या । अपरिच्छेद्यायै इति ॥ भक्तानां ज्ञानं स्वात्मविषयकं ददातीति सा । ज्ञानदायै इति ॥ ज्ञानमेव विग्रहः शरीरं यस्याः सा । विग्रहायै इति ॥ १७८ ॥

देशतः परिच्छेदो ह्यत्यन्ताभाव एव । कालतस्तु ध्वंसप्रागभावौ । वस्तुतस्त्वन्योन्याभाव इति स्थितेः । ज्ञानं कैवल्यप्रदत्वेनाभिमतं ददातीति ज्ञानदा । तथा चोक्तं **तलवकारोपनिषदि**– **'तस्मिन्नाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हैमवतीं तां होवाच किमेतद्यक्षमिति ब्रह्मेति होवाचे'**त्यादि । **स्कान्दे**ऽपि–

**'ईदृशी परमा विद्या शाङ्करी भवनाशिनी ।**
**प्रसादादेव जन्तूनां शक्तेरेव हि जायते ॥'**

इति । **सूतसंहितायामपि**–

**'विद्यारूपा या शिवा वेदवेद्या सत्यानन्दानन्तसंवित्स्वरूपा ।**
**तस्या वाचः सर्वलोकैकमातुर्भक्त्यैव स्यादम्बिकायाः प्रसादात् ॥'**

इति । ज्ञानं ददाति खण्डयतीति वा । **'ज्ञानं बन्ध'** इति तु **शिवसूत्रे** प्रथमोन्मेषे सूत्रमेकं तत्र त्वकारस्य प्रश्लेषोऽप्यस्तीत्युक्तम् । **'चैतन्यमात्मे'**ति पूर्वसूत्रेण संहितापाठे तथा सम्भवात् । तृतीयोन्मेषेऽपि तादृशं सूत्रमपरं तत्र तु न प्रश्लेषः सम्भाव्यते । **'आत्मा चित्त'**मिति पूर्वसूत्रात् । तच्च व्याख्यातं **वार्तिके**–

**'अन्तःसुखादिसेवद्यव्यवसायादिवृत्तिमत् ।**
**बहिस्तद्योग्यनीलादिदेहादिविषयोन्मुखम् ॥**
**भेदाभासात्मकं चास्य ज्ञानं बन्धोऽनुरूपिणः ।**
**तत्प्राशितत्वादेवासावणुः संसरति ध्रुवम् ॥'**

इति । तदिदं संवित्त्वापादकं ज्ञानं नाशयतीत्यर्थः । अत एव द्वितीयोन्मेषे सूत्रान्तरं **'ज्ञानमन्न'**मिति । **वार्तिकं** च–

**'ज्ञानं बन्ध इति प्रोक्तं यत्प्राक्तत्परयोगिनः ।**
**अनात्मन्यात्मताज्ञप्तिरन्नं ग्रस्यत इत्यतः ॥'**

इति । ज्ञानमेव विग्रहः शरीरं यस्याः सर्वस्य जगतो ज्ञानात्मकत्वात् । तदुक्तं **विष्णुपुराणे** द्वितीयेंऽशे–

**'ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय चेष्यते ।**
**ज्ञानात्मकमिदं विश्वं न ज्ञानाद्विद्यते परम् ॥**
**विद्याविद्येति मैत्रेय ज्ञानमेवोपधारय ॥'**

इति । ज्ञानस्य विग्रहो विस्तारो यस्याः सकाशादिति वा ॥ १७८ ॥

**सर्ववेदान्तसेवद्या सत्यानन्दस्वरूपिणी ।**

सर्वैर्वेदान्तैरुपनिषत्समूहैः समयग्वेद्या । उक्तञ्च **वाराहे**–

**'एषा त्रिशक्तिरुद्दिष्टा नयसिद्धान्तगामिनी ।**
**एषा ज्ञानात्मिका शक्तिः सर्ववेदान्तगामिनी ॥'**

---

सर्वैर्वेदान्तैरुपनिषद्भागैः सम्यग्वेद्या । वेद्यायै इति ॥ सत्यात्मकानन्दस्वरूपमस्याः । रूपिण्यै इति ॥

इति । सत्यमानन्दश्च स्वरूपं यस्याः । अत्र सत्येति भिन्नं पदमाश्रित्यामेयात्मेत्येकं पदं कर्तुं शक्यते । **'सच्च त्यच्चाभव'**दिति **श्रुतेः** सत्या । प्राणान्नादित्यरूपा वा । **'सदिति प्राणस्तीत्यन्नमयमित्यसावादित्य'** इति **श्रुतेः** । सति येति विकर्षेण त्र्यक्षरत्वेप्युच्चारणं मेलनेन द्व्यक्षरस्यैवेति ज्ञेयम् । इदञ्च **'इयादिपूरण'** इति छन्दःसूत्र-व्याख्यानावसरे **छन्दोभास्करे** प्रपञ्चितम**स्माभिः** । सत्सु साधुरिति वा सत्या । सत्य-भामा स्वरूपेति वा । आनन्दः स्वरूपमस्या इत्यानन्दरूपिणी । अत एवो**त्तरमीमांसायाम्**– **'आनन्दादयः प्रधानस्ये'**ति तार्तीयीकाधिकरणे आनन्दादिधर्माणां स्वरूप-त्वादेव विद्यान्त- रेषूपसंहारः साधितः ।

## लोपामुद्रार्चिता लीलाक्लृप्तब्रह्माण्डमण्डला ॥ १७९ ॥

लोपामुद्रयागस्त्यपत्न्या कर्त्र्यार्चितोपासिता । तदुक्तं **ब्रह्माण्डपुराणे**-**'पत्न्यस्य लोपामुद्राख्या मामुपास्तेति भक्तित'** इति । **त्रिपुरासिद्धान्ते**ऽपि–

**'अगस्त्यपत्न्या लोपाख्यमुद्रायाः परमेश्वरी ।**
**प्रसन्नत्वादियं देवी लोपामुद्रेति गीयते ॥'**

इति । अत एव लोपामुद्रा चासावर्चिता चेत्यपि सुवचम् । लोपामुद्राख्यविद्यया करणेन वा पूजिता । **'विद्यातृतीयखण्डेन कुर्यात्सर्वोपचारका**निति **कादिमतात्** । लीलामात्रेणानायासेन क्लृप्तानि ब्रह्माण्डमण्डलानि यस्याः । तदुक्तम**स्माभिर्देवीस्तवे**–

**'विधिविष्णुमुखामरोदयस्थितिनाशेषु शिवोऽप्यनीश्वरः ।**
**जगदम्ब तव त्वयं क्रमः क्षणमुद्दालकपुष्पभञ्जिका ॥'**

इति । उद्दालकेत्यादिनवाक्षरं क्रीडाविशेषस्य नाम । **शक्तिसूत्र**मपि– **'स्वेच्छया स्वभित्तौ विश्वमुन्मीलयती'**ति ॥ १७९ ॥

## अदृश्या दृश्यरहिता विज्ञात्री वेद्यवर्जिता ।

दृश्यविलक्षणत्वाददृश्या । चक्षुरादीन्द्रियायोग्या वा । **'न दृष्टेर्द्रष्टारं पश्ये'**दिति **श्रुतेः** । उक्तञ्च **देवीभागवते** तृतीयस्कन्धे–**'निर्गुणस्य मुने रूपं न भवेद्दृष्टिगोचर'**मिति प्रक्रम्य **'निर्गुणा दुर्गमा शक्तिर्निर्गुणश्च परः पुमा'**नित्यन्तम् । दृश्यस्य व्यावहारिकस्य

---

लोपामुद्रया अगस्त्यपत्न्या अर्चिता । अर्चितायै इति ॥ लीलया क्लृप्तानि ब्रह्माण्डानां मण्डलानि यस्याः सा । मण्डलायै इति ॥ १७९ ॥

न दृश्या अदृश्या । अदृश्यायै इति ॥ दृश्यैः रहिता चिद्घनत्वात् । रहितायै इति ॥ विशेषेण जानातीति सा । ज्ञात्र्यै इति ॥ वेद्यैर्वर्जिता रहिता । वर्जितायै इति ॥

पारमार्थिकभाववत्त्वाद्दृश्यरहिता । निर्विषया संविद्वा । विशेषेण जानातीति विज्ञात्री । '**विज्ञातारमरे केन विजानीया**दिति **श्रुतेः** । वेद्यस्य पदार्थान्तरस्यानवशेषेण सर्वज्ञत्वाद्वेद्यवर्जिता । वेद्यस्य पारमार्थिकाभाववती वा ।

**योगिनी योगदा योग्या योगानन्दा युगन्धरा ॥ १८० ॥**

योग एकत्वभावना तद्वत्त्वात्तत्प्रदत्वात्तद्योग्यत्वाच्च योगिनी योगदा योग्या च । '**योगाद्यच्चे**'ति यत्प्रत्ययः । तदुक्तं **विष्णुपुराणे**—

**'ज्ञानेन्द्रियाणि सर्वाणि निगृह्य मनसा सह ।**
**एकत्वभावनायोगः क्षेत्रज्ञपरमात्मनोः ॥'**

इति । '**तं विद्याद्दुःखसंयोगवियोगं योगसंज्ञित**'मिति **गीतासु** । '**योगश्चित्तवृत्तिनिरोध**' इति **पातञ्जलसूत्रं** च । स च मन्त्रो लयो हठो राजेति चतुर्विधः । राजयोगोऽपि सांख्यतारकामनस्कभेदात्त्रिविधः । तत्तल्लक्षणानि तु विस्तरभयान्नोच्यन्ते । यद्वा । मङ्गलादिसंकटान्ता अष्टौ योगिन्यः षड्विंशतिवर्षैः पुनःपुनः परिवर्तमाना ज्योतिःशास्त्रे, डाकिन्यादयश्च सप्त मन्त्रशास्त्रे प्रसिद्धास्तद्रूपा । अथवा योगो विषयसङ्गो भोग इति यावत् । तेन भोक्तृभोगप्रदभोग्यत्रितयरूपेति नामत्रितयार्थः । तदुक्तं **श्वेताश्वतरोपनिषदि**—'**भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्मेत**दिति । अत्रेदं बोध्यम् । माया प्रधानं स्वतन्त्रमिति सांख्याः । शिवस्य सा शक्तिरेवेति वेदान्तिनः । शक्तिरित्यनेन परतन्त्रतोच्यत इति **विवरणाचार्याः** । सा त्रिगुणा । गुणाश्च परस्पराभिभावकाः ।

**रजस्तमश्चाभिभूय सत्त्वं भवति भारत ।**
**रजः सत्त्वं तमश्चैव तमः सत्त्वं रजस्तथा ॥'**

इति **गीतोक्तेः** । तेन सा त्रिविधा पर्यवस्यति । रजस्तमसोरत्यन्ताभिभवाद्विशुद्धसत्त्वात्मकैका । ईषदुद्भूतरजस्तमोभ्यां मलिनसत्त्वा द्वितीया । अत्यन्ताभिभूतरजःसत्त्वाभ्यामसत्प्राया केवलतमोमयी तृतीयेति । तास्वाद्यावच्छिन्ना चिदीश्वरनाम्नी भोगप्रदा योगदेत्युच्यते । द्वितीयावच्छिन्ना जीवनाम्नी भोक्त्री योगिनी । तृतीयावच्छिन्ना जडवस्तुनाम्नी भोग्या योग्येत्युच्यत इति विवेकः । योगः

---

योगः शिवसम्बन्धः तद्वती । योगिन्यै इति ॥ भक्तेभ्यो योगं चित्तनिरोधात्मकं ददातीति सा । योगदायै इति ॥ योग्या योगसाध्या । योग्यायै इति ॥ योगिनां योगेन आनन्दो यस्याः सम्बन्धी । आनन्दायै इति ॥ युगस्य कार्यकारणाद्यात्मकस्य युगलस्य धरा । धरायै इति ॥ १८० ॥

शिवशक्तिसामरस्यमेवानन्दो यस्याः । निद्राया आनन्दप्रधानत्वाद्योगनिद्रेति वार्थः । सा च देव्येवेयम् । तथा च **हरिवंशे**—**'याप्यानन्दघना योगनिद्रेति जगति स्थिते'**त्युपक्रम्य—

**'देवेष्वपि दधारैनां नान्यो नारायणादृते ।**
**सखी सदाशिवस्यैषा माया विष्णोः शरीरजा ॥**
**सैषा नारायणमुखे धृत्या कमललोचन ।**
**लोकानल्पेन कालेन भजते भृशमोहिनी ॥'**

इति । योगानन्दाख्यो नृसिंहस्तद्रूपा वा । मोहिनीमुख्येत्येकपदं स्वीकृत्येह अयोगानन्देति नामद्वयं सुवचम् । योगः सङ्गो न विद्यते यस्याः । **'असङ्गो नहि सज्जत'**इति **श्रुतेः** । अयः पर्वतरूपा वा । अभेद्येति तात्पर्यार्थः । अयेन शुभावहविधिना उं परशिवं गच्छतीति वा । नन्दा अलकनन्दात्मकगङ्गारूपा वा । प्रतिपत्षष्ठ्येकादशीरूपा वा । **'नन्दा भगवती नाम या भविष्यति नन्दजे'**ति **मार्कण्डेयपुराणो**क्तमूर्तिविशेषरूपा वा । सरस्वत्या एव स्थानविशेषयोगादानन्देति संज्ञा वा । **'नन्दा हिमवतः पृष्ठ'** इति **पाद्मात्** । पुष्करप्रान्तस्थनदीविशेषरूपा वा । तदप्युक्तं **पाद्म** एव पुष्करमाहात्म्ये—

**'पुण्या पुण्यजलोपेता नदीयं ब्रह्मणः सुता ।**
**नन्दा नाम्नीति विपुला प्रवृत्ता दक्षिणामुखी ॥**
**अगच्छन्नपि यस्तस्या नाम गृह्णति मानवः ।**
**स जीवन्सुखमाप्नोति मृतो भवति खेचरः ॥'**

इति । नामनिरुक्तिर्वराहपुराणे—

**'यथागतं तु ते जग्मुर्देवीं स्थाप्य हिमे गिरौ ।**
**संस्थाप्यानन्दिता यस्मात्तस्मान्नन्दा तु साऽभवत् ॥'**

इति । **देवीपुराणे** तु—

**'नन्दते सुरलोकेषु नन्दने वसतेऽथवा ।**
**हिमाचले महापुण्ये नन्दादेवी ततः स्मृता ॥'**

इति । तत्स्वरूपमपि वाराहे—

**'गायत्र्यष्टभुजा या तु चैत्रासुरमयोधयत् ।**
**सैव नन्दा भवेद्देवी देवकार्यचिकीर्षया ॥**
**स्वायम्भुवे हतो दैत्यो वैष्णव्या मन्दरे गिरौ ।**
**महिषाख्योऽसुरः पश्चात्स वै चैत्रासुरोऽभवत् ॥**
**नन्दया निहतो विन्ध्ये महाबलपराक्रमः ।**
**ज्ञानशक्तिस्तु सा देवी महिषोऽज्ञानमूर्तिमान् ॥**
**अज्ञानं ज्ञाननाश्यं तु भवत्येव नसंशयः ।'** इति ।

'युगं हस्ते चतुष्केऽपि रथसीराङ्गयोर्युगः ।
युगं कृतादौ युगले वृद्धिनामौषधेऽपि च ॥'

इति **विश्वप्रकाशोक्त्या** रथसीराङ्गधारिणामश्ववृषभाणां रथसीरनिर्वाहकत्वदर्शनादिह सकलजगन्निर्वाहकत्वमात्रतात्पर्येण युगन्धरेत्युच्यते । शिवशक्तियुगलस्य कृतादेर्वा धारणाद्युगन्धरा **'संज्ञायां भृतॄवृजिधारिसहितपिदम'** इति खच् । **'अरुर्द्विषदजन्तस्ये'**ति मुम् ॥ १८० ॥

**इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिस्वरूपिणी**'

इच्छाज्ञानयत्नरूपगुणत्रयं स्वरूपमस्याः । उक्तञ्च **सङ्केतपद्धतौ**—

**'इच्छा शिरःप्रदेशश्च ज्ञाना च तदधोगता ।
क्रियापदगता ह्यस्या एवं शक्तित्रयं वपुः ॥'**

इति । **वामकेश्वरतन्त्रे**ऽपि—

**'त्रिपुरा त्रिविधा देवी ब्रह्मविष्ण्वीशरूपिणी ।
ज्ञानशक्तिः क्रियाशक्तिरिच्छाशक्त्यात्मिका प्रिये ॥'**

इति । अत्र ज्ञानेच्छायत्नानां पूर्वपूर्वस्योत्तरोत्तरं प्रति कारणत्वस्य क्लृप्तस्य क्रमेण शक्तित्रयस्य निर्देशाभावेऽपि करोतेर्यत्ने शक्तत्वादेव क्रियाशब्दो यत्नपरः । उक्तञ्च **लैङ्गे**—

**'धृतिरेषा मदादिष्टा ज्ञानशक्तिः कृतिर्मता ।
इच्छारूपा तथा ज्ञाना द्वे विद्ये च न संशयः ॥'**

इति । चलनात्मकक्रियापरा एव वा । सा च पञ्चविधेत्युक्तं **यज्ञवैभवखण्डे**—

**'स्पन्दश्चैव परिस्पन्दः प्रक्रमः परिशीलनः ।
प्रचार इति विद्वद्भिः कथिताः पञ्च ताः क्रिया ॥'**

आङ्प्रश्लेषप्रयुक्तो दीर्घः । सर्वासां जगतीनां धारा परम्परा । जन्यजनकयोरभेदात् इति । **मालिनीविजयतन्त्रे**—

**'या सा शक्तिर्जगद्धातुः कथिता ब्रह्मणः परा ।
इच्छात्वं तस्य सा देवी सिसृक्षोः प्रतिपद्यते ॥
एवमेतदिति ज्ञेयं नान्यथेति सुनिश्चितम् ।
ज्ञापयन्ती झडित्यन्तर्ज्ञानशक्तिर्निगद्यते ॥
एवंभूतमिदं वस्तु भवत्विति यदा पुनः ।
ज्ञात्वा तदेव तद्वस्तु कुर्वन्त्यत्र क्रियोच्यते ॥'**

---

इच्छाशक्त्यादीनां स्वरूपमस्याः सा । स्वरूपिण्यै इति ॥

इति । **वासिष्ठरामायणे**—

**'शिवं ब्रह्म विदुः शान्तमवाच्यं वाग्विदामपि ।**
**स्पन्दशक्तिस्तदिच्छेमं दृश्याभासं तनोति सा ॥**
**साकारस्य नरस्येच्छा यथा वैकल्पनापुरम् ।'**

इति । **'दृश्याभासानुभूतानां करणात्सोच्यते क्रिये'**ति च । दृश्याभासेष्वनुभूतानामुत्पत्त्याप्तिविकृतिसंस्कृतिलक्षणचतुर्विधफलानां तु कारणादिति तु **तत्तट्टीकायां** व्याख्यातम् ।

## सर्वाधारा सुप्रतिष्ठा सदसद्रूपधारिणी ॥ १८१ ॥

सर्वमाधारो यस्या इति वा । सर्वेष्वन्तर्यामितया स्थितेति यावत् । सर्वेषामाधाररूपेति वा । तदुक्तं **मार्कण्डेयपुराणे**—

**'येऽर्था नित्या ये विनश्यन्ति चान्ये चेऽर्थाः स्थूला ये च सूक्ष्माच्च सूक्ष्माः ।**
**यच्चामूर्तं यच्च मूर्तं समस्तं यद्यद्भूतेष्वेकमेकञ्च किञ्चत् ॥**
**येऽर्था भूमौ येऽन्तरिक्षेऽन्यतो वा तेषां देवि त्वत्त एवोपलब्धिः ।**

इति । न चास्मिन्पक्षे स्त्रीलिङ्गानुपपत्तिः । **'परवल्लिङ्गं द्वन्द्वतत्पुरुषयो'**रिति सूत्रात् । **'आधारोऽधिकरण'**मिति सूत्रानुसारेणाधारपदस्य पुंलिङ्गत्वनिश्चयादिति वाच्यम् । निर्गुणब्रह्मणि कथनीये प्रत्युत तस्यैव युक्तत्वात् । तथाहि । सत्त्वादिगुणत्रयस्योपचयः पुंस्त्वम् । अपचयः स्त्रीत्वम् । साम्यं नपुंसकत्वम् । लिङ्गयोनितदुभयाभावरूपाणां तेषामचेतनेष्वव्याप्तेः । सर्वस्यापि जगतस्त्रिगुणात्मकतया **देवीभागवतादौ** प्रतिपादितत्वेन तेषां सर्वत्र सम्भवात् । उपचयादेः सावधिकत्वेन प्रतिपादितार्थं किञ्चिदपेक्ष्योपचयादयः सन्त्येवेति लिङ्गत्रयस्यापि केवलान्वयित्वाद्व्यवस्थया विवक्षानुसारेण प्रयोगः । सर्वमेतदभिप्रेत्योक्तं **महाभाष्ये—'संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्तत'** इति ।

**'संस्त्यानं स्त्यायतेर्ड्रट्स्त्री सूतेः सप् प्रसवः पुमान् ।**
**उभयोरन्तरं यच्च तदभावे नपुंसकम् ॥'**

इति च । **'लिङ्गमशिष्य'**मिति च । सम्बन्धमनुवर्तिष्यते कोऽसावनुमानो नामेति प्रयोगश्च । **'बन्धुनि बहुव्रीहा'**विति सौत्रप्रयोगश्च । एवं सत्यव्यवस्था माप्रसाङ्क्षीदिति लिङ्गानुशासनप्रवृत्तिर्नियमादृष्टमात्रप्रयोजनिका । चेतनेषु तूभयविधलिङ्गसमुच्चयविवक्षयैव **'अजाद्यतष्टाबि'**त्यादयः । तेन पश्वेकत्ववल्लिङ्गमपि विवक्षितमिति साधयतस्तथा च लिङ्गमित्यधिकरणस्य निरोधः । ततश्च त्रिगुणातीतायां चिच्छक्तौ सर्वजगन्मातरि त्रिपुरसुन्दर्यां द्विविधिस्यापि स्त्रीलिङ्गस्य सगुणचेतनानन्तरमपेक्ष्यासङ्क-

---

सर्वस्य जगत आधारा आश्रयरूपा । आधारायै इति ॥ शोभना च सा प्रतिष्ठा अधिष्ठानञ्च । प्रतिष्ठायै इति ॥ सदसतोर्ब्रह्मजगतोः रूपं धारयतीति सा । धारिण्यै इति ॥ १८१ ॥

चितवृत्तिकत्वेन निरर्गलत्वमभिप्रेत्य वाग्देवताभिः स्त्रीलिङ्गमेव प्रयुज्यते नियमाद्दृष्टानुसरणाय तु तत्र तत्र लिङ्गानुशासनानुगुण्यमस्माभिः प्रदर्श्यते न पुनरपशब्दत्वनिरासायेति दिक् । शोभना प्रतिष्ठा जगतोऽधिष्ठानं सुप्रतिष्ठाख्यविंशत्यक्षरच्छन्दोविशेषरूपा वा । सद्ब्रह्म । असत्सद्भिन्नं जगत् । अनिर्वचनीयस्य जगतः सदसद्विलक्षणत्वेऽपि सद्विलक्षणत्वमात्रेणासत्पदेन ग्रहणम् । **'असद्वा इदमग्र आसीत्कथमसतः सज्जायेते'**त्यादिश्रुतिष्वन्यतरवैलक्षण्येनैव प्रयोगदर्शनात् । तयोः रूपे धारयतीति तथा । अथवा सद्व्यवहारिकं सत्यं पारमार्थिकं वा असत्तुच्छं ते एव रूपे विषयौ धारयति भासयति । सदसद्विषयकज्ञानद्वयस्वरूपेत्यर्थः । सन्मात्रविषयकचरमवृत्तिवदसन्मात्रविषयिकाया अपि वृत्तेर्विकल्पाख्यायाः सत्त्वात् । तथा च **पातञ्जलसूत्रम्–'शब्दामात्रानुपाती वस्तुशून्यो विकल्प'** इति । **गौतमसूत्रमपि– 'बुद्धिसिद्धं तदस'**दिति । यद्वा । भावाभावपरौ सदसच्छब्दौ । तौ च योग्यतया सत्यत्वादबाध्यत्वादिरूपौ ग्राह्यौ । सत्यत्वादेर्धर्मिणोऽपृथक्त्वात् । अबाध्यत्वादेरभावरूपधर्मस्याधिकरणस्वरूपत्वात् । भावाभावमात्रस्याधिष्ठानमिति वा । तदुक्तं **स्कान्दे** यज्ञवैभवखण्डे–

**'यद्यदस्तितया भाति यद्यन्नास्तितयापि च ।**
**तत्तत्सर्वं महादेवमायया परिकल्पितम् ॥'**

इति ॥ १८१ ॥

**अष्टमूर्तिरजा जेत्री लोकयात्राविधायिनी ।**

**मत्स्यपुराणे–**

**'लक्ष्मीर्मेधा धरा पुष्टिर्गौरी तुष्टिः प्रभा धृतिः ।**
**एताभिः पाहि तनुभिरष्टाभिर्मां सरस्वति ॥'**

इति मन्त्रलिङ्गगम्या अष्टौ मूर्तयो यस्याः । यद्वा **योगशास्त्रे–**

**'गुणभेदादात्ममूर्तिरष्टधा परिकीर्तिता ।**
**जीवात्मा चान्तरात्मा च परमात्मा च निर्मलः ॥**
**शुद्धात्मा ज्ञानरूपात्मा महात्मा सप्तमः स्मृतः ।**
**अष्टमस्तेषु भूतात्मेत्यष्टात्मानः प्रकीर्तिता ॥'**

इति । पञ्चमहाभूतानि सूर्याचन्द्रमसौ जीवात्मस्वर्गदीक्षितानामन्यतम एक इत्यष्टसंख्या मूर्तयो यस्याः । **'भूतानि पुष्पवन्तौ स्वरिति देव्यष्टमूर्तय'** इति **शक्तिरहस्यात्** । **विष्णुपुराणे**ऽपि प्रथमेंऽशे–

**'सूर्यो जलं मही वह्निर्वायुराकाश एव च ।**
**दीक्षितो ब्राह्मणः सोम इत्यष्टौ मूर्तयो मताः ॥**

---

अष्टौ मूर्तयो पृथिव्यादिपञ्चभूतानां सूर्यचन्द्रयज्वनां यस्याः सा । मूर्त्यै इति ॥ अजाया अविद्याया जैत्री नाशिका । जैत्र्यै इति । लोकानां भूरीदाना यात्रा गतिः व्यवहरणं ता विधत्ते इति सा । विधायिन्यै इति ॥

**पत्न्यः सुवर्चला चोम सुकेशी चापरा शिवा ।**
**स्वाहादितिस्तथा दीक्षा रोहिणी च यथाक्रमम् ॥**
**शनैश्चरस्तथा शुक्रो लोहिताङ्गो मनोजवः ।**
**स्कन्दः स्वर्गोऽथ सन्तानो बुधश्चानुक्रमात्सुताः ॥'**

इति । **लैङ्गे** तूक्तम्–

**'अष्टौ प्रकृतयो देव्या मूर्तयः परिकीर्तिताः ।**
**तथा विकृतयस्तस्या देहा बद्धविभूतयः ॥'** इति ।
**भूमिरापोऽनलो वायुः खं मनो बुद्धिरेव च ।**
**अहङ्कार इतीयं मे भिन्ना प्रकृतिरष्टधा ॥'**

इति । भगवता गीता मूर्तयो यस्या इति वा । कुलाष्टकस्वरूपेत्यर्थो वा । तच्च **समयाचारस्मृतौ**–

**'गणिका शौण्डिकी चैव कैवर्ती रजकी तथा ।**
**तन्त्रकारी चर्मकारी मातङ्गी पुंश्चली तथा ॥ '**

इति । अथवा **'स्वल्पाङ्गी दीर्घकेशी या सानङ्गकुसुमा मते'**त्यादिना **रुद्रयामले** अष्टानां लक्षणान्युक्तानि । लक्ष्याणि तु तृतीयावरणे प्रसिद्धानि तदष्टकरूपा । ब्राह्म्यादिव-शिन्यादिस्वरूपेति वा । **'अजामेकां लोहितशुक्लकृष्णा'**मित्यादिश्रुतिप्रसिद्धाया अविद्या-रूपाया अजाया जेत्री । ज्ञानरूपत्वादज्ञाननाशिकेति यावत् । लोकानां चतुर्दश-संख्यानां यात्रां प्रलयं संरक्षणं वा विधातुं शीलमस्याः ।

**एकाकिनी**–

एकाकिनी द्वितीयराहित्यात् । **'एकादाकिनिच्चासहाय'** इति प्रत्ययः । **'सोऽबिभेत्त-स्मादेकाकी बिभेति सहायमीक्षांचक्रे यन्मदन्यन्नास्ति कस्मान्नु बिभेमीति तत एवास्य भयं वीयाये'**ति **बृहदारण्यकश्रुतेः** । **देवीपुराणे**–

**'एकैव लोकान् ग्रसति एकैव स्थापयत्यपि ।**
**एकैव सृजते विश्वं तस्मादेकाकिनी मता ॥'** इति ।

*अथ परिभाषायां चतुस्त्रिंशन्नामानि विभजते–*

***भूगीर्णाबलखेदालम्बारम्भाविभोर्वदेङ्द्रावम् ।***
***हस्ती द्विर्वेकं वा भजते वातूलमन्दमृगान् ॥ २५ ॥***

---

एकाकिनी द्वितीयराहित्वात् । एकाकिन्यै इति ॥

*एकमित्यस्य द्वादशाक्षरमेकं नामेत्यर्थः ॥ २५ ॥*

**—भूमरूपा निर्द्वैता द्वैतवर्जिता ॥ १८२ ॥**

**'यत्र नान्यत्पश्यति नान्यच्छृणोती'**त्यादिना **'यो वै भूमा तत्सुख'**मित्यन्तेन **श्रुतौ** प्रतिपादितो भूमा ब्रह्मैवेति भूमाधिकरणे निर्णीतरूपत्वाद्भूमरूपा। यद्वा **'बहोर्लोपो भू च बहो'**रिति निष्पन्नो बह्वर्थको भूमशब्दः। ततश्चैकाकिन्यपि बहुरूपेत्यर्थः। तदुक्तं **देवीपुराणे**—

**'एकाप्युपाधिते भूमा शिवा सर्वत्र विश्रुता।**
**यथानुरज्यते वर्णैर्विचित्रैः स्फटिको मणिः॥**
**तथा गुणवशाद्देवी भूमानामेति वर्ण्यते।**
**एको भूत्वा यथा मेघः पृथक्त्वेन च तिष्ठति।**
**वर्णतो रूपतश्चैव तथा गुणवशादुमा।**
**नभसः पतितं तोयं यथा नानारसं भवेत्॥**
**भूमे रसविशेषेण तथा गुणवशादुमा।**
**यथा द्रव्यविशेषेण वायुरेकः पृथग्भवेत्॥**
**दुर्गन्धो वा सुगन्धो वा तथा गुणवशादुमा।**
**यथा वा गार्हपत्योग्निरन्यसंज्ञान्तरं व्रजेत्॥**
**दक्षिणाहवनीयादि ब्रह्मादिषु तथैव सा।**
**एकत्वेन च भूम्ना च प्रोक्ता देवी निदर्शनैः॥**
**तस्माद्भक्तिः परा कार्या सर्वगत्वप्रसिद्धयः।'**

इति। **कूर्मपुराणे**ऽपि—

**'एका कामेश्वरी शक्तिरनेकोपाधियोगतः।**
**परावरेण रूपेण क्रीडते तस्य सन्निधौ॥'**

इति। **'यत्र नान्यत्पश्यति'** इत्यादिना **'यदल्पं तन्मर्त्य'**मित्यन्तेन **श्रुतौ** द्वैतदर्शनस्यानित्यविषयकताप्रतिपादनेन तस्य हेयत्वान्निर्गतं द्वैतं यस्यां सा निर्द्वैता। न पुनर्द्वैतं पूर्वं स्थितं पश्चान्निर्गतम्। मूलत एव तु नास्तीत्याह—द्वैतवर्जितेति। भेदस्यातात्त्विकत्वेन सार्वकालिकात्तदभावादिति भावः॥ १८२॥

**अन्नदा वसुदा वृद्धा ब्रह्मात्मैक्यस्वरूपिणी।**

अन्नं जनेभ्यो ददाति। वसु धनं रत्नं च ददाति। तथा च **बृहदारण्यके**—**'स वा एष महानज आत्मान्नादो वसुदानो विन्दते वसु य एवंवेदे'**ति। अत्रान्नमासमन्ता-

---

भूमा ब्रह्मरूपं यस्याः सा। रूपायै इति॥ निर्गतं द्वैतं यस्याः सा। निर्द्वैतायै इति॥ द्वैतेन वर्जिता रहिता। वर्जितायै इति॥ १८२॥

अन्नं सेवकेभ्यो ददातीति सा। अन्नदायै इति॥ वसुधनं ददातीति सा। वसुदायै इति॥ वृद्धा सकलज्येष्ठत्वात्। वृद्धायै इति॥ ब्रह्मात्मनोः शिवजीवयोर्यदैक्ये अनुस्यूतैकरूपता तत्स्वरूपं अस्याः सा। स्वरूपिण्यै इति॥

दृदातीत्येवमेव व्याख्यातं साम्प्रदायिकैः । वृद्धा जरठा । **'त्वं जीणा दण्डेन वञ्चसी'**ति **श्रुतेः** । वञ्चसि गच्छसीत्यर्थः । सर्वज्येष्ठत्वाज्जगद्रूपेणाभिवृद्धत्वाद्वा वृद्धा । वर्धयति जगदिति वा णिजन्तात्कर्तरि क्तः । ब्रह्मणा चैतन्येन सह आत्मनां जीवानामैक्यमेव स्वं निजं रूपमस्याः । यद्वा ब्रह्मात्मनोः शिवजीवयोरैक्यमेव स्वं सर्वस्वं प्रतिपाद्यं यस्य स हंसमन्त्रो रूपमस्या इति । तदुक्तं **स्कान्दे** यज्ञवैभवखण्डे–

**'अथवा जीवमन्त्रोऽयं जीवात्मप्रतिपादकः ।**
**अहंशब्दस्य रूढत्वाल्लोके जीवात्मवस्तुनि ॥**
**शक्तिमन्त्रः सकाराख्यः परमेश्वरवाचकः ।**
**प्रकृतार्थे प्रसिद्धत्वात्प्रसिद्धः परमेश्वरः ॥**
**महदाद्यणुपर्यन्तं जगत्सर्वं चराचरम् ।**
**जायते वर्तते चैव लीयते परमेश्वरे ॥**
**संसारित्वेन भातोऽहं स एव परमेश्वरः ।**
**सोऽहमेव न सन्देहः स्वानुभूतिप्रमाणतः ॥'**

इति । एतेन **त्रिशत्यां** हंसमन्त्रार्थरूपिणीति नाम व्याख्यातम् ।

## बृहती ब्राह्मणी ब्राह्मी ब्रह्मानन्दा बलिप्रिया ॥ १८३ ॥

महतो महीयत्वाद्बृहती । षट्त्रिंशदक्षरच्छन्दोविशेषरूपा वा । न च **'गायत्री छन्दसामसी'**ति **कौर्म**वचनविरोधः । उभयात्मत्वाङ्गीकारे तदभावात् । अत एव **'बृहत्साम तथा साम्ना'**मिति भगवतो वासुदेवस्य विश्वरूपवर्णने **गीता**वचनस्य भगवत्या विश्वरूपवर्णनार्थेन **'ज्येष्ठं साम च सामस्वि'**ति **कौर्म**वचनेन न विरोधः । तलवकारिणां शाखायामुदुत्यं चित्रमित्यनयोर्ऋचोर्गीयमानं साम ज्येष्ठसामेत्युज्ज्वलायां **हरदत्तोक्तेः** । बृहत्साम तु सत्त्वं नश्चित्रेत्यस्यामृचि गीयमानं प्रसिद्धमेव । बृहज्ज्येष्ठशब्दयोः पर्यायत्वसम्भवाच्च । तेन ज्येष्ठसामरूपेति वा बृहत्सामरूपेति वा व्याख्या । **'ब्राह्मणी फञ्जिका स्पृक्का द्विजपत्नीषु विश्रुते'**ति **विश्वकोशा**दौषधिविशेषरूपा द्विजस्त्रीमात्ररूपा वा संविद्विशेषरूपा वा । उक्तं च **समयाचारस्मृतौ**–**'ब्राह्मणी श्वेतपुष्पाढ्या संवित्सा देवतात्मिके'**ति । अथवा शिवस्य ब्राह्मणत्वजातिमत्त्वाद्ब्राह्मणी । तथा च **छन्दोग्ये** श्रूयते–**'विरूपाक्षोऽसि दन्तार्चि'**रिति शिवं प्रकृत्य **'त्वं देवेषु ब्राह्मणोऽस्यहं मनुष्येषु ब्राह्मणो ब्राह्मणमुपधावत्युप त्वाधावामी'**ति पराशर-आदित्य-कौर्म-वासिष्ठ-लैङ्गेषु स्मर्यते ।

**'ब्राह्मणो भगवान्साम्बो ब्राह्मणानां हि दैवतम् ।**
**विशेषाद् ब्रह्मणो रुद्रमीशानं शरणं व्रजेत् ॥'**

---

बृहती महीयसी । बृहत्यै इति ॥ ब्राह्मणस्य शिवस्य स्त्री । ब्राह्मण्यै इति ॥ ब्राह्मी ब्रह्मशक्तिरूपा । ब्राह्म्यै इति ॥ ब्रह्मण आनन्दो यस्याः सा । आनन्दायै इति ॥ बलिः पूजोपहारादिः प्रियो यस्याः सा । प्रियायै इति ॥ १८३ ॥

इति। **विष्णुभागवते**ऽपि-'**न मे गर्भमिमं ब्रह्मन्नि**'त्यादिना शिवकोपाद्बिभ्यत्यादित्या तस्य ब्राह्मणत्वं व्यक्तीकृतमिति तु **शिवतत्त्वविवेके** द्रष्टव्यम्। अविद्यातिरिक्तजडजातिसद्भावे मानाभाव इत्यत आह ब्राह्मी। '**ब्राह्मो जाता**'विति निपातनात्साधुः। वागात्मिका वा। ब्रह्मैवानन्दो यस्याः सगुणायाः। मत्वर्थीयाच्प्रत्ययेन ब्रह्मानन्दवती वा। बलिनो विद्यानिराससमर्थाः कामादिशत्रुजेतारः प्रिया दयापात्रं यस्याः। बलिनामको राजा प्रियो यस्य वामनस्य तदभिन्ना वा। पूजोपहाराः प्रिया यस्या वा ॥ १८३ ॥

**भाषारूपा बृहत्सेना भावाभावविवर्जिता।**

संस्कृतप्राकृतादिभाषा रूपं यस्याः। भाषाभिर्निरूप्यत इति वा। तदुक्तम्—

**'संस्कृतेनैव केप्याहुः केचिन्म्लेच्छादिभाषया।**
**साधारण्येन केऽपि त्वां प्राकृतेनैव केचन ॥'**

इति। बृहती अपारा सेना चतुरङ्गबलं यस्याः। बृहत्सेनाख्यराजविशेषरूपा वा। भावा द्रव्यगुणादयोऽभावाः प्रागभावादयस्तैरुभयैरपि विवर्जिता। ननूभयेषामभावस्याप्यभावत्वेन तद्वत्त्वे कथमभावविवर्जितत्वम्। किञ्च प्रागभावध्वंसात्यन्ताभावादयोऽपि द्रव्यगुणादिप्रतियोगिका एव वक्तव्याः। प्रकारान्तरायोगात्। ततश्च द्रव्याभावाभावे द्रव्यत्वं द्रव्याभावे च द्रव्याभावत्वमेवापद्यत इति कथं भावाभावविवर्जितत्वमिति चेत्। न। **व्यास**पादैरेव परिहृतत्वात्। तदुक्तं **स्कान्दे** यज्ञवैभवखण्डे—

**'अधिष्ठानावशेषो हि नाशः कल्पितवस्तुनः।**
**भावस्यैव ह्यभावत्वं नाशो भावस्य भावता ॥**
**भावाभावस्वरूपाभ्यामन्य एव हि कल्पितः।**
**अधिष्ठानस्य नाशो न सत्यत्वादेव सर्वदा ॥'**

इति। अधिष्ठानसमसत्ताकपदार्थप्रतियोगिकाभावस्य तदभावस्य चाधिष्ठानाद्भेदेन तत्र वृत्तिता। अधिष्ठानविषमसत्ताकस्याभावस्त्वधिष्ठानस्वरूप एव न भिन्नः। अधिष्ठानं तु सत्यत्वादेव न नश्यतीति समुदायार्थः।

**सुखाराध्या शुभकरी शोभना सुलभागतिः ॥ १८४ ॥**

सुखेनोपवासादिरूपकायक्लेशं ध्येयस्वरूपनियमनिर्बन्धादिकं चान्तरेणाप्याराध्या। तथा च **कौर्मे** हिमवन्तंप्रति भगवत्या वचनम्—'**अशक्तो यदि मां ध्यातुमैश्वरं रूपमव्यय**'-

---

संस्कृतादिभाषाः रूपं यस्याः सा। रूपायै इति ॥ बृहती सेना चतुरङ्गं बलं यस्याः सा। सेनायै इति ॥ भावाभावाभ्यां सदसद्भ्यां विशेषेण वर्जिता। वर्जितायै इति ॥

सुखेन कायाक्लेशराहित्येन अ[ा]राध्या। आराध्यायै इति ॥ भक्तानां शुभं करोतीति सा। कर्यै इति ॥ मोक्षादिपुरुषार्थरूपत्वाच्छोभमाना। सुखोपायत्वात्सुलभा। प्राप्तव्यस्थानरूपत्वाद्गतिः। पदत्रयात्मकमेकं नाम शोभनायै सुलभायै गत्यै इति ॥ १८४ ॥

मित्यादिनोत्तरोत्तरं सुलभप्रकारोपदेशः । न चैतावता पापमाशङ्कनीयमित्याहुः । शुंभकरी शुभं पुण्यमेव करोति मोक्षादिपुरुषार्थरूपत्वाच्छोभना सुखोपास्यत्वात्सुलभा च गतिः प्राप्तव्यं स्थानम् । गम्यत इति गतिः फलम् । ज्ञानमुपायो वा **'गतिर्मार्गे दशायां च ज्ञाने यात्राभ्युपाययो'**रिति **विश्वः** । **'एषैव सर्वभूतानां गतीनामुत्तमा गति'**रिति **कौर्मात्** । शोभनायै सुलभायै गत्यै नम इति चतुर्थीत्रयेण प्रयोगः । अत्र शोभनागतिः । सुलभागतिरिति गतिपदानुषङ्गेण नामद्वयं सुवचम् । तावतैव पौनरुक्त्यपरिहारसम्भवात् । अत्र हि शोभनेति पदत्रयं पठ्यते । सुमुखी नलिनी सुभ्रूः शोभनेति यथास्थितमेकं नाम । सुवासिन्यर्चनप्रीताशोभनेत्यत्र चतुरक्षरमशोभनेति द्वितीयम् । प्रकृते चाकारप्रश्लेषायोगात्पार्थक्यायोगाच्चोत्तरपदेनैकवाक्यतां कल्पयित्वा पौनरुक्त्यमुद्धियत इति स्थितिः । मतिरमतिरित्यादिरीत्या पदच्छेदेप्येषैवोपपत्तिर्मूलम् । **भगवत्पादैर्विष्णुसहस्रनामभाष्ये** ईदृशीभिरेवोपपत्तिभिः पदच्छेदस्य निर्णीतत्वात् । यथा निधिरव्यय इत्यत्र पदद्वयस्यैकनामत्वमव्ययः पुरुषः साक्षीत्यनेन पौनरुक्त्यपरिहाराय । एवं स्थविरोध्रुवः शाश्वतस्थाणुः सर्वविद्भानुर्वाचस्पतिरुदारधीरित्यादिषु । एवं जननोजनजन्मादिर्भीम इत्यनेन पुनरुक्तिपरिजिहीर्षयाऽतुलः शरभो भीम इत्यत्राभीम इत्यकारप्रश्लेषः कृतः । एवमिष्टो विशिष्ट इत्यादि । ततश्च छलाक्षरसूत्राणामपीदृशोपपत्तिमूलकत्वेन तदुक्तरीत्यैव पदच्छेदे नातीवादरः कर्तव्यः । अनेनैव न्यायेन सामवेदिभिर्वेदमर्यादयापि पठ्यमान ऊहग्रन्थो न्यायामूलकत्वात्पौरुषेय एवेति न्यायविरोधे तस्याप्रमाण्यमिच्छन्ति **जैमिनीयाः** । प्रकृते तूभयथापि पौनरुक्तत्यपरिहारसम्भवे प्रसवित्री प्रचण्डाज्ञाप्रतिष्ठाप्रकटाकृतिरिति पकारादिनामप्रायपाठे ज्ञेत्यस्य भिन्नपदत्वस्वीकारे सन्दर्भशुध्यसामञ्जस्यात्तत्र प्रचण्डाज्ञेत्यस्यैकपदत्वलिप्सया प्रकृते गतिपदानुषङ्गेणापि नामद्वयं स्वीकर्तुमुचितमिति दिक् । सर्वथैकमेव नामेति यद्याग्रहस्तदैकमेव पदमिति सुवचम् । शोभना च । सावसुलभाचेति विग्रहे सुदुर्लभेत्यर्थः । सुदुर्लभा आगतिः पुनरावृत्तिर्यया । जन्मछेत्रीति यावत् ।

**'यस्य नो पश्चिमं जन्म यदि वा शङ्करः स्वयम् ।**
**तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ॥'**

इति **ब्रह्माण्डपुराणात्** । यद्वा । असुलभा गतिर्दुर्लभं जन्म मानुषादि तच्छोभनं ययेत्यर्थः । उक्तञ्च **देवीभागवते**–

**'यैर्न श्रुतं भागवतं पुराणं नाराधिता यैः प्रकृतिः पुराणी ।**
**हुतं मुखे नैव धरामराणां तेषां वृथा जन्म गतं नराणाम् ॥'**

इति। **विष्णुभागवते** त्वत्रैव **'नाराधितो यैः पुरुषः पुराण'** इति द्वितीयचरणः पठ्यत इति भेदः। शोभनाऽसुरनायिकेत्यत्र शोभनानामसुराणां प्रह्लादादीनामित्यर्थं निर्वर्ण्य प्रकृते नामत्रयमपि सुवचम् ॥ १८४ ॥

### राजराजेश्वरी राज्यदायिनी राज्यवल्लभा।

राज्ञां देवराजादीनां ये राजानो ब्रह्मविष्णुरुद्रास्तेषामपीश्वरी। राजराजस्य कुबेरस्येश्वरी वा। राज्यं स्वाराज्यवैकुण्ठकैलासाधिपत्यादिकं दातुं शीलमस्याः। पूर्वोक्तानि राज्यानि वल्लभानि प्रियाणि यस्याः। राज्यशब्देन तत्पतयो राजानो वा कथ्यन्ते। अत एव श्रीनगरे तेषां वासः स्मर्यते। यदाह **दूर्वासः** –

**'मध्यक्षोण्याममुयोर्महेन्द्रनीलात्मकानि च सरांसि।**
**शातोदरीसहायान्भूपालानपि पुनः पुनः प्रणुमः॥'**

इति। अमुयोरित्यस्य त्रयोदशचतुर्दशप्रकारयोरित्यर्थः।

### राजत्कृपा राजपीठनिवेशितनिजाश्रिता ॥ १८५ ॥

राजन्ती शोभमाना कृपा यस्याः। राज्ञां नृपाणामिन्द्रादीनां च पीठेषु सिंहासनेषु निवेशिता निजा आश्रिता यया ॥ १८५ ॥

### राज्यलक्ष्मीः कोशनाथा चतुरङ्गबलेश्वरी।

राज्याभिमानिनी लक्ष्मी राज्यलक्ष्मीः। यस्या मन्त्रस्तन्त्रराजे प्रसिद्धः। कोशस्य भाण्डागारस्य दिव्यस्य अन्नमयादेर्वा नाथा स्वामिनी। चत्वारि हस्त्यश्वरथपादातरूपाण्यङ्गानि येषां तेषां बलानामीश्वरी। अङ्गान्येव बलं येषां तेऽङ्गबला व्यूहाः। चतुरवयवका ये व्यूहास्तेषामीशित्री वा अङ्गबलेश्वरशब्द एव वा व्यूहवाची। तेन द्विगुत्वान्ङीष्। चतुर्थव्यूहात्मेत्यर्थः। ते च वासुदेवाद्या वैष्णवेषु पुराणेष्विव शैवशाक्तेष्वपि पुराणेषु प्रसिद्धास्ते त इहोदाहार्याः। शरीरपुरुषः छन्दपुरुषो वेदपुरुषो महापुरुष इति **बह्वृचोपनिषदुक्ता** वा।

---

राज्ञां देवराजादीनां राजानः ब्रह्मादयः तेषां ईश्वरः परशिवस्य तस्य स्त्री। ईश्वर्यै इति ॥ सेवकानां राज्यदानं शीलं अस्या सा। दायिन्यै इति ॥ राज्यं जगत् साम्राज्यं वल्लभं प्रियं यस्याः सा। वल्लभायै इति ॥

राजन्ती कृपा यस्याः सा। कृपायै इति ॥ राज्ञां इन्द्रादीनां पीठेषु राज्यासनेषु निवेशिता निजाश्रिताः यया। अश्री(आश्रि)तायै इति ॥ १८५ ॥

राज्यसम्बन्धिनी या लक्ष्मीस्तद्रूपा। लक्ष्म्यै इति ॥ कोशानां भाण्डागाराणां धनसञ्चयानां नाथा स्वामिनी। नाथायै इति ॥ हस्त्यश्वरथपदत्यात्मकचतुरङ्गयुतबलेश्वरी नियन्त्री। ईश्वर्यै इति ॥

**साम्राज्यदायिनी सत्यसन्धा सागरमेखला ॥ १८६ ॥**

राजसूयेन यष्टा मण्डलेश्वरो वा राजाधिराजो वा सम्राट् । तस्य भावः साम्राज्यं तद्दत्ते ।

**'येनेष्टं राजसूयेन मण्डलस्येश्वरश्च यः ।**
**शास्ति यश्चाज्ञया राज्ञः स सम्राट्....॥'**

इत्य**ग्निपुराणीयकोशात्** । सत्ये अनुल्लङ्घ्ये सन्धे प्रतिज्ञामर्यादे यस्याः । सागराः समुद्रा एव मेखला काञ्ची यस्या भूमेः सा ॥ १८६ ॥

**दीक्षिता दैत्यशमनी सर्वलोकवशङ्करी ।**

धियं ज्ञानं क्षिणोति प्रापयतीति दीक्षा । '**अथातो दीक्षा कस्य स्विद्धेतोर्दीक्षित इत्याचक्षत**' इत्यारभ्य '**तं वा एतं धीक्षितं सन्तं दीक्षित इत्याचक्षत**' इत्यन्तादाथर्वण-**ब्राह्मणात्** ।

**'शिष्येभ्यो मन्त्रदानेन पापं क्षपयतीति वा ।**
**दीयते कृपया शिष्ये क्षीयते पापसञ्चयः ।**
**तेन दीक्षेति कथिता.........................।'**

इति **परानन्दतन्त्रात्** । सा अस्य सञ्जातेति दीक्षितस्तदभिन्ना । दैत्यानां भण्डादीनां शमनी नाशिका । सर्वान् लोकान् स्ववशे कुरुते । वशमिति मान्तमव्ययम् ।

प्रतियोगित्वाभावः **सर्वार्थदात्री सावित्री–**

सर्वेषां चतुर्णामर्थानां पुरुषार्थानां दात्री । तृन्नन्तयोगे '**न लोके**'ति षष्ठया एव निषेधात्कृद्योगलक्षणषष्ठ्याः '**तृजकाभ्या**'मिति समासनिषेधेऽपि शेषषष्ठ्या समासः । उक्तञ्च **देवीपुराणे–**

**'धर्मादींश्चिन्तितानर्थान्सर्वलोकेषु यच्छति ।**
**अतो देवी समाख्याता सर्वैः सर्वार्थसाधनी ॥'**

---

साम्राज्यं सार्वभौमत्वं ददातीति सा । दायिन्यै इति ॥ सत्ये अनुल्लंघ्ये सन्धे प्रतिज्ञामर्यादे यस्याः सा । सन्ध्यायै इति ॥ सागराः मेखलाः परिधीरूपाः यस्याः भूमेस्तद्रूपा । मेखलायै इति ॥ १८६ ॥

मन्त्रादिदानेन पापादि क्षपयतीति दीक्षा सा अस्यां सञ्जातेति सा । दीक्षितायै इति ॥ दैत्यानां शमनी नाशिका । शमन्यै इति ॥ सर्वेषां लोकानां वशं करोतीति सा । कर्यै इति ॥

सर्वेषां अर्थानां पुरुषार्थानां दानकर्त्री । दात्र्यै इति ॥ सवितुर्जगज्जनकस्येयं सावित्री । सावित्र्यै इति ॥

इति । सवितुर्जगत्प्रसूतेः परशिवस्येयं सावित्री । **'प्रजानां च प्रसवनात्सवितेति निगद्यत'** इति **विष्णुधर्मोत्तरात्** ।

**'सवितृप्रकाशकरणात्सावित्रीत्यभिधाभवेत्।**
**जगतः प्रसवित्रीति हेतुनानेन वापि च ॥'**

इति **भारद्वाजस्मृतेश्च** । **'सावित्री प्रसवस्थिते'**रिति **वासिष्ठरामायणाच्च** । **देवीपुराणे** तु–

**'त्रिदशैरर्चिता देवी वेदयोगेषु पूजिता ।**
**भावशुद्धस्वरूपा च सावित्री तेन सा समृता ॥'**

इत्युक्तम् । **देवीभागवते** तु–

**'स्रवणं स्यन्दनार्थे च धातुरेष निपात्यते ।**
**स्रवणे तेजसोत्पत्तिः सावित्री तेन कथ्यते ॥'**

इत्युक्तम् । इयं च पुष्करतीर्थाधिष्ठात्री देवता । तदुक्तं **पद्मपुराणे**–**'सावित्री पुष्करे नाम्ना तीर्थानां प्रवरे शुभ'** इति ॥

*अथ परिभाषायां षट्त्रिंशन्नामानि विभजते–*

***देहगुणाद्धवलेशाद्द्विस्तेरूपं दिवाभूरि ।***
***वारिगणेभाविगुणास्त्रिपदलताभावजववादाः ॥ २६ ॥***

**–सच्चिदानन्दरूपिणी ॥ १८७ ॥**

सत्त्वं चित्त्वमानन्दश्च रूपं स्वरूपमत एव विद्यान्तरेषूपसंहार्यमस्या इति सच्चिदानन्दरूपिणी ॥ १८७ ॥

**इति भास्कररायेण कृते सौभाग्यभास्करे ।**
**सप्तमेन शतेनाभूदष्टमी भोगदाकला ॥ ७०० ॥**

**इति श्री सौभाग्यभास्कराभिख्ये ललिता सहस्रनाम भाष्ये**
**सप्तमशतकं नामाष्टमीकला ॥ ८ ॥**



---

सत् चित् आनन्दश्च रूपं अस्या इति । रूपिण्यै इति ॥ १८७ ॥

# अष्टमशतकं नाम नवमी विश्वा कला

**देशकालापरिच्छिन्ना सर्वगा सर्वमोहिनी ।**

देशकालाभ्यामपरिच्छिन्ना तत्कृतपरिच्छेदाभाववती । उक्तञ्च **योगसूत्रे**—'**स पूर्वेषामपि गुरुः कालेनानवच्छेदा**'दिति । स ईश्वरः पूर्वेषां ब्रह्मादीनामपि गुरुः पिता । कालेनानवच्छिन्नत्वादित्यर्थः । इह नास्तीति प्रतीतिविषयोऽत्यन्ताभावो देशतः परिच्छेदः । पूर्वं नासीदग्रे न भविष्यतीति प्रतीतिविषयौ प्रागभावध्वंसौ कालतः परिच्छेदः । अधुना नास्तीति त्वत्यन्ताभाव एव । देशे वृत्तौ कालस्य काले वृत्तौ देशस्य चावच्छेदकत्वनियमादिदानीं गोष्ठे गौर्न मन्दुरायामिति प्रतीतेरिहाधुनेत्यनयोरेकस्याधिकरणत्वेनान्यस्यावच्छेदकत्वेनोल्लेखाय प्रयोग इति ग्रन्थान्तरेषु विस्तरः । ईदृशपरिच्छेदाभावो नाम तत्प्रतियोगित्वाभावः प्रतियोगित्वसम्बन्धेन तयोरभावो वा । तद्वतीत्यर्थः । तदुक्तं **सौरसंहितायाम्**—

**'पुमानाकाशवद्व्यापी स्वातिरिक्तं मृषा यतः ।**
**देशतः कालतश्चापि ह्यनन्तो वस्तुतः स्मृतः ॥'**

इति । अनन्तशब्दस्य परिच्छेदाभाववानित्यर्थः । नन्वत्र वस्तुतः परिच्छेदाभावोऽपि स्मर्यते। अस्ति हि अयमयं नेति प्रतीतिविषयोऽन्योन्याभावो नाम वस्तुतः परिच्छेदः । तत्प्रतियोगित्वाभावः किमिति नोक्त इति चेत् । तस्य वादिविप्रतिपत्तिविषयत्वेन बहुभिर्नामभिः समर्थयिष्यमाणत्वेन पृथङ्निर्देश्यमाणत्वादिति गृहाण । तदेवाह सर्वगा । सर्वं वस्तुमात्रं गच्छत्यभेदेन प्राप्नोतीति सर्वगा । '**अन्तात्यन्ताध्वे**'त्यादिना डः । तदुक्तं **वराहपुराणे** त्रिमूर्तिषु सृष्टिनामिकां श्वेतपर्वते तपश्चरन्तीं प्रति ब्रह्मणा वरो व्रियतामित्युक्ते देव्या वचनम्—

**'भगवन्नेकदेशेऽहं नोत्सहे स्थातुमञ्जसा ।**
**अतोऽर्थं त्वां वरं याचे सर्वगत्वमभीप्सती ॥**
**एवमुक्तस्तदा ब्रह्मा सृष्ट्यै देव्यै प्रजापतिः ।**
**उवाच सर्वरूपेत्वं सर्वगासि भविष्यसि ॥'**

इति । अत्र सर्वगत्वविवरणरूपस्य सर्वरूपे इति सम्बोधनस्य सर्वाभिन्ने इत्यर्थकत्वात्परिकराङ्कुरालङ्कारः ।सर्वाभिन्नत्वं च सिद्धमेवेत्यसीत्युक्तम् । अत एव साध्यत्व-

---

देशकालाभ्यां न परिच्छिन्ना । अपरिच्छिन्नायै इति ॥ सर्वजगत्प्रकाश्यत्वेन गच्छतीति सा । सर्वगायै इति ॥ सर्वान् ब्रह्मादीनपि मोहयतीति सा । मोहिन्यै इति ॥

द्योतकस्य भविष्यसीत्यस्य सर्वक्षेत्रेषु तव सगुणमूर्तयो भविष्यन्तीत्येतत्परत्वम् । अतः सर्वक्षेत्रेषु विद्यमानेत्यप्यर्थः । सर्वान्तर्यामिणीति वा । ईदृशार्थत्रयमप्यभिप्रेत्योक्तं **देवीपुराणे**—

**'देव्या वा एष सिद्धान्तः परमार्थो महामते ।**
**एषा वेदाश्च यज्ञाश्च स्वर्गश्चैव न संशयः ॥**
**देव्या व्याप्तमिदं सर्वं जगत्स्थावरजङ्गमम् ।**
**ईड्यते पूज्यते देवी अन्नपानात्मिका च सा ॥**
**सर्वत्र शाङ्करी देवी तनुभिर्नामभिश्च सा ।**
**वृक्षेषूर्व्यां तथा वायौ व्योम्न्यप्स्वग्नौ च सर्वगा ॥**
**एवंविधा ह्यसौ देवी सदा पूज्या विधानतः ।**
**ईदृशीं वेत्ति यस्त्वेनां स तस्यामेव लीयते ॥'**

इति । ननु नित्यत्वानित्यत्वजडत्वचित्त्वादिविरुद्धधर्मसमावेशात्कथमन्योन्याभाव-प्रतियोगित्वस्य ब्रह्मण्यभाव इत्यत आह । सर्वमोहिनी सर्वान्प्राकृतजनान् भेदभाने सत्यत्वं मन्यमानान् मोहयति अद्वैतविषयकज्ञानविधुरान् कुरुते इति तथा । ब्रह्मणो जगतश्च भेदभानस्य मोहमात्रत्वाद्वस्तुतोऽपरिच्छेद्यत्वे न कापि क्षतिरिति भावः । उक्तञ्च **कूर्मपुराणे** शिवेन—

**'इयं सा परमा शक्तिर्मन्मयी ब्रह्मरूपिणी ।**
**माया मम प्रियानन्ता ययेदं मोहितं जगत् ॥**
**अनयैतज्जगत्सर्वं सदेवासुरमानुषम् ।**
**मोहयामि द्विजश्रेष्ठाः सृजामि विसृजामि च ॥'**

इति । अत्रैव हिमवन्तंप्रति देवीवचनम्—

**'यानि शास्त्राणि दृश्यन्ते लोकेऽस्मिन्विविधानि तु ।**
**श्रुतिस्मृतिविरुद्धानि द्वैतवादरतानि च ॥**
**कापालं भैरवं चैव शाकलं गौतमं मतम् ।**
**एवंविधानि चान्यानि मोहनार्थानि तानि तु ॥**
**ये कुशास्त्राभियोगेन मोहयन्तीव मानवान् ।**
**मया सृष्टानि शास्त्राणि मोहायैषां भवान्तरे ॥'**

इति । **सूतसंहितायामपि**—

**'प्रसादहीनाः पापिष्ठा मोहिता मायया जनाः ।**
**नैव जानन्ति देवेशं जन्मनाशादिपीडिताः ॥'**

इति । सर्वं त्रैलोक्यं मोहयतीति वा । त्रैलोक्यमोहनचक्रविद्योभयरूपेति यावत् ।

**सरस्वती शास्त्रमयी गुहाम्बा गुह्यरूपिणी ॥ १८८ ॥**

ननु घटपटयोर्भेदभानस्यापि तुल्यन्यायेन मोहमात्रत्वात्तयोरप्यभेद एवास्त्वत आह–सरस्वती । ज्ञानाभिमानिनी देवता ज्ञानसमुद्ररूपेत्यर्थः । विषयानवच्छिन्न–ज्ञानरूपेति यावत् । घटादिजडपदार्थनिर्णये मोहस्यायोगेऽपि **'अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तव'** इति वचनेन ज्ञानरूपाद्वैतविषये ज्ञानावरणस्यावश्यकत्वात्तन्निर्णये सर्वानर्थनिरासकपरमपुरुषार्थरूपे पापिनां भवत्प्रसादविधुराणां मोह आवश्यक इति भावः । यद्वा कन्याः प्रक्रम्य **'द्विवर्षा तु सरस्वती'**ति **धौम्यवचना**त्तादृशकन्यारूपेत्यप्यर्थः । **भरद्वाजस्मृता**वपि–

**'या वसेत्प्राणिजिह्वासु सदा वागुपवर्तनात् ।**
**सरस्वतीति नाम्नेयं समाख्याता महर्षिभिः ॥'**

इति । **'सरणात्सर्वदृष्टीनां कथितैषा सरस्वती'**ति **वासिष्ठरामायणे** च । ननु नायं दिङ्मोहादितुल्यो मोहः । विरुद्धधर्मसमावेशादियुक्तिसहस्रैर्भेदस्यानुमीयमानत्वादित्यत आह–शास्त्रमयी । प्रधानाऽर्थो यं मयट् । **'सर्वं खल्विदं ब्रह्मे'**त्यादिशास्त्रप्रधाना । अयं भावः । शास्त्रमेवेह प्राधान्येन गमकं नत्वनुमानादि । तस्य शास्त्रतो दुर्बलत्वात् । अत एव **'शास्त्रयोनित्वादि'**ति **ब्रह्मसूत्रम्** । वेदैकवेद्यत्वबोधकश्रुतयश्च **'तं त्वौपनिषदं पुरुषं पृच्छामी'**त्यादयः । ततश्च सर्वस्य वस्तुजातस्य ब्रह्माभेदे शास्त्रेण बोधिते मन्त्रे तृतीयकूटेनाप्यनूदिते तद्विरोधादनुमितेरेव भ्रमत्वं कल्प्यम् । वेदन्तानामैदंपर्येण ब्रह्मैकनिर्णयाय प्रवृत्तेः । अत एव तादृशज्योतिःशास्त्रविरोधाच्चन्द्रप्रादेशिकत्व-विषयकस्य सार्वजनीनप्रत्यक्षस्यापि भ्रमत्वं कल्पत इति शास्त्रात्मकस्वावयवशालिवि-ग्रहत्वाच्छास्त्रविकारेत्यप्यर्थः । तदुक्तं **ब्रह्माण्डे**–

**'निश्वासमारुतैर्वेदानृचं साम यजुस्तथा ।**
**अथर्वाणमहामन्त्रानभिमानेन चासृजत् ॥**
**काव्यानाट्याद्यलङ्कारानसृजन्मधुरोक्तिभिः ।**
**सरस्वती च जिह्वायाः ससर्ज सकलप्रसूः ॥**
**चुलकेन चकोराक्षी वेदाङ्गानि ससर्ज षट् ।**
**मीमासां न्यायशास्त्रं च पुराणं धर्मसंहिताम् ॥**

---

सरस्वती ज्ञानाभिमानिनी, तद्रूपा । सरस्वत्यै इति ॥ शास्त्रमयी प्रतिपाद्यत्व–सम्बन्धेन शास्त्रप्रचुरा । मय्यै इति ॥ गुहस्य स्कन्दस्याम्बा माता । अम्बायै इति ॥ गुह्यं अतिगुप्तं रूपं अस्याः सा । रूपिण्यै इति ॥ १८८ ॥

**कण्ठोर्ध्वरेखातन्त्रेण ससर्ज सकलाम्बिका ।**
**आयुर्वेदं धनुर्वेदं कण्ठमध्यस्थरेखया ॥**
**चतुःषष्टिं च विद्यानां कण्टकूपभुवासृजत् ।**
**तन्त्राणि निखिलाङ्गेभ्यो दोर्मूले मदनागमम् ॥'**

इत्यादि । ननु भेदभानं न केवलं लौकिकं चन्द्रप्रादेशिकत्वज्ञानवत्, किन्तु शास्त्रीयमेवेति शङ्कते । गुहाम्बा गुहायां स्थिताम्बा । छायारूपेति यावत् । मध्यमपदलोपी समासः ।

**'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे ।**
**छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेता ॥'**

इति **श्रुतौ** गुहाप्रविष्टत्वेन वर्णितयोश्छायातपयोः परस्परविलक्षणतया द्विवचनबलाच्च भेदसिद्धिरिति भावः । यद्वा गुहस्य स्कन्दस्याम्बा माता । तस्यास्तारकासुरवधादिकार्यार्थं देवैः प्रार्थनं ततः शिवशक्त्योः समागमस्तत्र विघ्नाचरणं तेन कोपशापादि । ततोऽग्निगङ्गाशरस्तम्बादियोगेन स्कन्दोत्पत्तिरित्यादिकथायाः शास्त्रैकगम्याया एव भेदसाधकत्वादद्वैत**श्रुती**नामेवोपचरितार्थता वक्तव्या । **'यजमानः प्रस्तर'** इति **श्रुते**रिव प्रत्यक्षविरोधादिति भावः । सत्यमयं व्यवहारः सर्वोऽपि व्यावहारिकसत्यत्वावलम्बनः । अद्वैतं तु पारमार्थिकं सत्यत्वमालम्बत इत्याशयेन समाधत्ते । गुह्यरूपिणी । गुहायां स्थितं गुह्यं परमरहस्यं व्यावहारिकदृष्ट्ययोग्यं ज्ञानमेव रूपमस्याः । उक्तञ्च **सूतसंहितायाम्**—

**'गुरुमूर्तिधरां गुह्यां गुह्यविज्ञानरूपिणीम् ।**
**गुह्यभक्तजनप्रीतां गुहायां निहितां नुमः ॥'**

इति । तथा चैकस्यैव ब्रह्मणो द्वे रूपे अवलम्ब्य द्विविधमपि शास्त्रमुपपद्यत इति भावः । गुह्योपनिषदेव रूपमस्या इति वा । तदुक्तं **कौर्मे** विभूतियोगवर्णनावसरे **'सर्वोपनिषदां देवि गुह्योपनिषदुच्यसे'** इति ॥ १८८ ॥

ननु तर्हि शास्त्रद्वयप्रामाण्यात् भेदाभेदप्रसक्तिरिति नाद्वैतं सिध्येदित्यत आह—

**सर्वोपाधिविनिर्मुक्ता सदाशिवपतिव्रता ।**

सर्वैः स्कन्दजनकत्वच्छायातपत्वादिभिरुपाधिभिः सखण्डैरखण्डैश्च धर्मैर्विशिष्य निःशेषेण मुक्ता त्यक्ता धर्मसम्बन्धशून्या । ततश्च धर्माणां स्वसम्बन्धाभाववति भासमानः सम्बन्धः शुक्तौ रजततादात्म्यमिव मिथ्यैवेति शास्त्रस्य सत्यावेदकत्वरूपप्रामाण्यनिर्वाहाय

---

सर्वैरुपाधिभिर्विशेषेण निर्मुक्ता । मुक्तायै इति ॥ सदाशिवस्य पतिव्रता । पतिव्रतायै इति ।

सर्वेषां वेदान्तानामद्वैते पारमार्थिके परब्रह्मणि साक्षात्परम्परया वा तात्पर्यस्य वक्तव्यत्वाद्भेदप्रतिपादकशास्त्रस्य पञ्चषाङ्गुलग्रासावेदकोपरागशास्त्रस्येव व्यावहारिकदृष्ट्यैव प्रवृत्तिरिति न भेदाभेदयोः समकक्ष्यतेति भावः । तार्किकप्रसिद्धोपाधिशून्या तादृशसद्धेतुगम्येति वा । नन्वेवंसति त्रिपुरसुन्दर्याः शक्तिरूपत्वात्तस्याश्च पराहन्ताधर्मरूपत्वाविशेषेण मिथ्यात्वप्रसङ्ग इत्यत आह—सदेति । शिव एव पतिरिति व्रतं नियमः सदा सार्वकालिको यस्याः । शिवस्य पत्नीत्वं शिववदेव सदातनं कालत्रयाबाध्यमिति यावत् । इतरे तु पदार्थाः कल्पितास्तेषु धर्मत्वमपि दृश्यत्वाविशेषात्कल्पितमेव । शक्तौ तु धर्मत्वमात्रं कल्पितं न तु शक्तिरपि कल्पिता । अत एव सा ब्रह्मकोटिरिति भावः । सदाशिवस्य पतिव्रतेति वा । ननु कथमेतदवगम्यते । पराहन्तातिरिक्ता एव धर्माः कल्पिता इति । प्रत्युत विनिगमनाविरहेण सर्वेषामेव धर्माणां मिथ्यात्वमेव वा [ऽसत्यत्वमेव] वा स्यादित्यत आह ।

**सम्प्रदायेश्वरी साध्वी गुरुमण्डलरूपिणी ॥ १८९ ॥**

सम्यक् शिष्येभ्यः प्रदीयत इति सम्प्रदायः । तत्रेश्वरी समर्था समर्थनक्षमा । न्यायैः सम्प्रदायेन चैतदवगम्यत इत्यर्थः । यथा हि निर्धर्मके ब्रह्मणि वियदादयो धर्माः कल्पिताः वियदाद्यवच्छिन्नेऽपि चैतन्यै पुनःशब्दविषयत्वद्रव्यत्वधर्मत्वादयस्तदवच्छिन्नचैतन्येष्वपि पुनर्धर्मत्वादयः कल्पितास्तथा धर्मत्वस्यापि धर्मित्वस्येव दृश्यस्य निर्धर्मकेऽपि ब्रह्मणि सुकल्पत्वादेकस्यैव धर्मधर्मिभावे न्यायेनैव सिद्धे तत्र शिव एव धर्मी शक्तिरेव धर्म इति तु सम्प्रदायादवगन्तव्यमिति भावः । ब्रह्मैव शक्यप्रपञ्चप्रतियोगित्वेन शक्तिरित्युच्यत इति साम्प्रदायिकाः । सम्प्रदायसंज्ञको मन्त्रार्थोऽपि **योगिनीहृदये दत्तात्रेयसंहितायां** च प्रसिद्धः । स च कादिविद्यायामेव स्वरस इति तु **वरिवस्यारहस्य** एवोपपादितम**स्माभिः** । तदीश्वरीत्यर्थो वा । युक्तं चैतदित्याह । साधु उचितम् । दाहकत्वादिशक्तेर्वह्निधर्मताया एव लोके दर्शनात्पराहन्ताशक्तेर्धर्मत्वमेव वक्तुमुचितमिति भावः । नपुंसकमिदं नाम । तेन 'साधुने नम' इति प्रयोगः । तेन साध्वी सद्गतिदायिनीत्यनेन न पौनरुक्त्यम् । तस्य धर्मस्य द्वे रूपे इत्याह । ई तुर्यस्वरूपमेकाक्षरं कामकलासंज्ञकमिदं नाम । विष्णुपरात्प्रथमस्वररूपादकारात् अस्य 'भगिनी ई इति विग्रहे पुंयोगलक्षणे ङीषि **'यस्येति चे'**त्यकारलोपेऽवशिष्टात्प्रत्ययमात्रात्परतः प्राप्तस्य सुपो हल्ङ्यादिना लोपे रूपसिद्धिः । यैनम इति प्रयोगः न पुनर्भार्याभर्तृभाव एव पुंयोगः। पितृपुत्रीभावस्यापि पुंयोगपदेन स्वीकृतत्वात् । सुभद्रा

---

सम्यक् प्रदीयते शिष्येभ्यः । तस्य सम्प्रदायस्येश्वरी स्वामिनी । ईश्वर्यै इति ॥ साधु उचितरूपा ॥ नपुंसकं नाम । साधुने इति । अस्य परशिवस्य स्त्री । ईर्यै इति ॥ गुरूणां यन्मण्डलं ओघत्रयरूपं तस्य रूपमस्याः । रूपिण्यै इति ॥ १८९ ॥

वसुदेवी स्यादिति । '**नारायणीसहचराय नमः शिवाये**'त्यत्र नारायणस्य भगिनीत्येव व्याख्यानाच्च। एवं शक्रदुहितरि जयन्तस्य भगिनीति व्युत्पत्त्यैव जयन्तीति प्रसिद्धेश्च। एकस्मिन्धर्मिणि स्थितयोर्द्वयोर्धर्मयोः सोदरताया एव युक्तत्वात्। विष्णुसम्बन्धि-भगिनीत्वविशिष्टेत्यक्षरार्थः। विष्णुरूपा तद्भगिनीरूपा चेति यावत्। एकमेव ब्रह्म धर्मो धर्मीति रूपद्वयं प्रापत्। तत्र धर्मः पुनः पुमान्स्त्रीति द्विधाभवत्। तत्र स्त्री परशिवमहिषीत्वं पुमान् विष्णुः सकलजगदुपादानतां प्रापत्। एतत्त्रयमपि मिलित्वै-कमखण्डं ब्रह्मेति शैवमतप्रक्रिया **कूर्मपुराणा**द्यनुयायिनी **रत्नत्रयपरीक्षायां दीक्षितै**-र्विस्तरेण निरूपितानुसन्धेया। अस्याश्च कामकलायाः स्वरूपं '**शून्याकाराद्विस-र्गान्ताद्बिन्दुप्रस्यन्दसंविद**' इत्यादिना **वामकेश्वरतन्त्रे**, '**ईकाराद्विश्वकर्त्रीयं माया तुर्यात्मिका प्रिया**'इत्यादिना **ज्ञानार्णवे**, '**ईकारः समनुर्ज्ञेयो रक्तवर्णः प्रतापवा**'नित्यादिना **वायुपुराणे** च **कामकलाविलासादौ** च प्रपञ्चितम्। **सौन्दर्यलहर्याम्**– '**मुखं बिन्दुं कृत्वे**'ति श्लोके स्पष्टकल्पमुक्तं **भगवत्पादैः**। तत्स्वरूपनिष्कर्षस्तु तन्मुखादेवानुसन्धेयो रहस्यतम-त्वादित्याह। गुरवः परमशिवादिस्वस्वगुरुपर्यन्तास्तेषां मण्डलं परम्परा सैव रूपं निरूपणमस्याः अविच्छिन्नगुरुपारम्पर्यक्रमागतमिदं रहस्यं न तु पुस्तके लिख्यत इति भावः। अत एवोक्तं **योगिनीहृदये**–'**कर्णात्कर्णोपदेशेन सम्प्राप्तमवनीतल**' इति ॥ १८९ ॥

रहस्यत्वमेव चतुर्भिराह–

**कुलोत्तीर्णा भगाराध्या माया मधुमती मही ।**

कुलमिन्द्रियसमूहमुत्तीर्णा अतिक्रान्ता। तैरगम्यत्वात्। भगे सवितृमण्डले आरा-ध्योपास्या। सवितृमण्डलस्य रहस्योपास्त्यधिकरणत्वात्। भगेन एकाकारेण वाराध्या '**यदेकादशमाधारं बीजं कोणत्रयात्मक**'मिति वचनात्। प्रसिद्धतरस्याप्यप्रकटीकरणानुकूला शक्तिर्माया। **देवीपुराणे** तु–

'**विचित्रकार्यकरणा अचिन्तितफलप्रदा ।**
**स्वप्नेन्द्रजालवल्लोके माया तेन प्रकीर्तिता ॥**'

इत्युक्तम्। इदमेव च विस्तरेणोक्तं **वराहपुराणे** पृथिवीं प्रति विष्णुवाक्यम्–

'**पर्जन्यो वर्षते तत्र जलपूरश्च जायते ।**
**दिशो निर्जलतां यान्ति सैषा माया मम प्रिये ॥**
**सोमोऽपक्षीयते पक्षे पक्षे चापि विवर्धते ।**
**अमायां दृश्यते नैव मायेयं मम सुन्दरि ॥**'

---

कुलं सजातीयसमूहो जगत्, तदुत्तीर्णा अतिक्रान्ता। उत्तीर्णायै इति ॥ भगे सूर्यमण्डले आरा-ध्या। आराध्यायै इति ॥ शिवस्य दुर्घटसम्पादने शक्तिर्माया। मायायै इति ॥ मधुवत्प्रियैकर-सत्वान्मधु आत्मरूपं तदविमर्शविषयत्वेनास्या अस्तीति सा। मत्यै इति ॥ पृथ्वीवत्सर्वाधा-रत्वान्मही। मह्यै इति ॥

इत्यारभ्य

**'मम मायाबलं ह्येतद्येन तिष्ठाम्यहं जले ।**
**प्रजापतिं च रुद्रं च सृजामि च हरामि च ॥'**

इत्यन्तैः सप्तत्रिंशता श्लोकैर्विचित्रकार्यकर्तृत्वं स्वावच्छेदिकाया मायाया एवेति प्रतिपादितम् । तादृशकार्यमेव च मायापदशक्यतावच्छेदकम् । **भक्तितन्त्रे** तु **'तच्छक्तिर्माया जडसामान्या'**दिति सूत्रे भगवतः शक्तिरेव मायेत्युक्तम् । मधु मद्यं पुष्परसः क्षौद्रं वा पूजनादिसमये तद्वती । **'महत्यै वा एतद्देवतायै रूपं यन्मध्वि'**ति **श्रुतेः** । यद्वा **'आदित्यो वै देवमध्वि'**ति **श्रुतौ** विहितमधुमत्याख्यविद्याविशेषरूपा । अथवा **योगशास्त्रे** चतुर्विधयोगिन उक्तास्तेषु चतुर्थो गतिक्रान्ताभाव इत्युच्यते । स च पूर्वेभ्य उत्तमस्तस्यापि सप्त भूमिका अतिक्रमणीयाः सन्ति । तासु चरमा भूमिका मधुमतीत्युच्यते तद्रूपेत्यर्थः । तादृशभूमिकायामुत्पन्नस्यैव ज्ञानस्य तारकत्वात्संसारतारिकेति यावत् । तदिदं **'तारकं सर्वविषयं सर्वथा विषयक्रमं चेति विवेकजं ज्ञानमि'**ति **योगसूत्रभाष्या**दिषु स्पष्टम् । नदीविशेषरूपा वा । ईदृशरहस्यरूपापि पृथ्वीवदतिप्रकटेत्याह । मही मह्याख्यनदीविशेषरूपा वा । **देवीपुराणे** तु **'महद्व्याप्य स्थिता सर्वं महीति प्रकृतिर्मते'**त्युक्तम् ।

## गणाम्बा गुह्यकाराध्या कोमलाङ्गी गुरुप्रिया ॥ १९० ॥

गणस्य प्रमथादेर्गजाननस्य वाम्बा । गुह्यकैर्देवविशेषैरज्ञातरहस्यस्थले वा आराध्या । कोमलानि सुकुमाराण्यङ्गानि यस्याः । गुरुः प्रियो यस्याः । गुरुपत्न्यभिन्ना वा । जगद्गुरोः शिवस्य पत्नी वा ॥ १९० ॥

## स्वतन्त्रा सर्वतन्त्रेशी दक्षिणामूर्तिरूपिणी ।

कारकपारतन्त्र्यमन्तरेणैव सर्वकर्तृत्वात्स्वतन्त्रा स्वतन्त्राख्यनित्यातन्त्ररूपा वा । स्वान्यात्मीयानि तन्त्राणि यस्या वा । शैव-वैष्णव-गाणपतादितन्त्रेष्वप्यस्या एव विभूतीनांप्रतिपादनादात्मीयत्वमिति भावः । स्व आत्मीयः स्वाधीनः परशिवस्तत्तन्त्रा तदधीना वा । परस्पराधीनेत्यर्थः । तदुक्तं **कालिकापुराणे** कामरूपक्षेत्रमाहात्म्ये—

**'नित्यं वसति तत्रापि पार्वत्या सह नर्मभिः ।**
**मध्ये देवीगृहं तत्र तदधीनस्तु शङ्करः ॥**
**ईशान्यां नाटके शैले शङ्करस्य सदाश्रयम् ।**
**नित्यं वसति तत्रेशस्तदधीना तु पार्वति ॥'**

---

गणस्य गजाननस्याम्बा । अम्बायै इति ॥ गुह्यकैर्यक्षैराराध्या । आराध्यायै इति ॥ कोमलान्यङ्गानि यस्याः सा । अङ्ग्यै इति ॥ गुरोर्जगद्गुरोः शिवस्य प्रिया । प्रियायै इति ॥ १९० ॥

सृष्ट्यादावनन्यमुखप्रेक्षित्वात्स्वतन्त्रा । स्वतन्त्रायै इति ॥ सर्वेषां वैष्णवशैवादीनां तन्त्राणां ईशी प्रणेत्री । ईश्यै इति ॥ दक्षिणामूर्तेः शिवावतारस्य रूपमस्याः । रूपिण्यै इति ॥

इति । सर्वाणि चतुःषष्टिसंख्याकानि तन्त्राणीष्टे समर्थयति । शिवस्य दक्षिणाभिमुखी मूर्तिर्ब्रह्मनारायणादेरध्यापकत्वेन प्रसिद्धा । यस्या मन्त्रास्तन्त्रेषु प्रसिद्धाः स एव रूपमस्याः ।

**सनकादिसमाराध्या शिवज्ञानप्रदायिनी ॥ १९१ ॥**

सनकसनन्दनादिभिः सम्यगाराध्योपास्या । अत एव तेषां गुरुपरम्परायां गणना । तदुक्तं **ब्रह्माण्डे**–

**'त्वमेवानादिरखिला कार्यकारणरूपिणी ।**
**त्वामेव हि विचिन्वन्ति योगिनः सनकादयः ॥'**

इति । शिवविषयकं ज्ञानं प्रकर्षेण दत्ते । तदुक्तं **वासिष्ठरामायणे**–

**'स्पन्देन लभ्यते वायुर्वह्निरौष्ण्येन लभ्यते ।**
**चिन्मात्रममलं शान्तं शिव इत्युदितं तु यत् ॥**
**यत्स्पन्दमयशक्त्यैव लक्ष्यते नान्यथा किल ।'**

इति । शिवो ज्ञानप्रदायी यस्या वा । अत एव **वराहपुराणे** त्रिमूर्तिं प्रकृत्य '**एतास्तिस्रोऽपि सिध्यन्ति यो रुद्रं वेत्ति तत्त्वत**' इति ॥ १९१ ॥

**चित्कलानन्दकलिका प्रेमरूपा प्रियङ्करी ।**

चिदेव कला सच्चिदानन्दात्मनो ब्रह्मण एकदेश इव यस्यां सा । यद्वा अन्तःकरणोपाधिकं चैतन्यं निरुपाधिकायाश्चित एकदेश इति । '**ममैवांशो जीवलोके जीवभूतः सनातन**' इति **स्मृतेः** । **पद्मपुराणे**ऽपि देवीमूर्तिगणनप्रकरणे-'**चित्तेषु चित्कला नाम शक्तिः सर्वशरीरिणा**'मिति । एवमेंवानन्द एव कलैकदेश इव यस्याः । **शोषाद्विभाषे**'ति 'कप्रत्ययः । जीवगतानन्दैकदेशरूपा वा । स्वार्थे कः । '**एतस्यैवानन्दस्यान्यानि भूतानि मात्रामुपजीवन्ती**'ति **श्रुतेः** । आनन्दमयः कोरको वा । '**कलिका कोरकः पुमा**'निति **कोशः** । प्रेम स्नेहो भक्तिरेव स्वरूपं यस्याः । आयुर्घृतमितिवद्रूपाभिव्यक्तिजनकेऽपि रूपपदप्रयोगः । प्रियं करोतीति प्रियङ्करी ।

**नामपारायणप्रीता नन्दिविद्या नटेश्वरी ॥ १९२ ॥**

---

सनकादिभिः सम्यगात्माऽभेदभावनेनाराध्या । आराध्यायै इति ॥ शिवविषयकं ज्ञानं प्रददाति भक्तेभ्य इति सा । प्रदायिन्यै इति ॥ १९१ ॥

चितः ज्ञानरूपिणः शिवस्य कलेव कलाशक्तिः । कलायै इति ॥ आनन्दमयि- कलिका कोरकः । कलिकायै इति ॥ प्रेम प्रीतिः तद्रूपं स्याः सा । भक्तविषयकप्रेममयीति भावः । रूपायै इति ॥ भक्तेषु प्रियं करोतीति सा । कर्यै इति ॥

षट्त्रिंशदुत्तरसप्तशताधिकविंशतिसहस्रमन्त्रावृत्तिरूपं यन्नामपारायणं तेन प्रीता । प्रीतायै इति ॥ नन्दिना नन्दिकेश्वरेण उपासिता या विद्या । विद्यायै इति ॥ नटेश्वरः परशिवः तस्येयम् । ईश्वर्यै इति ॥ १९२ ॥

अआइईत्यारभ्य क्षःक्षा इत्यन्तानि भगवत्या नामानि । अकार एकः कंकारादयः पञ्चत्रिंशच्चेत्येवं षट्त्रिंशदक्षराणि । षट्त्रिंशद्वर्षरूपाणि तेष्वेकैकस्य षोडशभिः स्वरैर्योगे क्रमेण तावन्तो मासाः । तेन षट्सप्तत्युत्तराणि पञ्चशतानि वर्णानि भवन्ति । एतानि प्रथमाक्षराणि । एष्वेकैकं प्रथमं कृत्वा द्वितीयवर्णस्थाने षट्त्रिंशत् क्रमेण निक्षिपेत् । अन्ते च आई इति पल्लवं योजयेत् । ततश्च विंशतिसहस्राणि सप्तशतानि षट्त्रिंशच्च नामानि भवन्ति । तदुक्तम्—

**'आईपल्लवितैः परस्परयुतैर्द्वित्रिक्रमाद्यक्षरैः**
**कादिक्षान्तगतैः स्वरादिभिरथ क्षान्तैश्च तैः सस्वरैः ।**
**नामानि त्रिपुरे भवन्ति खलु यान्यत्यन्तगोप्यानि ते**
**तेभ्यो भैरवपत्नि विंशतिसहस्रेभ्यः परेभ्यो नमः ॥'**

इति । **देवीभागवते**ऽपि तृतीयस्कन्धे—

**'अकारादिक्षकारान्तैः स्वरैर्वर्णैस्तु योजितैः ।**
**असंख्येयानि नामानि भवन्ति रघुनन्दन ॥'**

इति । तेषां च पारायणं पञ्चधोक्तं **कादिमते**— **'दिनतो वारतः पक्षान्मासात्षट्त्रिंशता दिनै'**रित्यादिना । तदिदं नामपारायणाख्यं कर्म । सहस्रनामपाठेऽपि च तथा । योगरूढ्या पूर्वस्येव यौगिकवृत्त्या परस्याप्युपस्थितेः । ताभ्यां प्रीता ।

**'मामर्चयतु वा मा वा विद्यां जपतु वा न वा ।**
**कीर्तयेन्नामसाहस्रमिदं मत्प्रीतये सदा ॥'**

इति वचनात् । नन्दिनो नन्दिकेश्वरस्य विद्या तदुपासितविद्या नटेश्वरस्य चिदम्बर-नटस्येयं तदनुकारिणी । यदाहुरभियुक्ताः—

**'जङ्घानकाण्डोरुनालो नखकिरणलसत्केसरालीकरालः**
**प्रत्यग्रालक्तकाभाप्रसरकिसलयो मञ्जुमञ्जीरभृङ्गः ।**
**भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापी-**
**सम्भूताम्भोजशोभां विदधदभिनवोद्दण्डपादो भवान्याः ॥'**

इति ॥ १९२ ॥

## मिथ्याजगदधिष्ठाना—

मिथ्यारूपस्य जगतोऽधिष्ठानं भानाधिकरणं रजतस्येव शुक्तिः । **'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः'** । **'नेह नानास्ति किञ्चने'**त्यादिश्रुतेः । **'सर्वं खल्विदमेवाहं नान्यदस्ति सनातन'**मिति **देवीभागवतात्** । **'यत्र त्रिसर्गो मृषे'**ति **विष्णुभागवता**च्च । गुणत्रयापचय-

---

मिथ्यारूपं जगत अधिष्ठानं भानाधिकरणं चैतन्यं यस्याः सा । अधिष्ठानायै इति ॥

विवक्षया स्त्रीलिङ्गम् । यद्वा अधिष्ठाशब्द एवाधिष्ठानपरः । ततश्च जगदधिष्ठारूपं ब्रह्मैव अनः प्राणो यस्या इति विग्रहः । यद्वा अधिष्ठानशब्दो मत्वर्थीयाच्प्रत्ययेनाधेयपरः । तेन मिथ्याजगदधिष्ठानमधिष्ठितं यस्या इति विग्रहः । वस्तुतस्तु जगतो ब्रह्मपरिणामकत्वं स्वीकुर्वतां तान्त्रिकाणां मते जगतः सत्यत्वमेव मृद्घटयोरिव ब्रह्मजगतोरत्यन्ताभेदेन ब्रह्मणः सत्यत्वेन जगतोऽपि सत्यत्वावश्यंभावात् भेदमात्रस्य मिथ्यात्वस्वीकारेणाद्वैतश्रुतीनामखिलानां निर्वाहः । भेदस्य मिथ्यात्वादेव भेदघटिताधाराधेयभावसम्बन्धोऽपि मिथ्यैव । तावन्मात्रेणैवाविरोधे सर्वस्य जगतो मिथ्यात्वकल्पनं तु वेदान्तिनामनर्थकमेवेति **शाम्भवानन्दकल्पलतायां** विस्तरः । ततश्च मिथ्याभूतं जगतोऽधिष्ठानं भेदघटितसम्बन्धेनावस्थितिर्यस्यामिति विग्रहात् स्त्रीलिङ्गतोपपत्तिः ॥

*अथ परिभाषामण्डले त्रिचत्वारिंशन्नामानि विभजते–*

***गौः शैवे विरते चतुरङ्घ्रितनुर्द्विश्चतुर्बलं नेतुः ।***
***द्विर्मे गङ्गामाता रजश्चतुर्भावजलमदाद्धावैः ॥ २७ ॥***

*अत्र नकाराभ्यां दशाक्षरे नामनी ॥ २७ ॥*

**–मुक्तिदा मुक्तिरूपिणी ।**

मुक्तिं मोक्षं ददातीति मुक्तिदा । तथा च श्री**कूर्मपुराणे**–

**'तस्माद्विमुक्तिमन्विच्छन्पार्वतीं परमेश्वरीम् ।**
**आश्रयेत्सर्वभूतानामात्मभूतां शिवात्मिकाम् ॥'**

इति । **शिवपुराणे**ऽपि–

**'नामानि ये महेशस्य गृणन्त्यज्ञानतोऽपि वा ।**
**तेषामपि शिवो मुक्तिं ददाति किमतः परम् ॥'**

इति । **ब्रह्माण्डपुराणे**ऽपि-

**'येऽर्चयन्ति परां शक्तिं विधिनाविधिनापि वा ।**
**न ते संसारिणो नूनं मुक्ता एव न संशयः ॥'**

---

भक्तानां मुक्तिं ददातीति सा । मुक्तिदायै इति ॥ मुक्तिरेव रूपं अस्याः सा । रूपिण्यै इति ॥

इति । मुक्तिरेव रूपमस्याः । अविद्यानिवृत्तेर्ध्वंसरूपत्वे पञ्चमप्रकाररूपत्वे वा परमपुरुषार्थत्वानापत्त्या तदुपलक्षितस्वात्मानन्दस्यैव मोक्षताया वक्तव्यत्वात् । उक्तञ्च **सौरसंहितायां** चतुर्दशेऽध्याये–

**'अथ मुक्तेः स्वरूपं ते प्रवक्ष्यामि समासतः ।**
**यज्ज्ञानेन परा मुक्तिः सिध्यत्यखिलदेहिनाम् ॥'**

इत्युपक्रम्य ज्ञानस्य तत्र कारकहेतुतां **'ज्ञानं न कारकं विद्वद्बोधकं खलु केवल'**मित्यादिना निरस्य **'कार्यद्रव्यतया नैव स्थिता भवितुमर्हती'**त्यादिना मुक्तेर्द्रव्यगुणकर्मसामान्याद्यात्मतामपि निरस्य **'अतः साक्षात्परा मुक्तिः स्वात्मभूतैव केवल'**मित्यादिना सिद्धान्तं संसाध्य–

**'तस्मादात्मस्वरूपैव परा मुक्तिरविद्यया ।**
**तिरोभूता विशुद्धस्य विद्यया व्यज्यतेऽनघ ॥'**

इत्युपसंहारात् ।

**लास्यप्रिया लयकरी लज्जा रम्भादिवन्दिता ॥ १९३ ॥**

लास्यं नर्तनं प्रियं यस्याः । लयश्चित्तावस्थाविशेषः । **'दशध्यानसमो लय'** इति वचनात् । तालैर्नृत्यगीतयोः समकालपरिच्छेदो वा लयः तस्य करी कर्त्री । **'या देवी सर्वभूतेषु लज्जारूपेण संस्थिते'**ति स्मरणाल्लज्जा । हृल्लेखाबीजस्वरूपा वा । रम्भोर्वश्यादिभिरप्सरोभिर्वन्दिता ॥ १९३ ॥

**भवदावसुधावृष्टिः पापारण्यदवानला ।**

भवः संसार एव दावो वनवह्निस्तस्य शामकत्वात्सुधावृष्टिः पीयूषवर्षमिव । भवः संसार एव दावोऽरण्यम् । **'दवदावौ वनारण्यवह्नी'** इत्यमरः । तस्य पुङ्खानुपुङ्खतयोज्जीवनात्पीयूषवृष्टिरिवेति वा । भवं परशिवं दत्ते वसु रत्नं धनं च धत्ते एतादृशी वृष्टिरिति त्रिपदं नाम वा । भोगमोक्षप्रदेति यावत् । उक्तञ्च **रुद्रयामले** मङ्गलराजस्तवे–

**'यत्रास्ति भोगो न तु तत्र मोक्षो यत्रास्ति मोक्षो न तु तत्र भोगः ।**
**श्रीसुन्दरीसाधकपुङ्गवानां भोगश्च मोक्षश्च करस्थ एव ॥'**

---

लास्यं नृत्यं प्रियं यस्याः सा । प्रियायै इति ॥ लयं तालविशेषं करोतीति सा । कर्यै इति ॥ लज्जा रूपा । लज्जायै इति ॥ रम्भाद्यप्सरोभिर्वन्दिता । वन्दितायै इति ॥ १९३ ॥

भवः संसारः तद्रूपो दावो वनाग्निर्भक्तानां तन्निवारणे सुधावृष्टिरूपा । वृष्ट्यै इति ॥ भक्तानां पापात्मकारण्यस्य नाशने दवानला वनाग्निरूपा । अनलायै इति ॥

इति । पापान्येवारण्यानि दुःखजनकत्वात् । तेषां दवानल इव नाशकत्वात् । पापारण्यानां दवानलो यस्या नाम सेति वा । तदुक्तं **बृहन्नारदीये**–

**'गङ्गायाः परमं नाम पापारण्यदवानलः ।**
**भवव्याधिहरी गङ्गा तस्मात्सेव्या प्रयत्नतः ॥'**

इति । यद्वा पापारण्यानां ये दवाः दावाग्नयो नाशनोपायभूता उपास्त्यादयस्तेषां अनान् प्राणान् लाति आदत्ते तान् जीवयतीति यावत् । पापापहानि कर्माणि प्रथयतीत्यर्थः । तदुक्तं **ब्रह्माण्डे**–

**'कृतस्याखिलपापस्य ज्ञानतोऽज्ञानतोऽपि वा ।**
**प्रायश्चितं परं प्रोक्तं पराशक्तेः पदस्मृतिः ॥'**

इति । तत्रैवाध्यायान्तरे–

**'इदं च शृणु देवेन्द्र रहस्यं परमं महत् ।**
**सर्वेषामेव पापानां यौगपद्येन नाशनम् ॥**
**भक्तिश्रद्धासमायुक्तः स्नात्वान्तर्जलसंस्थितः ।**
**अष्टोत्तरसहस्रं तु जपेत्पञ्चदशाक्षरीम् ॥**
**आराध्य परमां शक्तिं मुच्यते सर्वकिल्बिषैः ।'**

इत्यादि ।

## दौर्भाग्यतूलवातूला जराध्वान्तरविप्रभा ॥ १९४ ॥

दौर्भाग्यमेव तूलं कार्पासं तस्य वातूल इव वात्येव दूरं निरासिकेति यावत् । **'वातूलः पुंसि वात्याया'**मित्य**मरः** । यद्वा दौर्भाग्यं तूलं येषां ते दौर्भाग्यतूलाः दौर्भाग्यस्य तूलस्येव निरासका धर्मविशेषाः । अत एव ते धर्मा एव वातूले गौण्यावृत्त्या तेन दौर्भाग्यतूलः वातूला यस्याः सकाशात्सेति विग्रहः । दौर्भाग्यनिरासकानि कर्माणि यस्याः सकाशादुद्भवन्ति । यस्याः सम्बन्धीनि वा सेति यावत् । जरैव ध्वान्तमन्धकारं तस्य नाशकत्वाद्रवेः प्रभेव ॥ १९४ ॥

## भाग्याब्धिचन्द्रिका भक्तचित्तकेकिघनाघना ।

भाग्यलक्षणस्याब्धेरुल्लासकत्वाच्चन्द्रिका कौमुदीव । भक्तानां चित्तान्येव केकिनो मयूरास्तेषामुल्लासकत्वाद्घनाघना मेघस्वरूपा । यद्वा घनपदेनैव मेघा उच्यन्ते । देवीकृतानि चरित्राण्येव भक्तचित्तकेकिघनरूपाणीति गौण्या तेन पदेन चरित्राणि कथ्यन्ते । भक्तचित्तकेकिघनैरासमन्ताद्घना निरन्तरेत्यर्थः ।

---

दौर्भाग्यं दुरदृष्टं तदेव तूलं कार्पासं तस्य दूरीकरणे वातूला वायुसमूहरूपा । वातूलायै इति ॥ जरावार्धिक्यं तद्रूपध्वान्तस्यान्धकारस्य नाशने रवेः प्रभारूपा । प्रभायै इति ॥ १९४ ॥

भाग्यरूपसमुद्रस्योत्सेककरीत्वाच्चन्द्रिकेव चन्द्रिका । चन्द्रिकायै इति ॥ भक्तानां चित्तात्मककेकिनां मयूराणां हर्षकृत्वाद् (करणात्) घनाघना मेघस्वरूपा । घनाघनायै इति ॥

## रोगपर्वतदम्भोलिर्मृत्युदारुकुठारिका ॥ १९५ ॥

रोगा एव पर्वताः स्थूलत्वात्तेषां दम्भोलिर्वज्र इव **'भिषक्तमं त्वा भिषजां शृणोमि'** इति **श्रुतेः** पुंलिङ्ग एवायं शब्दः । तेन रोगपर्वतदम्भोलये नम इत्येव प्रयोगो न पाक्षिको 'दम्भोल्यै नम' इति । यद्वा **'शतकोटिः स्वरुः शम्बो दम्भोलिरशनिर्द्वयो'**रित्यग्नि-**पुराणे** दम्भोलिपदस्य शम्बपदेनेवाशनिपदेनापि साहचर्यात्स्त्रीलिङ्गतापि सुवचा । कां विधिं समुपस्कृत्येति मोक्षधर्मीयप्रयोगनिर्वाहाय तट्टीकाकाराणां **'भाग्यं स्त्री नियति-र्विधि'**रित्यत्र नियतिपदसाहचर्यमात्रवशेन पुंलिङ्गत्वेन प्रसिद्धस्यापि विधिपदस्य स्त्रीलिङ्गतेति व्याख्यानदर्शनात् । एतत्पक्षे पाक्षिको दम्भोल्यै नम इति प्रयोगः सङ्गच्छते । पूर्वमशक्तिसिद्धितुष्टिभेदभिन्ना अष्टाविंशतिर्वधा उक्ताः ते मृत्युदारुप-देनोच्यन्ते । दारुपदस्योक्तपरिभाषायामष्टाविंशतिसंख्यापरत्वात् । श्लेषेण काष्ठान्यपि कथ्यन्ते । तेषां छेदकत्वात्कुठारेव स्वार्थे कः । **'द्वयोः कुठार'** इति **कोशः** । **'मृत्यु-र्यस्योपसेचन'**मिति **श्रुतेः** । अष्टसु नामसु रूपकालङ्कारः ॥ १९५ ॥

## महेश्वरी महाकाली महाग्रासा महाशना ।

महती च सेश्वरी च माहेश्वरीति पूर्वं व्याख्यातं नाम । अनयोर्ह्रस्वदीर्घादिम-त्त्वाभ्यां न पौनरुक्त्यम् । महती च सा काली च । कालयतीति काली । कालने महत्वं तु मृत्योरपि कालनात् । तथा च **कालिदासः**—

**'एतदम्ब सदिदं तु नेति नः शङ्कया हृदि विकल्पलक्षणः ।**
**यो यमः स खलु काल्यते त्वया भूतसंयमनकेलिकोविदः ॥'**

इति । उज्जयिनिपीठाधीशमहाकालस्य स्त्रीति वा । महानपरिमितो ग्रासः कवलो यस्याः । **'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन'** इति **श्रुतेः** । महच्चराचरकर्मकत्वादशनं यस्याः । अत्र तृतीयो वर्णस्तालव्यः पूर्वं तदन्त्यतृतीयकं नाम व्याख्यातमिति न पौनरुक्त्यम् ।

## अपर्णा चण्डिका चण्डमुण्डासुरनिषूदनी ॥ १९६ ॥

अपगतमृणं यस्याः साऽपर्णा । तदुक्त**मस्माभिर्देवीस्तवे**—

**'ऋणमिष्टमदत्वैव त्वन्नाम जपतो मम ।**
**शिवे कथमपर्णेति रूढिर्भारायते न ते ॥'**

---

रोगरूपपर्वतभेदने दम्भोलिरशनिरूपा । दम्भोलये इति ॥ मृत्युरूपदारुणः छेदने कुठारिकेव । कुठारिकायै इति ॥ १९५ ॥

महती च सा ईश्वरी चेति । ईश्वर्यै इति ॥ महाकालस्य स्त्री । काल्यै इति ॥ महानपरिमितः जगद्रूपः ग्रासो यस्याः सा । ग्रासायै इति ॥ महज्जगद्रूपमशनं आहारः यस्याः सा । अशनायै इति ॥

भक्तानामपगतं ऋणं यस्याः प्रसादात् । अपर्णायै इति ॥ चण्डिका दुष्टेषु क्रोधिनीत्वात् । चण्डिकायै इति ॥ चण्डमुण्डाख्यावसुरौ निषूदतीति सा । निषूदिन्यै इति ॥ १९६ ॥

इति । पर्णं पतनमिति नैरुक्तात्पतनरहितेति वा । पर्णमप्यदनीयत्वेन न विद्यते यस्यास्तपस्यन्त्या इति वा । तदुक्तं **कालिकापुराणे**–

**'आहारे त्यक्तपर्णाभूद्यस्माद्धिमवतः सुता ।**
**तेन देवैरपर्णेति कथिता पृथिवीतले ॥'**

इति । **ब्रह्मपुराणे**ऽपि– **'अपर्णा तु निराहारा तां माता प्रत्यभाषते'**त्यत्र प्रथमचरणेनेयमेव व्युत्पत्तिर्ध्वनिता । **'चडि कोपे'** अभक्तेषु कोपनत्वाच्चण्डिका । **देवीभागवते**– **'चण्डिका सप्तवर्षा स्या'**दिति कन्याविशेषस्य नामोक्तम् । चण्डश्च मुण्डश्च तौ च तावसुरौ च तौ निषूदयतीति तथा । तेन चामुण्डाख्यं नामास्या एवेति सूचितम् । उक्तञ्च **मार्कण्डेयपुराणे**–

**'यस्माच्चण्डं च मुण्डं च गृहीत्वा त्वमुपागता ।**
**चामुण्डेति ततो लोके ख्याता देवी भविष्यसि ॥'**

इति । **वराहपुराणे** तु–

**'देवी च त्रिशिखेनाजौ तं रुरुं समताडयत् ।**
**तया तु ताडिते तस्य दैत्यस्य शुभलोचने ॥**
**चर्ममुण्डे उभे सम्यक् पृथग्भूते बभूवतुः ।**
**रुरोस्तु दानवेन्द्रस्य चर्ममुण्डेक्षणाद्यतः ॥**
**अपहृत्याचरद्देवी चामुण्डा तेन साभवत् ।'**

इत्युक्तम् । **'कर्ममोटी तु चामुण्डा चर्ममुण्डा च चर्चिके'**ति **कोशा**च्चर्ममुण्डेत्यपि देवीविशेषस्य नाम दृश्यते । तेन **वाराहे**– **'चर्ममुण्डेति साभवदि'**त्येव पाठः स्यादित्यनुमीयत इत्यन्यदेतत् । चण्डानि प्रचण्डानि अत्यन्तकोपनचिह्नभूतनेत्रशोणिमादिवन्ति वा मुण्डानि येषामसुराणां तन्निषूदनीति वा । हन्यमानानां तादृशमुण्डवत्त्वविशेषणस्वारस्येन तादृशमुण्डमालाधरेति कालिकारूपध्वनिः ॥ १९६ ॥

## क्षराक्षरात्मिका सर्वलोकेशी विश्वधारिणी ।

क्षराण्यनियतसंख्यान्यक्षराणि वर्णानि आत्मा स्वरूपं यस्याः । एकानेकाक्षराकृतिरित्यर्थः । उक्तञ्च **वराहपुराणे**–

**'एकाक्षरेति विख्याता सर्वाक्षरमयी शुभा ।**
**सैव विश्वेश्वरी देवी सैव क्वाप्यमिताक्षरा ॥'**

---

क्षराक्षरौ अनित्यनित्यवस्तू । तदात्मिका तद्रूपा । आत्मिकायै इति ॥ सर्वेषां लोकानां ईशी ईश्वरी । ईश्यै इति ॥ विश्वं जगद्धारयतीति सा । धारिण्यै इति ॥

इति । यद्वा '**क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते**' । तदुभयमात्मा स्वरूपं यस्याः । '**सदसत्क्षरमक्षर**'मिति **महाभारते** । **विष्णुभागवते**ऽपि—

**'विष्णोस्तु त्रीणि रूपाणि पुरुषाख्यानि ये विदुः ।**
**प्रथमं महतः स्रष्टा द्वितीयं त्वण्डसंस्थितम् ॥**
**तृतीयं सर्वभूतस्थं तानि ज्ञात्वा विमुच्यते ।**

इति । सर्वेषां लोकानामीशी ईश्वरी । विश्वं धारयतीति तथा ।

**त्रिवर्गदात्री सुभगा त्र्यम्बका त्रिगुणात्मिका ॥ १९७ ॥**

त्रयाणां धर्मार्थकामानां वर्गः समूहः । '**त्रिवर्गो धर्मकामार्थैश्चतुर्वर्गः समोक्षकै**'-रित्यमरः । तस्य दात्री वितरणपरा । पञ्चवत्सरा कन्या सुभगेत्युच्यते । **कन्याप्रकरणे**— '**सुभगा पञ्चवर्षा स्या**'दिति **धौम्य**वचनात् । तदभिन्ना । यद्वा श्रीकाममाहात्म्यवीर्ययत्न-कीर्त्यादयो भगपदवाच्याः शोभना यस्यां सा ।

**भगमैश्वर्यमाहात्म्यज्ञानवैराग्ययोनिषु ।**
**यशोवीर्यप्रयत्नेच्छाश्रीधर्मरविमुक्तिषु ॥'**

इति **विश्वः** । शोभनो भगः सूर्यो यया वा । सौरकार्येषु सर्वेषु तदन्तस्थिताया अस्याः शक्तेरेव निमित्तत्वात् । तदुक्तं **विष्णुपुराणे** द्वितीयेंऽशे—

**'सर्वा शक्तिः परा विष्णोर्ऋग्यजुःसामसंज्ञिता ।**
**सैषा त्रयी तपत्यंहो जगतश्च हिनस्ति या ॥**
**मासि मासि रविर्यत्र तत्र तत्र हि सा परा ।**
**त्रयीमयी विष्णुशक्तिरवस्थानं करोति वै ॥**
**ऋचस्तपन्ति पूर्वाह्णे मध्याह्ने तु यजूंषि वै ।**
**बृहद्रथन्तरादीनि सामान्यह्नःक्षये रवौ ॥**
**मूर्तिरेषा त्रयी विष्णोर्ऋग्यजुःसामसंज्ञिता ।**
**विष्णुशक्तिरवस्थानं सदादित्ये करोति या ॥**
**न केवलं रवौ शक्तिर्वैष्णवी सा त्रयीमयी ।**
**ब्रह्माथ पुरुषो रुद्रस्त्रयमेतत्त्रयीमयम् ॥**
**नोदेता नास्तमेता च कदाचिच्छक्तिरूपधृक् ।**
**विष्णुर्विष्णोः पृथक् तस्य गणः सप्तमयोऽप्ययम् ॥**

---

त्रयाणां धर्मार्थकामानां वर्गसमूहः, तस्या दात्री । दात्र्यै इति ॥ शोभनं भगमैश्वर्यं यस्याः सा । सुभगायै इति ॥ त्रीण्यम्बकानि नेत्राणि यस्याः सा । त्र्यम्बकायै इति ॥ सत्त्वादित्रिगुणरूपा । आत्मिकायै इति ॥ १९७ ॥

**स्तम्भस्थदर्पणस्येव योयमासन्नतां गतः ।**
**छायादर्शनसंयोगं स तं प्राप्नोत्यथात्मनः ॥**
**एवं सा वैष्णवी शक्तिर्नैवापैति ततो द्विज ।**
**मासानुमासं भास्वन्तमध्यास्ते तत्र संस्थितम् ॥'**

इति । देवा ऋषयो गन्धर्वा अप्सरसो यक्षाः सर्पा राक्षसाश्चेति सप्तमयो गणः प्रतिमासं भिद्यमानस्य सूर्यस्योपकरणभूतत्वाद्भिद्यते । शक्तिस्तु प्रधानत्वान्न भिद्यत इति समुदायार्थः । यद्वा लोकत्रयान्तर्गतं सौभाग्यं चरगतमचरगतं वा अस्या एव रूपमिति सुभगा । अचरगतं तु **पद्मपुराणे**—

**'इक्षवस्तरुराजं च निष्पावा जीरधान्यके ।**
**विकारवच्च गोक्षीरं कुसुम्भं कुसुमं तथा ॥**
**लवणं चेति सौभाग्याष्टकं स्थावरमुच्यते ।'**

इति । चरास्तु सुवासिन्यः प्रसिद्धा एव । **पाद्म** एवोक्तम्—

**'त्रिविष्टपसौभाग्यमयीं भुक्तिमुक्तिप्रदामुमाम् ।**
**आराध्य सुभगां भक्त्या नारी वा किं न विन्दति ॥'**

इति । अत्र पूर्वं विशेषणद्वयं सुभगापदस्य निरुक्तिमपि ध्वनयति । त्रीण्यम्बकानि नेत्राणि यस्याः । तदुक्तं **देवीपुराणे** निर्वचनाध्याये—

**'सोमसूर्यानलास्त्रीणि यन्नेत्राण्यम्बकानि सा ।**
**तेन देवी त्र्यम्बकेति मुनिभिः परिकीर्तिता ॥'**

'इति । '**प्रत्ययस्थात्कात्पूर्वस्ये**'त्युपान्त्य इकारो न भवति आपः सुपः परत्वात् । त्रयाणां ब्रह्मविष्णुरुद्राणामम्बिका माता वा । '**अभाषितपुंस्काच्चे**'तीत्वाभावः । अत एवाह त्रिगुणात्मिका सत्त्वरजस्तमोरूपगुणत्रयसाम्यविग्रहा ॥ १९७ ॥

**स्वर्गापवर्गदा शुद्धा जपापुष्पनिभाकृतिः ।**

**'यत्र दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।**
**अभिलाषोपनीतं यत्तत्सुखं स्वःपदास्पदम् ॥'**

इति **श्रुतिप्रसिद्धं** क्षयिष्णु सुखं वर्गः । नित्यं तु सुखमपवर्गः । तदुभयं दत्ते । शुद्धा आविद्यकमालिन्यशून्या । जपापुष्पनिभा ओड्रपुष्पेण तुल्या आकृतिः स्वरूपं यस्याः । '**आकृतिः कथिता रूपे सामान्यवपुषोरपी**'ति **विश्वः** । अत्राकारप्रश्लेषेणाजपेति पृथक् पदं

---

स्वर्गापवर्गौ कर्मज्ञानफले ददातीति सा । दायै इति ॥ शुद्धा आणवादिमलरहिता । शुद्धायै इति ॥ जपापुष्पेण तुल्या आकृतिरङ्गवणो यस्याः सा । आकृतये इति ॥

स्वीकृत्य धराधरसुतेत्येकं पदमित्यपि सुवचम् । तत्र अजपा मन्त्रविशेषरूपा । तन्निर्वचनं च **दक्षिणामूर्तिसंहितायाम्**—

**'विना जपेन देवेशि जपो भवति मन्त्रिणः ।**
**अजपेयं ततः प्रोक्ता भवपाशनिकृन्तनी ॥'**

इति । **'पुष्पं विकास आर्तवे । धनदस्य विमाने च कुसुमे नेत्ररुज्यपी'**ति **हैमकोशः** । तत्तुल्याकृतिर्यस्या इत्यर्थः ।

## ओजोवती द्युतिधरा यज्ञरूपा प्रियव्रता ॥ १९८ ॥

**'ओजोऽष्टमधातु'**रिति **वेदभाष्ये** । इन्द्रियसामर्थ्यमित्यन्ये । **'ओजस्तेजसि धातूनामवष्टम्भप्रकाशयोः । ओजो बले च दीप्तौ चे'**ति तु **विश्वः** । तान्यस्यां सन्तीत्योजोवती। धरतीति धरा पचाद्यच् । द्युतेः कान्तेर्धरा । **'यज्ञो वै विष्णु'**रिति **श्रुतेः** तदभिन्ना देवी यज्ञरूपा । यज्ञा एव वा रूपमस्याः । तदुक्तं **हरिवंश-पद्मपुराणयोरी**श्वरं प्रक्रम्य—

**'वेदपादो यूपदंष्ट्रः क्रतुहस्तश्चितीमुखः ।**
**अग्निजिह्वो धर्मरोमा ब्रह्मशीर्षो महातपाः ॥**
**अहोरात्रेक्षणो दिव्यो वेदान्तश्रुतिभूषणः ।**
**स्रुवतुण्डश्चाज्यनासः सामघोषस्वनो महान् ॥**
**धर्मसत्यमयः श्रीमान्क्रमविक्रमसत्क्रियः ।**
**प्रायश्चित्तनखो धीरः पशुजानुर्महाभुजः ॥**
**औद्गात्रान्त्रो होमलिङ्गः फलबीजमहौषधिः ।**
**वाय्वन्तरात्मा मन्त्रस्फिग्विकृतः सोमशोणितः ॥**
**वेदीस्कन्धो हविर्गन्धो हव्यकव्यातिवेगवान् ।**
**प्राग्वंशकायो द्युतिमान्नानादीक्षाभिरर्चितः ॥**
**दक्षिणाहृदयो योगी महामन्त्रमयो महान् ।**
**उपाकर्मोऽष्टचिबुकः प्रवर्ग्यावर्तभूषणः ॥**
**नानाच्छन्दोगतिपथो गुह्योपनिषदासनः ।**
**छायापत्नीसहायो वै मेरुशृङ्ग इवोच्छ्रितः ॥'**

इति । यद्वा,

**'इन्द्रियद्वारसंगृह्यैर्गन्धाद्यैरात्मदेवताम् ।**
**स्वभावेन समाराध्य ज्ञातुः सोयं महामखः ॥'**

---

ओजस्तेजस्तद्वती । ओजोवत्यै इति ॥ द्युतेः कान्तेर्धरा । धरायै इति ॥ यज्ञ एव रूपं यस्याः सा । रूपायै इति ॥ प्रियाणि व्रतानि यस्याः सा । व्रतायै इति ॥ १९८ ॥

इति मुख्याम्नायरहस्योक्तयज्ञाभिन्ना । प्रियाणि व्रतान्यविशेषात्सर्वदेवताविषयकाणि यस्याः । तदुक्तं **भविष्योत्तरपुराणे**–

**'देवं देवीं च वोद्दिश्य यत्करोति व्रतं नरः ।**
**तत्सर्वं शिवयोस्तुष्ट्यै जगज्जननशीलयोः ॥**
**न भेदस्तत्र मन्तव्यः शिवशक्तिमयं जगत् ।'**

इति । प्रियव्रताख्यराजस्वरूपा वा ॥ १९८ ॥

## दुराराध्या दुराधर्षा पाटलीकुसुमप्रिया ।

चपलेन्द्रियाणां दुःखेनाराधितुं अशक्या । अशक्येत्येव पर्यवसानम् । तदुक्तम्– '**तरलकरणानामसुलभे**'ति । दुःखरूप आधर्षः स्वायत्तीकरणं यस्याः । श्वेतरक्तवर्णं पाटलीनामकं कुसुमं प्रियं यस्याः । उक्तञ्च **पाद्मे**–'**श्रीवृक्षे शङ्करो देवः पाटलायां तु पार्वती**'ति ।

## महती मेरुनिलया मन्दारकुसुमप्रिया ॥ १९९ ॥

परममहत्परिमाणत्वात् । '**महती महान्कस्मान्मानेनान्याञ्जहतीति शाकपूणिर्महनीयो भवतीति वे**'ति तु **यास्क**निरुक्तिः । नारदमुनेर्वीणाविशेषोऽपि महती तत्स्वरूपा वा । मेरुरेव निलयो यस्याः । **तन्त्रराजे**ऽष्टाविंशे पटले– '**अथ षोडशनित्यानां लोकात्मत्वं वदामि त**' इत्युपक्रम्य ससागरद्वीपां भुवं वर्णयित्वोक्तम्–

**'मध्यस्थमेरौ ललिता सदैवास्ते महाद्युतिः ।**
**तस्याभितो जलाब्ध्यन्तः शेषास्ताः स्युश्चतुर्दश ॥**
**तद्बहिः परमे व्योम्नि त्वन्ते चित्रा तु संस्थिता ।'**

इत्यादिना बहवो विशेषा उक्तास्ते गुरुमुखादेवावगन्तव्याः । यद्वा । चक्रराजस्य त्रयः प्रस्ताराः भूमिकैलासमेरुभेदात् । तत्र वशिन्याद्यष्टकेन सह भेदभावना भूप्रस्तारः । मातृकाक्षरैश्चेत्कैलासप्रस्तारः । षोडशभिर्नित्याभिश्चेन्मेरुप्रस्तारः । मेरुर्नित्यतादात्म्य-भावनैव निलयो यस्या इत्यर्थः । भावनाप्रकारश्च **सनत्कुमार–सनन्दन–वसिष्ठसंहितासु** तिसृषु त्रिविधः क्रमेण प्रतिपादितः । अथवा–

**'भूमिश्चन्द्रः शिवो माया शक्तिः कृष्णाध्वमादनौ ।**
**अर्धचन्द्रश्च बिन्दुश्च नवार्णो मेरुरुच्यते ॥'**

---

बहिर्मुखैर्दुःखेन आराधयितुं शक्या । आराध्यायै इति ॥ आधर्षः स्वाधीनीकरणं स अतिदुःखसाध्यो यस्याः सा । आधर्षायै इति ॥ पटल्यभिधं कुसुमं प्रियं यस्याः सा । प्रियायै इति ॥

महती सर्वोत्कृष्टत्वात् । महत्यै इति ॥ मेरोः निलयः स्थानं यस्याः सा । निलयायै इति ॥ मन्दारकुसुमं प्रियं यस्याः सा । प्रियायै इति ॥ १९९ ॥

इति **ज्ञानार्णवे** उद्धृतो नवाक्षरो मन्त्रो मेरुपदवाच्यः स एव निलयः सर्वमन्त्रोद्भवस्थानं यस्याः। तदप्युक्तम्– **'महात्रिपुरसुन्दर्या मन्त्रा मेरुसमुद्भवा'** इत्यादि। मन्दारो देवतरुः श्वेतार्को वा तस्य कुसुमं प्रियं यस्याः॥ १९९॥

## वीराराध्या विराड्रूपा–

**अहमि प्रलयं कुर्वन्निदमः प्रतियोगिनः।**
**पराक्रमं परो भुङ्क्तेस्वात्मानमशिवापहम्॥'**

इत्यादिनोक्तलक्षणा वीरास्तैराराध्या। विराजो लक्षणं पूर्वमुक्तं तद्रूपा।

*अथ परिभाषायामष्टचत्वारिंशन्नामानि विभजते–*

***गुणभावे गीर्णे द्विश्चतुर्हृदां विभुगुणे भावाङ्गमखे।***
***वरगुणचतुर्विभाजां खलमदभावान्तरङ्गखिलविभवाः॥ २८॥***

*स्पष्टम्॥ २८॥*

## –विरजा विश्वतोमुखी

विगतं रजः पापं यस्याः। विरजसे नम इति प्रयोगः। उत्कलदेशस्थविरजाख्यक्षेत्राधिष्ठात्रीयम्। तदुक्तं **ब्रह्माण्डपुराणे**–

**'विरजे विरजा माता ब्रह्मणा संप्रतिष्ठिता।**
**यस्याः संदर्शनान्मर्त्यः पुनात्यासप्तमं कुलम्॥'**

इति। ज्योतिरुदकं लोकाश्च रजःपदेनोच्यन्त इति तु **नैरुक्ताः**। विश्वतः सर्वावच्छेदेन मुखं यस्याः। **'विश्वतश्चक्षुरुत विश्वतोमुख'** इति **श्रुतेः**। यत्रैवोपासकैर्ध्येयत्वेन रूपं कल्प्यते तत्रैवाविर्भवतीत्याशयेन **'सर्वतः पाणिपादं तत्सर्वतोऽक्षिशिरोमुख'**मित्यादिवचनानि पारमार्थिकरूपाभिप्रायेण **'अपाणिपादो जवनो ग्रहीते'**त्यादीनीत्यविरोधः। प्रतिकूलमञ्चतीति प्रत्यक् तादृशं रूपं यस्याः। इन्द्रियाणां विषयोन्मुखत्वं बहिर्मुखत्वं पराङ्मुखत्वं चेत्युच्यते। तत्परित्यागेनान्तरात्मोन्मुखत्वमन्तर्मुखत्वं प्रत्यङ्मुखत्वं चोच्यते। अत एव श्रूयेत–**'पराञ्चि खानि व्यतृणत्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्'** इति।

## प्रत्यग्रूपा पराकाशा प्राणदा प्राणरूपिणी॥ २००॥

प्रत्यगवलोक्यमानस्वरूपेति तु यावत्। पर उत्कृष्टश्चासावाकाशश्च पराकाशा। निर्गुणत्वात्स्त्रीलिङ्गम्। परब्रह्मेत्यर्थः। **'आकाश इति होवाचाकाशो ह्येवैभ्यो ज्याया-**

---

वीरैरन्तर्मुखैराराध्या। आराध्यायै इति॥ विराट्स्थूलसमष्टिः रूपं यस्याः सा। रूपायै इति॥ विगतं रजः मलो यस्याः सा। विरजसे इति॥ विश्वतः सर्वत्र मुखं यस्याः सा। मुख्यै इति॥ प्रत्यगन्तर्मुखसंवित् तद्रूपं यस्याः सा। रूपायै इति॥ पर उत्कृष्टः स्वात्मविषयत्वादाकाशो विमर्शशक्तिर्यस्याः सा। आकाशायै इति॥ प्राणं ब्रह्मस्वरूपं ददातीति सा। दायै इति॥ प्राणः रूपं अस्याः सा। रूपिण्यै इति॥ २००॥

**नाकाशः परायण**'मिति **छान्दोग्ये** आकाशपदेन परब्रह्मैवोच्यते न भूताकाश ति **'आकाशस्तल्लिङ्गा**'दिति **ब्रह्मसूत्रे** निर्णयात् । **कौर्मे**ऽपि– **'यस्य सा परमा देवी शक्तिराकाशसंस्थिते**'ति ।

**'इत्थं हि सा जगतो योनिरेका सर्वात्मिका सर्वनियामिका च ।**
**माहेश्वरी शक्तिरनादिसिद्धा व्योमाभिधाना दिवि राजतीव ॥'**

इति च । अथवा **'परमे व्योमन् प्रतिष्ठिते**'त्यादिश्रुतिसिद्धं व्योम ब्रह्माण्डपिण्डाण्डभेदेन द्विविधमपि पराकाशो ब्रह्माभिव्यक्तिस्थानं तद्रूपा । उक्तञ्च **चिद्गगनचन्द्रिकायाम्**–

**'हृत्क्रियात्मशशिभानुमध्यगः खे चरत्यनलदृष्टिधाम यः ।**
**यत्तदूर्ध्वशिखरं परं नभस्तत्र दर्शय शिवं त्वमम्बिके ॥'**

इति । **स्वच्छन्दसंग्रहे**ऽपि–

**'द्वादशान्तं ललाटोर्ध्वं कपालोर्ध्वावसानकम् ।**
**द्व्यङ्गुलोर्ध्वं शिरोदेशात्परं व्योम प्रकीर्तितम् ॥'**

इति । यद्वा । सप्तभ्यः समुद्रेभ्यः परतर आकाशः पराकाशः । तत्र ललिता षोडशे वर्षेऽवस्थितासती तद्रूपेत्युपचर्यते । तदुक्तं **कादिमते**–

**'कृतादिवर्षादारभ्य प्रतिवर्षमिति स्थिता ।**
**द्वितीयादिषु वर्षेषु क्रमात्ताः परिवृत्तिभिः ॥**
**षोडशेऽब्दे परे व्योम्नि ललिता सलिलाम्बुधौ ।**
**चित्रा च भवतीत्थं हि भजन्ते परिवर्तनम् ॥'**

इति । मेरुपर्वतः सप्तद्वीपाः सप्तसमुद्राः पराकाशश्चेति षोडशसु स्थानेषु कृतयुगस्य प्रथमवर्षे ललिता कामेश्वरी भगमालिनीत्यादिक्रमेण चित्रान्ताः षोडश नित्यास्तिष्ठन्ति । द्वितीये तु वर्षे ललिता जम्बुद्वीपेऽवतरति । कामेश्वरी तु क्षाराम्बुधिं प्रयाति । तत्रत्या भगमालिनी तु ततोप्युत्तरं स्थानमाक्रमते । एवंरीत्या पराकाशे ज्वालामालिनी मेरौ चित्रा तिष्ठति । तृतीये वर्षे क्षाराम्बुधौ ललितेत्यादिक्रमेणोत्तरोत्तरस्थानाक्रमेण जम्बुद्वीपे चित्रा तिष्ठतीत्याद्यूह्यमिति तदर्थः । यद्वा पराकशब्दः कृच्छ्रविशेषवाचकः संस्तपोमात्रोपलक्षकः तस्य आशा दिक् । तपोगम्यो मार्ग इति यावत् । अथवा पराकमश्नाति । पराकादिजन्यफलभोक्त्रीत्यर्थः । परे उत्कृष्टे अके पापदुःखे अश्नाति नाशयतीति वा । **'अकं पापे च दुःखे चे**'ति **विश्वः** । उपमार्थकप्रतीकाशप्रतिस्पर्धिपराकाशशब्दादनुपमेति वार्थः । प्राणान्पञ्चवृत्तिकानेकादशेन्द्रियाणि वादत्ते । प्राणान्द्यति खण्डयतीति वा । **'प्राणोऽस्मि प्रज्ञात्मा तं मामायुरमृतमुपास्वे**'ति **कौषीतकिब्राह्मणे** प्राणपदस्य ब्रह्मपरतेति निर्णीतं प्राणाधिकरणे ।

तेन प्राणरूपिणीत्यस्य ब्रह्मरूपेत्यर्थः । **'प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मे'**ति **श्रुतेश्च** । **'प्रा पूरण'** इति धातोर्निष्ठातकारस्य **'संयोगादेरातोधातोर्यण्वत'** इति सूत्रेण नकारे पूर्णं ब्रह्मेत्येवार्थः । **'पूर्णमदः पूर्णमिद'**मित्यादिश्रुतेः । उक्तञ्च **मनुस्मृतौ**–

**'एनमेके वदन्त्यग्निं मनुमन्ये प्रजापतिम् ।**
**इन्द्रमन्ये परं प्राणमपरे च महेश्वरीम् ॥'**

इति । अथवा **नित्यातन्त्रे** तावत् **'अथ षोडशनित्यानां कालेन प्राणतोच्यत'** इत्यादिना श्वासाख्यं कालमारभ्यैव दिनमासादिक्लृप्तिरुक्ता । **'सार्धद्वाविंशतिः श्वासाः क्रमात् द्वादशराशय'** इत्यादिना च राशिचन्द्रसूर्यादिकल्पना च श्वासमय्येवेत्यादिरूपा विलक्षणा प्रक्रिया दर्शिता । तद्रीत्या च ललितायाः प्राणात्मत्वमेव स्फुटीभवतीति तद्रूपेत्यर्थः ॥ २०० ॥

## मार्ताण्डभैरवाराध्या मन्त्रिणीन्यस्तराज्यधूः ।

श्रीपुरे द्वाविंशत्रयोविंशयोः प्राकारयोर्मध्यभूम्यामस्ति मार्ताण्डभैरवो देवो देव्युपासकः । तथा चोक्तं तद्वर्णनावसरे **दूर्वासदेशिकेन्द्रेण**–

**'चक्षुष्मतीप्रकाशनशक्तिच्छायासमारचितकेलिम् ।**
**माणिक्यमुकुटरम्यं मन्ये मार्ताण्डभैरवं हृदयः ॥'**

इति । मणिमल्लाख्यदैत्यहननायाश्वारूढः शिवो भुवमागतो मल्लारिपदवाच्यो मार्ताण्डभैरवपदेनापि व्यवह्रियत इति महाराष्ट्रेषु **तन्त्रचिन्तामणि**नामके तन्त्रे च प्रसिद्धम् । तत्कृतदेव्याराधनापि मल्लारिमाहात्म्य एव प्रसिद्धा । यद्वा मार्ताण्डः सूर्यः । **'मृतेऽण्डे येन सञ्जातो मार्ताण्डस्तेन भास्कर'** इति **स्कान्दात्** । शकन्ध्वादित्वात्पररूपम् । **'तत्र जात'** इति तद्धितः । भैरवो बटुकादिरनेकविधः । तत्र सूर्याराध्यत्वं **पद्मपुराणे**–

**'देव्या रत्नमयीं मूर्तिं भक्त्या नित्यं दिवाकरः ।**
**पूजयित्वाप्तवान्दिव्यं सूर्यत्वं शुभमुत्तमम् ॥'**

इति । भैरवाराध्यत्वं तु **कालिकापुराणे** बहुशः प्रतिपादितम् । भीरूणां समूहो वा भैरवम् । **'दुर्गे स्मृता हरसि भीतिमशेषजन्तो'**रिति देवीस्तुतिप्रकरणे **मार्कण्डेयपुराणात्** । सर्वेषामेकशेषे तैराराध्या । अथवा **'उद्यमो भैरव'** इति **शिवसूत्रे** प्रतिपादित उद्योगो

---

मार्ताण्डभैरवः सूर्यमण्डला[भिमा]निनी देवता तेनाराध्या । आराध्यायै इति ॥ मन्त्रिण्यां राजश्यामलायां न्यस्ता संस्थापिता, राज्यधूः राज्यभारो यया । धुरे इति ॥

भैरव इत्युच्यते । स एव मोहान्धकारनाशकत्वान्मार्ताण्डः । तदुक्तम्—'**मोहजयादनन्ताभोगात्सहजं विद्याजय**' इति सूत्रे **वार्तिककारैः**—

**'मोहस्तमो निजाख्यातिस्तज्जयात्तत्पराभवात् ।**
**उद्यमार्कोत्थितोऽनन्तः संस्कारप्रशमावधिः ॥**
**आभोगो यस्य विस्तार इदृशाद्दर्शितात्मनः ।**
**भवेत्सहजविद्याया जयो लाभोऽस्य योगिनः ॥'**

इति । मार्ताण्डतुल्येन भैरवेणोद्योगविशेषेणाराध्या लभ्येत्यर्थः। मन्त्रिणी श्यामलाम्बा । राज्योपयोगिविचारवाचकमन्त्रशब्दादिनिप्रत्यये नान्तत्वान् ङीप् । तस्या न्यस्ता निक्षिप्ता राज्यधूः राज्यभारो यया । तदुक्तं **ब्रह्माण्डपुराणे** राजश्यामलां प्रक्रम्य—

**'ललितापरमेशान्या राज्यचर्चा तु यावती ।**
**शक्तीनामपि या चर्चा सर्वा तस्यां वशंवद ॥'**

इति । अथवा । मन्त्रोपासका मन्त्रिणः । मननत्राणधर्मवत्त्वान्निर्मलचित्तमेव वा मन्त्रस्तद्वन्तो मन्त्रिणः । तान्नयति भगवत्यैक्यं प्रापयतीति मन्त्रिणी प्रयत्नविशेषः । तस्मिन्मन्त्रिण्यां न्यस्ता निवेशिता राज्यस्य स्वसाम्राज्यरूपस्यैक्यरहस्यस्य धूस्तज्जनकतावच्छेदको धर्मो यया । उपासकानां योगिनां च प्रयत्नविशेषैणैक्यताप्तिरपि देव्यधीनेति फलितार्थः । तदिदमुक्तं '**चित्तं मन्त्रः । प्रयत्नः साधकः । विद्याशरीरस्फुरत्ता मन्त्ररहस्यम्**' इति त्रिभिः **शिवसूत्रैः**। उक्तञ्च भगवता **कृष्णदासेन**—

**'चेत्यतेऽनेन परमं स्वात्मतत्त्वं विमृश्यते ।**
**इति चित्तं स्फुरत्तात्मप्रासादादिविमर्शनम् ॥**
**तदेव मन्त्र्यते गुप्तमभेदेनान्तरैश्वरम् ।**
**स्वस्वरूपमनेनेति मन्त्रस्तेनास्य देशिकैः ॥**
**पूर्णाहन्तानुसन्ध्यात्मस्फूर्जन्मननधर्मतः ।**
**संसारक्षयकृत्त्राणधर्मतो रविरुच्यते ॥**
**तन्मन्त्रदेवतामर्शप्राप्ततत्सामरस्यभूः ।**
**आराधकस्य चित्तं च मन्त्रस्तद्धर्मयोगतः ॥**
**अस्य चोक्तस्य मन्त्रस्य मननत्राणधर्मिणः ।**
**उक्तमन्त्रानुसन्धानावष्टम्भोद्यन्त्रणात्मकः ॥**
**प्रयत्नोऽन्तःस्वसंरम्भः स एव खलु साधकः ।**
**यतो मन्त्रयितुर्मन्त्रो देवतैक्यसमप्रभः ॥**
**ईदृक्साधकयुक्तेन योगिना प्रथमोदितम् ।**
**पूर्णाहन्तानुसन्ध्यात्म वीर्यं मन्त्रस्य लभ्यते ॥**

**विद्येति परमाद्वैतसम्प्रवेदनरूपिणी ।**
**शरीरं यस्य भगवान् शब्दराशिः स उच्यते ॥**
**तस्य सम्यक्समस्ताध्वपूर्णाहन्तास्वरूपिणी ।**
**स्फुरत्ता सैव मन्त्राणां मननत्राणधर्मिणाम् ॥**
**गुप्तार्थता जनानां तु रहस्यमिति कथ्यते ।'**

इति । **क्षेमराजवृत्ता**वितोऽपि विस्तरो द्रष्टव्यः ।

**त्रिपुरेशी जयत्सेना निस्त्रैगुण्या परापरा ॥ २०१ ॥**

सर्वाशापरिपूरकचक्राधीश्वर्यास्त्रिपुरेशीति नाम । तदभेदादियमम्बापि तथोच्यते । जयन्ती भण्डासुरादिजयिनी सेना शक्तिसमूहो यस्याः । जयत्सेनाख्यराजविशेषस्वरूपा वा । निर्गतं त्रैगुण्यं गुणत्रयवत्त्वं यस्याः । परशब्दोऽपरशब्दः परापरशब्दो वा यस्य वाचकस्तत्स्वरूपत्वात्परापरा। परोऽन्यः अपरस्तद्भिन्नत्वात्स्वीयः । यद्वा पर उत्कृष्टः । अपरो निकृष्टः । **'ब्रह्मदासा ब्रह्मदाशा ब्रह्मेमे कितवा उते'**ति **श्रुतिः** । परो वैरी अपरो मित्रम् । **'न मे द्वेष्योऽस्ति न प्रिय'** इति **स्मृतिः** । परो दूरस्थः अपरोऽन्तिकस्थः । **'दूरस्थं चान्तिके च तदि'**ति **स्मृतिः** । **'परः स्यादुत्तमानात्मवैरिदूरेषु केवल'** इति **विश्वः** । परमपरं चेति द्विविधं सामान्यम् । परापराख्यं तृतीयं च । ब्रह्म द्विविधम्—केवल-शबलभेदात्क्रमेण परमपरमुच्यते । **'एतद्वै सत्यकाम परं चापरं चे'**ति **श्रुतेः** । **द्वे ब्रह्मणी वेदितव्ये परं चापरमेव चे**'ति **स्मृतेश्च** । परं ब्रह्म परं विशेषणं शक्तिः । अपरं पूर्वं विशेष्यं शिवः **'सामरस्यसम्बन्धेन शक्तिविशिष्टः शिव एव हि परंब्रह्म'** । **'युजे वां ब्रह्म पूर्व्यं नमोभि'**रिति **श्रुतौ** युवयोर्मध्ये पूर्वं विशेष्यभूतं ब्रह्म नमोभिर्युनज्मीत्युक्त्या । शिवस्य नमः शेषिणः पूर्व्यमिति निर्देशात् स्वार्थे यत् । **'एषो उषा अपूर्व्या व्युच्छति प्रिया दिव'** इति श्रुतावपूव्या पूर्वस्माद्भिन्ना परेति देव्या निर्देशात् । सृष्ट्यादावीक्षणात्मकोषः कालायमानशक्तेरिह स्तूयमानत्वादित्यादिः **शिवानन्दलहर्यां** विस्तरः । व्योमापि परमपरं चेति द्विविधम् । विद्या द्विविधा परा अपराचेति **मुण्डकोपनिषदुक्ता** । **लिङ्गपुराणे**ऽपि—

**'द्वे ब्रह्मणी वेदितव्ये परा चैवापरा तथा ।**
**अपरा तत्र ऋग्वेदो यजुर्वेदो द्विजोत्तमाः ॥**
**सामवेदस्तथाथर्ववेदः सर्वार्थसाधकः ।**
**शिक्षा कल्पो व्याकरणं निरुक्तं छन्द एव च ॥**

---

त्रयाणां स्थूलसूक्ष्मकारणात्मकानां पुराणां शरीराणाम् ईशी अधिष्ठात्री । ईश्यै इति ॥ जयन्ती जयशालिनी सेनाबलं यस्याः सा । सेनायै इति ॥ निर्गतं त्रैगुण्यं त्रिगुणसम्बन्धः यस्याः सा । त्रैगुण्यायै इति ॥ पराः लोकोत्कृष्टाः ब्रह्मादय अपराः निकृष्टाः यस्याः सा । अपरायै इति ॥ २०१ ॥

**ज्योतिषं चापरा विद्या पराक्षरमिति स्थितम् ।**

**तददृश्यं तदग्राह्यमगोत्रं तदवर्णकम् ॥'**

इत्यादि । '**असंवृतं तदात्मैव परा विद्या न चान्यथे**'त्यन्तम् । परोऽपरश्चेति प्रणवो द्विविधः । तदुक्तं **स्कान्दे** यज्ञवैभवखण्डे–

**'परापरविभागेन प्रणवो द्विविधो मतः ।**

**परः परतरं ब्रह्म प्रज्ञानन्दादिलक्षणम् ॥**

**प्रकर्षेण नवं यस्मात्परं ब्रह्म स्वभावतः ।**

**अपरः प्रणवः साक्षाच्छब्दरूपः सुनिर्मलः ॥**

**प्रकर्षेण नवत्वस्य हेतुत्वात्प्रणवः स्मृतः ।**

**परमप्रणवप्राप्तिहेतुत्वात् प्रणवोऽथवा ॥'**

इति । परोऽपरश्चेति द्विविधो वेदार्थः । तदुक्तं तत्रैव–

**'परापरविभागेन वेदार्थो द्विविधः स्मृतः ।**

**वेदार्थस्तु परः साक्षात्परात्परतरं परम् ॥**

**अपरो धर्मसंज्ञः स्यात्तत्परप्राप्तिसाधनम् ।'**

इति । **योगशास्त्रे** परमपरं परापरं चेति त्रिविधं ज्ञानमुक्तम्–

**'ज्ञानं तत्त्रिविधं ज्ञेयं परापरविभेदतः ।**

**तत्राद्यं परमं ज्ञानं पशुपाशात्मदर्शनम् ॥**

**द्वितीयं परमं ज्ञानं केवलं पाशदर्शनम् ।**

**यथा दृष्ट्यन्तरं रात्रौ नरमार्जारनेत्रयोः ॥**

**तथा विलक्षणं ज्ञानं परापरमुदीरितम् ।'**

इति । पराऽपरा परापरा चेति पूजा त्रिविधा । तदुक्तं **नित्याहृदये**–

**'तव नित्योदिता पूजा त्रिभिर्भेदैर्व्यवस्थिता ।**

**परा चाप्यपरा गौरी तृतीया च परापरा ॥**

**प्रथमाद्वैतभावस्था सर्वप्रचरगोचरा ।**

**द्वितीया चक्रपूजा च सदा निष्पाद्यते मया ॥**

**एवं ज्ञानमयी देवी तृतीया स्वप्रथामयी ।'**

इति । परापरा चेति वाक् द्विविधा । अपरा तु पश्यन्त्यादिभेदात्त्रिविधा । परापरा चेति अवस्था द्विविधा । तत्र परा तुर्या । अपरा तु जाग्रदादिभेदात्त्रिविधा । तदुक्तं **विज्ञानभैरवभट्टारकैः** –

**'यत्र यत्र मनो याति बाह्ये वाभ्यन्तरे प्रिये ।**

**तत्र तत्र परावस्था व्यापकत्वात्प्रसिध्यति ॥'**

इति । परोऽपरश्चेति द्विविधो होमः । तत्रापरः स्थूलसूक्ष्मभेदात्पुनर्द्विविधः । तदिदमुक्तं **स्वतन्त्रतन्त्रे** प्रसिद्धं स्थूलहोमं मूलाधाराग्न्यधिकरणकं प्राणाग्निहोत्रसमानधर्माणं सूक्ष्महोमं च प्रतिपाद्य तदन्ते–

**'वाच्यार्थानामशेषेण वेद्यवेत्तृविदात्मनाम् ।**
**स्थितिः परो भवेद्धोमः सर्वभेदविलापनात् ॥**
**स्वात्मरूपमहावह्निज्वालारूपेषु सर्वदा ।**
**निरुद्धेन्धनरूपेषु परमार्थात्मनि स्थिरे ॥**
**निर्व्युत्थानविलापस्तु परहोमः समीरितः ।'**

इति । मन्त्रपारायणान्तर्गतमन्त्रविशेषः परापरेत्युच्यते । देव्यपि त्रिविधा–पराऽपरा परापरा चेति । तदुक्तं **वराहपुराणे** त्रिमूर्तिं प्रकृत्य–

**'तत्र सृष्टिः परा प्रोक्ता श्वेतवर्णस्वरूपिणी ।**
**या वैष्णवी विशालाक्षी रक्तवर्णस्वरूपिणी ॥**
**अपरा सा समाख्याता रौद्री चैव परापरा ।**
**एतास्तिस्रोऽपि सिध्यन्ति यो रुद्रं वेत्ति तत्त्वतः ॥'**

इति । अत्र परापरपदयोर्विभजनेन सप्तदशार्थमेलनेन तु पञ्चेति द्वाविंशतिः । अन्येऽपि यथालाभं योजनीयाः ॥ २०१ ॥

**सत्यज्ञानानन्दरूपा सामरस्यपरायणा ।**

सत्यं ज्ञानमानन्दश्च रूपं यस्याः । **'सत्यं ज्ञानमनन्तं ब्रह्म', 'नित्यं विज्ञानमानन्दं ब्रह्मे'**ति **श्रुतेः** । सती सद्विद्या तद्विषये अज्ञा अनभिज्ञा ये तेषामनानन्दमानन्दभिन्नं दुःखमेव रूपयति ददातीति । **'अन्धं तमः प्रविशन्ति येऽविद्यामुपासत'** इति **बृहदारण्यक ईशावास्ये** च श्रवणात् । अविद्यामिति पदकाराणां पदपाठः । **'विद्यान्योपासनामेवं निन्दत्यारण्यकश्रुति'**रिति **ब्रह्माण्डपुराणे** उपबृंहणञ्च । यद्वा । सत्याविद्या देव्या अज्ञानं येषां ते सत्यज्ञानाः तेषामानन्दाख्यान् लोकान् रूपयतीति आरण्यक एवोक्तश्रुतेः परतस्तथा श्रवणात् ।

**'अनन्दा नाम ते लोका अन्धेन तमसा वृताः ।**
**तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधा जनाः ॥'**

इति । समो न्यूनानधिको रसो ययोस्तयोः शिवशक्त्योर्भावः सामरस्यमेव परमयनं स्थानं यस्याः । उक्तं **चाभियुक्तैः**–

**'परस्परतपः सम्पत्फलायितपरस्परौ ।**
**प्रपञ्चमातापितरौ प्राञ्चौ जायापती स्तुमः ॥'**

---

सत्यं ज्ञानात्मकानन्दः रूपं यस्याः सा । रूपायै इति ॥ सामरस्यमैक्यं तदेव परमुत्कृष्टमयनं स्थानं यस्याः सा । परायणायै इति ॥

इति । '**भोक्तृभोग्यकरणोर्मिसंक्षये सामरस्यरसदोहिनी शिवे**'त्यादिकालिदासोक्तिश्च । '**समप्रधानौ समसत्त्वौ समो तयो**'रिति **श्रुति**श्च । अमरैः सहितस्य सामरस्य लोकस्य परायणमाश्रयो वा । रस्यन्ते गीयन्त इति रस्यानि सामानि च तानि रस्यानि च तानि परायणानि अ भीष्टानि यस्या वा । बहुलग्रहणान्न विशेषणस्य पूर्वनिपातः । '**परायणमभीष्टं स्यात्तत्पराश्रययोरपी**'ति **विश्वः** । कपर्द इत्यधिकृत्य '**भूमनिन्दाप्रशंसासु नित्ययोगेतिशायन**' इति **सूतसंहिताटीकाकारै**र्लिखितात्स्मरणाद्बाहुल्यप्रशंसादिमती । वराटकमालाभूषिता वा । मैरालावतारस्य शिवस्याङ्गना महालसानाम्नी वराटकालङ्कारैव '**पर्व पूर्ता**'विति धातोर्भावे क्विपि राल्लोपे च परशब्दः पूर्तिवाची । अन्तर्भावितण्यर्थात्कर्तरि वा क्विपि पूरवाची । कस्य गङ्गाजलस्य पूरं प्रवाहं दापयति शोधयतीति कपर्दः । '**दैप् शोधन**' इति धातोः सुप्युपपदे '**आतो धातोः**', '**सुपि स्थ**'इति योगविभागात्कः ।

## कपर्दिनी कलामाला कामधुक्कामरूपिणी ॥ २०२ ॥

गङ्गाया अपि पाविका यज्जटा इत्यर्थः । '**कपर्दः खण्डपरशोर्जटाजूटे वराटके**' इति **विश्वः** । '**आर्भट्या शशिखण्डमण्डितजटाजूटा**'मिति **लघुस्तवो**क्तरूपवती वा । कपर्दिनामकस्य शिवस्य पत्नी वा । **देवीपुराणे**ऽष्टषष्टिशिवक्षेत्रगणनावसरे छगलाण्डे कपर्दिनमिति स्मरणात् । कलानां चतुःषष्ट्यादिरूपाणां माला परम्परा । कलां लावण्यं मां शोभां च लातीति वा । कामान् दोग्धीति कामधुक् । मनोरथान् पूरयतीत्यर्थः । कामधेनुस्वरूपा वा । '**सा नो मन्द्रेषमूर्जं दुहाना धेनुर्वागस्मानुपसुष्टुतैत्वि**'ति **श्रुतेः** । कामः परशिव एव रूपमस्याः । '**सोऽकामयत बहुस्यां प्रजायेय**' इति **श्रुति**सिद्धजगत्सिसृक्षावानीश्वरः कामेश्वरः तमधिकृत्य काण्वा अधीयते '**य एवायं काममयः पुरुषः स एव दैवशाकल्यस्तस्य का देवतेति स्त्रिय इति होवाचे**'ति । कामं यथेच्छं वा रूपाण्यस्याः ॥ २०२ ॥

## कलानिधिः काव्यकला रसज्ञा रसशेवधिः ।

कलानां नानाविधतया पूर्वं वर्णितानां निधिः '**आत्मैवास्य षोडशी कले**'ति **बृहदारण्यको**क्तेरात्मनां जीवानां निधिर्वा । चन्द्रमण्डलरूपा वा । '**योनिवर्गः कला**

---

कपर्दिनः शिवस्य स्त्री कपर्दिनी । कपर्दिन्यै इति ॥ कलानां चतुष्षष्टिसंख्यानां माला परम्परा यस्याः सा । मालायै इति ॥ भक्तानां काम[ा]नभीष्टान् दोग्धीति सा । दुहे इति ॥ कामः कामेश्वरः स एव रूपं स्वरूपमस्याः । रूपिण्यै इति ॥ २०२ ॥

कलानां पूर्वोक्तानां निधिः शेवधिः । निधये इति ॥ काव्यात्मककलारूपा । कलायै इति ॥ रसान् शृङ्गारादीन् जानातीति सा । ज्ञायै इति ॥ रसानां शेवधिः शेवधये इति ॥

**शरीर**'मिति **शिवसूत्रे** कलाशब्दः कर्मपरत्वेन तद्भाष्ये व्याख्यातः । तेन कर्माणि निधीयन्तेऽस्यामिति वा । अधिकरणे क्विः । **'सर्वं कर्माखिलं पार्थ ज्ञाने परिसमाप्यत'** इति **स्मृतेः** । कवेः कर्म काव्यम् । तच्च नाटकशाटकभाणडिमप्रहसनादिभेदादनेकविधमग्निपुराणादौ प्रदर्शितं तादृशकलाप्यम्बाया एव रूपम् । उक्तञ्च **विष्णुपुराणे**–

**'काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च ।**
**शब्दमूर्तिधरस्यैतद् वपुर्विष्णोर्महात्मनः ॥'**

इति । काव्योत्पादकप्रतिभैव वा काव्यकला । ध्यानविशेषेण काव्यनिर्माणसामर्थ्यप्रदत्वस्य **तन्त्रेषु** बहुशो वर्णनात् । काव्यस्य शुक्रस्य मृतसञ्जीवन्याख्यकलारूपा वा । रसान् शृङ्गारादिभेदेन दशविधान् जानातीति रसज्ञा । रसनेन्द्रियस्वरूपा वा । रसस्य ब्रह्मामृतस्य शेवधिर्निधिः । **'रसो वै सः । रसं ह्येवायं लब्ध्वानन्दी भवती'**ति **श्रुतेः** । **ब्रह्माण्डे**ऽपि–

**'रस एव परं ब्रह्म रस एव परा गतिः ।**
**रसो हि कान्तिदः पुंसां रसो रेत इति स्मृतः ।'**
**'रसो वै रससंलब्ध्या ह्यानन्दी भवतीत्यपि ।**
**वेदप्रामाण्यसंसिद्ध्या रसः प्राणतया स्थितः ॥'**
**को ह्येवान्याच्च कः प्राण्यादित्यपि श्रुतिभाषितः ।**
**प्राणात्मको रसः प्रोक्तः प्राणदः कुम्भसम्भव ॥'**

इति । **'निधिः शेवधिरिती'**ति **यास्कः** । **'निधिर्ना शेवधि'**रिति **कोशा**त्पुंलिङ्गौ निधिशेवधिशब्दौ । तेन कलानिधये नमः । रसशेवधये नम इत्येव प्रयोगो न पाक्षिको निध्यै शेवध्यै नम इति । कलानां रसनां च निधिः शेवधिर्यस्या इति विग्रहे तु सोऽपि सम्भाव्यते ।

**इति श्रीभासुरानन्दकृते सौभाग्यभास्करे ।**
**शतकेनाष्टमेनाभूद्विश्वाख्या नवमी कला ॥ ८०० ॥**

**इति श्रीललितासहस्रनामभाष्येऽष्टमशतकं नाम नवमीकला ॥ ९ ॥**

●

# नवमशतकं नाम दशमी बोधिनी कला

**पुष्टा पुरातना पूज्या पुष्करा पुष्करेक्षणा ॥ २०३ ॥**

षट्त्रिंशत्तत्त्वविग्रहशीलत्वात्पुष्टा । बहुभिर्गुणैर्ब्रह्मरसेन ब्राह्मणैर्वा पुष्टा । '**ब्राह्मणैः पोषितं ब्रह्मे**'ति स्मृतेः । '**ब्रह्मायुष्मत्तद्ब्राह्मणैरायुष्म**'दिति श्रुतेश्च । सर्वेषामादिभूतत्वात्पुरातना ङीबभावश्छान्दसः । पुरातना गुणा अस्यां सन्तीत्यर्थे मत्वर्थीयाच्प्रत्ययान्ताद्वा टाप् अत एव सर्वेषां पूज्या पूजयितुं योग्या । प्रतीक्ष्या वा । पुष्कं पोषणं रात्यादत्तेऽसौ पुष्करा । पुष्कराख्यतीर्थरूपा वा । रलयोरभेदाद्व्याप्तेति वा । पुष्कराणीव कमलानीवेक्षणानि नयनानि यस्याः ।

**'पुष्करं पङ्कजे व्योम्नि पयःकरिकराग्रयोः ।**
**ओषधीद्वीपविहगतीर्थरागोरगान्तरे ॥**
**पुष्करं तूर्यवक्त्रे च काण्डे खड्गफलेऽपि च ।'**

इति **विश्वः** । एवं पुष्कराख्यो योगोऽपि **पाद्मे** प्रसिद्धः—

**'विशाखास्थो यदा भानुः कृत्तिकासु च चन्द्रमाः ।**
**संयोगः पुष्करो नाम पुष्करेष्वतिदुर्लभः ॥'**

इति । पुष्करशब्दः पृथिवीपरोऽपि । तदुक्तं **पद्मपुराण** एव—

**'या पद्मकर्णिका देवास्तां पृथ्वीं परिचक्षते ।**
**ये पद्मे सारगुरवस्तान् दिव्यान्पर्वतानिह ॥**
**यानि पर्णानि पद्मस्य म्लेच्छदेशास्तु तेऽभवन् ।**
**यान्यधोभागपत्राणि ते सर्पाणां सुरद्विषाम् ॥**
**एवं नारायणस्यार्थे मही पुष्करसम्भवा ।**
**प्रादुर्भावोच्छ्रयस्तस्मान्नाम्ना पुष्करसंज्ञिता ॥'**

इति । तेन यथासम्भवं मह्यादिविषये क्षण उत्सवो निर्व्यापारस्थितिर्वा यस्या इति वार्थः । '**निर्व्यापारस्थितौ कालविशेषोत्सवयोः क्षण**' इत्य**मरः** । सप्तम्या अलुक् । पुष्करशब्दो न्यग्रोधवृक्षपरोऽपि दृश्यते । पुष्करद्वीपपदस्य तद्वत्त्वेन **मत्स्यपुराणे** निर्वचनदर्शनात्—'**न्यग्रोधः पुष्करद्वीपे पुष्करस्तेन सः स्मृत**' इति । **विष्णुपुराणे**ऽपि—'**न्यग्रोधः पुष्करद्वीपे ब्रह्मणः स्थानमुत्तम**'मिति । '**स प्रजापतिरेकः पुष्करपर्णे समभवदि**'ति **श्रुति**रपि ।

---

पुष्टा पुष्टिमती सर्वात्मकत्वात् । पुष्टायै इति ॥ सर्वजगतामादिभूतत्वात् पुरातना । पुरातनायै इति ॥ सर्वेषां पूजनयोग्या । पूज्यायै इति ॥ पुष्कराख्यतीर्थरूपा । पुष्करायै इति ॥ पुष्कराणीव कमलानीव ईक्षणानि नेत्राणि यस्याः सा । ईक्षणायै इति ॥ २०३ ॥

न्यग्रोधपर्णशायित्वाद्विष्णुरत्र लक्षणया गृह्यते । तत्रेक्षणं कृपानिरीक्षणं यस्या इति वा । तदुक्तं **देवीभागवते**–

**'वटपत्रशयानाय विष्णवे बालरूपिणे ।**
**श्लोकार्धेन तदा प्रोक्तं भगवत्याखिलार्थदम् ॥'**

इति । अम्भस्स्वीक्षणं यस्या इति वा । **'तानि वा एतानि चत्वार्यम्भांसि देवा मनुष्याः पितरो सुरा'** इति **श्रुतेः** ॥ २०३ ॥

**परंज्योतिः परंधाम परमाणुः परात्परा ।**

परमुत्कृष्टं ब्रह्मात्मकं ज्योतिः । **'तद्देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृत'**मिति **बृहदारण्यकात्** । **'न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्नि'**रिति **श्रुत्या 'येन सूर्यस्तपति तेजसेद्ध'** इति **श्रुत्या** च परत्वम् । **'परं ज्योतिरुपसम्पद्ये'**ति **श्रुति**-रपि । **'मनो ज्योतिर्जुषतां'**, **'वाचैवायं ज्योतिषास्ते'**त्यादिप्रयोगात्प्रकाशमात्रं ज्योतिरुच्यते । तेष्वात्मज्योतिः परमिति भावः । **दक्षिणामूर्तिसंहितायां** पञ्चमपटलोक्तोऽष्टाक्षर-मन्त्रोऽपि परंज्योतिरुच्यते । परं धाम उत्कृष्टं तेजः ।

**'न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥'**

इति **गीतासु** धामशब्दस्यावस्थापरतया तदतिक्रान्तं यत्परं धाम । उक्तञ्च **आचार्यै**

**'त्रिषु धामसु यद्भोग्यं भोक्ता यश्च प्रकीर्तितः ।**
**वेदैतदुभयं यस्तु स भुञ्जानो न लिप्यते ॥'**

इति । **यज्ञवैभवखण्डेऽपि**–

**'जाग्रत्स्वप्नसुषुप्त्याख्यं वेदधामत्रयं तु यः ।**
**स एवात्मा न तद्दृश्यं दृश्यं तस्मिन्प्रकल्पितम् ।**
**त्रिधामसाक्षिणं सत्यज्ञानानन्दादिलक्षणम् ।**
**त्वमहंशब्दलक्ष्यार्थं परं धाम समाश्रयेः ॥'**

इति धामशब्दः पदपरो वा । परं पदमित्यर्थः । **'तद्विष्णोः परमं पद'**मिति **श्रुतेः** । **कूर्मपुराणेऽपि**–**' सैषा माहेश्वरी गौरी मम शक्तिर्निरञ्जना ।'** **'शान्ता सत्या सदानन्दा परं पद'**मिति

---

परं सर्वप्रकाशकत्वादुत्कृष्टं ज्योतिः प्रकाशः । परस्मै ज्योतिषे इति ॥ धाम्नो जाग्रदाद्यवस्थातः परं तत्साक्षिभूतम् । परस्मै धाम्ने इति ॥ परमा च सा अण्वी च । इदमिति बहिष्ट्वेन ज्ञातुमशक्यत्वात् । अणवे इति ॥ परात् जगत्पूज्यब्रह्मादेरपि परा उत्कृष्टा । परायै इति ॥

**श्रुति**रपि । परस्मैज्योतिषे नमः, परस्मैधाम्ने नम इति प्रयोगः । परमिति मान्तमव्ययमित्याहुः । परमा च साण्वी च '**वोतो गुणवचना**'दिति विविधैर्वैकल्पिकत्वात् ङीबभावः । '**अणोरणीया**'निति **श्रुतिः**। दुर्ज्ञेयेत्यर्थः । तार्किककल्पिताः पीलवोऽप्यस्या एव रूपमिति वा । परम उत्कृष्टोऽणुर्मन्त्रो वा । परादुत्कृष्टाद्ब्रह्मविष्णुरुद्रादपि परा श्रेष्ठतरा । यद्वा ब्रह्मायुः परिमाणं परमित्युच्यते तस्मात्परा तादृशसंख्यापरिच्छेदरहिता । तत्र परंधामत्वं परमाणुत्वं च हेतुः । तथैव च दर्शितं **कालीपुराणे**—

**'तस्य ब्रह्मस्वरूपस्य दिवारात्रं च यद्भवेत् ।**
**तत्परं नाम तस्यार्धं परार्धमभिधीयते ॥**
**स ईश्वरस्य दिवसस्तावती रात्रिरुच्यते ।**
**स्थूलात्स्थूलतमः सूक्ष्माद्यस्तु सूक्ष्मतमो मतः ॥**
**न तस्यास्ति दिवारात्रिव्यवहारो न वत्सरः ।'** इति ।

## पाशहस्ता पाशहन्त्री परमन्त्रविभेदिनी ॥ २०४ ॥

पाशो हस्ते वामाधःकरे यस्याः । '**प्रहरणार्थेभ्यः परे निष्ठासप्तम्या**'विति पूर्वनिपातापवादः । पाशान् हस्तयते हस्तेन निरस्यतीति वा । पाशानां हन्त्री नाशिका । उक्तञ्च **हरिवंशे**—

**'नागपाशेन बद्धस्य तस्योपहतचेतसः ।**
**त्रोटयित्वा करैर्नागपञ्जरं वज्रसन्निभम् ।**
**बद्धं बाणपुरे वीरमनिरुद्धमभाषत ।**
**सान्त्वयन्ती च सा देवी प्रसादाभिमुखी तदा ॥'**

इत्यादि । परेषां स्वोपासकद्विषां राज्ञां मन्त्रान् प्रभुमन्त्रोत्साहाख्यशक्तित्रयान्तर्गतान् शक्तिविशेषणान्विशेषाद्भिनत्ति । यद्वा परैरभिचाराद्यर्थं प्रयुक्तो मनुः परमन्त्रः शत्रुप्रयुक्तोऽस्त्रमन्त्रो वा । उक्तञ्च **हरिवंशे** प्रद्युम्नं प्रतीन्द्रसन्देशे '**तदस्त्रप्रतिघाताय देवीं स्मर्तुमिहार्हसी**'ति । यद्वा पर उत्कृष्टो मन्त्रः पञ्चदशीरूपस्तं विभेदयति ।

**'मनुश्चन्द्रः कुबेरश्च लोपामुद्रा च मन्मथः ।**
**अगस्तिरग्निः सूर्यश्च नन्दी स्कन्दः शिवस्तथा ॥**
**क्रोधभट्टारको देव्या द्वादशामी उपासकाः ।'**

---

पाशः हस्ते यस्याः सा । हस्तायै इति ॥ भक्तानां दिपाश[ा]नां हन्त्री नाशिका । हन्त्र्यै इति ॥ परेषां स्वभक्तवैरिणाम् अभिचारिका ये मन्त्राः तान् विभेदयतीति सा । भेदिन्यै इति ॥ २०४ ॥

इति **तन्त्रोक्त**रीत्या द्वादशविधं करोति । अथवा परा उत्कृष्टा ये मन्तारो मनन-कर्तारस्तेषामवीन् पापानि भेदयति नाशयति ।

**'अविशब्देन पापानि कथ्यन्ते श्रुतिषु द्विजैः ।**
**तैर्मुक्तं न मया त्यक्तमविमुक्तमतः स्मृतम् ॥'**

इति **लिङ्गपुराणे**ऽविपदस्य पापपरत्वकथनात् ॥ २०४ ॥

## मूर्तामूर्ताऽनित्यतृप्ता मुनिमानसहंसिका ।

रूपवद्वस्तु मूर्तं वाय्वाकाशादिकममूर्तं तत्तद्रूपेति नामद्वयार्थः । यद्वा पञ्चीकृतानि महाभूतानि मूर्तानि अपञ्चीकृतानि तु भूतसूक्ष्माण्यमूर्तानि । '**द्वा वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चे**'ति **श्रुतौ** द्वेधापि व्याख्यानदर्शनात् । प्रपञ्चब्रह्मणी वा मूर्तामूर्ते–

**'द्वे रूपे ब्रह्मणस्तस्य मूर्तं चामूर्तमेव च ।**
**क्षराक्षरस्वरूपे ते सर्वभूतेष्ववस्थिते ॥**
**अक्षरं ब्रह्म कूटस्थं क्षरं सर्वमिदं जगत् ।'**

इति **विष्णुपुराण**दर्शनात् । चलनात्मकक्रियावत्त्वं मूर्तत्वमिति तार्किककल्पनाया निर्मूलत्वेनाश्रद्धेयत्वात्। अनित्यैरेवोपचारैस्तृप्तेति पञ्चाक्षरं नाम भक्तिमात्रप्रियत्वात्। अथवा अनिति श्वसतीति जीवोऽनितिपदार्थः । '**इक्श्तिपौ धातुनिर्देशे**' इत्यनेन शब्दनिर्देशे श्तिपो विधानेऽपि प्रकृते धात्वर्थपरोऽयमनिमिः । '**यजतिषु ये यजामहं करोती**'ति **श्रुतौ**, '**इतिकर्तव्यताविधेर्यजतेः पूर्ववत्व**'मिति **जैमिनिसूत्रे**, '**ईक्षतेर्नाशब्द**'मिति **व्याससूत्रे**ऽर्थपरस्यापि प्रयोगस्य दर्शनात् । ततश्च जीवैरतृप्तेत्यर्थः । '**यस्य ब्रह्म च क्षत्रं चोभे भवत ओदन**' इति **श्रुत्या** सर्वभक्षकत्वात् । यद्वा इति एवंप्रकारेण अतृप्ता न तृप्ता न भवतीति न । द्वौ नञौ प्रकृतमर्थं गमयतः । ईदृशः प्रकारो नास्ति येन तृप्ता न स्यात् । अपि तु सर्वैरपि प्रकारैस्तृप्तैव ।

**'पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति ।**
**तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ।'**

इति वचनेन भक्तिमात्रेण यत्किञ्चिदपि दत्तं तृप्तिकार्येवेति कथनात् । मुनीनां मानसं मन एव श्लेषात् मानसाख्यं सरस्तत्र हंसीव । स्वार्थे कः । यद्वा मुनीनां माने बहुमानविषये सहंसिकेव पादकटकयुक्तेव । तेषां मानेन सन्तोषात् नृत्यतीवेति तात्पर्यार्थः । '**हंसकः पादकटक**' इति **कोशः** ।

---

मूर्ता बाह्येन्द्रियगोचरजगद्रूपा । मूर्तायै इति ॥ न मूर्ता अमूर्ता, तद्भिन्नसुखादिरूपा । अमूर्तायै इति ॥ भक्तकृतैग(र्ग)न्धादिरूपनित्योपचारैरपि तृप्ता । अनित्यतृप्तायै इति ॥ मुनीनां मननशीलानां यन्मानसं गम्भीरनैर्मल्यादिगुणेन मानससरस्तुल्यं तत्र हंसिकेव नित्यसम्बद्धा । हंसिकायै इति ॥

**सत्यव्रता सत्यरूपा सर्वान्तर्यामिणी सती ॥ २०५ ॥**

सत्यं ब्रह्मैव व्रतं भक्ष्यमुपचारात्तद्वत्प्रियं यस्याः । **'पयोव्रतं ब्राह्मणस्ये'**ति **श्रुतौ** व्रतपदस्य भक्ष्ये प्रयोगदर्शनात् सत्यमेव व्रतं यस्या वा । सत्योक्तिमात्र-परिपालनरूपव्रतेन लभ्येति यावत् । सत्यानि शीघ्रफलदानि व्रतानि यस्या वा । कृष्णप्राप्त्यर्थं गोपीभिः कृतानां कात्यायनीव्रतानां शीघ्रमेव फलवत्ताया **विष्णुभागवते** वर्णनात् ।

**'सकृदेव प्रपन्नाय तवास्मीति च याचते ।**
**अभयं सर्वथा तस्मै ददाम्येतद् व्रतं मम ॥'**

इति भगवदुक्तं व्रतममोघं यस्या इति वा । अथवा **'शरीरवृत्तिर्व्रत'**मिति **शिवसूत्रे** शरीरधारणमपि व्रतमेवेत्युक्तम् ।

**'शिवभक्तिसुधापूर्णे शरीरे वृत्तिरस्य या ।**
**व्रतमेतदनुष्ठेयं न तुच्छं तच्च धारणम् ॥'**

इति **वार्तिकात्** । तादृशं व्रतं सत्यमावश्यकं यया यद्भक्त्या सा । अत एव शरीरधारणं प्रार्थितं भगवता **भट्टोत्पलेन**–

**'अन्तरुल्लसितस्वच्छशक्तिपीयूषपोषितम् ।**
**भवत्पूजोपभोगाय शरीरमिदमस्तु मे ॥'**

इति । अथवा सत्यव्रतोनाम ब्राह्मणः सूकरभयात् ऐऐ इत्युच्चार्य तावतैव तपसा महाकविर्देवीभक्तो जातस्तदभेदात्सत्यव्रता । तदुक्तं **देवीभागवते** तृतीयस्कन्धे–

**'अनक्षरो महामूर्खो नाम्ना सत्यव्रतो द्विजः ।**
**श्रुत्वाक्षरं कोलमुखात् समुच्चार्य स्वयं ततः ॥**
**बिन्दुहीनं प्रसङ्गेन जातोऽसौ विबुधोत्तमः ।**
**ऐकारोच्चारणादेव तुष्टा भगवती तदा ॥**
**चकार कविराजं तं दयार्द्रा परमेश्वरी ।'**

इत्यादि । सत्यं कालत्रयाबाध्यं रूपं यस्याः । रूपपदान्मत्वर्थीयेऽचि सत्यं रूपवद्ययेति वा । सत्यसंरक्षिकेति यावत् । तथा च बह्वृचाः पठन्ति **'सच्चासच्च वचसी पस्पृधाते । तयोर्यत्सत्यं यतरदृजीयस्तदित्सोमोऽवति हन्त्यासत्'** इति । उमया सहितः सोम इत्यर्थ । सर्वेषामन्तःकरणनियामक इति । **'एष त आत्मान्तर्याम्यमृत'** इत्यन्तर्यामि**ब्राह्मणात्** ।

---

सत्यम् आवश्यकफलदायकं व्रतं यस्याः सा । व्रतायै इति ॥ सत्यमबाधितं रूपं यस्याः सा । रूपायै इति ॥ सर्वेषां अन्तः अन्तःकरणं नियमयतीति सा । यामिण्यै इति ॥ सती पतिव्रता । सत्यै इति ॥ २०५ ॥

**'एषोऽन्तर्याम्येष योनिः सर्वस्ये**'ति **माण्डूक्यश्रुतेश्च** । सर्वा च सान्तर्यामिणी चेति वा । सर्वस्वरूपा सर्वेषामनन्तश्च प्रविष्टेत्यर्थः । '**तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभव**'दिति **श्रुतेः** । **स्मृतिश्च**—

**'सर्वस्य सर्वदा ज्ञानात्सर्वस्य प्रभवाप्ययौ ।**
**सतोऽसतश्च कुरुते तेन सर्वेति कथ्यते ॥'**

इति । पातिव्रत्यात्सद्रूपत्वाच्च सती । दाक्षायण्या इदं नाम । तदुक्तं **ब्रह्मपुराणे** हैमवतीं प्रकृत्य—

**'सा तु देवी सती पूर्वमासीत्पश्चादुमाभवत् ।**
**सहव्रता भवस्यैव नैतया मुच्यते भवः ॥'** इति ॥ २०५ ॥

## ब्रह्माणी ब्रह्मजननी बहुरूपा बुधार्चिता ।

ब्रह्मरूपा अणी पुच्छम् । अणीमाण्डव्य इति संज्ञायाः शूलाग्रचिह्नितत्वमात्रेण माण्डव्यमुनौ प्रवृत्तेः । '**अणिरक्षाग्रकीले स्यादणिः पुच्छेऽग्निसीमयो**'रिति **शाश्वतः** । आनन्दमयकोशस्थपुच्छब्रह्मरूपेत्यर्थः । '**ब्रह्मण आणीस्थ**' इति **श्रुतिश्च** । ब्रह्माणमानयति जीवयतीति वा । '**ब्रह्माणी ब्रह्मजननाद् ब्रह्मणो जीवनेन वे**'ति **देवीपुराणात्** । ब्रह्माणशब्दः पितामहपरस्तस्य स्त्री वा । ब्रह्म यन्मुक्तप्राप्यं तत् स्वात्मभिन्नं ज्ञानम् । तदुक्तं **विष्णुपुराणे**—

**प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् ।**
**वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम् ॥'**

इति । सर्वप्रपञ्चस्योत्पादकत्वाज्जननी । अत्र वकारादिनामप्रायपाठस्वारस्यानुरोधादुक्त**देवीपुराणै**कवाक्यत्वलिप्सया ब्रह्माणीपदनिर्वचनपरत्वेन ब्रह्मजननीत्येकं पदं स्वीकर्तुं युक्तम् । एतत्पक्षे सर्वान्तर्यामिणीत्यत्र सर्वेति भिन्नं पदमास्थेयम् । न चान्तर्यामिणीत्यस्य सकारादिनामप्रायपाठस्य सन्दर्भविरोधापत्तिः । अन्तर्यामिपदमात्रेणाविशेषात्सर्वान्तर्यामित्वे सिद्धे एकपदपक्षे सर्वपदवैयर्थ्यापत्त्या प्रायपाठविरोधेनापि तत्सार्थक्यवर्णनस्योचितत्वात् । '**विश्वमाता जगद्धात्री विशालाक्षी विरागिणी**'त्यादिदर्शनेन तत्प्रायमध्ये तदाद्येव नाम छेत्तव्यमिति नियमस्यानित्यत्वाच्च । प्रपञ्चजनयितृत्वादेवाह-बहुरूपेति । बहूनि रूपाणि यस्याः । तदुक्तं **देवीपुराणे**—'**अरूपापरभावत्वाद्बहुरूपा क्रियात्मिके**'ति । परब्रह्मभावनारूपाया अपि भण्डासुरहननादिबहुविधक्रिया-

---

ब्रह्मणः परशिवस्य स्त्री ब्रह्माणी । ब्रह्माण्यै इति ॥ ब्रह्ममुक्तप्राप्यरूपा । ब्रह्मणे इति ॥ जननी जगन्माता । जनन्यै इति ॥ बहूनि रूपाणि यस्याः सा । रूपायै इति ॥ बुधै विद्वद्भिरर्चिता । अर्चितायै इति ॥

कारित्वात्तत्तद्रूपवत्त्वेन बहुरूपत्वमपीति पक्षेऽर्थः । तथा च **गौडपादानां** सूत्रम्– **'भण्डासुरहननार्थमेकैवानेके'**ति । **देवीपुराण** एव प्रघट्टकान्तरे–

**'बहूनि यस्या रूपाणि स्थिराणि च चराणि च ।**
**देवमानुषतिर्यञ्चि बहुरूपा ततः शिवा ॥'**

इति । **सूतसंहितायां** तु–

**'एकधा च द्विधा चैव तथा षोडशधा स्थिता ।**
**द्वात्रिंशद्भेदभिन्ना वा या तां वन्दे परात्पराम् ॥'**

इति । द्विधा स्वरव्यञ्जनरूपा । अकारादिस्वरभेदात्षोडशधा । ककारादिभेदेन द्वात्रिंशद्विधा । लंळयोरभेदात् हकारस्य सर्वमूलत्वेन व्यष्टौ गणनाभावाच्चेति तद्व्याख्यातारः । प्रत्यासत्त्या त्रयस्त्रिंशत्परमेतत्सहस्रनामारम्भकवर्णनपरं वा द्वात्रिंशत्पदमित्यपि सुवचम् । **भागवतेऽपि**–**'लक्ष्मीवागादिरूपेण नर्तकीव विभाति ये'**ति । **वामनपुराणेऽपि**–

**'विश्वं बहुविधं ज्ञेयं सा च सर्वत्र वर्तते ।**
**तस्मात्सा बहुरूपत्वाद्बहुरूपा शिवा मता ॥'**

'इति । **'असंख्याताः सहस्राणि ये रुद्रा अधिभूम्या'**मिति श्रुतिप्रसिद्धानां रुद्राणां पत्नीत्वेनापि बहुरूपा । तदुक्तं **वाराहपुराणे**–

**'या रौद्री तामसी शक्तिः सा चामुण्डा प्रकीर्तिता ।**
**नवकोट्यस्तु चामुण्डाभेदभिन्ना व्यवस्थिताः ॥**
**या सा तु राजसी शक्तिः पालनी चैव वैष्णवी ।**
**अष्टादश तथा कोट्यस्तस्या भेदाः प्रकीर्तिता ॥**
**या ब्रह्मशक्तिः सत्त्वस्था अनन्तास्ताः प्रकीर्तिताः ।**
**एतासां सर्वभेदेषु पृथगेकैकशो धरे ॥**
**सर्वासां भगवान्रुद्रः सर्वगत्वात्पतिर्भवेत् ।**
**यावन्त्यस्ता महाशक्त्यस्तावद्रूपाणि शङ्करः ।**
**कृतवांस्ताश्च भजते पतिरूपेण सर्वदा ।**
**याश्चाराधयते तास्तु तस्य रुद्रः प्रसीदति ॥**
**सिद्ध्यन्ति तास्तदा देव्यो मन्त्रिणो नात्र संशयः ।'**

इति । सर्वमेतदभिप्रेत्योक्तं नारसिंहोपपुराणे–**'उमैव बहुरूपेण पत्नीत्वेन व्यवस्थिते'**ति । **त्रिपुरासिद्धान्तेऽपि**–

**'लोपामुद्रा च सौभाग्या महाविद्या च षोडशी ।**
**दाराः परशिवस्यैताः कथितास्तु वरानने ॥**

**श्यामला शुद्धविद्या च हयारूढा परा प्रिया ।**
**दाराः सदाशिवस्यैते ज्ञातव्याः परमेश्वरी ॥**
**महार्था द्वादशार्था च वाराही बगलामुखी ।**
**तुरीया भुवनेशी च श्रीपरा शाम्भवी शिवे ॥**
**दारा रुद्रस्य तस्यैव शृणु सत्यं न संशयः ।**
**श्रीतिरस्करणी लक्ष्मीर्मिश्रा कामकला प्रिये ॥**
**विष्णोर्दारा इति ख्याता अन्नपूर्णा शिवस्य च ।**
**वाग्वादिनी च बाला च पत्न्यौ ते ब्रह्मणः शिवे ॥**
**नव दूत्यो हसन्ती च नव सिद्धाश्च देवताः ।**
**इमा अन्याश्च रूपाणि बहूनि तव सुन्दरि ॥'**

इति । एवं बहुरुपानामनिरुक्तिरपि प्रतिमहापुराणं प्रत्युपपुराणं प्रतितन्त्रं च बहुरूपैवोपलभ्यते । विस्तरभयात्तु न लिख्यते । बुधैर्ज्ञानिभिरर्चिता पूजिता ।

**चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥'**

इति **गीतावचनात्** ।

### प्रसवित्री–

प्रकर्षेण वियदादिप्रपञ्चं प्रजा वा सूत इति प्रसवित्री । तदुक्तं **विष्णुधर्मोत्तरे– 'प्रजानां च प्रसवनात्सवितेति निगद्यत'** इति । भगवतीपुराणेऽपि–

**'ब्रह्माद्याः स्थावरान्ताश्च यस्या एव समुद्गताः ।**
**महदादिविशेषान्तं जगद्यस्याः समुद्गतम् ॥**
**तामेव सकलार्थानां प्रसवित्रीं परां नुमः ।'** इति ॥

*अथ परिभाषामण्डले एकोनपञ्चाशन्नामानि विभजते–*

***गुरूगीर्णे विभजचतुर्गुणदंगोमृदुचतुर्मतांशार्धम् ।***
***द्विर्गुणगुणितां लिखितां चतुःखचरता देहद्रुचिं रोषात् ॥ २९ ॥***

अत्र तृतीयचतुःशब्दोऽष्टाक्षरनामसंख्यापरः इतरौ चतुरक्षरकसंख्यापरौ ॥ २९ ॥

**–प्रचण्डाऽऽज्ञा प्रतिष्ठा प्रकटाकृतिः ॥ २०६ ॥**

प्रकृष्टाश्चण्डाः कोपना यस्या दूताः सा । **'चडि कोपे'** । अत एव **'भीषास्माद्वातः पवत'** इति **श्रुतिः** ।

---

प्रकर्षेण जगत्सूते इति सा । प्रसवित्र्यै इति ॥

प्रकृष्टा चण्डा दुष्टेष्वतिकोपना । प्रचण्डायै इति ॥ आज्ञा प्रवृत्तिनिवृत्तिकारणभगवदिच्छारूपा । आज्ञायै इति ॥ प्रतितिष्ठत्यस्यां सर्वमिति सा । प्रतिष्ठायै इति ॥ प्रकटा ब्रह्मादिस्तम्बा तेषु अहमित्येव प्रसिद्धा आकृतिः स्वरूपं यस्याः सा । आकृतये इति ॥ २०६ ॥

**'न यस्य कोपोऽणुरपि प्रजास्तस्य न बिभ्यति।**
**सैतां नीतिं कथं रक्षेत्प्रजा यस्य न बिभ्यति॥'**

इति **कामन्दकश्च**। भयप्रदत्वलिङ्गादेव हि **'महद्भयं वज्रमुद्यत'**मिति **श्रुतौ** वज्रपदं ब्रह्मपरमित्युक्तं कम्पनाधिकरणे। प्रकृष्टा प्रीतिविषयत्वेन चण्डा शङ्खपुष्पी यस्या इति वा। प्रतापशीलेति वा।

**'चण्डा धनहरी शङ्खपुष्पी चण्डोऽतिकोपने।**
**प्रचण्डो दुर्वहे श्वेतकरवीरे प्रतापिनी॥'**

इति **विश्वः**। आज्ञा। **वेदे** प्रवर्तनानिवर्तनापरपर्यायभगवदिच्छारूपा। अत एव **लैङ्गे** शिववचनम्—

**न ह्येषा प्रकृतिर्जीवो विकृतिर्वा विचारतः।**
**पुरा ममाज्ञा मद्वक्त्रात्समुत्पन्ना सनातनी॥**
**पञ्चवक्त्रा महाभागा जगतामभयप्रदा॥'**

इति। **शिवपुराणे**ऽपि **'रुद्राज्ञैषा स्थिता देवी ह्यनया मुक्तिरम्बये'**ति ज्ञेत्येकाक्षरमपि सुवचनम्। गुणभोक्तृपुरुषस्वरूपेत्यर्थः। **'कथयन्ति ज्ञशब्देन पुरुषं गुणभोगिन'**मिति **लैङ्गात्। 'ज्ञो विरिञ्चौ बुधे सौम्य'** इति कोशाद्बुधविधिस्वरूपा वा। **'ज्ञः कालकालो गुणी सर्वविद्य'** इति **श्रुति**रपि। सर्वजगतोऽधिष्ठानत्वात्प्रतितिष्ठत्यस्यां विश्वमिति प्रतिष्ठा। **'विश्वस्य जगतः प्रतिष्ठे'**ति **श्रुतेः**। उक्तञ्च **ब्रह्मगीतायाम्**—**'प्रतिष्ठा सर्ववस्तूनां प्रज्ञैषा परमेश्वरी'**ति। षोडशाक्षरं छन्दोऽपि प्रतिष्ठा। जलतत्त्वनिष्ठकलाविशेषोऽपि प्रतिष्ठा। तल्लक्षणं च **शैवागमे**—

**'शिवरागानुरक्तात्मा स्थाप्यते पौरुषे यया।**
**सा प्रतिष्ठा कला ज्ञेया......................॥'**

इति। **'प्रतिष्ठास्थानमात्रके। गौरवे यागनिष्पत्तिचतुरक्षरपद्ययो'**रिति **विश्वः**। अत्र पद्यशब्दः पादपरो व्याख्येय इति निर्णीतं **छन्दोभास्करेऽस्माभिः**। प्रकटा सर्वैरनुभूयमाना आकृतिः रूपं यस्याः। तदुक्तं **सूतसंहितायाम्**—

**'तमहं प्रत्ययव्याजात्सर्वे जानन्ति जन्तवः।**
**तथापि शिवरूपेण न विजानन्ति मायया॥'**

इति। प्रकटाख्या योगिन्यः प्रथमावरणगतास्तद्रूपा वा। अप्रकटेति वा छेदः। रहस्यरूपेत्यर्थः। अप्सु प्रकटेति वा। **'अपामेका महिमानं बिभर्ति', 'आपो वा इदं सर्व'**मित्यादिश्रुतेः॥ २०६॥

## प्राणेश्वरी प्राणदात्री पञ्चाशत्पीठरूपिणी ।

प्राणानामिन्द्रियाणामधिष्ठातृत्वादीश्वरी । **'ज्योतिराद्यधिष्ठानं तु तदामनना'**-दित्यधिकरणे तदधिष्ठातृदेवतासद्भावस्य स्थापितत्वात् । प्राणस्य पञ्चवृत्तिकस्याधिपतिर्वा । **'प्राणस्य प्राण'** इति **श्रुतेः** । प्रकृष्टोऽणः शब्दो वेदरूपस्तदीश्वरी तत्प्रतिपाद्यदेवता । **'सर्वे वेदा यत्पदमानन्ती'**ति **श्रुतेः** । प्राणानां दात्री सर्वजगज्जीवयित्री एकादशेन्द्रियाणां दात्री वा । **'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'**ति **श्रुतौ** प्राणा इति पदस्येन्द्रियपरत्वेन तथा व्याख्यानदर्शनात् । **'सप्तगतेर्विशेषितत्वाच्चे'**ति द्वैतीयीकाधिकरणे तथा निर्णयाच्च । पञ्चाशच्छब्दोऽयं प्रकृते लक्षणयैकपञ्चाशत्परः । सान्निध्यरूपशक्यसम्बन्धात् । अत एव **'नित्यांनन्दवपुर्निरन्तरगलत्पञ्चाशदर्णैः क्रमा'**दिति **शारदातिलक**श्लोके पञ्चाशत्पदमेकपञ्चाशत्परतयैव व्याख्यातं **हर्षदीक्षितैः** । प्रायेण दशविंशत्यादिदशकशब्दानां शतसहस्रादिशब्दानां चैकद्वित्रिन्यूनाधिकभावे बहुत्वमात्रविवक्षया च लोके प्रयोगः प्रचुरं दृश्यते । अथवा सहस्रे शतमितिन्यायेनावयुत्याप्यनुवादो नवावतारे दशावतारा इति जगत्पतावयोध्याधिपतिरिति च व्यवहारस्य कञ्चनावान्तरोपाधिमादाय दर्शनात् । किंबहुना द्वात्रिंशच्छब्दोऽपि पञ्चत्रिंशद्व्यञ्जनेषु **सूतसंहितायां** प्रयुक्तः पूर्वं दर्शितः । तदिह पञ्चाशत एव मातृकाणामन्तर्मातृकान्यासे विनियोगाल्लळयोरभेदाद्वा क्षकारस्य पार्थक्याभावाद्वाऽक्षमालायां तस्य मेरावेव निवेशनेन मणीनां पञ्चाशत्त्वाद्वा पञ्चाशन्मातृकेति व्यवहारेऽप्येकपञ्चाशत्परतैव तस्य वक्तव्या । अत एव बहिर्मातृकान्यासप्रकरणेऽपि **'पञ्चाशल्लिपिभिर्विभक्तमुखदोर्यन्मध्यवक्षस्थलं'**, **'पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्ष'** इत्यादयः कवीनां प्रयोगाः ।

एकपञ्चाशतो न्यासमुक्त्वा तदन्ते **'पञ्चाशद्वर्णरूपेयं कन्दर्पशशिभूषणे'**त्यांदयो **ज्ञानार्णवा**दितन्त्रप्रयोगाश्चोपपद्यन्ते । मातृकासमानयोगक्षेमत्वादेव **'श्रीकण्ठाद्याश्च पञ्चाशत्पञ्चाशत्केशवादय'** इत्यादयोऽपि **तन्त्रसारसंग्रहा**दौ प्रयोगा एकपञ्चाशत्परा एव । तेन कामरूपादिच्छायाछत्रान्तैकपञ्चाशत्पीठानि रूपमस्या इत्यर्थः । अतएव षोढान्यासान्तर्गते पीठन्यासे एकपञ्चाशत्पीठानां न्यासः । उक्तञ्च **ब्रह्माण्डपुराणे** स्पष्टतरम्— **'ततः पीठानि पञ्चाशदेकं चक्रमतो न्यसे'**दित्यारभ्य **'लिपिक्रमसमायुक्तान् लिपिस्थानेषु विन्यसे'**दित्यन्तम् । **योगिनीहृदये**ऽपि—**'पीठानि विन्यसेद्देवि मातृकास्थानके प्रिये'** इत्यारभ्य **'एते पीठाः समुद्दिष्टा मातृकारूपकास्थिता'** इत्यनेन मातृकास्थानोक्त्यैकपञ्चाशत्त्वमेव

---

प्राणानां इन्द्रियाणामीश्वरी अधिष्ठात्री । ईश्वर्यै इति ॥ प्राणानां दात्री सर्वजगज्जीवयित्री । दात्र्यै इति ॥ पञ्चाशदित्येकपञ्चाशत्परम्, कामरूपादिछायाछत्रान्तैकपञ्चाशतां पीठानां रूपमस्याः सा । रूपिण्यै इति ॥

'प्रकटीकृतम् । तद्व्याख्यायामप्यकारादिक्षकारान्तानामेकैकं वर्णमेकैकस्यादावुक्त्वा **तत्तत्स्थानेषु पीठानां न्यासं कुर्या**'दित्युक्तम् । एतेनेदृशनामस्वारस्यात्पीठन्यासेऽपि क्षकारस्थानपरित्यागेन पञ्चाशत एवेति **सुन्दरीमहोदयकाराणां** लेखः साहसमात्रत्वान्नादर्तव्यः । नह्यस्य नाम्नो विधिरूपत्वं येन पीठन्यास एकस्य पीठस्य परिसंख्या स्यात् । न च **ज्ञानार्णवे**–

**'........................पञ्चाशत्पीठसञ्चयात् ।**
**पञ्चाशत्पीठविन्यासं मातृकावत्स्थले न्यसेत् ॥'**

इत्युपक्रमोपसंहाराभ्यां तथा निर्णय इति वाच्यम् । पञ्चाशत्पदस्यैकपञ्चाशत्परताया उक्तत्वात् । अन्यथा तत्रैवैकपञ्चाशतो गणनानुपपत्तिः । अत एव **'कालेश्वरं महापीठं प्रणवं च जयन्तिके**'ति पाठस्य काल्पनिकत्वमुक्त्वा **'महापीठं जयन्तिके**'ति पाठस्यैव प्रामाणिकत्वोक्तिरपि साहसमेव । **'ॐकारं च जयन्तिके**'ति **योगिनीहृदयेन** संवादात्प्रणवपाठस्यैव प्रमाणत्वात् । वस्तुतस्तु **'शैलो मेरुस्ततो गिरि**'रिति **ब्रह्माण्डपुराणे** गिरिपदस्य मेरुतः पार्थक्येन गणनमास्थेयम् । **'पीठानि पञ्चाशदेकं चे**'ति स्पष्टोपक्रमस्य प्रकारान्तरेणानुपपत्तेः, ततः पदेन व्यवधानाच्च । ततश्च **'जलेशं मलयं शैलं मेरुं गिरिवरं तथे**'ति **योगिनीहृदये**, **'मलयं च महापीठं श्रीशैलो मेरुको गिरि**'रिति **ज्ञानार्णवे**ऽपि तत्संवादाद्भिन्नपदस्वारस्यान्मेरुपर्वत इत्यनुक्तिस्वारस्याच्च तथैवास्थेयम् । आस्थितं च तथैव **सुभगार्चा-रत्नसुभगार्चा-पारिजातादिपद्धतिषु** । प्रसिद्धं च प्राच्येषु गिरिनाथाख्यं पीठम् । एतेन **ज्ञानार्णव** एकैकपञ्चाशद्वर्णेशन्यासान्ते **'एतांस्तु विन्यसेद्देवि मातृकान्यासवत्प्रिये**' इतिवत्, कामरतिन्यासान्ते **'मातृकार्णैर्न्यसेद्देवि मातृकावत्सदानघे**'इतिवच्च पीठन्यासान्तेऽपि **'मातृकावत्सदा न्यसे**'दित्युक्तेरैकरूप्यं सङ्गच्छते । बहिर्मातृकान्यासे विशिष्यैकपञ्चाशतामुक्तत्वेन तत्साम्येनात्रापि तथैव सिद्धेः तन्त्रान्तरैवाक्यतायाः सम्भवन्त्यास्त्यागायोगाच्चेति । प्रकृते एकपञ्चाशत्पदमपेक्षितमेवेति यद्याग्रहस्तदा रूपपदमेकसंख्यापरत्वेन व्याख्यायताम् । **'रूपे शून्य**'मिति **पिङ्गलसूत्रे हलायुधादीनां** तथा व्याख्यानदर्शनादिति दिक् ।

**विशृङ्खला विविक्तस्था वीरमाता वियत्प्रसूः ॥ २०७ ॥**

शृङ्खला कर्मादिनिर्बन्धः निगडवद्बन्धसाधनत्वात् । अतएवोक्त**मभियुक्तैः**–

**'पातकप्रचयवन्मम तावत्पुण्यपुञ्जमपि नाथ लुनीहि ।**
**काञ्चनी भवतु लोहमयी वा शृङ्खला यदि पदोर्न विशेषः ॥'**

---

शृङ्खलाबन्धकत्वेन निगडतुल्यत्वात्कर्मादिबन्धः । सा विगता यस्याः सा । विशृङ्खलायै इति ॥ विविक्ते पवित्रैकान्तदेशे तिष्ठतीति सा । विविक्तस्थायै इति ॥ वीरा अन्तर्मुखा जनास्तेषां रक्षणकर्त्री इति माता । मात्रे इति ॥ वियत आकाशस्य प्रसूर्जननी । प्रसुवे इति ॥ २०७ ॥

इति । विगता शृङ्खला यस्याः विधिनिषेधानामविद्यावद्विषयत्वात् । नग्नेति वा । अलंपुरादिपीठेषु तादृशदेवीमूर्तिदर्शनात् **'स्वयोनिदर्शनान्मुह्यत्पशुबर्गामनुस्मरे'**दिति तिरस्करिणीध्यानदर्शनाच्च, जवनिकाया जवनिकान्तरानपेक्षत्वेन तादृशध्यानस्य युक्तत्वाच्च । **शृङ्खला 'स्यात्कटीवस्त्रबन्धेऽपि निगडेऽपि चे'ति विश्वः** । विविक्तो विजनदेशः स एव च पवित्रोऽपि । **'सर्वत्र मेध्या वसुधा यत्र लोको न दृश्यत'** इति **हारीतस्मृतेः** । **'विविक्तौ पूतविजना'**वित्यमरकोशात्स जनोऽपि पवित्रोऽपवित्रोऽपि विजनो देशश्चेति द्वावपि विविक्तौ । इह तु पवित्रत्वे सति विजनता विवक्षिता । तादृशस्थले तिष्ठति । अपवित्रजनसम्मर्दे बाध्ये यत्प्रादुर्भावानुभवात् । आत्मानात्मविवेकशीलेषु तिष्ठतीति वा । वीरा उपासकधुरन्धरा, रणे अभिमुखे हता वा । तेषां माता जननी हितकर्तृत्वात् **'वीरं मद्यस्य भाजने'** इति **विश्वकोशा**त्पानपात्रं तन्मातीति वा । अथवा वीराख्यो गणेश्वरोऽम्बया पुत्रत्वेन स्वीकृत इति वीरमाता । तथा च **पद्मपुराणे** वीरकं प्रकृत्य शिववाक्यम्—

**'स एष वीरको देवि सदा मे हृदयप्रियः ।**
**नानाश्चर्यगुणद्वारि गणेश्वरगणार्चितः ॥'**

इत्यादितत्प्रशंसाश्रवणोत्तरम्—

**देव्युवाच**

**ईदृशस्य सुतस्यास्ति ममोत्कण्ठा पुरान्तक ।**
**कदाहमीदृशं पुत्रं द्रक्ष्याम्यानन्ददायकम् ॥**

**शिव उवाच**

**एष एव सुतस्तेऽस्तु नयनानन्दहेतुकः ।**
**त्वया पुत्रः कृतार्थः स्याद्वीरकोऽपि सुमध्यमे ॥**

**सूत उवाच**

**इत्युक्त्वा प्रेषयामास विजयां हर्षणोत्सुका ।**
**वीरकानयनायाशु दुहिता भूभृतः सखीम् ॥'**

इत्यादि । वियत आकाशस्य प्रसूर्जनिका । **'आत्मन आकाशः सभूत'** इति **श्रुतेः** ॥२०७॥

**मुकुन्दा मुक्तिनिलया मूलविग्रहरूपिणी ।**

मुक्तिं ददातीति मुकुन्दा । पृषोदरादिः । विष्णुरूपत्वाद्वा । तदुक्तं **तन्त्रराजे** गोपालमन्त्रभेदारम्भे—

---

मुकुन्दो विष्णुस्तद्रूपा । मुकुन्दायै इति ॥ मुक्तेः मोक्षस्य निलयं स्थानं यस्यां सा । निलयायै इति ॥ मूलभूतः जगत्कारणी[भू]तो विग्रहः शरीरं ऐश्वरं सरूपमस्याः । रूपिण्यै इति ॥

'कदाचिदाद्या ललिता पुंरूपा कृष्णविग्रहा ।
स्ववंशवादनारम्भादकरोद्विवशं जगत् ॥
ततः स गोपीसंज्ञाभिरावृतोऽभूत्स्वशक्तिभिः ।
तदा तेन विनोदाय स्वं षोढाऽकल्पयद्वपुः ॥'

इत्यादि । रत्नविशेषादिरूपा वा । 'मुकुन्दः पुण्डरीकाक्षे रत्नभेदेऽपि पारद' इति **विश्वः**। मुक्तीनां पञ्चविधमोक्षाणां निलय आकरो यस्याम् । बालाबगलादिशक्तीनां मूलभूतो यो राजराजेश्वरीविग्रहः स एव रूपमस्याः । तथा च **गौडपादीयानि** दश सूत्राणि '**सैव विद्ये**'त्यारभ्य '**स्वयमूर्ध्वाकारेणे**'त्यन्तानि एकस्या एव विद्यायाः शाम्भवीविद्याश्यामा-भेदेन त्रैविध्यं प्रतिपाद्य तास्वेकैकस्या अनेकशक्तिजनकत्वं विशिष्य प्रतिपादयन्ति ।

## भावज्ञा भवरोगघ्नी भवचक्रप्रवर्तिनी ॥ २०८ ॥

भावाञ्ज्ञानातीति भावज्ञा । '**भावः सत्तास्वभावाभिप्रायचेष्टात्मजन्मसु**' इत्य**मरः**। '**भावो योनिबुधार्थेषु कृपालीलाविभूतिष्वि**'त्य**मरशेषः** । '**तस्य भावस्त्वतला**'विति सूत्रे धर्मोऽपि भावः । '**भावप्रधानमाख्यात**'मिति **स्मृतौ** भावनापि भावः । '**धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते**' । '**अस्ति जायते वर्धते**' इत्यादयो **यास्क**परिगणिता विकारा अपि षड्भावाः । भवो भक्तिर्भजनीयोऽस्य भावः । तार्किकसम्मताः षट्पदार्था अपि भावाः । भवः संसारः स एव भावः । तत्सम्बन्धिनः सांसारिका अपि भावाः । भवः शिवस्तस्येमे शैवा अपि भावाः । भवो भक्तिर्भजनीयोऽस्य भावः '**भक्ति**'रिति **पाणिनिसूत्रेणाण्वा** । भा कान्तिस्तां वान्ति गच्छन्ति सूर्यादयोऽपि भावाः । भक्तिरपि भावः । **योगिनीहृदये** कथिते मन्त्रार्थषट्के प्राथमिकोऽर्थोऽपि भावः । भवः संसार एव रोगस्तं हन्ति '**नान्यं पश्यामि भैषज्यमन्तरेण वृषध्वज**'मिति **रामायणात्** ।

'व्याधीनां भेषजं यद्वत्प्रतिपक्षस्वभावतः ।
तद्वत्संसाररोगाणां प्रतिपक्षः शिवाधवः ॥'

इति **शिवपुराणाच्च** । भवचक्रं संसारमण्डलं प्रवर्तयति, भवचक्रवत्प्रवर्तयतीति वा । तदुक्तं **मनुस्मृतौ**–

'एषा सर्वाणि भूतानि पञ्चभिर्व्याप्य मूर्तिभिः ।
जन्मवृद्धिक्षयैर्नित्यं संसारयति चक्रवत् ॥'

---

भावान् सर्वजनाशयान् जानातीति सा । भावज्ञायै इति ॥ भवः संसारः स एव दुःख प्रदत्वाद्रोगः तं हन्तीति सा । रोगघ्न्यै इति ॥ भवं संसारं चक्रवत्पुनःपुनः प्रवर्तयतीति सा । प्रवर्तिन्यै इति ॥ २०८ ॥

इति । **विष्णुभागवतेऽपि**—

**'त्वमेव सर्वजगतामीश्वरो बन्धमोक्षयोः ।**
**तं त्वामर्चन्ति कुशलाः प्रपन्नार्तिहरं हरम् ॥'**

इति । भवचक्रमनाहतचक्रं वा तत्र शिवस्यावस्थानात् । ननु कोणपत्रसमुच्चयस्यैव चक्रपदवाच्यत्वमिति तान्त्रिकसिद्धान्तादनाहते कोणाभावात्कथं चक्रपदेन तदुपस्थितिः । अत एव '**अनाहताब्जनिलये**'त्येव प्रयोगः । केवलपत्रसमुदाये पद्मत्वं केवलकोणसमुदाये यन्त्रत्वमिति सिद्धान्तादितिचेन्न । कोणत्वाभिप्रायेण मूलाधारादिष्वपि चक्रव्यवहार इति वदद्भिर्**विद्यारत्नभाष्यकारै**रेवमेव समाहितत्वात् । पत्रेषु कोणत्वारोपाद्गौण-व्यवहार इति तदाशय इति केचित् । तन्न । कोणत्वविवक्षायां यन्त्रत्वविवक्षाभावेन यन्त्रव्यवहारस्यैवापत्तेः । अतस्तत्कार्णिकोपरि त्रिकोणस्य सत्त्वादित्येव भाष्याशयं युक्तमुत्पश्यामः । बिन्दुचक्राष्टदलषोडशदलवृत्तत्रयभूगृहत्रयाणि श्रीचक्रान्तर्गतानि वा भवचक्राणि । भवस्य शिवस्य चक्रं मनः प्रवर्तयतीति वा । '**चक्रं हि मन एवे**'ति **विष्णुपुराणे**—

**'चलत्स्वरूपमत्यन्तं जवेनान्तरितानिलम् ।**
**चक्रस्वरूपं च मनो धत्ते विष्णुः करे स्थितम् ॥'** इति ॥ २०८ ॥

## छन्दःसारा शास्त्रसारा मन्त्रसारा तलोदरी ।

छन्दःशब्दो वेदपरो गायत्र्यादिपरो वा पैङ्गलतन्त्रपरो वा । '**छन्दः पद्ये च वेदे च स्वैराचाराभिलाषयो**'रिति **विश्वः** । परो वादी । सारशब्दो न केवलं पुंलिङ्गः । '**संसारे किं सारम्**', '**सा दशा वै तान्त्वी**'त्यादिप्रयोगात् ।

**'सारो बले मज्जनि च स्थिरांशे न्याय्ये च नीरे च धने च सारम् ।**
**वेदेऽन्यवत्सारमुदाहरन्ति ..........................................॥'**

इति च **विश्वः** । अत्र स्थिरांशशब्दो निष्कृष्टांशपरः अनिष्कृष्टस्यास्थिरत्वात् । ततश्च **वेदे उपनिषद्भागे**ऽस्याः स्वरूपनिष्कर्षः । छन्दःसु सारो निष्कर्षो यस्या इति विग्रहः । गायत्र्यादिछन्दसु निष्कृष्टं रूपं गायत्रीमन्त्रस्तस्यापि निष्कर्षः पञ्चदशी । तदिदमुक्तं **वरिवस्यारहस्ये**ऽस्माभिः—

**'तज्ज्ञानार्थमुपाया विद्या लोके चतुर्दश प्रोक्ताः ।**
**तेष्वपि च सारभूता वेदास्तत्रापि गायत्री ॥**
**तस्या रूपद्वितयं तत्रैकं यत्प्रपठ्यते स्पष्टम् ।**
**वेदेषु चतुर्ष्वपि परमत्यन्तं गोपनीयतरम् ॥**

---

छन्दसु वेदेषु सारो निष्कर्षो यस्याः सा । सारायै इति ॥ एवमेव शास्त्रेषु सारः यस्याः सा । सारायै इति ॥ मन्त्रेष्वपि सारः यस्याः सा । सारायै इति ॥ तलं करतलं तदिव कृशं समं चोदरं यस्याः सा । उदर्यै इति ॥

**कामो योनिः कमलेत्येवं सङ्केतितैः शब्दैः ।**
**व्यवहरति न तु प्रकटं यां विद्यां वेदपुरुषोऽपि ।'**

आथर्वणेऽपि त्रैपुरसूक्ते षोडशर्चे–

**'कामो योनिः कमला वज्रपाणिर्गुहा हसा मातरिश्वाभ्रमिन्द्रः ।**
**पुनर्गुहा सकला मायया च पुरूच्यैषा विश्वमाता च विद्या ॥'**

इत्यस्यामृचि कादिविद्याया उद्धारः । **पैङ्गलतन्त्रे** हि **'द्विकौ ग्लौ । मिश्रौ च** 'इति सूत्रद्वयेन महाप्रस्तारः प्रतिपादितः स चानवधिकस्यापि शब्दजालस्य निःशेषेण ज्ञानोपायः । स च **छन्दोभास्कर** एवास्माभिः प्रकटीकृतः छन्दःशास्त्रे । बलं माहात्म्यं यस्या वैखर्याः सरस्वत्या इत्यर्थः । यद्वा–

**'यत्र यत्र मनस्तुष्टिर्मनस्तत्रैव धारयेत् ।**
**तत्र तत्र परानन्दस्वरूपं संप्रकाशते ॥'**

इति **विज्ञानभैरवभट्टारकोक्त**रीत्योपासकधौरेयस्य यत्रेच्छा स एव धर्मः । यत्र नेच्छा स एवाधर्मः । उक्तञ्च **शाकुन्तले**–**'सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तय'** इति । **समयाचारस्मृत्युक्तो** निर्बन्धोऽपि प्रौढोल्लासावधिक एव **'प्रौढान्तं समयाचारा'** इति **कल्पसूत्रात्** । सर्वमेतदभिप्रेत्य **कौलोपनिषदि** श्रूयते–**'धर्मोऽधर्मः अधर्मो धर्म'** इति । **योगिनीहृदये**ऽपि–

**'पिबन्नृत्यन्वमन्खादन्स्वैराचारपरः स्वयम् ।**
**अहन्तेदन्तयोरैक्यं भावयन्विहरेत्सुखम् ॥'**

इत्युक्तरीत्येदृशमनःसमाधिमतामिच्छाविषयोऽर्थो नियमेन धर्म एव भवतीत्येतदभिप्राया । **स्मृतिष्वपि** **'श्रुतिः स्मृतिः सदाचार आत्मनस्तुष्टिरेव चे'**ति धर्मप्रमाणेषु मनःप्रवृत्तेर्गणनमीदृशसमाहितमनःपरमेव । अन्यथातिप्रसङ्गात् । ईदृशं स्वैराचरणं सारं न्याय्यं यस्या इत्यर्थः । अभिलाष इच्छा सारो निष्कृष्टरूपं यस्या इति वा । देव्या इच्छाशक्तिस्वरूपत्वात् । सारपदस्य श्रेष्ठपदत्वे तु विशेष्यनिघ्नत्वान्नास्त्येव स्त्रीलिङ्गत्वानुपपत्तिः । एवमुत्तरनामद्वयेऽपि **'शास्त्रयोनित्वा'**दिति । सौत्राद्**व्रीहिशास्त्रं यवशास्त्र**मित्यादि तान्त्रिकाच्च व्यवहाराच्छास्त्रशब्दो वेदपरस्तदनुसारिमीमांसादिपरो वा । तदुक्तं **भामत्याम्**–

**'प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा ।**
**पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते ॥'**

इति । मन्त्रशब्दोऽपि **'कास्प्रत्ययादाममन्त्रे लिटि'** इत्यादिव्यवहाराद्वेदपरस्तान्त्रिकमनुपरस्तत्प्रतिपादकचतुःषष्टितन्त्रपरो वा । तलं करतलादि तद्वत्कृशं समं चोदरं न

तु न्युब्जं भेर्यादिवदुच्छूनं यस्याः । अकारप्रश्लेषेणातलाख्यो लोक एवोदरं यस्या विराड्रूपाया इत्यप्यर्थः सुवचः ।

**उदारकीर्तिरुद्दामवैभवा वर्णरूपिणी ॥ २०९ ॥**

उदारा महत्तरा कीर्तिर्यस्याः । उष्कृष्टा आसमन्ताद्व्याप्ता च अरा शीघ्रसाध्या च कीर्तिर्यदुपासनयेति वा । **'लघुक्षिप्रमरं द्रुत'**मित्य**ग्निपुराणीयकोशः** । ऋकारो देवमातृवाचकः । आ अरौ अरः इति रूपाणि । उः अपत्यानि अरा देवाः तानुत्क्रान्ता कीर्तिर्ययेति वा । आरं मङ्गलमुत्क्रान्ता वा । यत्कीर्तनं मङ्गलादिदुष्टग्रहदोषनिरासकमिति यावत् । आदित्यमण्डलान्तर्गतं सगुणं चैतन्यमुत्पदवाच्यम् । **'य एषोऽन्तरादित्ये हिरण्मयः पुरुष'** इत्यधिकृत्य **'तस्योदिति नामे'**तिं **श्रुतेः** । तस्मिन्नारा आयुधविशेषो यस्या ईदृशी कीर्तिर्यस्या इति वा । **'आरा चर्मप्रसेविके'**ति **कोशात्** । उत् पुरुषस्य दुःखप्रदा यत्कीर्तिरिरिति यावत् । तत्कीर्तिर्जेत्री कीर्तिर्यदुपासनया भवतीति तात्पर्यम् । आसमन्ताद्व्याप्तोऽरः सुधाह्रदस्तद्वदुत्कृष्टा कीर्तिर्यस्या इति वा । सगुणब्रह्मोपासकानां पाप्ये परब्रह्मनगरे अपराजिताख्ये **'अरश्च ण्यश्चेति द्वौ सुधाह्रदावर्णवतुल्यौ वर्तेते'** इति **श्रुतिषु** प्रसिद्धम् । **'अनावृत्तिः शब्दा'**दिति सूत्रे श्रीमदाचार्य**भगवत्पादै**रप्युक्तम्–**'दाम बन्धनरज्जुः परिच्छेत्री तदुत्क्रान्तमुद्दामेयत्तानवच्छिन्नं वैभवं यस्याः'** । वर्णाश्चतुःषष्टिसंख्याका रूपमस्याः । तदुक्तं **पाणिनिशिक्षायाम्**–

**'त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः ।**
**प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ॥'** इति ॥ २०९ ॥

**जन्ममृत्युजरातप्तजनविश्रान्तिदायिनी ।**

जन्मादित्रितयेन तप्तेभ्यो जनेभ्यो विश्रान्तिभिर्दुःखापहारिभिर्व्यक्तं स्वात्मसुखं दत्ते ।

**सर्वोपनिषदुद्घुष्टा शान्त्यतीताकलात्मिका ॥ २१० ॥**

सर्वास्वै**तरेयादि**षूपनिषत्सु रहस्यभूतासु **श्रुतिशिरोभूतवाक्तन्तिषूत्कर्षेण** घुष्टा प्रतिपाद्या । **'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवती'**त्यत्रोप-

---

उदाराः सुन्दराः कीर्तयो यस्याः सा । कीर्त्यै इति ॥ उद्दामं अपरिच्छिन्नं वैभवं यस्याः सा । वैभवायै इति ॥ वर्णा आदिक्षान्ताः रूपमस्याः । रूपिण्यै इति ॥ २०९ ॥

जन्ममृत्युजराद्युपद्रवतपप्तानां सेवकजनानां विश्रान्तिं स्वात्मलाभसुखं ददातीति सा । दायिन्यै इति ॥

सर्वासूपनिषत्सु उत्कर्षेण घुष्टा प्रतिपादिता । घुष्टायै इति । कलाध्वनि पञ्चमीकला शान्त्यतीतेत्युच्यते सा शिवपरिनिष्ठिता । तदात्मिकां तदभिन्ना । आत्मिकायै इति ॥ २१० ॥

निषत्पदस्य रहस्यपरत्वेन व्याख्यानदर्शनात् । तस्य निरुक्तिरप्याचार्यैर्दर्शिता–

**'उपनीयेममात्मानं ब्रह्मापास्तद्वयं सतः ।**
**निहन्त्यविद्यां तज्जां च तस्मादुपनिषन्मता ॥'**

इति । अत्रोत्कर्ष ऐकरूप्यम्।उच्चैस्त्वस्य धातुनैव लाभात् । **'उच्चैर्घुष्टं तु घोषणे'**ति **कोशात्**। ऐकरूप्यं च प्रतिवेदान्तं विहितानां सगुणब्रह्मोपास्तीनां भेदाभावः । तदिदं सर्ववेदान्तप्रत्ययं **'चोदनाद्यविशेषा'**दित्यधिकरणे स्पष्टम् । आकाशनिष्ठा कला शान्त्यतीतेत्युच्यते । तत्स्वरूपं च **शैवागमे–'शान्त्यतीतकलाद्वैतनिर्वाणानन्दबोधदे'**ति । तदात्मिका तदभिन्ना ॥ २१० ॥

**गम्भीरा गगनान्तस्था गर्विता गानलोलुपा ।**

आनन्त्यादुगम्भीरा । महाह्लदस्वरूपेत्यर्थः । तथा च **शिवसूत्रम्–'महाह्लदानुसन्धानान्मन्त्रवीर्यानुभव'** इति ।

**'महाह्लद इति प्रोक्ता शक्तिर्भगवती परा ।**
**अनुसन्धानमित्युक्तं तत्तादात्म्यविमर्शनम् ॥**
**मन्त्रवीर्यमिति प्रोक्तं पूर्णाहन्ताविमर्शनम् ।**
**तदीयोऽनुभवस्तस्य स्फुरणं स्वात्मनः स्फुटम् ॥'**

**बिभ्रत्यन्वमन्खादन्स्वैराचारपरः स्वयम् ।**

इति । अन्यत्रापि–

**'परा भट्टारिका संविदिच्छाशक्तिपुरःसरम् ।**
**स्थूलप्रमेयपर्यन्तं वमन्ती विश्वमान्तरम् ॥**
**प्रमात्रन्तर्बहीरूपा हृषीकविषयात्मनाम् ।**
**प्रवर्तकत्वस्वच्छत्वगम्भीरत्वादिधर्मतः ॥**
**महाह्लदो जगद्व्यापी देशकालाद्यगोचरः ।'**

इति । 'गं' इति गणपतिबीजम् । तेन गणपतिरेवोच्यते । तस्य भियं रात्यादत्ते निरस्यतीत्यर्थो वा । गगनस्य दहराकाशस्य भूताकाशस्य पराकाशस्य वान्तर्मध्ये तिष्ठतीति । **'वृक्ष इव स्तब्धो दिवि तिष्ठत्येक'** इति **श्रुतेः** । गगनस्यान्ते नाशकालेऽपि तिष्ठति वा । गगनं अकारः, अन्तस्था यरलवा इति पञ्चभूतबीजोद्धारः । गर्वो

---

समुद्र इवातिविततैकरसान्तरत्वाद् गम्भीरा । गम्भीरायै इति ॥ गगनस्य चिदाकाशस्यान्तःसारवत्तिष्ठतीति सा । अन्तस्थायै इति ॥ गर्वो विश्वात्मिता रूपोऽभिमानः सोऽस्यां सञ्जात इति । गर्वितायै इति ॥ गाने गान्धर्वे लोलुपा आसक्ता । लोपायै इति ॥

विश्वनिर्माणविषयिणी पराहन्ता सास्याः सञ्जाता । तारकादित्वादितच् । गानं ततानद्धसुषिरघनचतुष्टयसमुच्चयात्मकम्, वादित्रादिकं वा, शारीरं गान्धर्वं वा, साम वा तयोर्लोलुपा सतृष्णा ।

**कल्पनारहिता काष्ठाऽकान्ता कान्तार्धविग्रहा ॥ २११ ॥**

कल्पना वासनामय्यो दृश्यवीचयस्ताभी रहिता । तासां कल्पितत्वादेव । यद्वा कल्पेऽपि नाराणां हिता । **'संवर्तः प्रलयः कल्प'** इति **कोशः** । **'नॄ नय'** इति धातोः । **'नयतीति नरः प्रोक्तः परमात्मा सनातन'** इति **स्मृत्या** च । नरस्येमे नारा जीवाः । सकलनाशकारिणि प्रलयकालेऽपि जीवानां स्वोदरे वासनारूपतया स्थापने हितकर्त्री किमुत सृष्टिस्थितिकाल इति यावत् । उक्तं **चाष्टावक्रगीतायाम्**—

**'मय्यनन्ते चिदम्भोधावाश्चर्यं जीववीचयः ।**
**उद्यन्ति घ्नन्ति खेलन्ति प्रविशन्ति स्वभावतः ॥'**

इति । अष्टादशनिमेषात्मकः कालः काष्ठा । दारुहरिद्रापि काष्ठा । सा हि स्कन्धनाभिनालपरिणामरूपत्वाच्छिवशक्त्ययोरभिन्नैवेति **भैरालतन्त्रे** कथा । **'काष्ठा दारुहरिद्रायां कालमानप्रभेदयो'**रिति **रभसः** । तदुभयरूपा । वेदान्तवाक्यार्थतत्त्व-निष्कर्षोऽपि काष्ठा । तदुक्तं **सूतसंहितायाम्**—

**'प्रतीतमप्रतीतं वा सदसच्च परः शिवः ।**
**इति वेदान्तवाक्यानां निष्ठा काष्ठेति कथ्यते ॥'**

इति । **'सा काष्ठा सा परा गति'**रिति **श्रुतिश्च** । यद्वा गगनात्मकस्य भीमनामकस्य परशिवस्य पत्नी स्वर्गमाता देवी दिक्स्वरूपत्वात्काष्ठेत्युच्यते । तथा च **लैङ्गे**—

**'चराचराणां भूतानां सर्वेषामवकाशदः ।**
**व्योमात्मा भगवान्देवो भीम इत्युच्यते बुधैः ॥**
**महामहिम्नो देवस्य भीमस्य परमात्मनः ।**
**दशस्वरूपा दिक्पत्नी सुतः स्वर्गश्च सूरिभिः ॥'**

इति । वायुपुराणेऽपि—

**'नाम्ना षष्ठस्य या भीमा तनुराकाश उच्यते ।**
**दिशः पत्न्यः स्मृतास्तस्य स्वर्गस्तस्य सुतः स्मृतः ॥'**

---

कल्पना भ्रान्त्यनुभवः तया रहिता, सत्यानुभवरूपत्वात् । रहितायै इति ॥ अत एव काष्ठा-योगिना परा गतिरूपा । काष्ठायै इति ॥ अकं पापं तस्य अन्तो यस्याः सा । अकान्तायै इति ॥ कान्तः शिवः स अर्धविग्रह अर्धशरीरं यस्याः सा । विग्रहायै इति ॥ २११ ॥

इति । क्रान्त्वा तिष्ठतीति काष्ठेति **नैरुक्ताः** । '**अत्यतिष्ठद्दशाङ्गुल**'मिति **श्रुतिः** । '**विष्टभ्याहमिदं कृत्स्नमेकांशेन स्थितो जग**'दिति **स्मृतिश्च** । अकान्तेति त्र्यक्षरं नाम । '**अकं पापे च दुःखे च**' तयोरन्तो नाशो यया सा । विग्रहस्य शरीरस्यार्धमर्धविग्रहः । '**अर्धं नपुंसक**'मिति समासः । कान्तः परशिव एवार्धविग्रहो यस्याः । कान्तस्यार्धं कान्तार्धम्, कान्तार्धं विग्रहो यस्या इति वा । न चैतत्पक्षेऽर्धकान्त इति रूपापत्तिः । अत्रत्यार्धपदस्य नियतलिङ्गत्वस्वीकारात् नियतनपुंसकलिङ्गकस्यैव पूर्वनिपात-विधानात्कः पुनः पुलिङ्ग इत्यादिप्रश्नोत्तरपरे महाभाष्ये पुलिङ्गवदस्या नियतलिङ्ग-परत्वेन **कैयटीये** व्याख्यानात् । तथा च भगवान्पिङ्गलनागः प्रायुङ्क्त '**स्वरा अर्धं चार्याधं**मिति । वस्तुतस्तु अर्धविग्रहा इत्यत्र कर्मधारय एव समासः । षष्ठीतत्पुरुषे तु विग्रहार्धमित्येवापद्येत । अत एव परवल्लिङ्गसूत्रे **महाभाष्ये** '**अर्धं नपुंसक**'मिति सूत्रं प्रत्याख्यातमित्यन्यदेतत् । तेन कान्तार्धमिति समासेऽपि समप्रविभागवचनत्वमेवार्ध-शब्दस्य द्रष्टव्यम् । ककारस्यान्तः कान्तः खकारस्तेन द्यौर्लक्ष्यते । अर्धशब्दो भागमात्रपरः । तेन द्यौः शरीरैकदेशो यस्या इत्यर्थ इति वा । '**पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवी**'ति मन्त्रवर्णात् ॥ २११ ॥

## कार्यकारणनिर्मुक्ता कामकेलितरङ्गिता ।

कार्याणि महत्त्वादीनि कारणं मूलप्रकृतिः तैर्विनिर्मुक्ता । चैतन्ये तेषां परमार्थतोऽभावात् '**न तस्य कार्यं करणं च विद्यत**' इति **श्रुतेः** । कामस्य कामेश्वरस्य केलीनां क्रीडाविलासानां तरङ्गाः परम्पराः सञ्जाता अस्याः ।

## कनत्कनकताटङ्का लीलाविग्रहधारिणी ॥ २१२ ॥

कनती दीप्यमाने कनकस्य सुवर्णमये ताटङ्के कर्णाभरणविशेषौ यस्याः । लीलयाऽनायासेन विग्रहानवतारविशेषान्धारयति पद्मराजस्य महिषी लीलादेवी तद्विग्रहधारिणी वा । सा च **योगवासिष्ठे** प्रसिद्धा '**आसीदस्मिन्महीपाल कुले पद्मो विकासवान्** । **पद्मोनामे**'त्युपक्रम्य '**तस्यासीत्सुभगा भार्या लीला नाम पतिव्रते**'ति ॥ २१२ ॥

---

कार्यकारणाभ्यां स्थूलसूक्ष्माभ्यां निर्मुक्ता रहिता । मुक्तायै इति ॥ कामः कामेश्वरः तस्य केलीनां क्रीडाविलासानां तरङ्गाः परम्परा सञ्जाता अस्यां सा । तरङ्गितायै इति ॥

कनती दीप्यमाने कनकमये ताटङ्के यस्याः सा । ताटङ्कायै इति ॥ लीलार्थं विग्रहं शरीरं धारयतीति सा । धारिण्यै इति ॥ २१२ ॥

**अजा क्षयविनिर्मुक्ता मुग्धा क्षिप्रप्रसादिनी ।**

जन्मराहित्यादजा । 'अजामेका'मिति **श्रुतेः**, **'न जातो न जनिष्यत'** इति **श्रुतेश्च** । **महाभारते**ऽपि—

**'नहि जातो न जायेऽहं न जनिष्ये कदाचन ।**
**क्षेत्रज्ञः सर्वभूतानां तस्मादहमजः स्मृतः ॥'**

इति । जननं हि मृत्युसमव्याप्तम् । **'जातस्य हि ध्रुवो मृत्युर्ध्रुवं जन्म मृतस्य च**'ेति वचनात् । तदिह जननाभावरूपव्यापकविरुद्धोपलब्ध्या प्राप्तमर्थमाह । क्षयेण मरणेन विनिर्मुक्ता । क्षये गृह एव विशिष्य निर्मुक्ता ययेति वा । मुमुक्षुभिर्विषयभिया गृहत्यागः क्रियते । सुन्दर्युपासकैस्तु गृह एव मोक्षः प्राप्यत इति तात्पर्यम् । तदिदमुक्त**मस्माभिः शिवस्तुतौ**—

**'यदि परमिच्छसि धाम त्यज मा नाम स्वकं धाम ।**
**परपदनियमनदाम स्मर हृदि कामद्विषो नाम ॥'**

इति । **दूर्वासा**प्याह **[शक्तिमहिम्नस्तोत्रे]** । सङ्गं मोमोक्षतीति मुग्धा सौन्दर्यवती । अकारप्रश्लेषेण न सन्ति मूढा यस्या इत्यापि सुवचम् । **'मुग्धः सुन्दरमूढयो'**रिति **विश्वः** । क्षिप्रं स्वल्पदिनैरेव प्रसीदतीति तथा । अतएवोक्तं **सौरपुराणे**—

**'क्रमेण लभ्यतेऽन्येषां मुक्तिराराधनाद्विजाः ।**
**आराधनादुमेशस्य तस्मिञ्जन्मनि मुच्यते ॥'**

इति । इदं तु तीव्रतरभक्तिमत्पुरुषधौरेयपरम् । अन्येषां तु **शिवपुराणे** स्मर्यते—

**'अल्पभावेऽपि यो मर्त्यः सोऽपि जन्मत्रयात्परम् ।**
**न योनियन्त्रपीडायै भविष्यति न संशयः ॥'**

इति । तदिमां व्यवस्थामभिप्रेत्योक्तं **तन्त्रराजे**—

**'अन्यथा सम्प्रदायेन जपहोमार्चनादिकम् ।**
**कृतं जन्मान्तरे सम्यक्सम्प्रदायाय कल्पते ॥'** इति ।

**अन्तर्मुखसमाराध्या बहिर्मुखसुदुर्लभा ॥ २१३ ॥**

अन्तःस्वात्मप्रवणं मुखं चित्तवृत्तिर्येषां तैः सम्यगाराध्या । बहिर्विषयैकप्रवणं मुखं येषां तेषां सुष्ठु दुर्लभा । **'तरलकरणानामसुलभे'**त्या**नन्दलहर्याम्** ॥ २१३ ॥

---

न जायते सा जन्मरहितत्वात् । अजायै इति ॥ क्षयेन नाशेन विशेषतो निर्मुक्ता रहिता । मुक्तायै इति ॥ मुग्धा सौन्दर्यवती । मुग्धायै इति ॥ भक्तेषु क्षिप्रं शीघ्रं प्रसीदतीति सा । प्रसादिन्यै इति ॥

अन्तर्मुखैः विषयवासना विमुक्तान्तःकरणैः सम्यगाराधयितुं शक्या । आराध्यायै इति ॥ बहिर्मुखानामुक्तविपरीतानां सुतरां दुर्लभा । दुर्लभायै इति ॥ २१३ ॥

**त्रयी त्रिवर्गनिलया त्रिस्था त्रिपुरमालिनी ।**

**'स्त्रियामृक्सामयजुषी इति वेदास्त्रयस्त्रयी'**ति कोशाद्वेदत्रयरूपा । तथा च **कूर्मपुराणे** हिमवन्तं प्रति देवीवचनम्—

**'ममैवाज्ञा परा शक्तिर्वेदसंज्ञा पुरातनी ।**
**ऋग्यजुःसामरूपेण सर्गादौ सम्प्रवर्तते ॥'**

इति । **पद्मपुराणे**ऽपि—**'आन्वीक्षिकी त्रयी देवि दण्डनीतिश्च कथ्यस'** इति । **देवीपुराणे**ऽपि—

**'ऋग्यजुःसामभागेन साङ्गवेदगता यतः ।**
**त्रयीति पठ्यते लोके दृष्टादृष्टप्रसाधनी ॥'**

इति । **नित्यातन्त्रे** तु—

**'अकारादिः सामवेदो ऋग्वेदश्च तदादिकः ।**
**यजुर्वेद इकारादिस्तेषां संयोगतः शुचिः ॥**
**तन्निष्पत्तिं शृणु प्राज्ञे प्रोक्तान्पूर्वाधरक्रमात् ।**
**विलिख्य योजयेत्पूर्वं शब्दशास्त्रानुसारतः ॥**
**गुणसन्ध्या ऋग्यजुषं ततस्तेनापरं तथा ।**
**वृद्धिसन्ध्या समायुञ्ज्यादित्युत्पन्नं शुचेर्वपुः ॥**
**तेन त्रयीमयी विद्या कार्यकारणयोगतः ।'**

इत्युक्तम् । अत्र शुचिशब्देन वाग्भवं बीजमुच्यते । तेन तद्रूपेत्यर्थो वा । **'त्रिवर्गो धर्मकामार्थै'**रिति **कोशः** । तस्य निलयः स्थानं यस्याम् । त्रिषु भूतादिकालेष्वकारोकार-मकारेषु वा स्था स्थितिर्यस्याः । त्रिषु लोकादिष्वभेदेन तिष्ठतीति वा त्रिस्था । तदुक्तं **मार्कण्डेयपुराणे**—

**'त्रयो लोकास्त्रयो देवास्त्रैविद्यं पावकत्रयम् ।**
**त्रीणि ज्योतींषि वर्णाश्च त्रयो धर्मादयस्तथा ॥**
**त्रयो गुणास्त्रयः शब्दास्त्रयो दोषास्तथाश्रमाः ।**
**त्रयः कालास्तथावस्थाः पितरोऽहर्निशादयः ॥**
**मात्रात्रयं च ते रूपं त्रिस्थे देवि सरस्वती ।'**

इति । अन्तर्दशारचक्राभिमानिनी देवता त्रिपुरमालिनी ।

---

त्रयी वेदत्रयरूपा । त्रय्यै इति ॥ त्रिवर्गो धर्मादित्रयं तस्य निलयः स्थानं यस्या सा । निलयायै इति ॥ त्रिषु मातृमानमेयादित्रित्रिभेदनियतेषु तिष्ठतीति सा । त्रिस्थायै इति ॥ त्रयाणां पुराणां स्थूल-सूक्ष्म-कारणदेहानां माला परम्परा अस्यामस्तीति सा । मालिन्यै इति ॥

*अथ परिभाषामण्डलेऽष्टत्रिंशन्नामानि विभजते—*

***चतुरर्धभवो देवो वदन्विभेदं विभागमार्गेण।***
***गौणतरङ्गमतिः खलु शम्भोर्वादं चरत्र्यङ्घ्रिः॥ ३०॥***

*स्पष्टम्॥ ३०॥*

**निरामया निरालम्बा स्वात्मारामा सुधास्रुतिः॥ २१४।**

निर्गता आमया रोगा यया। सर्वालम्बनस्यालम्बान्तरायोगान्निरालम्बा। तथात्वेऽनवस्थापत्तेः। सा च मूलक्षयकरीत्यस्या अनालम्बत्वमेव साधयति। स्वात्मन्येवारामः क्रीडनं यस्याः। स्वात्मानमेव द्वेधा विभज्यान्योन्यं क्रीडमानेति यावत्। तथा **माध्यन्दिना** अधीयते—'**स वै न रेमे तस्मादेकाकी न रमते स द्वितीयमैच्छत् सह्येतावानास यथा स्त्रीपुमांसौ सम्परिष्वक्तौ स इममेवात्मानं द्वेधा पातयत्ततः पतिश्च पत्नी चाभवता**'मिति। स्वात्मैवारामः कृत्रिमवनरूपं विचित्रं जगद्यस्या इति वा। जगन्निर्माणसंहारकालयोः स्वात्ममात्रावशेषात्। तथा च **वायुपुराणे**—

**'एकस्तु प्रभुशक्त्या वै बहुधा भवतीश्वरः।**
**भूत्वा यस्माच्च बहुधा भवत्येकः पुनस्तु सः॥'**

इति। स्वमात्मीयं जगच्च आत्मा ब्रह्म च अनयोरारामः क्रीडनं विहरणं वृत्तित्वं यस्या इति वा। तदुक्तं **मार्कण्डेयपुराणे**—

**'त्वमक्षरं परं देवि यच्च सर्वं प्रतिष्ठितम्।**
**अक्षरं ब्रह्म परमं जगच्चैतत्क्षरात्मकम्॥**
**दारुण्यवस्थितो वह्निर्भौमाश्च परमाणवः।**
**तथा त्वयि स्थितं ब्रह्म जगच्चेदमशेषतः॥'**

इति। सुधायाः सहस्रारकर्णिकाचन्द्रगतायाः स्रुतिः स्रवणं यया कुण्डलिन्या सा। सुधायाः स्रुतिरेव वा। डाकिन्यादिमण्डलान्याप्याययन्ती सा क्रियैव भगवतीत्यर्थः। यद्वा प्रसिद्धचन्द्रमण्डलाद्वह्निरव्यादितृप्तिजनिका पीयूषवृष्टिरेषैवेति—

**दशभिः पञ्चभिश्चैव सुधामृतपरिस्रवैः।**
**कृष्णपक्षे सदा पीत्वा जायन्ते पीवराः सुराः॥**
**तत्सर्वं शाम्भवी माया........................।'**

---

भक्तानां निर्गता आमया रोगा यस्याः कृपया। निरामयायै इति॥ निर्गत आलम्ब आश्रयो यस्याः सा। आलम्बायै इति॥ स्वात्मन्यारामः क्रीडा यस्याः सा। आरामायै इति॥ सुधाया अमृतस्य तस्य स्रवणं यस्याः सा। स्रुत्यै इति॥ २१४॥

इति **वायुपुराणात्** । **ज्ञानार्णवे** शक्तिबीजसाधने **'स्रवत्पीयूषधाराभिर्वर्षन्तीं विषहारिणी'**-मिति यद्ध्यानमुक्तं तादृशरूपवतीति वा ॥ २१४ ॥

**संसारपङ्कनिर्मग्नसमुद्धरणपण्डिता ।**

संसारलक्षणे कर्दमे निःशेषेण मग्नानां जनानां सम्यगुद्धरणे पण्डिता कुशला । अत एवोक्तं **कौर्मे** –

**'ये मनागपि शर्वाणीं स्मरन्ति शरणार्थिनः ।**
**दुस्तरापारसंसारसागरे न पतन्ति ते ॥'** इति ।

**यज्ञप्रिया यज्ञकर्त्री यजमानस्वरूपिणी ॥ २१५ ॥**

यज्ञाः प्रिया यस्याः । **'यज्ञो वै विष्णु'**रिति श्रुतेस्तत्प्रियेति वा । यज्ञस्य कर्ता यजमानात्मको दीक्षितमूर्तिः परमशिवस्तस्य पत्नी दीक्षाख्या सन्तानस्य माता । तदुक्तं **लैङ्गे**–

**'यजमानात्मको देवो महादेवो बुधैः प्रभुः ।**
**उग्र इत्युच्यते सद्भिरीशानश्चेति चापरैः ॥**
**उग्राह्वयस्य देवस्य यजमानात्मनः प्रभोः ।**
**दीक्षा पत्नी बुधैरुक्ता सन्तानाख्यस्तदात्मजः ॥'**

इति । **वायुपुराणे**ऽपि–

**'उग्रा तनुः सप्तमी या दीक्षितैर्ब्राह्मणैः सह ।**
**दीक्षा पत्नी स्मृता तस्य सन्तानः पुत्र उच्यते ॥'**

इति । अष्टसु शिवमूर्तिषु चरमा यजमानमूर्तिरिति क्वचिद्वर्ण्यते क्वचिदात्मेति तदुभयमप्याह । यजमानश्च स्वश्च यजमानस्वौ दीक्षितात्मानौ तौ रूपे अस्या इति । अल्पाच्तरस्य पूर्वनिपातो न नित्यः **'एतत्तदो'**रित्यादिनिर्देशात् । उक्तञ्च **लैङ्गे**–

**'पञ्चभूतानि चन्द्रार्कावात्मेति मुनिपुङ्गवाः ।**
**मूर्तिरष्टौ शिवस्याहुर्देवदेवस्य धीमतः ॥**
**आत्मा तस्याष्टमी मूर्तिर्यजमानाह्वया परा ।'** इति ॥ २१५ ॥

---

संसाररूपे पङ्के कर्दमे नितरां मग्नानां सेवकजनानां सम्यगुद्धरणे पण्डिता अभिज्ञा । पण्डितायै इति ॥

यज्ञः प्रियो यस्यः सा । प्रियायै इति ॥ यज्ञानां कर्त्री सर्वकर्मसु प्रेरकत्वात् । कर्त्र्यै इति । अत एव यजमानस्य स्वरूपम् अस्याः सा । स्वरूपिण्यै इति ॥ २१५ ॥

**धर्माधारा धनाध्यक्षा धनधान्यविवर्धिनी ।**

तत्तद्देशेषु शिष्टपरम्परायाता वेदाविरुद्धाः क्रिया धर्मपदवाच्याः । तथा च **संवर्तस्मृतिः**—

**'यस्मिन्देशे य आचारः पारम्पर्यक्रमागतः ।**
**आम्नायैरविरुद्धश्च स धर्मः परिकीर्तितः ॥'**

इति । तेषामासमन्तात्सर्वदेशेषु धारा निरर्गलप्रवाहः । धर्म आधारो यस्या वा धर्मे तिष्ठतीत्युपचारात् । '**धर्मे सर्वं प्रतिष्ठित**'मिति **श्रुतेः** । धर्म आधारो यया वा । धर्मस्य सर्वाधारत्वं यत्कृतमिति यावत् । धनस्याध्यक्षा स्वामिनी । उपास्योपासकयोरभेदात् । कुबेररूपा वा । धनानि धान्यानि च विशेष्य वर्धयति ।

**विप्रप्रिया विप्ररूपा विश्वभ्रमणकारिणी ॥ २१६ ॥**

वेदशास्त्रादिविद्यावन्तो ब्राह्मणः विप्राः । तदुक्तं **ब्रह्मवैवर्ते**—

**'जन्मना ब्राह्मणो ज्ञेयः संस्कारैर्द्विज उच्यते ।**
**विद्यया याति विप्रत्वं त्रिभिः श्रोत्रिय उच्यते ॥'**

इति । ते प्रिया अभीष्टा यस्याः । '**अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनु**'रिति **भगवद्वचनेन** विप्रेषु कैमुतिकन्यायेन प्रीतिसिद्धेः । उक्तवचनादेव तादृशा विप्राः रूपं स्वरूपं यस्याः । अत एव श्रूयते—'**यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्ती**'ति । **पराशरस्मृतिरपि**—

**'ब्राह्मणा जङ्गमं तीर्थं त्रिषु लोकेषु विश्रुतम् ।**
**येषां वाक्योदकेनैव शुद्ध्यन्ति मलिना जनाः ॥'**

इति । अथवा विप्रान् रूपयति पूर्वरूपवतः करोत्याप्याययतीति वा । यस्या मन्त्रजपादिना ब्राह्मणानामाप्यायनं भवतीति यावत् । तदुक्तमा**पस्तम्बस्मृतौ**—

**'अपमानात्तपोवृद्धिः सन्मानात्तपसः क्षयः ।**
**अर्चितः पूजितो विप्रो दुग्धा गौरिव सीदति ॥**
**आप्यायते यथाहस्सु तृणैरमृतसम्भवैः ।**
**एवं जपैश्च होमैश्च पुनराप्यायते द्विजः ॥'**

---

धर्माणां शास्त्रीयाचाराणां आधारा प्रवर्तकत्वात् । आधारायै इति ॥ धनानामध्यक्षा स्वामिनी । अध्यक्षायै इति ॥ धनानि धान्यानि च सेवकेषु विशेषेण वर्धयतीति सा । वर्धिन्यै इति ॥

विप्राणां विदुषां प्रिया आत्मरूपत्वात् । प्रियायै इति ॥ विप्रा एव रूपं स्वरूपं यस्याः सा । रूपायै इति ॥ विश्वेषां सर्वेषां भ्रमणं भ्रमः मिथ्याज्ञानं तत्करोतीति सा । कारिण्यै इति ॥ २१६ ॥

इति । विश्वेषां ब्रह्माण्डानां भ्रमणं सृष्टिस्थितिनाशरूपं यातायातं कारयति ।

**'स्वभावमेके कवयो वदन्ति कालं तथाऽन्ये परिमुह्यमानाः ।**
**देवस्यैष महिमा तु लोके येनेदं भ्राम्यते ब्रह्मचक्रम् ॥'**

इति **श्रुतेः** । देवनिष्ठो महिमा शक्तिरेव भ्रामिकेत्यर्थः । **'भ्रामयन्सर्वभूतानि यन्त्रारूढानि मायये'**ति **स्मृतिश्च** । विश्वशब्दो विष्णुपरो वा **'विश्वं विष्णुर्वषट्कार'** इत्युक्तेः तस्य भ्रमणकारिणी । स्मर्यते तावत्**कालिकापुराणे**ऽयमितिहासः– विष्णुरेकदा व्योममार्गेण गरुडारूढो गच्छन्नधः कामरूपदेशे नीलाचलवासिनीं कामाख्यां देवीं प्रत्यासन्नामप्यनादृत्य तामप्रणम्यैव गतः । ततस्तत्कोपवशात्समुद्रमध्ये पतितस्तत्रैव भ्रमन्नासीत् । ततः कियता कालेन गवेषयन्ती लक्ष्मीर्नारदमुखादिमं वृत्तान्तमाकर्ण्य तपसा कामाख्यां प्रसाद्य विष्णुं सावधानीकृत्य भ्रमणादमोचयत् । ततः सोऽपि तामाराध्य वैकुण्ठलोकमध्यवात्सीदिति ॥ २१६ ॥

**विश्वग्रासा विद्रुमाभा वैष्णवी विष्णुरूपिणी ।**

विश्वं चराचरं ग्रसतीति विश्वग्रासा । चराचरसंहर्त्रीत्यर्थः । तथा च **काठके** श्रूयते–

**'यस्य ब्रह्म च क्षत्रं चोभे भवत ओदनः ।**
**मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥'**

इति । अत्र मृत्योरुपसेचनत्वोक्त्या तत्संहार्यचराचरप्रतीतेरित्याशयेन **ब्रह्मसूत्रम्**– **'अत्ता चराचरग्रहणा'**दिति । विद्रुमाः प्रवालास्तद्वदारक्ता विद्रुमाभा । वित् ज्ञानमेव द्रुमः पुङ्खानुपुङ्खप्रसृतत्वसाम्यात्तेन तुल्येति वा । विष्णोरियं वैष्णवी । तथा च **देवीपुराणे**–

**'शङ्खचक्रगदा धत्ते विष्णुमाता तथारिहा ।**
**विष्णुरूपाथवा देवी वैष्णवी तेन गीयते ॥'**

इति । अत्र चतस्रो व्युत्पत्तयः सूचिताः । तथारिहेत्यस्य विष्णुरिव दैत्यान्हन्तीत्यर्थः । विष्णुरूपेत्यस्य तदभिन्नेत्यर्थः । तेन न प्रथमव्युत्पत्त्या गतार्थता । तदेवाह । विष्णुरेव रूपमस्याः । तदुक्तं **ललितोपाख्याने ब्रह्माण्डपुराण** एव–**'ममैव पौरुषं रूपं गोपिकाजनमोहन'**मिति देवीवचनात् । तत्रैव वीरभद्रंप्रति विष्णुवचनम्–

**आद्या शक्तिर्महेशस्य चतुर्धा भिन्नविग्रहा ।**
**भोगे भवानीरूपा सा दुर्गारूपा च सङ्गरे ॥**
**कोपे च कालिकारूपा पुंरूपा च मदात्मिका ।'**

---

विश्वं ग्रसति संहरतीति सा । ग्रासायै इति ॥ विद्रुमः प्रवालस्तद्वदाभा कान्तिर्यस्याः सा आभायै इति ॥ विष्णुशक्तिरूपा । वैष्णव्यै इति ॥ विष्णोरूपं अस्याः सा । रूपिण्यै इति ॥

इति । **कूर्मपुराणे**ऽपि हिमवत्कृतदेवीस्तवे–

**'सहस्रमूर्धानमनन्तशक्तिं सहस्रबाहुं पुरुषं पुराणम् ।**
**शयानमब्धौ ललिते तवैव नारायणाख्यं प्रणतोऽस्मि रूपम् ॥'**

इति । **कौर्म** एव मङ्कणकंप्रति शिवेन विश्वरूपे दर्शिते–

**'किमेतद्भगवद्रूपं सुघोरं विश्वतोमुखम् ।**
**का च सा भगवत्पार्श्वे राजमाना व्यवस्थिता ॥'**

इति तत्पृष्टेन शिवेन स्वस्वरूपप्रभावं निर्वर्ण्योक्तम्–

**'मम सा परमा माया प्रकृतिस्त्रिगुणात्मिका ।**
**प्रो:च्यते मुनिभिः शक्तिर्जगद्योनिः सनातनी ॥**
**स एव मायया विश्वं व्यामोहयति विश्ववित् ।**
**नारायणः परोऽव्यक्तो मायारूप इति श्रुतिः ॥'**

इति । **सनत्कुमारसंहितायां** प्रभाकराख्यस्य राज्ञो विष्णुभक्तिं तन्महिष्याः पद्मिन्याख्यायाश्च पार्वतीभक्तिं वर्णयित्वोक्तम्–

**'एवं देव्यात्मना स्वेन रूपेण च जनार्दनः ।**
**दम्पत्योरेककायत्वादेक एव द्विधार्चितः ॥'**

इति । **बृहत्पाराशरस्मृतावपि**–

**'दुर्गां कात्यायनीं चैव यजन्वाग्देवतामपि ।**
**चेतसा सुप्रसन्नेन विष्णुलोकमवाप्नुयात् ॥'**

इति । **पद्मपुराणे**ऽपि–

**'चण्डिकां स्नपयेद्यस्तु ऐक्षवेण रसेन च ।**
**सौपर्णेन स यानेन विष्णुना सह मोदते ॥'**

इति । **आदित्यपुराण-शिवपुराणयोरपि**–**'या तस्य पार्श्वगा बाला सा पार्वत्यंशजो हरि'**रिति । **वामनपुराणे**ऽपि–

**'पौर्णमास्यां तु यो माघे पूजयेद्विधिवच्छिवाम् ।**
**सोऽश्वमेधमवाप्नोति विष्णुलोके महीयते ॥'** इति ॥

## अयोनिर्योनिनिलया कूटस्था कुलरूपिणी ॥ २१७ ॥

न विद्यते योनिः कारणं यस्याः साऽयोनिः । योनिशब्दः स्थानवचनो वा **'योनिष्ट इन्द्र निषदे अकारी'**ति श्रुतेः । हे इन्द्र ! तव निषदे उपवेशनाय मया स्थानं कृतमित्यर्थात्

---

नास्ति योनिः कारणं यस्याः सा । अयोन्यै इति ॥ योनावन्तस्त्रिकोणे निलयो यस्याः सा । निलयायै इति ॥ कूटवदचलभावेन तिष्ठतीति सा । कूटस्थायै इति ॥ कुलं सजातीयसमूहो जगत्, तद्रूपमस्याः सा । रूपिण्यै इति ॥ २१७ ॥

तेन स्थानरहिता अपरिच्छिन्नेत्यर्थः । अस्य विष्णोर्योनिर्जनिका मातेति वा । निलीयते जगद्यस्यामिति निलया योनिश्चासौ निलया च । योनिशब्दः प्रकृतिपरः । **'कर्तारमीशं पुरुषं ब्रह्मयोनि**'मिति **श्रुतौ** प्रयोगात् । कर्तारं क्रियाशक्तिमन्तमीशं नियन्तारं पुरुषं प्रत्यञ्चं ब्रह्म पूर्णं योनिं ध्यानेनापश्यन्निति व्याख्यानात् । **'योनिश्च हि गीयत'** इति **ब्रह्मसूत्रं** च । यद्वा **'यो योनिं योनिमधितिष्ठत्येक'** इति **श्रुतौ** मायापरत्वेनापि योनिपरस्य व्याख्यानदर्शनाद् योनिर्मायैव निलयः परिच्छेदिका यस्या इति । योनीनां जगत्कारणानां ब्रह्मादीनां नितरां लयो यस्यामिति वा । योनिस्त्र्यस्रचक्रमेव निलयो यस्या बिन्दुरूपाया देव्या इति वा । अत एवा**थर्वणे** शौनकशाखायां श्रूयते—

**'तस्मिन्हिरण्मये कोशे त्र्यक्षरे त्रिप्रतिष्ठिते ।**
**तस्मिन्यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुः ॥'**

इति । अस्या ऋचः पूर्वम्—

**अष्टाचक्रा नवद्वारा देवानां पूरयोध्या ।**
**तस्यां हिरण्मयः कोशः स्वर्गोऽपि ज्योतिषावृतः ॥'**

इति श्रुतम् । अनयोर्ऋचोरर्थः--देवानामप्ययोध्या असाध्या दुर्लभा पूः नगरी श्रीचक्रमित्यर्थः । **'चक्रं पुरं च सदनमगारं च गुहा स्त्रिया**'मिति **शङ्करारण्य**धृत-**विश्वाख्यकोशात्** । ईश्वरावासरूपायोध्यानगरी तु मर्त्यानामयोध्या । इयं तु देवानामपीत्यर्थः । सा कीदृशी । अष्टाचक्रा अष्टौ चक्राणि अष्टारं द्वे दशारे मन्वस्रं अष्टदलषोडशदले पद्मे भ्रमित्रयं भूगृहत्रयं चोति यस्यां सा । नवसंख्यानि द्वाराणि योनिद्वारवत्त्रिकोणानि यस्यां सा । **''पञ्चशक्तिचतुर्वह्निसंयोगाच्चक्रसम्भव'** इति **नित्याहृदये** । **'स्वाभिमुखाग्रत्रिकोणं शक्तिः, पराङ्मुखाग्रत्रिकोणं वह्नि**'रिति मन्त्रशास्त्रीया परिभाषा । तस्यामयोध्यायां हिरण्मयस्तेजोमयः कोशो निधानं त्रिकोणरूपं स एव स्वर्गः सुखरूपत्वात् । तैत्तिरीयाणां स्वर्गो लोक इति पाठस्तस्याप्ययमेवार्थः । तस्मिन्हिरण्मय इत्यादिसप्तम्यन्तं पञ्चकं समानाधिकरणं स्पष्टार्थम् । त्रिकोणे यदस्ति बिन्दुरूपं चक्रं तस्मिन् यक्षं पूज्यं तत्प्रसिद्धं ब्रह्मविद आत्मनीव विदुः । आत्माभेदेनेव बिन्द्वभेदेनापि ब्रह्म मन्यन्त इत्यर्थः । कूटयति छलयत्यात्मानमानन्दादिकमावृत्य संसारे पातयतीति कूटमज्ञानं तदध्यक्षतया तत्र तिष्ठति । **'कूटस्थमचलं ध्रुव**'मिति **स्मृतेः** । कूटस्याज्ञानस्य स्था स्थितिर्यस्यां वा । कूटो गिरिशृङ्गं तद्वन्निष्क्रियतया तिष्ठतीति वा । अयस्कारैः प्रहाराधिकरणत्वेन भूमौ निखातो लोहविशेषः कूटस्तद्वन्निर्विकारा वा । कूटानां विश्वसमूहानां स्थितिर्यस्यां वा । वाग्भवादिकूटत्रये तिष्ठतीति वा । कूटं पुरद्वारं स्त्रीचक्रान्तर्गतत्रिकोणं तत्र तिष्ठतीति वा ।

**'कूटं यन्त्रेऽनृते राशौ निश्चले लोहमुद्गरे ।**
**मायाद्रिशृङ्गयोस्तुच्छे सीरावयवदम्भयोः ॥**
**पुरद्वारे च शंसन्ति .......... ...............।'**

इति **विश्वः** । कुलं कौलमार्गो बाह्यपूजा वंश आचारो वा तद्रूपिणी ॥ २१७ ॥

## वीरगोष्ठीप्रिया वीरा नैष्कर्म्या–

वीराणां गोष्ठी सभा संल्लापो वा प्रिया यस्याः । स्वयमपि वीर्यवत्त्वाद्वीरा । **'पतिपुत्रवती वीरे'** ति तु **नाममालायाम्** । निर्गतानि कर्माणि यस्मात्स निष्कर्मा तस्य भावो नैष्कर्म्यं तद्वती नैष्कर्म्या । अर्श-आदित्वान्मत्वर्थीयोऽप्रत्ययः । स्वार्थे वा ष्यङ् । कर्मलेपाभाववतीत्यर्थः । **'लिप्यते न स पापेने'**ति **स्मृतेः** , **'न पुण्यपापे ममे'**ति **श्रुतेश्च** । **योगसूत्रमपि– 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वर'** इति ॥

**इति भास्कररायेण कृते सौभाग्यभास्करे ।**
**नवमेन शतेनाभूद्दशमी बोधिनी कला ॥ ९०० ॥**

**इति श्रीमल्ललितासहस्रनामभाष्ये नवमशतकं नाम दशमी कला ॥ १० ॥**



---

वीराणामन्तर्मुखानां गोष्ठी सभा प्रिया यस्याः सा । प्रियायै इति ॥ अन्तर्मुखसंविद्रूपत्वात् वीरा । वीरायै इति ॥ नैष्कर्म्या कर्मरहिता । नैष्कर्म्यायै इति ॥

# दशमशतकं नाम एकादशी धारिणी कला

**—नादरूपिणी ।**

नादः प्रणवशिरस्थितस्तद्रूपा । तदुक्तमभियुक्तैः—

**'आनन्दलक्षणमनाहतनाम्नि देशे नादात्मना परिणतं तव रूपमीशे ।**
**प्रत्यङ्मुखेन मनसा परिचीयमानं शंसन्ति नेत्रसलिलैः पुलकैश्च धन्याः ॥'**

इति । नादे रूपमस्या वा । तदुक्तं **स्वच्छन्दतन्त्रे**—**'रोधिन्याख्यं यदुक्तं ते नादस्तस्योर्ध्व-संस्थित'** इत्यादिना **'तस्योत्सङ्गगतामूर्ध्वगामिनीं परमां शिवाम् । ध्याये'**दित्यन्तेन ।

**विज्ञानकलना कल्या विदग्धा बैन्दवासनी ॥ २१८ ॥**

विज्ञानस्य ब्रह्मसाक्षात्कारस्य कलना स्वात्मसाक्षात्कारः **'चतुर्दशानां विद्यानां धारणं हि यथार्थतः । विज्ञानमिति तद्विद्या'**दिति **कौर्मो**क्तं वा विज्ञानम् । कलासु साधुः कल्या । यद्वा कलयितुमर्हा कल्या उषःकालरूपा वा । कादम्बर्यादिरूपा वा ।

**कल्यं सर्गे प्रभाते च कल्यो नीरोगदक्षयोः ।**
**कल्या कल्याणवाची स्यात्कादम्बर्यामपि स्मृता ॥'**

इति **विश्वः** । विदग्धा चातुर्यशीला । भ्रूवोरुपरिभागे वृत्तसन्निवेशो बैन्दवं तदासनं यस्याः । उक्तञ्च **स्वच्छन्दतन्त्रे**— **'हाकिनीमण्डलादूर्ध्वं बिन्दुरूपं तु वर्तुल'**मित्यादिना । तत्र पद्मं शिवं च वर्णयित्वा तस्य **'वामभागे समासीना शान्त्यतीता मनोन्मनी'**त्यादिना बिन्दुसम्बन्धिचक्रं सर्वानन्दमयाख्यमेवासनं यस्या वा । बिन्दुनां समूहो बैन्दवं तदेवासनं तदभिधेयार्थानामाधारोऽभिधायको यस्या इति वा । तथा च **ज्ञानार्णवतन्त्रे**—

**'बिन्दुव्यूहं प्रवक्ष्यामि बीजरूपं वरानने ।**
**हकारं बिन्दुरूपेण ब्रह्माणं विद्धि पार्वति ॥**
**सकारं बिन्दुसर्गाभ्यां हरिश्चाहं सुरेश्वरि ।**
**अविनाभावसम्बन्धौ लोके हरिहराविति ॥'**

---

नादः शक्तिः स रूपम् अस्याः । रूपिण्यै इति ॥

विज्ञाने स्वात्मानुभवे कलनं विमर्शनं स्फुरणं यस्याः सा । कलनायै इति ॥ कलयितुं ज्ञातुं योग्य कल्या । कल्यायै इति ॥ विदग्धा चतुरा । विदग्धायै इति ॥ वैन्दवे चक्रे आसनं यस्याः सा । आसनायै इति ॥ २१८ ॥

इत्यादिना वामादीनामिच्छादीनां भूरादीनां जाग्रदादीनां च त्रयं त्रयं बिन्दुरूपमेवोक्त्वोपसंहृतम्— '**एवं बिन्दुत्रयैर्योगात्त्रिपुरानामरूपिणी**'ति । यद्वा अकारप्रश्लेषेणाप्सु यदैन्दवमिन्दुसमूहस्तस्मिञ्जीवकदम्बे आस्ते बिम्बरूपत्वादभेदेन स्वयमेकैव बहुषु प्रतिबिम्बेषु तिष्ठति । '**एकधा बहुधा चैव दृश्यते जलचन्द्रव**'दिति **श्रुतेः** ॥ २१८ ॥

**तत्त्वाधिका तत्त्वमयी तत्त्वमर्थस्वरूपिणी ।**

तत्त्वानि प्रलयपर्यन्तस्थायिवस्तूनि षट्त्रिंशत्संख्यान्येव । घटादीनां तत्त्वपदवाच्यत्वाभावात् । उक्तं **चाभियुक्तैः**—

**'आप्रलयं यत्तिष्ठति सर्वेषां भोगदायि भूतानाम् ।**
**तत्तत्त्वमिति प्रोक्तं न शरीरघटादि तत्त्वमतः ॥'**

इति । तेभ्योऽधिका तन्नाशेऽप्यवस्थानात् । तत्त्वमयी तत्त्वप्रचुरा । यद्वा तत्त्वं शिवतत्त्वं तदधिका चिन्मयी चेति नामद्वयार्थः । सम्प्रज्ञातासम्प्रज्ञातसमाधिद्वयरूपेति यावत् । तदुक्तं **ज्ञानार्णवे**—

**'स्वयंप्रज्ञात संज्ञस्तु शिवाधिक्येन जायते ।**
**असम्प्रज्ञातनामा तु शिवतत्त्वेन वै भवेत् ।'**

तल्लक्षणे अपि तत्रैव—

**'स्वयंप्रज्ञातभेदस्तु तीव्रतीव्रतरो भवेत् ।**
**असम्प्रज्ञातभेदस्तु मन्दमन्दतरस्तथा ॥**
**हास्यरोदनरोमाञ्चकम्पस्वेदादिलक्षणः ।**
**तीव्रतीव्रतरो देवि समाधिरुपलक्षितः ॥**
**निमेषवर्जिते नेत्रे वपुस्तल्लक्षणं स्थितम् ।**
**मन्दमन्दतरो देवि समाधिरुपलक्षितः ॥'**

इति । इदञ्च द्वयं तेजोविशेषे मनोधारणेन भवति । तच्च तेजः स्वनाथमुखादवगन्तव्यम् । अथवा आत्मतत्त्वं विद्यातत्त्वं शिवतत्त्वं चेति त्रिविधतत्त्वमयी । तत्समष्टिरूपसर्वतत्त्वरूपत्वात्त्रिविधतत्त्वाधिका चेत्यर्थः । चतुर्विधतत्त्वस्वरूपमुक्तं वृद्धैः—

**'मायान्तमात्मतत्त्वं विद्यातत्त्वं सदाशिवान्तं स्यात् ।**
**शक्तिशिवौ शिवतत्त्वं तुरीयतत्त्वं समिष्टिरेतेषाम् ॥'**

---

तत्त्वेभ्यः शिवादिक्षित्यन्तेभ्योऽधिका । अधिकायै इति ॥ तत्त्वैः प्रचुरा । तत्त्वमय्यै इति ॥ तत्त्वमर्थो महावाक्यार्थः सः स्वरूपम् अस्याः । स्वरूपिण्यै इति ॥

इति । सत्तत्त्वं चित्तत्त्वं आनन्दतत्त्वं चेति त्रयाणां स्वरूपम् । सच्चिदानन्दाद्ब्रह्मणो जातेषु शिवादिक्षित्यन्तेषु शिवशक्त्योरानन्दांशोऽनावृतः, सदाशिवेश्वरशुद्धविद्यानां चिदंशोऽनावृतः,. मायादिक्षित्यन्तानां तु सन्दंशमात्रमनावृतम्, सच्चिदानन्दानामुत्तरोत्तरावरणाभावस्य पूर्वपूर्वावरणाभावव्याप्यत्वनियमाच्छिवतत्त्वे त्रयमप्यनावृतम् । विद्यातत्त्वे सच्चिदंशावनावृत्तौ, आनन्दांशे त्वल्पमावरणम्, आत्मतत्त्वे तु चिदानन्दांशौ सम्यगावृतौ तिष्ठतः । आत्मशब्दोऽप्यात्मलाभ इत्यादिप्रयोगेऽस्तित्वमात्रपरत्वेन प्रसिद्धः, विद्याशब्दो ज्ञानरूपचित्परः, शिवशब्दो मोक्षरूपानन्दे प्रसिद्ध इति । तेन शब्दत्रयेणैव सच्चिदानन्दांशवत्त्वलाभ इति तत्त्वत्रयरहस्यम् । यद्वा षडध्वात्मकपरमात्मशरीरे षट्त्रिंशदात्मकतत्त्वाध्वनोऽप्यवयववत्त्वात्तत्त्वमयी । तदुक्तं कामिके—

**पृथिव्यादीनि षट्त्रिंशत्तत्त्वान्यागमवेदिभिः ।**
**उक्तान्यमुष्य तत्त्वाध्वा शुक्रमज्जास्थिरूपधृक् ॥'**

इति । महावाक्यस्थयोस्तत्पदत्वंपदयोरर्थौ शिवजीवौ स्वरूपमस्याः ।

**सामगानप्रिया सौम्या सदाशिवकुटुम्बिनी ॥ २१९ ॥**

सामगानं प्रियं यस्याः । सामगाश्छन्दोगाः । अनवत्प्राणवत्प्रियं यस्या इति वा । '**सोममर्हति य**' इति सूत्रेण यप्रत्यये सोमयागार्हा सोम्या । उमया सहितः सोमोऽवयवोऽस्या इत्यर्थे '**मये च**'ति सूत्रेण वा यत्प्रत्ययः । अथवा '**सोमः कर्पूरचन्द्रयोः**' । सोम इवाह्लादिकेत्यर्थे शाखादित्वाद्यप्रत्ययः । '**तत्र साधु**'रित्यर्थे यप्रत्ययो वा । सौम्येत्यादिवृद्धिपाठे तु चातुर्वर्ण्यादित्वात्स्वार्थे ष्यञ् । सदाशिवस्य कुटुम्बिनी भार्या श्यामलाशुद्धविद्याश्वारूढादिरूपेत्यर्थः ॥ २१९ ॥

**सव्यापसव्यमार्गस्था—**

सव्यश्चापसव्यश्च मार्गश्च सव्यापसव्यमार्गास्तेषु स्थिताधिकृता । वितरणपालनाधिकारादिदानक्षमेति यावत् । तेषां त्रयाणां स्था स्थितिर्यस्यामिति वा । सन्ति हि सवितृमण्डलस्योत्तर-दक्षिण-मध्यभागभेदेन त्रयो मार्गाः । अश्विन्यादिभिस्त्रिभिस्त्रिभिर्नक्षत्रैरेकैका वीथी । तादृशीभिस्तिसृभिस्तिसृभिर्वीथीभिरेकैको मार्गः । तदेतद्विस्तरेणोक्तं **वायुपुराणे**—

**'अश्विनी कृत्तिका याम्या नागवीथीति शब्दिता ।**
**रोहिण्यार्द्रा मृगशिरो गजवीथ्यभिधीयते ॥**

---

सामगानं प्रियं यस्याः सा । प्रियायै इति ॥ सौम्या शान्तरूपा । सौम्यायै इति ॥ सदाशिवस्य कुटुम्बिनी गृहणी । कुटुम्बिन्यै इति ॥ २१९ ॥

सव्यापसव्यमार्गयोः दक्षिणवाममार्गयो[रा]राध्यत्वेन स्थिता । मार्गस्थायै इति ॥

**पुष्याश्लेषा तथादित्या वीथी चैरावती स्मृता।**
**एतास्तु वीथयस्तिस्र उत्तरो मार्ग उच्यते॥**
**तथा द्वे चापि फल्गुन्यौ मघा चैवार्षती मता।**
**हस्तश्चित्रा तथा स्वाती गोवीथीति तु शब्दिता॥**
**ज्येष्ठा विशाखानुराधा वीथी जारद्गवी मता।**
**एतास्तु वीथयस्तिस्रो मध्यमोमार्ग उच्यते॥**
**मूलाषाढोत्तराषाढा अजवीथ्यभिशब्दिता।**
**श्रवणं च धनिष्ठा च मार्गी शतभिषस्तथा॥**
**वैश्वानरी भाद्रपदे रेवती चैव कीर्तिता।**
**एतास्तु वीथयस्तिस्रो दक्षिणो मार्ग उच्यते॥'**

इति। याम्या भरणी। आदित्या अदितिदेवत्या पुनर्वसुः। मार्गी मृगवीथी। स्पष्टमन्यत्। अत्र सव्यादयस्त्रयोऽपि शब्दाः प्रत्येकं मार्गत्रयस्यापि वाचकाः सम्भवन्ति। तथाहि– '**वामं शरीरं सव्यं स्यादपसव्यं तु दक्षिण**मिति **कोशात्**प्रकृते सव्यशब्देन नागवीथीगजवीथ्यैरावतवीथ्यात्मक उत्तरो मार्गो विवक्ष्यते। अपसव्यशब्देन त्वजवीथीमृगवीथीवैश्वानरवीथ्यात्मको दक्षिणो मार्गः। मार्गशब्देन सामान्यवाचिनैव पारिशेष्यादार्षतवीथीगोवीथीजारद्गववीथ्यात्मको मध्यमो मार्ग उच्यते। यद्वा उत्तरमार्गो मृगशीर्षसम्बन्धित्वेन मृगस्यायं मार्ग इति व्युत्पत्त्या मार्गपदेनोच्यते। मध्यमस्तु सव्यपदेन पक्षिणमार्गात्सव्यस्थानीयत्वात्। अपसव्यस्तु यथास्थित एव। यद्वा '**सव्यं दक्षिणवामयो**'रिति **कोशा**द्दक्षिणमध्यमार्गावेव सव्यापसव्यपदेनोच्येते। उत्तरस्तु मार्गपदेनेति त्रयाणां मार्गाणां वामसंस्थक्रमेण निर्देशः सम्पद्यते। अथवा दक्षिणमार्ग एव मृगवीथीसम्बन्धित्वादुक्तव्युत्पत्त्या मार्गपदेनोच्यताम्। मध्यमस्तु सव्यपदेन मार्गाद्वामत्वात् उत्तरमार्गापेक्षया दक्षिणत्वाद्वा। अत एव तद्विरुद्धत्वादुत्तरो मार्गोऽपसव्यः। मध्यम एव वाऽपसव्यपदेन उत्तरमार्गापेक्षया दक्षिणस्थानीयत्वात्सव्यपदेन तूत्तर एवेति दक्षिणसंस्थक्रमेणापि निर्देशः सम्पनीपद्यत इत्येका व्याख्या।

**एवं वा**।सव्यो देवयानोऽर्चिरादिमार्गो निवृत्तिपरैः प्राप्यः। अपसव्यः पितृयाणो धूम्रादिमार्गः प्रवृत्तिपरैः प्राप्यः। मार्गस्थशब्दो मार्गेषु स्था स्थितिर्यस्मादिति व्युत्पत्त्या ध्रुवावस्थितिशालिविष्णुलोकपरः। आदित्यादिग्रहाणां स्वस्वमार्गे स्थापनस्य ध्रुवाधीनत्वात्। ईदृशमार्गत्रयरूपेत्यर्थः। एतद्विस्तरस्तु **विष्णुपुराणे** द्वितीयेंऽशे–

**'उत्तरं यदगस्त्यस्य अजवीथ्याश्च दक्षिणम्।**
**पितृयाणः स वै पन्था वैश्वानरपथाद्बहिः॥**
**तत्रासते महात्मानो ऋषयो ह्यग्निहोत्रिणः।**
**भूतारम्भकृतं ब्रह्म शंसन्तो ऋत्विगुद्यताः॥**

प्रारभन्ते तु ये लोकास्तेषां पन्थास्तु दक्षिणः ।
चलितं ते पुनर्ब्रह्म स्थापयन्ति युगे युगे ॥
सन्तप्ततपसा चैव मर्यादाभिः श्रुतेन च ।
जायमानाश्च पूर्वे च पश्चिमानां गृहेषु वै ॥
पश्चिमाश्चैव पूर्वेषांजायन्ते निधनेष्विह ।
एवमावर्तमानास्ते तिष्ठन्ति नियतव्रताः ॥
सवितुर्दक्षिणं मार्गं श्रिता ह्याचन्द्रतारकम् ।'

इति । लोकालोकपर्वतस्योत्तरशृङ्गमगस्त्यस्थानम् । तदुक्तं मत्स्यपुराणे–

'लोकपालाः स्थिता ह्येते लोकालोके चतुर्दिशम् ।
तस्योत्तरमगस्त्यस्य शृङ्गं देवर्षिपूजितम् ॥'

इति । अजवीथ्याः मूलादिनक्षत्रत्रयस्य वैश्वानरपथाच्चरमनक्षत्रत्रयात् भूतारम्भकृतं ब्रह्मप्रवृत्तिमार्गबोधकं कर्मकाण्डात्मकं वेदभागम् । जायमाना इति मता अपि स्वकुल एव पुनःपुनर्जायमाना इति समुदायार्थः । तथा तत्रैव–

'नागवीथ्युत्तरं यच्च सप्तर्षिभ्यश्च दक्षिणम् ।
उत्तरः सवितुः पन्था देवयानस्तु स स्मृतः ॥
तत्र ते वशिनः सिद्धा विमला ब्रह्मचारिणः ।
सन्ततिं ये जुगुप्सन्ति तस्मान्मृत्युजितश्च ते ॥
अष्टाशीतिसहस्राणि मुनीनामूर्ध्वरेतसाम् ।
उदक्पन्थानमर्यम्णः स्थिताश्चाभूतसंप्लवम् ॥
ते संप्रयोगाल्लोभस्य मैथुनस्य च वर्जनात् ।
इच्छाद्वेषाप्रवृत्त्या च भूतारम्भविवर्जनात् ॥
पुनश्चाकामसंयोगादिच्छादेर्दोषदर्शनात् ।
इत्येवं कारणैः शुद्धास्तेऽमृतत्वं हि भेजिरे ॥
आभूतसंप्लवं स्थानममृतत्वं हि भाष्यते ।
त्रैलोक्यस्थितिकालोऽयमपुनर्मार उच्यते ॥'

इति । नागवीथ्युत्तरं अश्विन्यादित्रयोत्तरम् । भूतारम्भविवर्जनात् प्रवृत्तिमार्ग-परित्यागात् । तृतीयमार्गेण सह फलैक्यं माप्रसाङ्क्षीदत आह–आभूतसंप्लवमिति । तथा तत्रैव–

'ऊर्ध्वोत्तरमृषिभ्यस्तु ध्रुवो यत्र ःयवस्थितः ।
एतद्विष्णुपदं दिव्यं तृतीयं व्योम्नि भासुरम् ॥
निर्धूतदोषपङ्कानां यतीनां संयतात्मनाम् ।
स्थानं तत्परमं विप्र पुण्यपापपरिक्षये ॥

**अपुण्यपुण्योपरमे क्षीणाशेषार्तिहेतवः ।**
**यत्र गत्वा न शोचन्ति तद्विष्णोः परमं पदम् ॥**
**दिवीव चक्षुराततं योगिनां तन्मयात्मनाम् ।**
**विवेकज्ञानदृष्टं च तद्विष्णोः परमंपदम् ॥'**

इत्यादि । इत्यपरा व्याख्या ।

एवं वा । उपासनाक्रमे हि द्वौ मार्गौ दृश्येते– वाममार्गो दक्षिणमार्गश्चेति । तत्र वाममार्गो नाम स्वस्ववर्णाश्रमविहितानि यावन्ति कर्माणि, श्रौतान्यग्निहोत्रादीनि, स्मार्तान्यष्टकादीनि, तान्त्रिकाणि मन्त्रसिद्ध्यादीनि, तेषु सर्वेषु या या देवताः प्रधानभूता अङ्गभूता वा तत्तत्स्थाने स्वोपास्यामेव देवतां सर्वत्र भावयेत् । तत्तद्देवतावाचकपदोत्तरं विशेष्यत्वेन स्वदेवतावाचकपदं सर्वमन्त्रेषु निक्षिपेदित्याकारकः । ईदृशे मार्गे देवर्षिपितॄणामृणशोधनाभावजन्यं पातकम् । दक्षिणमार्गे तु श्रौतादितत्तत्कर्माङ्गदेवतास्थाने स्वोपास्यदेवतैव भावनीयेति न निर्बन्धः अपि तु तत्तद्देवताविषयकतन्त्रेषु यानि कर्माणि विहितानि तदङ्गत्वेनैवेति सर्वकर्मणामुपरोधाभावादस्मिन्मार्गे तादृशं पातकं नास्तीति झडिति मोक्षः । वाममार्गे तु विलम्बितः । ऋणशोधनाभावेन कञ्चित्कालं प्रतिबन्धात् । न चैवं सत्यनुष्ठानतोऽपि कठिने मोक्षांशेऽपि विलम्बिते साधने कथं शिष्टानां वाममार्गे प्रवृत्तिरिति वाच्यम् । ऐहिकानामुच्चावचफलानामिहैव जन्मनि भोगलिप्सया मोक्षे स्वल्पविलम्बस्य सोढव्यत्वात् । भुक्तिमुक्तिप्रदत्वेन वैषयिकशिष्टानां प्रवृत्तिसम्भवात् । ऐहिकभोगविरक्तशिष्टानां तु मोक्षे विलम्बस्यासोढव्यत्वाद्दक्षिण एव मार्गे प्रवृत्तिरिति विवेकः । तदिदं सविस्तरं निरूपितं **कालिकापुराणे**–

**'सर्वत्र देवीमन्त्रेषु वैदिकेष्वपि भैरवीम् ।**
**त्रिपुरां चिन्तयेन्नित्यं वेदमन्त्रेषु च क्रमात ॥**
**देवनामसु सर्वेषु भैरवीति पदं सदा ।**
**कुर्याद्विशेषणं नित्यं नोच्चार्य निर्विशेषणम् ॥**
**आपः पुनन्तु पृथिवीमुक्त्वात्रिपुरभैरवीम् ।**
**कुर्यादाचमनं विप्रो द्रुपदायां तथा चरेत् ॥**
**इदं विष्णुर्भैरवस्तु विचक्रम इतीरितम् ।**
**मृदालम्बनकृत्येषु मन्त्रमेतं नियोजयेत् ॥**
**गायत्रीं त्रिपुराद्यां तु भैरवीमुच्चरञ्छिवाम् ।**
**मार्ताण्डभैरवायेति सूर्यायार्घ्यं निवेदयेत् ॥**
**उदुत्यं जातवेदसं देवं वहन्ति केतवः ।**

दृशे विश्वाय सूर्यं तु शेषे भैरवमीरयेत् ॥
तर्पणादौ प्रयुञ्जीत तृप्यतां ब्रह्म भैरवम् ।
आवाहने च स्वपितॄन्भैरवानिति तर्पयेत् ।
तृप्यतां भैरवी मातः पितृभैरव तृप्यताम् ।
आदौ च त्रिपुरां पूर्वं तर्पणेऽपि प्रयोजयेत् ।
ज्योतिष्टोमाश्वमेधादौ यत्र यत्र प्रपूजयेत् ।
तत्र भैरवरूपेण देवीमपि च भैरवीम् ॥
एवं तु वाम्यभावेन यजेत्त्रिपुरभैरवीम् ।
एषा वामेन मार्गेण पूज्या दक्षिणतां विना ॥
ऋषीन्देवान्पितॄंश्चैव मनुष्यान्भूतसञ्चयात् ।
यो यजेत्पञ्चभिर्यज्ञैर्ऋणानां परिशोधनैः ॥
विधिवत्स्नानदानाभ्यां सर्वं यद्विधिपूजनम् ।
क्रियते सरहस्यं तु तद्दाक्षिण्यमिहोच्यते ॥
सर्वत्र पितृदेवादौ यस्माद्भवति दक्षिणः ।
देवी च दक्षिणा यस्मात्तस्माद्दक्षिण उच्यते ॥
या देवी पूज्यमाना तु देवादीनामशेषतः ।
यज्ञभागान्स्वयं भुङ्क्ते सा वामा तु प्रकीर्तिता ॥
पूजकोऽपि भवेद्वामस्तन्मार्गे सततं रतः ।
पञ्चयज्ञान्न वा कुर्यान्न कुर्याद्वामपूजने ॥
अन्यस्य पूजाभागं हि यतो गृह्णति वामिका ।
यः पूजयेद्वाम्यभावैर्न तस्य ऋणशोधनम् ॥
पितृदेवनरादीनां जायते तु कदाचन ।
सर्वत्र त्रिपुरायोगस्तेन मार्गेण गच्छतः ॥
यदा जायेत प्राज्ञस्य तदा मोक्षमवाप्नुयात् ।
चिरेण लभते मोक्षं वामेन त्रैपुरो नरः ॥
ऋणशोधनजैः पापैराक्रान्तत्वेन भैरव ।
इहलोके सुखैश्वर्ययुक्तः सर्वत्र वल्लभः ॥
मदनोपमकान्तेन शरीरेण विराजता ।
सराष्ट्रकं च राजानं वशीकृत्य समन्ततः ॥
मोहयन्वनिताः सर्वाः कुर्वंश्च मदविह्वलाः ।
सिंहान्व्याघ्रांस्तरक्षूंश्च भूतप्रेतपिशाचकान् ॥
वशीकुर्वन्विचरति वायुवेगो ह्यवारितः ।

**बालां वा त्रिपुरां देवीं मध्यां वाप्यथ भैरवीम् ॥**
**यो यजेत्परया भक्त्या पञ्चबाणोपमः कृती ।**
**कामेश्वरीं तु कामाख्यां पूजयेत्तु यथेच्छया ॥**
**दाक्षिण्यादथवा वाम्यात्सर्वथा सिद्धिमाप्नुयात् ।**
**महामायां शारदां चशैलपुत्रीं तथैव च ॥**
**यथा तथा प्रकारेण दाक्षिण्येनैव पूजयेत् ।**
**यो दाक्षिण्यं विनाभावं महामायादिमर्चति ॥**
**स पापः सर्वलोकेभ्यश्च्युतो भवति रोगधृक् ।**
**अन्यास्तु शिवदूत्याद्या या देव्यः पूर्वमीरिताः ॥**
**ता दाक्षिण्याद्वामतो वा पूजनीयास्तु साधकैः ।**
**किं तु यः पूजको वामः सोऽन्याशापरिलोपकः ॥**
**सर्वाशापूरको यस्माद्दक्षिणस्तत उत्तमः ।'**

इति । वैतालभैरवौ प्रति शिववचनम् । एतत्पक्षे सव्यापसव्यौ च तौ मार्गौ चेति कर्मधारयः। तयोः स्थिता । मार्गद्वयेनाप्युपास्येत्यर्थः । वाममार्गेणैवोपास्यानां त्रिपुर-भैरव्यादिदेवतानां दक्षिणमार्गेणैवोपास्यानां शारदादिदेवतानामुभयथापि विकल्पेनो-पास्यानां शिवदूत्यादिदेवतानां च परमार्थदृष्ट्या त्रिपुरसुन्दर्यभेद इति यावत् । इत्यन्या व्याख्या ।

किमत्र **'सव्यापसव्येसौषुम्णेष्वि'**ति **शिवसूत्रे** प्रयोगादिडापिङ्गले सव्यापसव्ये अर्थात्सौ-षुम्णा एव मार्गपदेन परिशेषादुच्यत इत्यप्यन्या व्याख्या । अत्र द्वितीयव्याख्यानेऽपि मार्गपदेनैव पारिशेष्याल्लक्षणया ध्रुवमार्गोपादाने सति त्रित्रिपदकद्वन्द्वसमासरूपसव्या-पसव्यमार्गपदत्रयं द्विपदकद्वन्द्वगर्भकर्मधारयरूपं चैकपदमिति चतुर्णां पदानां पुनर्द्वन्द्वापवादैकशेषेण व्याख्याचतुष्टयसमुच्चयोऽवगन्तव्यः ।

**'अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्तशूक'**मित्यादिश्रुत्युक्तरीत्या ये मार्गद्वयभ्रष्टाः कष्टमापदं प्राप्तास्तेषामप्यापदमनायासनामस्मरणादिसाधनमात्रेण दयया निवारयतीत्याह—

**—सर्वापद्विनिवारिणी ।**

सर्वापदिति । सर्वा आपदो विशिष्य नितरां वारयति । तथा च **कूर्मपुराणे** देवीवाक्यम्—

**'ये तु सङ्गान् परित्यज्य मामेकं शरणं गताः ।**
**उपासते सदा भक्त्या योगमैश्वरमाश्रिताः ॥**

---

सेवकानां सर्वा आपदो विशेषेण निवारयतीति सा । वारिण्यै इति ॥

**सर्वभूतदयावन्तः शान्ता दान्ता विमत्सराः ।**
**अमानिनो बुद्धिमन्तस्तापसाः संयतव्रताः ॥**
**मच्चित्ता मद्गतप्राणा मज्ज्ञानकथने रताः ।**
**संन्यासिनो गृहस्थाश्च वनस्था ब्रह्मचारिणः ॥**
**ये चोक्तैर्लक्षणैर्हीना अपि मन्नामजापकाः ।**
**तेषां नित्याभियुक्तानामापदां पर्वतानपि ॥**
**नाशयामितरां ज्ञानदीपेन न चिरादिह ।'**

इति । **हरिवंशे**ऽपि देवीं प्रति विष्णुवाक्यम्—'**नृणां बन्धं वधं रोधं पुत्रनाशं धनक्षय**'-मित्यादिना यत्परम्परामुपन्यस्य '**आपत्सु निखिलासु त्वं रक्षस्येव न संशय**' इत्यन्तम् । **वाराहे**ऽपि ब्रह्मादिकृतदेवीस्तोत्रान्ते—

**'शरणं त्वां प्रपद्यन्ते ये देवि परमेश्वरि ।**
**न तेषामापदः काश्चिज्जायन्ते क्वापि संकटः ॥'**

इत्यादि । **अभियुक्ता** अप्याहुः—

**'आपदि किं करणीयं स्मरणीयं चरणयुगलमम्बायाः ।**
**तत्स्मरणं किं कुरुते ब्रह्मादीनपि च किङ्करीकुरुते ॥'** इति ॥

*अथ परिभाषायां सप्तत्रिंशन्नामानि विभजते—*

***खेचरता द्विर्भवदा देहे चैका भवेद्देवी ।***
***भगणे चतुर्गुणा भूर्भवभालशतेन गोमेदा ॥ ३१ ॥***

*अत्रोत्तरार्ध इव पूर्वार्धे नकारस्याकथनादेकपदोपादानाच्च दशसंख्याधिक्ये सिद्धे तत्र प्रथमोपस्थितत्वादेकादशाक्षरं नामेति सिद्ध्यति ॥ ३१ ॥*

**स्वस्था स्वभावमधुरा धीरा धीरसमर्चिता ॥ २२० ॥**

दुःखकृतचाञ्चल्याभावात्स्वस्था स्वस्मिन्नेव स्थिता वा । '**स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नीति होवाच**'ेति श्रुतेः । स्वरित्यव्ययं स्वर्गवाचि । तत्र तिष्ठत्यध्यक्षतयेति वा । शोभना अस्था स्थित्यभावो गतिर्यया सा वा । प्रभावादेवोपाधिसम्पर्कमन्तरेणैव मधुरा सर्वाभिलषणीया ।

**'मधुरं रसवत्स्वादुप्रियेषु मधुरोऽन्यवत् ।**
**मधुरा शतपुष्पायां मधूलीनगरीभिदोः ॥'**

---

क्लेशलेशस्याप्यभावात् स्वस्था । स्वस्थायै इति ॥ स्वभावतो निसर्गेणैव मधुरा सर्वाभिलषणीया । मधुरायै इति ॥ धीरा धैर्यवती । धीरायै इति ॥ धीरैः सम्यगर्चिता । अर्चितायै इति ॥ २२० ॥

इति **विश्वः**। अत एव स्व आत्मीयो भावोऽवस्थानं यस्यां सा च सा मधुरापुरी चेति वा। मीनाक्षीनिवासशालिहालास्यक्षेत्र[रूपेति]निवासेति यावत्। यद्वा स्वस्यात्मनो भायां प्रतिभायां येऽवमाः प्रथमगणनीयाः। आत्मज्ञोत्तमा इति यावत्। तेषां धुरेव धुरा। धूरिति हलन्ताद्धागुरिमतेन टाप्। रथस्य धूर्यथा सर्वोत्तममङ्गं तद्वदियमात्मज्ञानवतां निर्वाहिकेत्यर्थः। न चावमपदस्य निकृष्टपरत्वमेवेति भ्रमितव्यम्। अवमोत्तमपदयोः प्रथमचरमपरत्वेन प्रयोगदर्शनात्। **'अग्निरग्रे प्रथमो देवतानां संयातानामुत्तमो विष्णुरासी'**दित्याग्नावैष्णवेष्टियाज्यानुवाक्यामन्त्रस्य सर्वदेवताप्रथमचरमभूतयोरग्निविष्ण्वोर्ग्रहणे प्रत्याहारन्यायेन मध्यस्थानामखिलदेवतानां ग्रहणं दीक्षणीयेष्टौ सिद्ध्यतीति प्रतिपादनपरस्य व्याख्यारूपे **'अग्निर्वै देवानामवमो विष्णुः परम'** इति **बह्वृचब्राह्मणे** प्रथमपदस्यावमपदेन व्याख्यानदर्शनेन तयोः पर्यायत्वसिद्धेः। स्वभामात्मज्ञानं ये वमन्ति सृजन्ति साधयन्ति तेषु धूरुत्तमेति वा। तेन **'न निर्धारण'** इति षष्ठीसमासनिषेधस्य न विरोधः। पुरुषोत्तम इत्यत्रेव सप्तमीसमासस्वीकारात्। शोभना अभावाः स्वभावाः। अभावेषु शोभनत्वविशेषणात्तत्प्रतियोगिनां भावानामशोभनत्वमुक्तं भवति। तेन रागद्वेषवैषम्यनैर्घृण्यादिप्रयोगिकैरभावैर्मधुरेति वा। स्वेषु आत्मीयेषु भक्तेषु भावेन अवस्थानेन मधुरा वा। स्वेषां भावेन भक्त्या मधु सत्फलं रातीति वा। **'चरन्वै मधु विन्दती'**ति **श्रुतौ** तथैव मधुपदस्य व्याख्यानदर्शनात्। एवमभिप्रायावतारयोरपि भावपदार्था यथासम्भवं योजनीयाः। धीरा पण्डिता। धैर्यवती वा। धियमद्वैतबुद्धिं राति ददातीति वा। **'ईश्वरानुग्रहादेव पुंसामद्वैतवासने'**ति **स्मृतेः**। धीप्रदा इरा दशमीतिथिर्यस्यां वा। धीरैः पण्डितैः समर्चिता। **'तं धीरासः कवय उन्नयन्ती'**ति **श्रुतेः**। अत एव **कल्याणचरणैः** स्वीयं धैर्य प्रकटीकृतम्—

**'पातय वा पाताले स्थापय वा निखिललोकसाम्राज्ये।**
**मातस्तव पदयुगलं नाहं मुञ्चामि नैव मुञ्चामि॥'**

इति। धीसंज्ञं ज्ञानाभिन्नं रसमानन्दमुद्दिश्यार्चिता वा॥ २२०॥

## चैतन्यार्घ्यसमाराध्या चैतन्यकुसुमप्रिया।

चैतन्यं चिद्रूपम् **'आत्मचैतन्यमात्मे'**ति **शिवसूत्रात्** तदेवार्घ्यं पूजायोग्यं जलादि तेन सम्यगाराध्या। निराधाराख्यायाः पूजायाश्चिदभेदभावनारूपत्वात् **'ज्ञानमर्घ्य'**मिति **भावनोपनिषच्छ्रुतेः**। उक्तञ्च **स्कान्दे**—

**'स्वानुभूत्या स्वयं साक्षात्स्वात्मभूतां महेश्वरीम्।**
**पूजयेदादरेणैव पूजा सा पुरुषार्थदा॥'**

---

चैतन्यमयैरर्घ्यैः योगिचित्तवृत्तिरूपैः पूजोपकरणैः सम्यगाराध्या। आराध्यायै इति॥ चैतन्यकुसुमं चिद्रूपं प्रियं यस्याः सा। प्रियायै इति॥

इति । अथवा चैतन्यस्यात्मनोऽर्घ्येण ज्ञानेन स्वानुभूत्येत्यर्थः । '**अर्घ्यः पूजाविधौ मूल्येऽप्यर्घ्यो विद्याद्द्रुमूलयो**'रिति **विश्वः** । अर्घ्ये साधुरित्यर्थे यत्प्रत्ययः । चातुर्वर्ण्यादेराकृतिगणत्वाद्वा स्वार्थे ष्यञ् । आर्घ्यमित्येव छेदः । चैतन्यवाचकोऽर्घ्यो विद्यास्त्रीदेवत्यो मनुरिति वा । तेन भुवनेश्वरीमन्त्रेण समाराध्या । '**स्त्रीदेवतास्तु विद्याः स्युर्मन्त्राः पुंदेवता मता**' इति वचनात् । **सूतसंहितायाम्**–

**'जपित्वा दशसाहस्रं मन्त्रं चैतन्यवाचकम् ।**
**महापातकसङ्घैश्च मुच्यते पातकान्तरैः ॥'**

इति श्लोके चैतन्यवाचकमन्त्रपदस्य भुवनेश्वरीमन्त्रपरत्वेन व्याख्याततत्वाच्च । अथवा चेतनैव चैतन्यं संविद्रूपो रसः । '**चेतना संविदि प्रोक्ता वाच्यवत्प्राणिनि स्मृते**'ति **विश्वः** । स एवार्घ्यः पूजाद्रव्यं विशेषार्घ्यपात्रे परिपूरणेन संस्कारैः पूजायोग्यतामापादित इति यावत् । तेन सम्यक्तर्पणादिनाराध्या । '**संविदासवयोर्मध्ये संविदेव गरीयसी**'ति **रुद्रयामलात्** । तान्त्रिकैः कुण्डगोलोद्भवपदेन व्यवह्रियमाणः पाञ्चमिको रसो वा चैतन्यं प्राणिसम्भवत्वात् । चैतन्यं चिदेव कुसुमं महाफलप्रसूतित्वात् । '**जडानां चैतन्यस्तबकमकरन्दस्रुतिझरी**'त्यादौ कुसुमत्वेन रूपकस्य कविसम्प्रदायसिद्धत्वात् । तत्प्रियं यस्याः । उपलक्षणमेतत्पुष्पाष्टकस्य–

**'अहिंसा प्रथमं पुष्पमिन्द्रियाणां च निग्रहः ।**
**क्षान्तिः पुष्पं दयापुष्पं ज्ञानपुष्पं परं मतम् ॥**
**तपःपुष्पं सत्यपुष्पं भावपुष्पमथाष्टमम् ।'**

इत्य**भियुक्तोक्तेः** संविदादिपक्षद्वयमिहाप्यतिदेष्टव्यम् । तयोश्च कुसुमसद्भावाच्चैतन्यस्य कुसुममित्येव पक्षद्वयेऽपि विग्रहः ।

## सदोदिता सदा तुष्टा तरुणादित्यपाटला ॥ २२१ ॥

सदा नित्यं उदिता उदयवती स्वप्रकाशत्वात् । सत्सु सज्जनेषु आसमन्तादतिशयेनोदिता वा । एवमेव सदातुष्टेत्यस्य द्वावर्थौ । तरुणो मध्याह्नकालिक आदित्यः सूर्यस्तद्वत्पाटला श्वेतरक्ता । न च गौरी श्यामेत्यादिभिर्विरोध उद्भाव्यः । मूर्तिभेदेनध्यानभेदेन वा व्यवस्थोपपत्तेः । श्रूयते च '**तद्यथा महारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोप**' इति । स्मर्यते च–

**'शान्ता धवलवर्णाभा मोक्षधर्मप्रकल्पने ।**
**स्त्रीवश्ये राजवश्ये च जनवश्ये च पाटला ॥**

---

सदा नित्यामुदिता अनस्तमितसंविद्रूपत्वात् । उदितायै इति ॥ सदा तुष्टा नित्यानन्दरूपत्वात् । तुष्टायै इति ॥ तरुणो य आदित्यः मध्याह्नार्कः तद्वत्पाटला श्वेतरक्तवर्णा । पाटलायै इति ॥ २२१ ॥

**पीता धनस्य सम्पत्तौ कृष्णा मारणकर्मणि।**
**बभ्रुर्विद्वेषणे प्रोक्ता शृङ्गारे पाटलाकृतिः॥**
**सर्ववर्णा सर्वलाभे ध्येया ज्योतिर्मयी परम्।'**

इति॥ २२१॥

**दक्षिणाऽदक्षिणाराध्या दरस्मेरमुखाम्बुजा।**

दक्षिणया दक्षिणैः कुशलैराराध्या। दक्षिणैः पण्डितैरदक्षिणैर्मूर्खैश्चेति वा। दक्षिणामार्गोपासकेन वाममार्गोपासकेन चेति वा। यद्वा केवलकर्म जिज्ञासवो दक्षिणा इत्युच्यन्ते।

**'विद्यया तदारोहन्ति यत्र कामाः परागताः।**
**न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः॥'**

इति **श्रुतौ** तथा व्याख्यानदर्शनात् अदक्षिणा ब्रह्मविदः ताभ्यामाराध्या।

**'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ॥'**

इति वचनात्। दरमीषद्यथा तथा स्मेरं स्मितवन्मुखाम्बुजं यस्याः। मुखमम्बुजं यस्मिस्तन्मुखाम्बुजं ग्रीवावृत्तं दरवत् शङ्खवत्स्मेरं शोभमानं मुखाम्बुजं यस्या इति वा। कम्बुकण्ठीति यावत्। दरे भयकालेऽपि स्मेरमेव मुखाम्बुजं यस्या इति वा। कल्पान्तादिनैमित्तिककालेऽप्यन्येषामेव भयेन मुखवैवर्ण्यम्। अम्बायास्तु सर्वदा स्मेरमेव मुखमिति यावत्। दरे भक्तानामादरणविषये स्मेरं प्रसन्नमिति वा।

अत्रेदं बोध्यम्—एतच्छ्लोकोत्तरार्धे चत्वारि नामानि प्रतीयन्ते। तत्र तृतीयातिरिक्तानि पुनरुक्तानि त्रीणि भवन्ति।

**कौलिनीकेवलाऽनर्घ्यकैवल्यफलदायिनी॥ २२२॥**

**'कुलाङ्गना कुलान्तःस्था कौलिनी कुलयोगिनी।**
**क्लींकारी केवला गुह्या कैवल्यपददायिनी॥'**

इत्यत्र त्रयाणां विवृतत्वात्। तत्परिजिहीर्षया च **छलाक्षरसूत्रकारैः** कौलिनीकुलयोगिनीत्यस्यैकपदत्वं स्वीकृत्य प्रकृते च कौलिनीत्येकमवशिष्टमेकमिति नामद्वयमङ्गी-

---

दक्षिणाऽदक्षिणाभ्यां कर्मिज्ञानिभ्यामाराध्या। आराध्यायै इति॥ दरस्मेरं ईषत्स्मितयुक्तं मुखाम्बुजं यस्याः सा। अम्बुजायै इति॥

कौलिनीति सृष्टिक्रमेण कौलिन्यादिवशिन्यन्ता वाग्देवताः ताभिः केवला निर्णीता। केवलायै इति॥ अनर्घ्यमपरिच्छिन्नं यत्कैवल्यपदं तद्ददातीति सा। दायिन्यै इति॥ २२२॥

कृतम् । यदुक्तम्— 'लृप्लृद्लृख्लृरीड्कृकिकोटपती । लृयायूटाट्खृरीड्कीकोरीयूफी' इति त्रयोदशाक्षरैः छाया । अष्टाक्षराणि त्रीणि नामानीत्यादिरीत्यैकविंशतिर्नामानि '**सदाशिवकुटुम्बिनी**'त्यारभ्य '**मानवती**'त्यन्तानि तत्र कथ्यन्ते । तत्र किको इत्यक्षरद्वयेन त्र्यक्षरमेकं त्रयोदशाक्षरमेकमिति द्वे नामनी । कवर्गीयाद्यक्षरके इत्यर्थकेन प्रकृतं नामद्वयं वर्ण्यत इति स्थितिः । अत्र हि छलार्णसूत्राणां दृष्टोपपत्तिमूलकतायाः पूर्वमेवोक्तत्वात्षड्भिर्नामभिर्नामत्रयकरणमपेक्ष्य नामचतुष्टयपरत्वेन पदच्छेदवर्णनस्य युक्ततां मन्वानैर्मूलकारैरस्मद्गुरुचरणैरिह षडक्षरमेकं नामावशिष्टमपरमिति द्वे नामनी स्वीकृत्य '**कौलिनी कुलयोगिनी**'त्यत्रापि द्वे नामनी स्वीकृते । पौनरुक्त्यपरिहारस्त्वस्मिन्पक्षेऽपि तुल्य एव । न चैवं नामाधिक्यम् । '**प्रसवित्री प्रचण्डाज्ञा प्रतिष्ठा प्रकटाकृति**'रित्यत्र **छलाक्षरसूत्रकारैः** प्रकटाकृतिरित्यनयोर्नामद्वयस्वीकारेऽपि गुरुचरणैरेकनामत्वस्वीकारेण तदभावादिति । तस्मादिह कौलिनीकेवलेत्येकं नाम । न चैत्पक्षे समासानुपपत्तिः । समानाधिकरणसमामे '**पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेने**'ति नियमनात्केवलपदस्य पूर्वनिपातापत्तिः । बहुव्रीहौ तु कौलिनीपदस्य पुवंद्भावापत्तिरिति वाच्यम् । परंज्योतिरित्यादाविव भिन्नपदयोरप्येकनामत्वसम्भवात् । कौलधर्मवती केवलाख्यज्ञानवती चेत्यर्थः । ईश्वरज्ञानं केवलपदवाच्यम् । **जैनतन्त्रे** तथा प्रयोगस्य बहुशो दर्शनात् । सकलधर्मैर्विमुक्ता वा केवला । सुखदुःखविमुक्ता वा । '**तद्विमुक्तस्तु केवली**'ति **शिवसूत्रे** केवलीति संज्ञाया दर्शनात् । '**सुखासुखयोर्बहिर्मनन**'मिति पूर्वसूत्रोपात्तसुखदुःखयोस्तत्पदेन परामर्शात् । प्रकृते च मत्वर्थीयस्येनिप्रत्ययस्याभावेऽपि तादृशस्याच्प्रत्ययस्य सुवचत्वात् । एककृत्स्ननिर्णीताख्या अपि त्रयोऽर्था इह वर्णनीयाः । तथा च **विश्वः**—

**'केवलं ज्ञानभेदे स्यात्केवलश्चैककृत्स्नयोः ।**
**निर्णीते केवलं चोक्तं केवलः कुहने क्वचित् ॥'**

इति । वस्तुतः केवलकौलधर्मवतीत्येवार्थः । विशेषणविशेष्यभावादिना परस्परान्वय एव भिन्नपदयोरेकनामत्वनियमात् । अथवा दत्ताभार्य इत्यत्र दानक्रियानिमित्तस्यापि दत्तापदस्य संज्ञात्वमङ्गीकृत्य '**संज्ञापूरण्योश्चे**'ति पुंवद्भावनिषेध आश्रीयते वैयाकरणैस्तद्वदिहापि कौलिनीपदस्यापि संज्ञात्वात् कौलिन्यः केवला ज्ञानवत्यो ययेति बहुव्रीहिरपि सम्भवति । कौलिनीभिः केवला निर्णीतेति तृतीयासमासो वा । '**तृतीया तत्कृतार्थेन गुणवचनेने**'ति सूत्रे गुणोपसर्जनः । द्रव्यवचनपरत्वेन गुणवचनपदस्य व्याख्यानात् । गुणमुक्तवान् गुणवचनः । '**कृत्यल्युटो बहुल**'मिति भूते कर्तरि ल्युडिति निर्णयस्यापि गुणत्वेन तत्कर्मवाचिनः केवलपदस्यापि गुणवचनत्वम् । अनर्घ्यममूल्यमपरिच्छिन्नं यत्कैवल्याख्यं पदं पञ्चममुक्तिरूपं तद्दातुं शीलमस्याः । अनर्घ्येति

दीर्घान्तपाठे आसमन्ताद्व्याप्तं यत्कैवल्यमिति वा । न विद्यते कैवल्यं यस्मात्तद-कैवल्यमीदृशं यत्पदमिति वा व्याख्येयम् ॥ २२२ ॥

**स्तोत्रप्रिया स्तुतिमती श्रुतिसंस्तुतवैभवा ।**

स्तोत्रं लौकिको गुणानुवादः षड्विधः –

**'नमस्कारस्तथाशीश्च सिद्धान्तोक्तिः पराक्रमः ।**
**विभूतिः प्रार्थना चेति षड्विधं स्तोत्रलक्षणम् ॥'**

इत्य**भियुक्तो**क्तः । त्रिजगद्वन्द्या स्वस्तिमती मिथ्याजगदधिष्ठाना–

**'भण्डासुरेन्द्रनिर्मुक्तशस्त्रप्रत्यस्त्रवर्षिणी ।**
**इच्छाशक्तिज्ञानशक्तिक्रियाशक्तिस्वरूपिणी ॥**
**साम्राज्यदायिनी...........................।'**

इत्यादिनामरूपः प्रगीतमन्त्रसाध्यकगुणिनिष्ठगुणाभिधानं वैदिकं स्तोत्रं वा प्रियं यस्याः । स्तोत्र्यश्च ता आपश्च स्तोत्रयस्ताः प्रिया यस्या वा । स्तोत्रीशब्दस्य पुंवद्भावः । देवा मनुष्याः पितरोऽसुराश्चाप्पदवाच्याः । **'तानि वा एतानि चत्वार्य-म्भांसी'**ति **श्रुतेः** । **पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती**'ति **श्रुता**वपामेव मनुष्यादि-रूपतया परिणतत्वोक्तेश्च । **'आपो वा इदं सर्व'**मित्यादि**श्रुते**श्च । स्तुतिरस्यां कर्मता-सम्बन्धेनास्तीति स्तुतिमती । स्तुत्या मतिश्च ईश्च यस्या इति वा । यत्स्तुत्या ज्ञानैश्वर्ये लभ्येते सेति यावत् । श्रुतिभिः सम्यक् स्तुतं परिचितं वा वैभवं विभुत्वं यस्याः । **'संस्तवः स्यात्परिचय'** इति **कोशः** । श्रुतिशब्दश्चतुःसंख्यापरो वा । **'युगाब्ध-योऽर्धाः श्रुतयश्चतस्र'** इति **छन्दःसुधाकरात्** । तेन चतुर्धा परिचितं वैभवं यस्या इति विग्रहः । **'शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष'** इति **बह्वृचोपनिषदु**क्तचतुर्व्यूह-स्वरूपेत्यर्थः । **कूर्मपुराणे**ऽपि–

**'चतस्रः शक्तयो देव्याः स्वरूपत्वे व्यवस्थिताः ।**
**अधिष्ठानवशात्तस्याः शृणुध्वं मुनिपुङ्गवाः ॥**
**शान्तिर्विद्या प्रतिष्ठा च निवृत्तिश्चेति ताः स्मृताः ।**
**चतुर्व्यूहस्ततो देवः प्रोच्यते परमेश्वरः ॥**
**अनया परमो देवः स्वात्मानन्दं समश्नुते ।**
**चतुर्ष्वपि च देवेषु चतुर्मूर्तिर्महेश्वरः ॥'** इति ।

---

स्तोत्रं गुणानुवादः प्रियं यस्याः सा । प्रियायै इति ॥ स्तुतिरस्या अस्तीति स्तुतिमती । मत्यै इति ॥ श्रुतिभिर्वेदैः सम्यक् स्तुतं वैभवं विभुत्वं यस्याः सा । वैभवायै इति ॥

**मनस्विनी मानवती महेशी मङ्गलाकृतिः ॥ २२३ ॥**

मनोऽस्याः स्वतन्त्रतया तिष्ठति न तु पराधीनवृत्तिकत्वेनेति मनस्विनी । **'अस्मायामेधास्रजो विनिः'** । मानश्चित्तसमुन्नतिरादरणं वा प्रियापराधसूचिका चेष्टा वा प्रमाणं वा प्रमितिर्वास्यामस्तीति मानवती । महेशस्य स्त्री महेशी । उक्तञ्च **देवीपुराणे**—

**'महादेवात्समुत्पन्ना महद्भिर्यत आदृता ।**
**महेशस्य वधूर्यस्मान्महेशी तेन सा स्मृता ॥'**

इति मङ्गलरूपा आकृतिर्यस्याः ॥ २२३ ॥

**विश्वमाता जगद्धात्री विशालाक्षी विरागिणी ।**

विश्वस्य जगतो विष्णोर्वा माता । **'सोमः पवत'** इत्युपक्रम्य **'जनितोत विष्णो'**रिति **श्रुतेः** । जगद्धत्ते भूरूपेणेति जगद्धात्री । उपमाता वा पालकत्वात् । **'एष भूतपाल एष सेतुर्विधरण एषां लोकानामसम्भेदाये'**ति **काण्वश्रुतेः** । **देवीपुराणे**ऽपि—

**'यस्माद्धारयते लोकान् वृत्तिमेषां ददाति च ।**
**डुधाञ्धारणे धातुर्जगद्धात्री मता बुधैः ॥'**

इति । विशाले विस्तीर्णे अक्षिणी यस्याः । सा वाराणसीपीठाभिमानिनी । **'वाराणस्यां विशालाक्षी'**ति **पाद्मात्** । विशालाशब्दो बदरिकाश्रमवाचकोऽपि हिमवद्वृत्तित्व-साधर्म्येण नेपालपीठपरः । तस्य च पीठन्यासप्रकरणे नेत्रस्थाने न्यासो **ब्रह्माण्डपुराणादौ** विहितः । तेन विशालपीठमेवाक्षिस्थानं यस्या इति वा । विरागो वैराग्यमस्या अस्तीति विरागिणी ।

**प्रगल्भा परमोदारा परामोदा मनोमयी ॥ २२४ ॥**

सृष्ट्यादिकर्मसु प्रौढत्वात्प्रगल्भा । परमा च सोदारा च महती च । देशतः कालतश्च महत्त्ववतीत्यर्थः । **'उदारो दातृमहतो'**रित्यमरः । **'आकाशवत्सर्वगतश्च नित्य'** इति **श्रुतेः** । परं प्रकृष्टं मोदमानन्दमासमन्ताद्रातीति वा । परमाण्युदानि जलानि यस्मिन्स परमोदः समुद्रः स च प्रकृते भवसमुद्ररूपः तस्यारा आयुधविशेषो नासिकेति

---

मनस्विनी स्वतन्त्रा । मनस्विन्यै इति ॥ मान आदरणं अस्या अस्तीति सा । मानवत्यै इति ॥ महेशस्य स्त्री । महेश्यै इति ॥ मङ्गलप्रदा आकृतिः स्वरूपं यस्याः सा । आकृत्यै इति ॥ २२३ ॥

विश्वस्य जगतो माता । मात्रे इति । जगतो धात्री पालनकर्त्री । धात्र्यै इति ॥ विशालान्यक्षीणि यस्याः सा । अक्ष्यै इति ॥ विरागः अस्या अस्तीति सा । विरागिण्यै इति ॥

प्रगल्भा समर्था । प्रगल्भायै इति ॥ परमा उत्कृष्टा उदारदानशीला । उदारायै इति ॥ पर उत्कृष्ट आमोदः सन्तोषो यस्याः सा । आमोदायै इति ॥ मनोमयी मनःप्रधाना । मनोमय्यै इति ॥ २२४ ॥

वा । अकारप्रश्लेषेणापगता रमा येषां तेऽपरमा दरिद्रास्तेभ्य उदारा ऐश्वर्यप्रदेति वा । पर उत्कृष्ट आमोदः परिमलः कीर्तिरिति यावत् । आ समन्तान्मोदः सन्तोषो वा यस्याः । शुद्धस्य ब्रह्मणो मनःस्थानीयत्वान्मनोमयी । तदुक्तं **महावासिष्ठरामायणे**–

**'स भैरवश्चिदाकाशः शिव इत्यभिधीयते ।**
**अनन्यां तस्य तां विद्धि स्पन्दशक्तिर्मनोमयी ॥'**

इति । मनःप्रधाना वा मनोमयी । **'मनसैवानुद्रष्टव्य'** इति स्वज्ञाने जननीये मनस एव प्राधान्यात् ॥ २२४ ॥

**व्योमकेशी विमानस्था वज्रिणी वामकेश्वरी ।**

व्योमैव केशा यस्या विराड्रूपायाः । व्योमकेशस्य शिवस्य स्त्री वा । व्योमैवाल्पं सद्व्योमकम् । अल्पार्थे कप्रत्ययः । तस्येशी ततोऽपि व्यापका वा । व्योमक-रूपस्येशस्य स्त्री दिग्रूपा वा । विमानो व्योमयानं तत्रस्था देवास्तदभेदादम्बिकापि । विशेषेण मान आदरणे स्था स्थितिर्यस्या वा । विशिष्टा मा कान्तिर्यस्य तद्विमं तादृशं अनः शकटं किरिचक्रादिरूपो रथस्तत्र तिष्ठतीति वा । विगतं मानं परिमाणं यस्य तदपरिच्छिन्नं ब्रह्म तन्निष्ठा वा । माने परिमाणे स्था स्थितिः परिमाणाविच्छिन्नता विगता यस्या वा । विशिष्य माति निष्कृष्य प्रमां जनयतीति विमानो वेदस्तत्र प्रतिपाद्यतया तिष्ठतीति वा । व्युपसृष्टान्मातेः शानचि विमान इति रूपम् । विशिष्टेषु वेदाविरुद्धेषु मानेषु प्रमाणेषु धर्मब्रह्मरूपेण तिष्ठतीति वा । विशिष्य मानं **'पुराणन्यायमीमांसे'**त्यादिना तद्व्यक्तित्वेन रूपेण परिगणनं येषां तेषु चतुर्दश-स्वेव विद्याधर्मस्थानेषु तिष्ठतीति वा । तदिदमुक्तं भगवता **जैमिनिना**– **'शिष्टाकोपे विरुद्धमिति चेन्न शास्त्रपरिमाणत्वा'**दिति । वज्रिण इन्द्रस्य स्त्री शचीरूपा वा । वज्रधारिणी वा । वज्राख्यरत्नैर्भूषिता वा । **'महद्भयं वज्रमुद्यत'**मिति **श्रुतौ** वज्रपदस्य ब्रह्मपरत्वात् परिच्छेदकत्वसम्बन्धेन तद्वती वा । **वामकेश्वरतन्त्ररूपा** वामकस्य तन्त्रस्य प्रतिपाद्या वा । वामा वाममार्गरतास्त एव पञ्चयज्ञविलोपकत्वात्कुत्सिता इति वामकाः । वमन्ति जगत्सृजन्तीति वा वामका दक्षाद्यास्तेषामीश्वरी वा ।

**पञ्चयज्ञप्रिया पञ्चप्रेतमञ्चाधिशायिनी ॥ २२५ ॥**

पञ्चसंख्याका यज्ञाः पञ्चयज्ञाः । मध्यमपदलोपी समासः । तेन न **'द्विगो'**रिति ङीप् । ते प्रिया यस्याः । ते च **'स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासौ**

---

व्योमैव केशा यस्य तस्य स्त्री । केश्यै इति ॥ विमाने तिष्ठतीति सा । स्थायै इति ॥ वज्रिण इन्द्रस्य स्त्रीः शक्तिः । वज्रिण्यै इति ॥ वामः सुन्दरः स एव वामकः, स चासौ ईश्वरश्च कामेश्वर इति यावत् तस्य स्त्री । ईश्वर्यै इति ॥

पञ्चसंख्याका यज्ञाः महायज्ञाः प्रिया यस्याः । प्रियायै इति ॥ पञ्च प्रेतात्मका यो मञ्चः पर्यङ्कः तमधिशेते इति सा । शायिन्यै इति ॥ २२५ ॥

**चातुर्मास्यानि पशुः सोम**' इति **श्रुतौ** कथिताः, **स्मृतिषु** प्रसिद्धा देवयज्ञ-ब्रह्मयज्ञ-भूतयज्ञ-पितृयज्ञ-मनुष्ययज्ञा वा । **पाञ्चरात्रागमे**– '**अभिगमनमुपादानमिज्यास्वध्याययोग**' इत्युक्ता पञ्चविधा पूजा वा । **कुलागमे**–

**केवलो यामलो मिश्रश्चक्रयुग्वीरसङ्करः ।**
**इति पञ्चविधा पूजा......................॥'**

इत्युक्ता वा । **नित्यातन्त्रे**– '**हेतिभिर्मध्यमाद्यं स्याद् द्वितीयं नवयोनिष्वि**'त्यारभ्य '**इति पञ्चप्रकारार्चा प्रोक्ता सर्वार्थसिद्धिदे**'त्यन्तेनोक्ता वा । **बृहत्तन्त्रकौमुद्यां** तन्मूलके **मन्त्र-महोदधौ** च– 'आतुरीसौतकीदौर्बोधीत्रासीसाधनाभावनी'ति कथिता वा । '**अग्निहोत्रे हूयमाना दुग्धादिरूपा आपः सोमद्युपृथिवीपुरुषयोषिद्रूपकुण्डपञ्चके पुनःपुनर्हूयन्ते तदा ता एवापः शरीरभावं भजन्ती**'त्युपनिषत्सु रंहत्याद्यधिकरणेषु च स्पष्टोऽयं विषयः । त एते पञ्चयज्ञा वा । '**पचि विस्तार**' इति धातोर्घञर्थे कविधानात्पञ्चो विस्तृतो यज्ञो विश्वसृजामयनादिर्वा । सर्वेषामेतेषामेकशेषः । ब्रह्मादयश्चत्वारः प्रेताः पादाः । सदाशिवाख्यः प्रेतः फलकमेतादृशं मञ्चं पर्यङ्कमधिशेते । उक्तञ्च **भैरवयामले बहुरूपाष्टकप्रस्तारे** च–

**'शिवात्मके महामञ्चे महेशानोपबर्हणे ।**
**भृतकाश्च चतुष्पादाः कशिपुश्च सदाशिवः ॥**
**तत्र शेते महेशानी महात्रिपुरसुन्दरी ।'**

इति । आचार्य**भगवत्पादै**रप्युक्तम्–

**'गतास्ते मञ्चत्वं द्रुहिणहरिरुद्रेश्वरभृतः**
**शिवः स्वच्छच्छायाघटितकपटप्रच्छदपटः ।'**

इति ॥२२५ ॥

**पञ्चमी पञ्चभूतेशी पञ्चसंख्योपचारिणी ।**

ब्रह्मादिषु पञ्चसु पञ्चमस्य सदाशिवस्य स्त्री । **सूतगीतायां** तस्याप्यम्बासहायोक्तेः–

**'त्रिषु रुद्रो वरिष्ठः स्यात्तेषु मायी परः शिवः ।**
**मायाविशिष्टात्सर्वज्ञात्साम्बः सत्यादिलक्षणः ॥**
**सदाशिवो वरिष्ठः स्यान्नात्र कार्या विचारणा ।'**

---

पञ्चमी तुरीयातीतरूपा । पञ्चम्यै इति ॥ पञ्चभूतानां पृथिव्यादीनामीशी अधिष्ठात्री । ईश्यै इति ॥ पञ्चसंख्या गन्धाद्युपचाराः यस्याः सा । उपचारिण्यै इति ॥

इति पञ्चमीशब्दो वाराह्यां निरूढो वा । सा च यद्यपि ब्राह्म्यादिषु पञ्चमीति पञ्चरत्नदेवातासु चरमेति पञ्चकोशादिचरमदेवतास्विव यौगिक एव स तस्यां भासते तथापि **दक्षिणामूर्तिसंहितायाम्**—

**'..............................पूजयेत्पञ्चमीसुतम्।**
**घटं स्पृष्ट्वा हृदि ध्यात्वा पञ्चमीं परमेश्वरीम् ॥**
**पञ्चमीं शकटं यन्त्रं त्रिषु लोकेषु दुर्लभम् ।'**

इत्यादौ वाराह्यामेव बहुतरप्रयोगदर्शनाद्योगरूढोऽप्यवसेयः । मकारेषु पञ्चमस्यानन्दरूपत्वात्तद्रूपा वा । तथा च **कल्पसूत्रम्**—

**'आनन्दं ब्रह्मणो रूपं तच्च देहे व्यवस्थितम् ।**
**तस्याभिव्यञ्जकाः पञ्च मकारास्तैरथार्चनम् ॥'**
**गुप्त्या..........................................।'.**

इत्यादि । अतएव पञ्चानां मानां मकाराणां समाहारः पञ्चमीति वा । तानि च **त्रैपुरसूक्ते**— 'परिस्रुतं झषगाद्यं पलं चे'त्यस्यामृचि प्रसिद्धानि । दानशुद्ध्यादयो गुरुमुखादवगन्तव्याः । '**पञ्चमाहुतावापः पुरुषवचसो भवन्ती**'ति **श्रुतिप्रसिद्धा** योषित् कुण्डे रेतो हविष आहुतिरुक्तयज्ञेषु पञ्चमी तद्रूपा वा । कैवल्याख्या पञ्चमी मुक्तिस्तदभिन्ना वा । पञ्चसंख्यानां भूतानां पृथिव्यादीनामीशी । यद्वा पञ्चधाभूता पञ्चप्रकारा जातेति वा । पञ्चमहाभूतात्मिका वा पञ्चरत्नात्मिका वा वैजयन्तीमाला तदीशी । उक्तञ्च **विष्णुपुराणे**—

**'पञ्चरूपा तु या माला वैजयन्ती गदाभृतः ।**
**सा भूतहेतुसङ्घाता भूतमाला भवेद् द्विज ॥'**

इति । अत्र पञ्चरूपेति पदं मुक्तामाणिक्यमरकतेन्द्रनीलवज्रसमानवर्णेति व्याचक्षते । **विष्णुरहस्येऽपि**—

**'पृथिव्यां नीलसंज्ञानमद्भ्यो मुक्ताफलानि च ।**
**तेजसः कौस्तुभो जातो वायोर्वैडूर्यसंज्ञकम् ॥**
**पुष्करात्पुष्परागस्तु वैजयन्त्या हरेरिमे ।'**

इति । पञ्चसंख्या गन्धपुष्पधूपदीपनैवेद्याख्या उपचारा अस्याः ॥

*अथ परिभाषायामवशिष्टानि पञ्चाशन्नामानि विभजते—*

***गुणगणरविं खगेशं चतुर्हरन्तं चतुर्दृढामोदम् ।***
***गुणिहृदि विभज भवाद्गुरुवर्गं च नवचरणं गदन्तमिति ॥ ३२ ॥***

*अत्र इतिशब्दः सहस्रसंख्यासमाप्तिपरः । तदितराणि नामाक्षरसंख्यापराणि । पक्षे भवात् परशिवमारभ्यागुरुवर्गं नाथसमूहं स्वगुरुपर्यन्तं विशिष्य भजेत्यर्थः । गुणगणैः साक्षाद्रविस्वरूपम् । खगानां देवानामपीशं चतुर्विधक्लेशान् जरायुजादियोनिचतुष्टयजन्यान्हरन्तम् । चतुःसंख्या दृढामोदाध्यानसुखाः पुरुषार्था यस्मात्तम् । गुणशीले हृदि इति अनेन प्रकारेण सहस्रनामादिरूपेण गदन्तमुपदिशन्तम् । नवचरणशब्दो नामारम्भे व्याख्यातः ॥ ३२ ॥*

**शाश्वती शाश्वतैश्वर्या शर्मदा शम्भुमोहिनी ॥ २२६ ॥**

शश्वत् पौनःपुन्यं तत्सम्बन्धिनी पुनःपुनरभ्यस्यमानेत्यर्थः । नित्या वा । **'शाश्वतस्तु ध्रुवो नित्य'** इत्यमरः । **'तेषां सिद्धिः शाश्वती नेतरेषा'**मिति श्रुतेः शाश्वतं नित्यमैश्वर्यं यस्याः । यद्वा ईकारप्रश्लेषेणेशाः जगदीशाः पञ्चप्रेतास्तेष्वश्वताऽश्वत्वं वाहनत्वं येन तादृशमैश्वर्यं यस्याः । पञ्चप्रेतासनारूढेति फलितार्थः । शर्म सुखं दत्ते शं भावयति भवते वा शम्भुः । मितद्र्वादित्वाड्डुप्रत्ययः । तस्य मोहिनीति वा । शम्भुं मोहयतीति वा शम्भुमोहिनी ॥ २२६ ॥

**धराधरसुता धन्या धर्मिणी धर्मवर्धिनी ।**

धरा पृथ्वीस्वरूपा सर्वस्य जगतो धारणाद्वा । लकारस्वरूपा वा ।

**'लकारः पृथिवीदेवी सशैलवनकानना ।**
**पञ्चाशत्पीठसम्पन्ना सर्वतीर्थमयी परा ॥'**

इत्यादि **ज्ञानार्णवे** । धरस्य हिमवत्पर्वतस्य सुता । धन्या कृतार्था धनाय हिता वा । धनं लब्ध्री वा । **'धनगणं लब्धे'**ति यत्प्रत्ययः । **'मङ्गलापिङ्गलाधन्ये'**ति ज्योतिःशास्त्रप्रसिद्धयोगिनीविशेषरूपा वा । यद्वा चरमकालीनाश्चिन्ता आर्तरौद्रधन्यशुक्लभेदेन चतस्रो **भविष्योत्तरपुराणे** कथिता यथा–

**'राज्योपभोगशयनासनसाधनेषु स्त्रीगन्धमाल्यमणिवस्त्रविभूषणेषु ।**
**इच्छाभिलाषमतिमात्रमुदेति मोहाद् ध्यानं तदार्तमिति संप्रवदन्ति तज्ज्ञाः ॥**
**संच्छेदनैर्दहनताडनपीडनैश्च गात्रप्रहारदमनैर्विनिकृन्तनैश्च ।**
**यस्येह राग उपयाति न चानुकम्पा ध्यानं तु रौद्रमिति तस्य वदन्ति सन्तः ॥**

---

शाश्वती नाशरहिता । शाश्वत्यै इति ॥ शाश्वतं रूपमैश्वर्यं यस्या सा । ऐश्वर्यायै इति ॥ भक्तेभ्यः शर्म सुखं ददातीति सा । शर्मदायै इति ॥ शम्भुं मोहयतीति सा । मोहिन्यै इति ॥ २२६ ॥

धरा पृथ्वीरूपा । धरायै इति ॥ धरस्य हिमवतः सुता । सुतायै इति ॥ धन्या कृतार्था । धन्यायै इति ॥ धर्मिणी धर्मवती । धर्मिण्यै इति ॥ धर्मं वर्धयतीति सा । वर्धिन्यै इति ॥

**सूत्रार्थमार्गणमहाव्रतभावनानि निर्बन्धमोक्षगमनागतिहेतुचिन्ता ।**
**पञ्चेन्द्रियाद्युपशमश्च दया च भूते ध्यानं तु धन्यमिति तत्प्रवदन्ति सन्तः ॥**
**यस्येन्द्रियाणि विषयैर्न विचर्चितानि संकल्पनाशनविकल्पविकासयोगैः ।**
**तत्त्वैकनिष्ठधृतियोगभृतान्तरात्मा ध्यानं तु शुक्लमिति तत्प्रवदन्ति सिद्धाः ॥'**

इति । एतेषां फलभेदोऽपि **भविष्योत्तर** एव–

**'आर्ते तिर्यगधोगतिश्च नियता ध्याने च रौद्रे सदा**
**धन्या देवगतिः शुभं फलमथो शुक्रे च जन्मक्षयः ।**
**तस्माज्जन्मरुजापहे हिततरे संसारनिर्वाहके**
**ध्याने श्वेततरे रजःप्रमथने कुर्यात्प्रयत्नं बुधः ॥'**

इति । तत्र धन्याख्यध्यानरूपेति । धर्मशीलत्वाद्धर्मिणी । आनन्दानुभवनित्यत्वादिधर्माणां विशेष्यभूता वा । धर्मं वर्धयतीति धर्मवर्धिनी । तदुक्तं **वामनपुराणे**–

**'जितेन्द्रियत्वं शौचं च माङ्गल्यं भक्तिरेव च ।**
**शङ्करे भास्करे देव्यां धर्मोऽयं मानुषः स्मृतः ॥**
**ध्यातः साम्ब इमान् धर्मान् वृद्धिं नयति देहिनाम् ॥**

इति **'वृधु छेदन'** इति धातोर्ब्रह्माधिष्ठानकं धर्ममात्रं दृश्यजातं छेदयतीति वा । लोकानिन्द्रलोकादिविष्णुलोकान्तानतीतातिक्रम्य महाकैलासाख्ये परशिवपुरे स्थिता । परशिवपुरस्य सर्वलोकातीतत्वं **शिवधर्मोत्तरे** अर्वाचीनाँल्लोकान् वर्णयित्वा, **'ज्ञेयं विष्णुपदादूर्ध्वं दिव्यं शिवपुरं महत्'** इत्यारभ्य–

**इत्येतदपरं तुभ्यं प्रोक्तं शिवपुरं महत् ।**
**देहिनां कर्मनिष्ठानां पुनरावर्तनं स्मृतम् ॥"**

इत्यन्तेन कर्मठप्राप्यं शिवपुरं वर्णयित्वा,

**'ऊर्ध्वं शिवपुराज्ज्ञेयं स्थानत्रयमनुत्तमम् ।**
**नित्यं परमशुद्धं च स्कन्दोमाशङ्करात्मकम् ॥'**

इत्यारभ्य–

**'ये सम्प्राप्ताः परस्थानं ध्यानयोगरता नराः ।**
**न तेषां पुनरावृत्तिर्घोरे संसारसागरे ॥**
**सर्वज्ञाः सर्वगाः शुद्धाः परिपूर्णाः महेश्वराः ।**
**शिवतुल्यबलोपेताः परं शिवपुरं गताः ॥'** इत्यन्तम् ।

**लोकातीता गुणातीता सर्वातीता शमात्मिता ॥ २२७ ॥**

लोकाञ्जीवान्वाऽतीता । अत एव गुणानतीता सर्वमतीता वा सर्वान् शब्दानतीता वा । उक्तञ्च **ज्ञानार्णवे**–

**'शब्दातीतं परं ब्रह्म गणनारहितं सदा ।**
**आत्मस्वरूपं जानीहि.....................॥'**

इति । शमः प्रपञ्चोपशम एवात्मा स्वरूपं यस्याः । **'प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्त'** इति **नृसिंहतापनीये** । शं सुखमात्मा यस्या इति वा ॥ २२७ ॥

**बन्धूककुसुमप्रख्या बाला लीलाविनोदिनी ।**

बन्धूको बन्धुजीवको वङ्गदेशप्रसिद्धो महावृक्षस्तस्य कुसुमं पुष्पं तस्येव प्रख्या कान्तिर्यस्याः । अत्यारक्ततमा कान्तिर्यस्या वा । बाला कुमारी । **'त्वं कुमार उत वा कुमारी'**ति **श्रुतेः** । **त्रिपुरासिद्धान्ते**ऽपि– **'बालालीलाविशिष्टत्वाद्बालेति कथिता प्रिये'** इति । लीला प्रापञ्चिकी क्रीडैव विनोदो यस्याः । पद्मराजस्य भार्या लीलाख्या **योगवासिष्ठे** प्रसिद्धा तां विशिष्य सत्कर्मसु नोदयतीति वा । लीलादेव्या तपसा सरस्वती तोषिता सा तुष्टा तस्यै ज्ञानं तद्भर्तृजीवनं च प्रादादिति कथायां विस्तरेण वर्णनात् । **देवीपुराणे** नामनिर्वचनाध्याये–**'लक्ष्मीलालनतो लीले'**ति निर्वचनदर्शनाल्लीलेत्येतावन्मात्रस्य भिन्ननामत्वं स्वीकृत्य ब्रह्मजननीत्यनयोरेकनामत्वमित्यपि सुवचम् ।

**सुमङ्गली सुखकरी सुवेषाढ्या सुवासिनी ॥ २२८ ॥**

शोभनं मङ्गलमस्या इति सुवासिनीसंज्ञा । संज्ञात्वादेव **'केवलमामके'**त्यादिना ङीप् । **'सुमङ्गली संज्ञाया'**मिति गौराद्यन्तर्गणसूत्रेण ङीष् वा । शोभनं मङ्गलं ब्रह्मैवेति वा । तदुक्तं **विष्णुपुराणे**–

**'अशुभानि निराचष्टे तनोति शुभसन्ततिम् ।**
**श्रुतिमात्रेण यत्पुंसां ब्रह्म तन्मङ्गलं विदुः ॥'**

---

लोकानतीता अतिक्रम्य परपदे स्थिता । अतीतायै इति ॥ गुणान्सत्त्वादीनतिक्रम्य स्थिता । अति(ती)तायै इति ॥ सर्वं षट्त्रिंशत्तत्त्वमतीता । अतीतायै इति ॥ शमः संसारक्षोभराहित्यं तदात्मिका । आत्मिकायै इति ॥ २२७ ॥

बन्धूककुसुमस्येव प्रख्या कान्तिर्यस्याः सा । प्रख्यायै इति ॥ बाला ललिताकुमारी तद्रूपा । बालायै इति ॥ लीलायां क्रीडायां विनोदः हर्षोऽस्याः अस्तीति सा । विनोदिन्यै इति ॥

सुमङ्गली शोभनमङ्गलमस्या इति । सुमङ्गल्यै इति ॥ सेवकानां सुखं करोतीति सा । कर्यै इति ॥ शोभनवेषेणाढ्या युता । आढ्यायै इति ॥ सुवासिनी रूपा । सुवासिन्यै इति ॥ २२८ ॥

इति । **अत्रिस्मृतौ** तु–

**'प्रशस्ताचरणं नित्यमप्रशस्तविवर्जनम् ।**
**एतद्धि मङ्गलं प्रोक्तमृषिभिर्ब्रह्मवादिभिः ॥'**

इत्युक्तम् । सुखकर्तृत्वात्सुखकरी । **'कृञो हेत्वि'**त्यादिना ताच्छील्ये णिनिः । शोभनेन वेषेणाढ्या युक्ता । सुवासिनी सार्वकालं जीवत्पतिका । सुवासिनीजनाभिन्ना वा ॥ २२८ ॥

## सुवासिन्यर्चनप्रीताऽऽशोभना शुद्धमानसा ।

सुवासिनीनामर्चनेन प्रीता । आशोभनेति चतुरक्षरं नाम । समन्ततः सौन्दर्यवती । शुद्धं मानसं यस्याः ।

## बिन्दुतर्पणसन्तुष्टा पूर्वजा त्रिपुराम्बिका ॥ २२९ ॥

बिन्दौ सर्वानन्दमये चक्रे ब्राह्मणादिवर्णचतुष्टयकर्तृकेण क्षीराज्यमध्वासवबिन्दुकरणकेन वा तर्पणेन सम्यक्तुष्टा । **'बिन्दुरिच्छु'**रिति निपातितबिन्दुपदवाच्यज्ञातॄणां तर्पणेन तृप्त्या सन्तुष्टा वा पूर्वं जाता । **'इयमेव सा या प्रथमा व्यौच्छ'**दिति, **'अहमस्मि प्रथमजा ऋतस्ये'**ति **श्रुतेः** । अबुद्धिपूर्वका या प्रथमा सृष्टिस्तद्रूपा वा । अष्टमचक्राभिमानित्रिपुराम्बाख्यदेवतारूपा । त्रयाणां पुराणामवस्थारूपाणामम्बिका जनिका वा । त्रीणि पुराणि यस्य स जीवः । **'पुरत्रये क्रीडति यश्च जीव'** इति **श्रुतेः** तज्जननी वा । **'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्ती'**त्यादि**श्रुतेः** । **'वामादीनां पुराणां तु जननी त्रिपुराम्बिके'**ति वचनसिद्धा वा ॥ २२९ ॥

## दशमुद्रासमाराध्या त्रिपुराश्रीवशङ्करी ।

संक्षोभिण्यादित्रिखण्डान्ता दश मुद्रास्ताभिः करणभूताभिः सम्यक् **नित्याहृदयोक्त**वासनानुगुण्येनाराध्या । पञ्चमचक्राधिष्ठात्री त्रिपुराश्रीनामिका देवी तां वशं कुरुते, सा वशङ्करी यस्या इति वा तर्जन्यङ्गुष्ठयोगरूपज्ञानमुद्रारूपा वा ।

---

सुवासिनीनां अर्चनेन प्रीता । प्रीतायै इति ॥ आशोभना आसमन्तात्सौन्दर्यवती । आशोभनायै इति ॥ शुद्धं रागादिरहितं मानसं यस्याः सा । मानसायै इति ॥

बिन्दौ बिन्दुचक्रे तर्पणेन पूजनेन सन्तुष्टा । सन्तुष्टायै इति ॥ पूर्वजा सर्वकारण- रूपा । पूर्वजायै इति ॥ त्रयाणां पुराणां लोकानां अम्बिका जननी । अम्बिकायै इति ॥ २२९ ॥

दशभिः मुद्राभिः संक्षोभिण्यादित्रिखण्डाभिः सम्यगाराध्या । आराध्यायै इति ॥ त्रिभ्यः जाग्रदाद्यवस्थाभ्यः पुरा पुरातनी आत्मशक्तिः तां श्रियं लक्ष्मीं च भक्तानां वशीभूतां करोति । भोगमोक्षप्रदेति भावः । कर्यै इति ॥

**ज्ञानमुद्रा ज्ञानगम्या ज्ञानज्ञेयस्वरूपिणी ॥ २३० ॥**

ज्ञानेन मुदं रातीति वा । ज्ञानं चिदंशं मुदमानन्दांशं द्रावयत्यावृणोतीति वा । ज्ञानेन गम्या विषया । ज्ञानेन प्राप्या वा । उक्तञ्च **कौर्मे** देव्यैव–

**यत्तु मे निष्कलं रूपं चिन्मात्रं केवलं शिवम् ।**
**सर्वोपाधिविनिर्मुक्तमनन्तममृतं परम् ॥**
**ज्ञानेनैकेन तल्लभ्यं क्लेशेन परमं पदम् ।**
**ज्ञानमेव प्रपश्यन्तो मामेव प्रविशन्ति ते ॥'**

इति । ज्ञानज्ञेये दृग्दृश्ये स्वरूपमस्याः ॥ २३० ॥

**योनिमुद्रा त्रिखण्डेशी त्रिगुणाम्बा त्रिकोणगा ।**

योनौ मुदं राति । नवममुद्रारूपा वा । योनिरेव मुद्रा आच्छादिका यस्य बिन्दोस्तद्रूपा वा । यद्वा गुदमेढ्रान्तरं योनिरित्युच्यते । मन्त्रदोषनिरासार्थस्तन्मुद्रण-प्रकारो गुरुमुखैकवेद्योऽस्ति तद्रूपा वा। त्रिखण्डाख्याया दशम्या मुद्राया ईशी स्वामिनी । त्रयाणां सोमसूर्यानलाख्यमन्त्रखण्डानामीशी वा । त्रयो गुणा यस्यां सा त्रिगुणा । सत्त्वरजस्तमसामाश्रयत्वेन सांख्यसम्मता प्रकृतिरिति यावत् । तदुक्तं **वायुपुराणे–**

**'योगेश्वरी शरीराणि करोति विकरोति च ।**
**नानाकृतिक्रियारूपनामवृत्तिः स्वलीलया ॥**
**त्रिधा यद्वर्तते लोके तस्मात्सा त्रिगुणोच्यते ।'**

इति । **विष्णुपुराणे**ऽपि–

**'सर्वभूतेषु सर्वात्मन्या शक्तिरपरा तव ।**
**गुणाश्रया नमस्तस्यै शाश्वतायै सुरेश्वरि ॥'**

इति । देवीपुराणे तु त्रिविक्रमत्रिपथगात्रिगुणापदानां पर्यायता ध्वनिता । यदुक्तम्–

**'पदैस्त्रिभिर्बलिर्बद्धः स्वर्गादित्रिपथान्गता ।**
**उत्पत्तिस्थितिनाशैश्च सत्त्वाद्यैस्त्रिगुणोच्यते ॥'**

---

ज्ञानमेव मुद्रास्वरूपलक्षणं यस्याः सा । मुद्रायै इति ॥ ज्ञानेन गम्या प्राप्या । गम्यायै इति ॥ ज्ञानमेव ज्ञेयस्वरूपम् अस्याः सा । स्वरूपिण्यै इति ॥ २३० ॥

योनिमुद्रा नवममुद्रारूपा । मुद्रायै इति ॥ त्रिखण्डाख्यमुद्राधिष्ठात्री । ईश्यै इति ॥ त्रयो गुणा यस्यां सा । गुणायै इति ॥ अम्बा सर्वमाता । अम्बायै इति ॥ त्रिकोणचक्रं गच्छतीति सा । गायै इति ॥

इति । अम्बा ईदृशस्य गुणत्रयस्यापि माता कारणभूता। यत्तन्त्रेषु मन्त्रजीव इत्युच्यते । तथा च **तन्त्रराजे**–

**'तेजसां शक्तिमूर्तीनां प्रपञ्चस्यापि कारणम् ।**
**गुणत्रयममीषां च यत्कारणमुदाहृतम् ॥**
**तत्स्वरूपानुसन्धानसिद्धिः सम्यक्त्वमीरितम् ।**
**तन्मन्त्रवीर्यमुद्दिष्टं मन्त्राणां जीव ईरितः ॥'**

इति । अविशेषात्सकलजगदम्बा वा । त्रिकोणं योनिचक्रं गच्छतीति त्रिकोणगा ।

## अनघाद्भुतचारित्रा वाञ्छितार्थप्रदायिनी ॥ २३१ ॥

अंहोदुःखव्यसनान्यघानि न सन्ति यस्यां सानघा । अद्भुतान्याश्चर्यकराणि चारित्राणि यस्याः । अद्भुतेषु भूकम्पादिषूत्पातेषु निमित्तेषु चरन्तीत्यद्भुतचारीणि दुष्टफलानि तेभ्यस्त्रायते वा । वाञ्छितार्थान्प्रदातुं शीलमस्याः ॥ २३१ ॥

## अभ्यासातिशयज्ञाता षडध्वातीतरूपिणी ।

पुनः पुनः **'आ सुप्तेरा मृतेः कालं नयेद्वेदान्तचिन्तये'**ति विहितेन ब्रह्मात्मैक्यानुसन्धानावृत्त्यतिशयेन ज्ञाता। तथा च **व्याससूत्रं कपिलसूत्रं** च **'आवृत्तिरसकृदुपदेशा'**दिति । उक्तञ्च **ब्रह्माण्डे**–

**'ध्यानैकदृश्या ज्ञानाङ्गी विद्यात्मा हृदयास्पदा ।**
**आत्मैक्याद्व्यक्तिमायाति चिरानुष्ठानगौरवात् ॥'**

इति । अध्वानः षट् – पदाध्वा भुवनाध्वा वर्णाध्वा तत्त्वाध्वा कलाध्वा मन्त्राध्वा चेति । तेषु त्रयो विमर्शांशास्त्रयः प्रकाशांशाः । तदुक्तं **विरूपाक्षपञ्चाशिकायाम्**–

**'यस्य विमर्शस्य कणः पदमन्त्रार्णात्मकस्त्रिधा भवति ।**
**पदतत्त्वकलात्मार्थो धर्मिण इत्थं प्रकाशस्य ॥'**

इति । ते च **ज्ञानार्णवे**– **'अस्मिंश्चक्रे षडध्वानो वर्तन्ते वीरवन्दिते'**त्यारभ्य **'एवं षडध्वविमलं श्रीचक्रं परिचिन्तये'**दित्यन्तेन सलक्षणमुक्ताः । **दक्षिणामूर्तिसंहितायामपि**– **'षडध्वरूपमधुना शृणु योगेशि साम्प्रत'**मित्यादिना **'एवं षडध्वभरितं श्रीचक्रं परिचिन्तये'**-

---

अघं पापं तन्नास्ति यस्यां सा । अनघायै इति ॥ अद्भुतानि चारित्र्याणि यस्याः सा । चारित्र्यायै इति ॥ भक्तेभ्यः वाञ्छितानर्थान् प्रददातीति सा । प्रदायिन्यै इति ॥ २३१ ॥

अभ्यासः स्वरूपानुसन्धानं तस्यातिशयः स्थिरीभावः तेन ज्ञाता । ज्ञातायै इति ॥ वर्णपदमन्त्रंकलातत्त्वभुवनाख्याः षडध्वानः तेभ्यः अतिक्रान्तं रूपमस्याः । रूपिण्यै इति ॥

दित्यन्तेनोक्तास्तानतीतं रूपमस्याः । शैववैष्णवादयः षडुपासनामार्गास्तानतीतं तेषामेतत्प्राप्तिसाधनत्वात्तादृशं रूपमस्या इति वा । उक्तञ्च **कुलार्णवे**—

**'शैववैष्णवदौर्गार्कगाणपत्येन्दुसम्भवैः ।**
**मन्त्रैर्विशुद्धचित्तस्य कुलज्ञानं प्रकाशते ॥'**

इति । इन्दुसम्भवं जैनदर्शनम् । जन्मान्तरे षड्विधोपासकानामिहजन्मनि सुन्दर्युपास्तिलाभ इति तदर्थः ।

**अव्याजकरूणामूर्तिरज्ञानध्वान्तदीपिका ॥ २३२ ॥**

अव्याजा अनौपधिकी या करुणा सैव मूर्तिः स्वरूपं यस्याः । **'जयति करुणा काचिदरुणे'**त्यभियुक्तोक्तेः । अतएवाह—अज्ञानेति । अज्ञानमेव ध्वान्तमन्धकारस्तस्य दीपिकेव नाशकत्वात् ।

**तेषामेवानुकम्पार्थमहमज्ञानजं तमः ।**
**नाशयाम्यात्मभावस्थो ज्ञानदीपेन भास्वते ॥'**

इति **भगवद्वचनात्** ॥ २३२ ॥

**आबालगोपविदिता सर्वानुल्लङ्घ्यशासना ।**

बालान् ब्रह्मादिकान् गोपयतीति बालगोपः । बालश्चासौ गोपश्च बालगोपः । बालगोपश्च बालगोपश्च बालगोपौ तावभिव्याप्य आबालगोपं तादृशेन विदितं ज्ञानं यस्याः सा । अत्रैको बालगोपशब्दः सदाशिवपरः कृष्णावतारपरो वा । अन्यः पामरोपलक्षणम् । हरिहरादिपामरान्ता यां जानन्तीत्यर्थः । उक्तञ्च **स्कान्दे**— **'तमहंप्रत्ययव्याजात्सर्वे जानन्ति जन्तव'** इति । नन्वेवं सति **'अतिपरिचयादवज्ञे'**ति न्यायात्सर्वेषामनादरणीया स्यादत आह ।

सर्वैर्ब्रह्मविष्ण्वादिभिरप्युल्लङ्घितुमतिवर्तितुमयोग्यमशक्यं च शासनं यस्याः । तदुक्तमाचार्य**भगवत्पादैः**—

**'जगत्सूते धाता हरिरवति रुद्रः क्षपयति**
**तिरस्कुर्वन्नेतत्स्वमपि वपुमीशस्तिरयति ।**

---

अव्याजकरुणा नैसर्गिकीदया सैव मूर्तिर्यस्याः सा । मूर्त्यै इति ॥ अज्ञानान्धकारस्य दीपिकेव नाशिका । दीपिकायै इति ॥ २३२ ॥

बालगोपपर्यन्तैः सर्वैर्ज्ञाता । विदितायै इति ॥ सर्वे ब्रह्मादिभिरनुल्लङ्घ्यं शासनं आज्ञा यस्याः सा । शासनायै इति ॥

**सदा पूर्वः सर्वं तदिदमनुगृह्णाति च शिव–**
**स्तवाज्ञामालम्ब्य क्षणचलितयोर्भ्रूलतिकयोः ॥'** इति ।

**श्रीचक्रराजनिलया श्रीमत्त्रिपुरसुन्दरी ॥ २३३ ॥**

श्रीचक्रराजं बिन्दुत्रिकोणादिरूपं निलयो वासस्थानं यस्याः । तदुक्तम्–'**श्रीचक्रं शिवयोर्वपु**'रिति । शरीरे यथा जीवस्यावस्थानं तथा श्रीचक्रे शिवयोरिति तदर्थः । त्रिपुरस्य परशिवस्य सुन्दरी भार्या । श्रीमती च सा त्रिपुरसुन्दरी चेति तथा । अत्र त्रीणि पुराणि ब्रह्मविष्णुशिवशरीराणि यस्मिन्सः त्रिपुरः परशिवः । तदुक्तं **कालिकापुराणे**–

**'प्रधानेच्छावशाच्छम्भोः शरीरमभवत्त्रिधा ।**
**तत्रोर्ध्वभागः सञ्जातः पञ्चवक्त्रश्चतुर्भुजः ॥**
**पद्मकेसरगौराङ्गः कायो ब्राह्मो महेश्वरे ।**
**तन्मध्यभागो नीलाङ्ग एकवक्त्रश्चतुर्भुजः ॥**
**शङ्खचक्रगदापद्मपाणिः कायः स वैष्णवः ।**
**अभवत्तदधोभागे पञ्चवक्त्रश्चतुर्भुजः ॥**
**स्फाटिकाभ्रमयः शुक्लः स कायश्चान्द्रशेखरः ।**
**एवं त्रिभिः पुरैर्योगात्त्रिपुरः परमः शिवः ॥'** इति ॥ २३३ ॥

**श्रीशिवाशिवशक्त्यैक्यरूपिणी ललिताम्बिका ॥**

श्रीयुक्ता शिवा श्रीशिवा । शिवशक्त्योरैक्यं सामरस्यमेव रूपमस्याः । उक्तञ्च **वायुसंहितायाम्**–

**'शिवेच्छया परा शक्तिः शिवतत्त्वैकतां गता ।**
**ततः परिस्फुरत्यादौ सर्गे तैलं तिलादिव ॥'**

---

श्रीचक्रराजः निलयः गृहं यस्याः सा । निलयायै इति ॥ श्रीमती त्रिपुरेषु जाग्रदादिषु सुन्दरी सर्वस्पृहणीया । सुन्दर्यै इति ॥ २३३ ॥

श्रीशिवः परशिवः तद्रूपा । शिवायै इति ॥ शिवशक्त्योरैक्यं सामरस्यं तदेव वास्तवं रूपमस्याः । रूपिण्यै इति ॥ ललते अविशेषात्सदा सर्वत्र शोभतेऽसौ ललिता सा चासौ अम्बिका चेति । ललिताम्बिकायै नम इति ॥

**ललितासहस्रनामसु वाग्देवीविरचितेषु नामैकम् ।**
**व्याख्यातुं कः प्रभवति ललितादेवी कृपाकटाक्षमृते ॥ १ ॥**
**सन्ति हि सहस्रनामस्तोत्राण्यन्यानि तानि विविधानि ।**
**व्याख्यातानि तथान्यैरेतन्नाम्नः कला समानिकिमु ॥ २ ॥**
**बहुजन्मसुकृतसेवनसम्प्राप्तश्रीशिवा कटाक्षकणैः ।**
**भास्कररायैर्भाषितमेतद्भाष्यं महार्थसिद्धान्तम् ॥ ३ ॥**

इति । अत्र सामरस्यं समरसता परमं साम्यमत्यन्ताभेद एव । तथा चोक्तं **सौरसंहितायाम्**—

**ब्रह्मणोऽभिन्नशक्तिस्तु ब्रह्मैव खलु नापरा ।**
**तथासति वृथा प्रोक्तं शक्तिरित्यविवेकिभिः ॥**
**शक्तिशक्तिमतोर्विद्वन्भेदाभेदस्तु दुर्घटः ॥'**

इति । **वासिष्ठरामायणे**ऽपि—

**'यथैकं पवनस्पन्दमेकमौष्ण्यानलौ यथा ।**
**चिन्मात्रं स्पन्दशक्तिश्च तथैवैकात्म सर्वदा ॥'**

इति । शिवचक्राणां शक्तिचक्राणां चैक्यं रूपमस्या वा । तदुक्तं **ब्रह्माण्डपुराणे**— **'त्रिकोणे बैन्दवं श्लिष्टमष्टारेऽष्टदलाम्बुज'**मित्यारभ्य—

**'शैवानां चैव शाक्तानां चक्राणां च परस्परम् ।**
**अविनाभावसम्बन्धं यो जानाति स चक्रविद् ॥'**

---

**पदवाक्यमानकापिलपातञ्जलशैवतन्त्रनिगमानाम् ।**
**सौभाग्यभास्कराख्यं सिद्धान्तानामतिप्रकाशकरम् ॥ ४ ॥**
**श्रीसाधकेन्द्रमुख्या सद्भाष्याब्धिं विशुद्धया बुध्या ।**
**निर्मथ्य श्रीनामार्थामृततृप्ताः स्वतत्त्वविश्रान्ताः ॥ ५ ॥**
**तद्भास्करवाक्यार्थप्रौढमयूखच्छटासु गतिहिनाः ।**
**ये बाला मन्दधियस्तेषां नामार्थपरिचयायैषः ॥ ६ ॥**
**श्रीभाष्यकथितनामार्थानां संक्षेपसंग्रहो ग्रन्थः ।**
**सर्वजनसेवनीयो भास्करबालातपाभिधः सुगमः ॥ ७ ॥**
**नागरवंशाब्धिमणिश्रीशिवनाथात्मजेन तेन मया ।**
**[श्री] शम्भुनाथाख्येन(थनाम्ना) श्रीदेवीचरणकमलदासेन ॥ ८ ॥**
**श्रीमाधवपदपङ्कजमधुमधुपायित निजान्तरङ्गानाम् ।**
**अमृताख्यानां श्रीगुरुनाथानामाज्ञया कृपाकृतया ॥ ९ ॥**
**आराचितः श्रीललिताचरणद्वन्द्वे समर्पितः सोऽयम् ।**
**तेन श्रीगुरुरूपा प्रीणातु श्रीपराम्बिका सततम् ॥ १० ॥**
**मम बुद्धे रति माद्याम्नामार्थस्याप्यतीवगाम्भीर्यात् ।**
**स्यादत्र वचनदोषः क्षन्तव्यो मयि कृपापरैर्विबुधैः ॥ ११ ॥**

॥ इति श्रीललितासहस्रनामटीका समाप्त । श्रीसंवत् १८८१ मीति(मिति) श्रावणवदी ६ वार शनीये लीखी(लिखि)तं शुभम् । श्रीराम ॥

**पञ्चाशदेक आदौ नामसु सार्द्धद्व्यशीतिशतम् ।**
**षडशीतिः सार्द्धान्ते सर्वे विंशतिशतत्रयं श्लोकाः ॥**

श्रीर्जयति । श्रीललिता ।

इत्यन्तेन शिवशक्त्योरैक्यं यस्मिन्प्रतिपाद्यं स हंसमन्त्रो रूपमस्या वा । उक्तञ्च **यज्ञवैभवखण्डे**–

**'शान्तान्तं शक्तिरस्योक्ता तदन्तं बीजमुच्यते ।**
**विद्याशक्तिर्भवेद्बीजं शिव एव न चान्यथा ॥**
**तेनायं परमो मन्त्रः शिवशक्त्यात्मकः स्मृतः ॥'**

इति । शषसहेतिवर्णक्रमे शस्यान्ते षकारस्तदन्ते सकारस्तदन्ते हकार इति तदर्थः । अथवा शिवस्य शक्तयो धूमावत्याद्याः पञ्च । तासामैक्यं समष्टिरेव रूपमस्या । ताश्चोक्ता **विरूपाक्षपञ्चाशिकायाम्**–

**'धूमावती तिरोधौ भास्वत्यवभासनेऽध्वनां शक्तिः ।**
**क्षोभे स्पन्दा व्याप्तौ विभ्वी ह्लादा तु पुष्टौ मे ॥**
**धूमावती पृथिव्यां ह्लादाप्सु शुचौ तु भास्वती प्रथते ।**
**वायौ स्पन्दा विभ्वी नभसि व्याप्तं जगत्ताभिः ।'**

एवमियति प्रबन्धे प्राथमिकेन नामत्रयेण जगतः सृष्टिस्थितिलयकर्तृत्वेन देवतां लक्षयित्वा तिरोधानानुग्रहयोरनन्तविषयत्वात् '**चिदग्निकुण्डसंभूते**'त्यारभ्यैतावत्पर्यन्तं तयोरेव विषयं प्रपञ्च्येदृशपञ्चकृत्यकर्त्री देवतामसाधारणेन विशेष्यभूतेन नाम्नां निर्दिशति–

ललिताम्बिकेति । ललतेऽसौ ललिता च साम्बिका च ललिताम्बिकेति विग्रहः । उक्तञ्च **पद्मपुराणे**– '**लोकानतीत्य ललते ललिता तेन सोच्यते**' इति । लोक्यन्त इति लोकाः किरणा आवरणदेवतास्तानतिक्रम्य तत्स्थानोपरितनबिन्दुस्थाने ललतेऽतितरां शोभत इति तदर्थः ।

**'शोभाविलासो माधुर्यं गाम्भीर्यं स्थैर्यतेजसी ।**
**लालित्यं च तथौदार्यमित्यष्टौ पौरुषा गुणाः ॥'**

इत्यभियुक्तप्रसिद्धं ललितत्वं '**ललितं रतिचेष्टित**'मिति कामशास्त्रप्रसिद्धं च । '**सौकुमार्यं तु लालित्य**'मिति प्रसिद्धं च तत्सर्वमस्या अस्तीति ललिता । उक्तञ्च–

**'ललितेति नाम युक्तं तव किल दिव्या नवा वृतयः ।**
**धनुरैक्षवमस्त्राण्यपि कुसुमानि तथाखिलं ललितम् ॥'**

इति । '**ललिते सुन्दर**'मिति **शब्दार्णवः** । इदं च प्रयागपीठाधिपतेर्नाम । '**प्रयागे ललितादेवी**'ति देवीपीठगणनप्रकरणे **पाद्मवचनात्** ।

*अत्रान्तेऽप्युच्चार्यः प्रणवः स च पूर्वमेव व्याख्यातः । वर्णभेदेन व्यवस्थापि पूर्वमेवोक्ता न विस्मर्तव्या । अनयोश्चाद्यन्तभूतयोर्द्वयोः प्रणवयोः सहस्रनामवाक्यार्थानन्वितार्थकत्वेऽपि न दोषः । तयोर्माङ्गल्यार्थमेवोच्चारणात् ।*

**"ॐकारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा।**
**कण्ठं भित्त्वा विनिर्यातौ तेन माङ्गलिकावुभौ॥'**

इति वचनात्। '**स्रवत्यनोंकृतं पूर्वं परस्ताच्च विशीर्यत**' इति वचनेन तदुच्चारणे प्रत्यवायश्रवणेन तदुच्चारणस्यादृष्टमात्रौपयिकत्वात् अर्थज्ञानपूर्वकस्यैवोच्चारणस्यादृष्टौपयिकत्वेनार्थवर्णनस्याप्यावश्यकत्वात् नामसाहस्रस्याप्यनेन न्यायेनादृष्टार्थत्वेऽपि परस्परविशेष्यविशेषणभावनाकाङ्क्षायोग्यता सतिसद्भावे नास्तीति क्रिययान्वयवर्णनेन महावाक्यार्थस्यैकस्य वर्णयितुं शक्यत्वेन वैषम्यात् ईदृशवाक्येष्वस्तीति क्रियापदाध्याहारस्यावश्यकत्वात्। तथा च **कात्यायनस्मरणम्** '**अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्ती**'ति। भवन्तीपर इत्यस्य लट्पर इत्यर्थः। अस्तु वा प्रणवयोरपि विशेषणतया महावाक्यार्थान्वयित्वं समस्तव्यस्तभेदेन पौनरुक्त्यनिराससम्भवात्। अत एव परिभाषायां गदन्तमिति तकारस्य प्रणवसाहित्येन षट्संख्यापरत्वमिति दिक्। अर्धम्।

इदानीं परिभाषामण्डले नाम्नां शतकेष्वादिभागान्संगृह्य प्रदर्शयति—

**श्रीमणिसद्ध्रींविविधगुडदरान्देशैश्च पुष्टनादाभ्याम्।**
**नामसु शतकारम्भा न स्तोभो नापि शब्दपुनरुक्तिः॥ ३३॥**

श्रीमाता- १, मणिपूरान्तरुदिता- २, सद्गतिप्रदा- ३, ह्रींकारी- ४, विविधाकारा- ५, गुडान्नप्रीतमानसा- ६, दरान्दोलितदीर्घाक्षी- ७, देशकालापरिच्छिन्ना- ८, पुष्टा- ९, नादरूपिणी- १०, एवं दश नामानि प्रथमादिशतकारम्भकाणि। अत्र श्रीमण्यादिशब्दानां श्रीकण्ठार्धशरीरिणी मणिपूराब्जनिलयेत्यादावतिप्रसक्तत्वेऽपि गणनासाचिव्येनैव भ्रमो निरस्तव्यः। गणनोत्तरं हि शतकप्रत्यासन्ननामस्वेव हि संशयो भवति क्वचित्। क्वचित्पदच्छेद- संशयप्रयुक्तोनविप्रकृष्टनामसु। अत एव ह्रीं इति सबिन्दुकग्रहणं ह्रीमतीति तत्समीपवर्तिनामनिरासाय। दरामित्युक्तिः "**दरहासोज्ज्वलन्मुखी**'त्यस्य व्यावर्तनायेति ज्ञेयम्। यत्तु **केचित्**—

**'श्रीमाता मणिपूरान्तरुदिता सद्गतिप्रदा।**
**ह्रींकारी विविधाकारा गुडान्नप्रीतमानसा॥**
**दरान्दोलितदीर्घाक्षी सावित्री रसशेवधिः।**
**विज्ञानकलिका चेति पदान्येतान्यसंशयम्॥**
**शतकाद्यानि नामानीत्यवधार्याणि सूरिभिः।'**

इति **ललितोपाख्यानस्थं** वचनमिति लिखन्ति, तस्य प्रमाणिकत्वेऽप्युपायसंग्रहमात्रतात्पर्यकत्वेनोपायान्तरादूषकत्वेन तन्नेयम्। निरर्थकः शब्दः स्तोभः। स च

सहस्रनामान्तरेषु पादपूरणैकप्रयोजनको यथोपलभ्यते नात्र तथेत्यर्थः। नापि शब्देति। अर्थतस्तु यद्यपि पुनरुक्तिः **'अम्बा माताथ जननी देवेशी सुरनायिके'**त्यादौ दृश्यते तथापि नासौ सहस्रनामसंख्याविघातिका। नामशब्दस्य प्रतिपादकमात्रे शक्तेस्तद्भेदमात्रेण पृथक्त्वनिवेशित्वस्वाभाव्यायाः संख्याया अनुपरोधात्॥ ३३॥

**मतिवरदाकान्तादावकारयोगेन रक्तवर्णादौ।**
**आकारस्य क्वचन तु पदयोर्योगेन भेदयेन्नाम॥ ३४॥**

ननु शाब्दतोऽपि पुनरुक्तिरुपलभ्यत एवेत्याशङ्क्य परिहरति **'तुष्टिः पुष्टिर्मतिर्धृति'**-रित्यनेन पौनरुक्त्यपरिहाराय **'स्वाहा स्वधाऽमतिर्मेधे'**त्यत्राकारस्य योगेन प्रश्लेषेणा-मतिरिति पदच्छेदः कर्तव्यः। **'सदसत्क्षरमक्षर'**मित्यादौ **विष्णुसहस्रनामसु** **'मूर्तामूर्ते'**ति प्रकृतनामस्वपि तस्य न्यायस्य क्लृप्तत्वात्। नहि सन्निकृष्टपदद्वय एव तथा नियम इत्यत्र प्रमाणमस्ति। पौनरुक्त्यपरिहाराकाङ्क्षाया अविशेषादिति भावः। एवं **'वरदा वामनयने'**त्यनेन पौनरुक्त्याभावाय **'विश्वगर्भा स्वर्णगर्भाऽवरदा वागधीश्वरी'**-त्यत्रावरदेति छेदः।

**'कलावती कलालापा कान्ता कादम्बरीप्रिया।**
**कल्पनारहिता काष्ठाऽकान्ता कान्तार्धविग्रहा॥'**

इत्यनयोरन्यतरस्मिन्कान्तापदेऽकारप्रश्लेषः। आदिपदेन नित्यतृप्तादेः परिग्रहः। **'नित्यतृप्ता भक्तनिधिः'**, **'मूर्तामूर्ता नित्यतृप्ते'**त्यत्र तदावश्यकत्वात्। **'रक्तवर्णा मांसनिष्ठे'**त्यनेन पौनरुक्त्यात् **'विशुद्धचक्रनिलयाऽरक्तवर्णा त्रिलोचने'**त्यत्राप्यनेन न्यायेना-कारप्रश्लेषे प्राप्तेऽर्थानुगुण्याय दीर्घाकारः प्रश्लेषणीय इत्याह— रक्तवर्णादावा-कारस्येति। आदिना—

**'सुमुखी नलिनी सुभ्रूः शोभना सुरनायिका।**
**सुवासिन्यर्चनप्रीताऽऽशोभना शुद्धमानसा॥'**

इत्यनयोः शोभना आशोभनेति पदयोः परिग्रहः। ननु तथापि **'सुखाराध्या शुभकरी शोभना सुलभा गति'**रित्यत्र तृतीयवारं श्रुतस्य शोभनपदस्य का गतिरित्याशङ्क्याह— क्वचनेति। पदयोर्भिन्नत्वेन वर्णयितुं शक्ययोरपि व्यायोगेन समासव्यासान्यतररूपेण नाम भेदयेदित्यन्वयः। **'शोभनासुलभागति'**रिति पदत्रयस्यैकनामत्वम्। एवं **'कौलिनीकेवला, अजाजेत्री'**त्यादौ समासरूपो योगो द्रष्टव्यः। पदद्वयस्याप्येकनामत्वम् **'विश्वेदेवाः अहिर्बुध्न्यः निधिरव्यय'** इत्यादौ दृष्टमिति भावः॥ ३४॥

**साध्वी तत्त्वमयीति द्वेधा त्रेधा बुधो भिद्यात्।**
**हंसवती चानर्घ्येत्याधान्तादेकनामैव॥ ३५॥**

पौनरुक्त्यपरिहारायोपायान्तरमाह । **'शाङ्करी श्रीकरी साध्वी'**त्यनेन पौनरुक्त्य-परिहाराय **'सम्प्रदायेश्वरी साध्वी'**त्यत्र साधु ई इति द्वेधा पदभेदः । **'तत्त्वाधिका तत्त्वमयी'**त्यनेन तत्परिहाराय **'तत्त्वासना तत्त्वमयी'**त्यत्र तत् त्वम् अयीति त्रेधा पदच्छेदः । पौनरुक्त्याभावेऽपि पदभेदभ्रमनिरासायाह— **हंसेति** । आ अर्धान्तात् अर्धसमाप्तिपर्यन्तं हंसवती मुख्यशक्तिसमन्वितेत्येकं पदम् । **'अनर्घ्या कैवल्य-पददायिनी'**त्यत्र तु **'क्लींकारी केवला गुह्या कैवल्यपददायिनी'**त्यनेन पौनरुक्त्यपरिहारोऽपि फलम् । एतेन **छलाक्षरसूत्राणां** न्यायमूलकत्वमेवेति प्रबलन्यायेन क्वचित्तदुक्त-नियमान्यथात्वेऽपि न दोष इति सूचितम् । अत एव सामेवेदिभि-र्निदानसूत्रान्तर्गत**छन्दोविचितिभाष्ये** न्यायविरोधे छलाक्षरपाठोऽनादरणीय इत्युक्तं **रथन्तरसामप्रकरणे** । यत्र तु कान्तापदे अकारयोगे विनिगमनाविरहः, यथा वा **'कैवल्यपददायिनी'**त्यत्र पदान्तरयोगे सत्रन्यायतो विकल्पप्रसक्तावपि छलाक्षर-सूत्रप्रमाण्यात् **'कल्पनारहिता काष्ठे'**त्यत्रेवाऽकान्तेति पदच्छेदः । **'कौलिनी केवले'**—त्यत्रेवानर्घ्यपदस्योत्तरप्रयोग इति स्वीकर्तुं युक्तम् । अव्यवस्थितशास्त्रार्थायोगादिति द्रष्टव्यम् ॥ ३५ ॥

**शक्तिर्निष्ठाधामज्योतिःपरपूर्वकं द्विपदम् ।**
**शोभनसुलभासुगतिस्त्रिपदैकपदानि शेषाणि ॥ ३६ ॥**

अनेकपदानि नामानि संगृह्णाति । शक्त्यादिपदचतुष्टयात्पूर्वं तद्विशेषणत्वेन परपदत्वेन पठ्यते । तेन सह द्विद्विपदानि तानि नामानि **'पराशक्तिः परानिष्ठा'**, **'परंज्योतिः परंधामे'**ति । **'कौलिनीकेवले'**त्यादौ **'अजाजेत्री'**तिवत्समाससम्भवान्न तत्र पदद्वयावश्यकतेति भावः । **'शोभना सुलभा गति'**रित्यत्र तु त्रिपदं नाम । शेषाण्येक-पदानि समानाधिकरणानेकविभक्तिरहितानीत्यर्थः । तेन **'अश्वारूढाधिष्ठिताश्व-कोटिकोटिभिरावृता'** । **'मनोवाचामगोचरे'**त्यादौ व्यधिकरणविभक्तिद्वयसत्त्वेऽपि तयोर्नाम-भेदभ्रमानाधायकत्वेन द्विपदेषु तदाधायकानामेव गणनाद्वा न दोषः । **'पराशक्ति'**रित्यत्र **'शोभनासुलभागति'**रित्यत्र चैकैकं पदमित्येव सुवचमिति तु पूर्वमेवोक्तम् । ननु **'परंज्योति'**रिति वाक्ये प्रातिपदिकसंज्ञाभावेन कथं नामत्वम् । न च **'प्रजापतेर्हृदयम्'**, **'पारेगङ्गम्'**, **'मध्येमहाभारत'**मित्यादेरिवैकपदत्वम् । तेषु प्रथमपदान्ते विभक्तिसरूपवर्ण-मात्रसत्त्वेन विभक्त्यन्तराभावात् । न च **'परंज्योति'**रित्यादौ तथा सम्भवति । विशेष्योत्तरविभक्त्यन्यथाभावप्रयुक्तान्यथाभावकविभक्तिक[विभक्त]विशेषणपदकत्वात्। नीलमुत्पलमित्यादौ तथात्वे वाक्यत्वस्यैव स्वीकारात् । अत एव **'अहयेबुध्नियाय स्वाहा'**, **'अहेबुध्निय मन्त्रं मे गोपाय'** इत्यादौ पदद्वयेऽपि विभक्तिव्यत्यास इति चेन्न । परिभाषिक-प्रातिपदिकसंज्ञायां अभावेऽपि सम्भूयैकव्यक्तिविशेष्यकबोधजनकपदत्वरूपस्य नामत्वस्यैव सहस्रनामसंख्याघटकत्वेनादोषात् । वस्तुतस्तु ज्योतिःपदस्य प्रातिपदि-

कत्वात्तमादायैव संख्यापूर्तिः । परन्तु **'इङ् अध्ययन'** इति धातोरधिपूर्वस्यैव प्रयोग इति नियमवत् ज्योतिरादीनामिह सविशेषणकानामेव प्रयोग इत्यनाम्नानबलान्नियमः कल्प्यते । तथा नियमेऽपि धातुत्वस्येङ्मात्र इव नामत्वस्य ज्योतिःपदमात्रे पर्याप्तिः । **'अग्निं पवमानमावहा', 'अग्नये पवमानायेद'**मित्यादि नैगमिकप्रयोगवदिहापि **'परंज्योतिस्तर्पयामि परस्मैज्योतिषे स्वाहे'**त्यादयस्तर्पणहोमादौ प्रयोगनियमाः । परमिति तु मान्तमव्ययमिति केचित् । तत्पक्षे तु न मध्ये चतुर्थी । कौलिनीकेवलेति विशेष्यविशेषणभावापन्नपदद्वयपक्षेऽपि केवलेत्यस्य यथान्यासं कौलिन्यै केवलायै नम इत्यादिप्रयोगो न केवलायै कौलिन्या इत्यादिः । आम्नानवैपरीत्ये मानाभावात् । एतेन **विष्णुसहस्रनामसु— 'अनादिर्भूर्भुवोलक्ष्मी'**रित्यत्र भूर्भुवरित्यस्य भुवोभूरित्यन्वयेन भूमेर्जनक इत्यर्थकैकनामत्वपक्षे भूर्भुवे नम इति वा भुवोभुवे नम इति वा मन्त्रप्रयोगः परास्तः । न्यायेन भुवेभवोनम इत्यस्यैव युक्तत्वादित्यादिकमूह्यम् ॥ ३६ ॥

**निधिरात्मा दम्भोलिः शेवधिरिति नाम पुंलिङ्गम् ।**
**तद्ब्रह्मधाम साधुज्योतिः क्लीबेऽव्ययं स्वधा स्वाहा ॥ ३७ ॥**

प्रसङ्गाल्लिङ्गभेदेन नामानि विभज्य दर्शयति । **'गुणनिधिः', 'आत्मा', 'रोगपर्वतदम्भोलिः', 'महालावण्यशेवधि'**रिति नामानि पुंल्लिङ्गानि । तेन गुणनिध्यै इत्यादिः पाक्षिकः प्रयोगो न कार्यः । एवं मन्त्रार्थानुसन्धानेऽपि फलभेदः । तदित्यादिपञ्च नामानि नपुंसकानि । शेषाणि स्त्रीलिङ्गानीति शेषः । त्वमिति पदमपि स्त्रीलिङ्गमेव । **'अलिङ्गे युष्मदस्मदी'** इत्यस्य लिङ्गकृतवैरूप्याभावमात्रपरत्वात् । **'युष्मदस्मत्षट्संज्ञकास्त्रिषु सरूपा'** इति वचनान्तरानुगुण्यात् । स्वधास्वाहेत्यनयोरव्ययत्वात्स्वधानम इत्यादिरेव प्रयोगः । स्वान्धत्ते इत्यादिरूपेऽर्थे तु स्वधायै नम इत्यादिरेव प्रयोगः सुवच इत्युक्तम् ॥ ३७ ॥

**इति भास्कररायेण कृते सौभाग्यभास्करे ।**
**दशमेन शतेनाभूद्धारिण्येकादशी कला ॥ १००० ॥**

**इति श्रीभास्कररायविरचिते ललितासहस्रभाष्ये दशमशतकं नामैकादशी कला ॥ ११ ॥**

●

***ललितासहस्रनामस्योत्तरभागे फलःश्रुतिः***

# द्वादशी क्षमाख्या कला

*अथ फलश्रुतिश्लोकानामर्थं संगृह्णाति परिभाषाकारः—*

***आविंशतितः सार्धान्नानाफलसाधनत्वोक्तिः ।***
***तस्य क्रमशो विवृतिः षट्चत्वारिंशता श्लोकैः ॥ ३८ ॥***

*सार्धषडशीतिश्लोकात्मकस्योत्तरभागस्य मध्ये प्रथमतः सार्धैर्विंशतिभिः श्लोकैः सहस्रनामकीर्तनस्य बहुविधफलसाधनत्वं प्रतिपाद्यते । एवं फलभेदेन कीर्तनकरणक-भावनाया भेदादितिकर्तव्यताभेद उत्तरत्र षट्चत्वारिंशता श्लोकैः प्रतिपाद्यते । '**सर्वरोगप्रशमन**'मित्यादिना रोगनिरासादीनि फलानि येन क्रमेण पूर्वं प्रतिपादितानि तेनैव क्रमेणोत्तरत्र तत्तत्फलकाः प्रयोगा वक्ष्यन्त इत्यर्थः । यत्तु पूर्वम्—'**श्रीमातुः प्रीतये तस्मादनिशं कीर्तयेदिद**'मित्यत्र प्रीतिरेव भाव्यत्वेनोक्ता सा च विविधफलजननद्वारत्वेन पूर्वतन्त्रे पूर्वस्येवास्य तन्त्रे देवताप्रीतेरेव द्वारत्वकल्पनसम्भवात् । अस्तु वा स्वातन्त्र्येण प्रीतेरपि फलत्वमित्याशयः ॥ ३८ ॥*

एवं प्रीतिफलककीर्तनोपयोगि नामसहस्रं प्रतिपाद्य तदुपसंहरन्फलानि विवेचयितुकामो भगवान्हयग्रीवाचार्य उत्तरं ग्रन्थसन्दर्भमारभते—

**इत्येवं नाम साहस्रं कथितं ते घटोद्भव ॥ २३४ ॥**

इत्येवमित्यादिना । इतिशब्दः समाप्तिवचनः सन्सहस्रसंख्याया अन्यूनानतिरिक्ततां ध्वनयति । एवम् उक्तेन प्रकारेण यथावत्प्रतिपादितेन सरस्वतीगङ्गासहस्रनामादौ सहस्रसंख्यापूर्तेरभावादपार्थको गौणो वा सहस्रनामशब्दो नात्र तथेति ध्वनितम् । नाम्नां सहस्रमेव साहस्रम् । राक्षसमानसादिवत्स्वार्थे तद्धितः । घटोद्भवेत्यगस्त्यस्य संबुद्धिः ॥ २३४ ॥

ननु **कूर्मपुराणादौ** देवीसहस्रनामादिकमप्यन्यूनानतिरिक्तसहस्रसंख्याकमेवेत्यत आह—

**रहस्यानां रहस्यं च ललिताप्रीतिदायकम् ।**
**अनेन सदृशं स्तोत्रं न भूतं न भविष्यति ॥ २३५ ॥**

रहस्यानामिति । रहस्यानां न्यासजपादिरूपाणां मध्ये इति निर्धारणे षष्ठी । तेन रहस्यमित्यस्य रहस्यतममित्यर्थः । ननु रहस्यतमान्यपि गङ्गासहस्रनामादीनि

स्कान्दादावुपलभ्यन्त एवेत्यत आह–ललितेति । तेषां ललितातोऽपकृष्टदेवताप्रीतिकरत्वेन सर्वोत्कृष्टदेवताप्रीतिकरमिदमेवेत्यर्थः । नन्वीदृशमपि किञ्चित्सम्भाव्येतेत्यत आह–अनेनेति । सदृशं रहस्यतमत्वे सति ललिताप्रीतिकरत्वरूपसाधारणधर्मवत्त्वरूपसादृश्यवत् । स्तोत्रं स्तोत्रान्तरम् । एकस्मिन्नुपमानोपमेयभावाभावात् । न भूतं इतःक्षणात्पूर्वकाले । न भविष्यति इत उत्तरकाले । भविष्यतीति शत्रन्तस्य सप्तमी वा । वर्तमानक्षणस्य तादृशस्तोत्रोत्पत्त्ययोग्यत्वात्कालत्रयासम्बन्धात्तादृशमसदेवेति भावः । अस्य विशेषणद्वयस्यान्यत्रासत्त्वप्रतिपादनाय विशेषणविवरणपर उत्तरः सर्वोऽपि ग्रन्थसन्दर्भः ॥ २३५ ॥

तत्र रहस्यतमत्वं विवेचयति द्वाभ्याम् । 'प्रयासतारतम्यात्फलतारतम्य'मिति न्यायेन फलभूमसाधने कष्टसाध्यत्वस्य प्रसिद्धतमत्वाद्बहुफलसाधनमप्यल्पायाससाध्य कर्म रहस्यतमम् । तत्र नामकीर्तने प्रयासेयत्तायाः स्पष्टत्वात्फलभूमानमेव विवृणोति । सर्वे रोगाः असाध्ययाप्यादिभेदभिन्नाः । दारिद्र्यस्यापि रोगतुल्यत्वेनोपस्थितत्वात्तदभावनियतसम्पद्वृद्धेरपि फलत्वमाह–

**सर्वरोगप्रशमनं सर्वसम्पत्प्रवर्धनम् ।**
**सर्वापमृत्युशमनं कालमृत्युनिवारणम् ॥ २३६ ॥**

सर्वसम्पदिति । अथवा सम्पदारोग्ययोः परस्पराभावव्याप्यत्वादारोग्ये सति दारिद्र्यं स्यादेवेति शङ्कामपाकुर्वन्नारोग्यं सम्पत्त्या समुच्चिनोति–सर्वसम्पदिति । गजतुरगसमृद्ध्यादिभेदभिन्नानां सम्पदामित्यर्थः । सर्वे अपमृत्यवः सर्पव्याघ्रादिनिमित्तकाः । अत्यल्पमिदमुच्यत इत्याह–कालेति । काले आयुः परिमाणः परिसमाप्तौ । तेनापमृत्यूनामायुर्मध्य एव प्रसक्तिः । वर्तितैलादिसाचिव्येऽपि चण्डवातादिकृतदीपनाशवदिति सूचितम् ॥ २३६ ॥

**सर्वज्वरार्तिशमनं दीर्घायुष्यप्रदायकम् ।**

सर्वे ज्वरा ऐकाहिकादिसान्निपातिकान्ताः । आर्तिस्तत्प्रयुक्ता शिरस्तोदादिरूपा पीडा तेषां शमनं नाशकम् । अथवा सर्वेषां ये रोगा इत्यादिरीत्या पदचतुष्टयं व्याख्येयम् । तेन जातेष्ट्यादिवत्फलसाधनयोर्वैयधिकरण्यमपि सिद्ध्यति । ततश्चान्यनिष्ठफलोद्देशेनान्यस्यापि साधने प्रवृत्तिरिह युक्तेति मन्तव्यम् । रोगैरेव सिद्धे ज्वरार्त्योः पार्थक्येन ग्रहणं गोबलीवर्दन्यायेन । यद्वा वक्ष्यमाणकाम्यप्रयोगानुसारेण पार्थक्यम् । तत्र रोगशान्त्यादिचतुरवयवैकफलकप्रयोगकथनोत्तरं तत्तदवयवमात्रफलकानां प्रयोगाणां वक्ष्यमाणत्वात् । अत एव दीर्घायुष्यपदस्याप्ययमर्थः सिद्ध्यति । दीर्घं पूर्णं यत् आयुषो भाव आयुष्यं दीर्घायुष्ट्वं शतमानत्वं तस्य प्रदायकं तद्विघातकग्रहविषादिबाधानिरासकमिति । यद्वा आयुरेवायुष्यं दीर्घशतमाना-

दधिकमायुष्यं येभ्यस्तेषां गुटिकौषधियोगसिद्ध्यादीनां प्रदायकं तत्प्राप्तिकरापूर्वसम्पादकमिति । तेन न कालमृत्युनिवारणेन गतार्थता ।

**पुत्रप्रदमपुत्राणां पुरुषार्थप्रदायकम् ॥ २३७ ॥**

अपुत्राणां पुत्रकामबद्धानाम् । सपुत्राणां सिद्धे इच्छाविरहादपुत्रेष्वेव प्रायः पुत्रकामनादर्शनात्तथोक्तम् । अत एवैकपुत्रामृतप्रजादीनां वन्ध्यास्वेव गणना **स्मृतिषु** । तेन सपुत्राणामपि पुत्रान्तरेच्छायामत्राधिकारः । अपुत्राणामपि पुत्रकामाभावे पुत्रकामप्रयोगे नाधिकार इति सिद्ध्यति । तेन च तत्तत्कामनायास्तत्तत्फलप्रयोगाधिकारितावच्छेदकत्वं सूचितम् । न चानेकफलविषयकसमूहालम्बनात्मककामनावतः सर्वप्रयोगेष्वधिकारात्तेन कः प्रयोगः प्रथमतोऽनुष्ठेय इत्यत्र विनिगमनाविरह इति वाच्यम् । तन्त्रेण सर्वफलप्रदस्यैकस्यैव प्रयोगस्यानुष्ठातुं शक्यत्वात् । न चैवं सति **'तत्र सर्वेऽविशेषा'**दिति चातुर्थिकाधिकरणविरोधः । तत्र हि सर्वकामप्रददर्शपूर्णमासज्योतिष्टोमादेः सकृदनुष्ठानेनैकमेव फलं भवतीति सिद्धान्तितत्वादिति वाच्यम् । अल्पप्रदकर्मस्वेव तदधिकरणन्यायानां व्यवस्थितत्वात् । देवताप्रीतेस्तु लोकविलक्षणत्वात् । अत एवोक्तम्–**'लोकातीता गुणातीता सर्वातीता शमात्मिके'**ति । कर्मस्वपीदृशन्यायस्यर्ष्यन्तरैरङ्गीकाराच्च । यदुक्तं **हिरण्यकेशिसूत्रे**–**'एकप्रयोगे सर्वान्कामान्कामयीत प्रयोगपृथक्त्वे चैकैक'**मिति । वैषयिककामनासामान्याभाववतोऽप्यत्राधिकार इत्याह–पुरुषार्थेति । पुरुषैर्बुद्धिमद्भिरर्थ्यत इति पुरुषार्थो मोक्षः । निष्कामोऽपि मोक्षफलकप्रयोगेऽधिक्रियत इति भावः। वस्तुतश्चतुर्वर्गप्रदायकमित्येवार्थः। सङ्कोचे मानाभावात्। उक्तञ्च **पद्मपुराणे** पुष्करखण्डे आह्निकप्रकरणे–

**'अतःपरं च देवानामर्चनं कारयेद्बुधः ।**
**गणेशं पूजयेद्यस्तु विघ्नस्तस्य न बाधते ॥**
**आरोग्यार्थेऽर्चयेत्सूर्यं धर्ममोक्षाय माधवम् ।**
**शिवं धर्मार्थमोक्षाय चतुर्वर्गाय चण्डिकाम् ॥'** इति ॥ २३७ ॥

ननु बहुफलप्रदत्वे सत्यल्पायाससाध्यत्वं सहस्रनामनवकेऽस्त्येव ललिताप्रीतिप्रदत्वमपि गङ्गाश्यामलादिप्रीतिजननद्वारा तत्रास्त्येव । **पञ्चमीस्तवराजादिललितै**कविषयकस्तोत्रान्तरेषु त्वव्याहतं ललिताप्रीतिकरत्वमित्याशङ्कामपाकुर्वन्क्रमप्राप्तं प्रीतिप्रदत्वं विवेचयति–

**इदं विशेषाच्छ्रीदेव्याः स्तोत्रं प्रीतिविधायकम् ।**
**जपेन्नित्यं प्रयत्नेन ललितोपास्तितत्परः ॥ २३८ ॥**

इदमिति । इतरस्तोत्रपठनजन्यप्रीतिमपेक्ष्यैतज्जन्याः प्रीतिर्विशिष्टेत्यर्थः । तेन प्रीतिविशेषजनकत्वे सति रहस्यतमत्वमिहैवेति भावः । एतेनाग्निहोत्रदर्शपूर्णमासज्योतिष्टोमविश्वजिदादिकर्मणामायासतारतम्यसाध्यानामेकजातीयस्वर्गफलकत्वायोगे न स्वर्गेषु तरतमभावकल्पनेति पूर्वतन्त्रसिद्धन्यायादेव देवताप्रीतावपि बहुभिः स्तोत्रैः प्रातिस्विकजनितायां तारतम्यसिद्धेर्विशेषादित्युक्तौ को विशेष इति परास्तम् । इतोऽप्यधिकायाससाध्यकर्मान्तरजनितायां देवताप्रीतावपि तेन न्यायेनेतोऽपि प्रीत्याधिक्यप्राप्तौ तन्माप्रसाङ्क्षीदित्याशयेन विशेषपदोपादानस्य सार्थक्यात् । अत एव च रहस्यतमत्वमप्युपपद्यते । तस्मात्प्रकृष्टेनापि यत्नेन ललितोपासको यावज्जीवमिदं जपेदित्यर्थः ॥ २३८ ॥

जपकाले विधिमाह द्वाभ्याम्—

**प्रातः स्नात्वा विधानेन सन्ध्याकर्म समाप्य च ।**
**पूजागृहं ततो गत्वा चक्रराजं समर्चयेत् ॥ २३९ ॥**

प्रातरित्यादिभ्याम् । विधानेन वैदिकतान्त्रिकोभयप्रकारेण । काकक्षिन्यायेनास्य स्नानसन्ध्ययोरन्वयः । पूजागृहगमनं द्वारपूजाद्युपलक्षणम् । चक्रराजं श्रीचक्रम् । समर्चयेदिति स्वार्थे णिच् । अशक्तौ प्रयोजककर्तृपरो वा ॥ २३९ ॥

**विद्यां जपेत्सहस्रं वा त्रिशतं शतमेव वा ।**
**रहस्यनामसाहस्रमिदं पश्चात्पठेन्नरः ॥ २४० ॥**

विद्यां पञ्चदशीं षोडशीं वा । न तु स्त्रीदेवत्यमन्त्रसामान्यम् । सहस्रं वेत्यादिष्वष्टोत्तरशतमिति शेषः । त्रिशतं शतत्रयं न तु त्र्युत्तरशतम् । नायं तुल्यबलो विकल्पः किन्तु पूर्वासम्भवे परोऽनुकल्प इति द्योतयितुमेवकारः । पश्चात् विद्याजपपुष्पाञ्जलिदानयोर्मध्ये । अत एव जप्त्वा पुष्पाञ्जलिं दद्यादिति कथितं तयोः पौर्वापर्यं नाव्यवहितम्, किन्तु सहस्रनामपाठेन व्यवहितमेव । वेदवेदिकरणयोरिव क्षुताचमनेन वेदाध्ययनस्नानयोरिव च मीमांसाध्ययनेनेति भावः । अत्र प्रातः स्नात्वेत्यादिः सर्वोऽपि विध्यन्तरप्राप्तानुवादः । सहस्रनामपाठे कालमात्रं तु विधेयम् । अत एव जपपाठयोर्न परस्परमङ्गाङ्गिभावोऽपि । द्वयोरपि प्रातिस्विकविधिभ्यां फलवत्तया सहस्रनामकीर्तनस्यापि विध्यन्तरेणैव फलार्थतयाऽवगतत्वेन **'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते'**त्यादाविव कालार्थस्यैव संयोगस्य निर्णयात् । स्नानादिप्रधानपञ्चकस्य क्रम एव वा विततिरूपो विधेयः । तेनान्यतमप्रधानाकरणेऽपि- **'अनपायो हि कालस्ये'**ति न्यायेनावैगुण्यात्फलानुत्पत्तिरपास्ता ॥ २४० ॥

प्रीतिविशेषस्येतरव्यावृत्तस्योक्तं भाव्यत्वं विशेषाज्ञानादनवगतप्रायमेवेत्यतो विशेषपदवाच्यं परिमाणमाह सार्धैरेकादशभिः—

**जन्ममध्ये सकृच्चापि य एवं पठते सुधीः ।**
**तस्य पुण्यफलं वक्ष्ये शृणु त्वं कुम्भसम्भव ॥ २४१ ॥**

जन्ममध्य इत्यादिभिः । उक्तप्रकारेण जन्ममध्ये सकृत्पठितनामसहस्रान्तर्गतस्यैकैकस्य नाम्नः कीर्तनादयं वक्ष्यमाणः पुण्यराशिः स पुनः सहस्रगुणितश्चेत्सकृत्स्तोत्रपाठस्य फलम् । यावज्जीवं क्रियमाणस्य स्तोत्रपाठस्य यावत्य आवृत्तयः सम्भवेयुस्तावद्वारं तत्फलं गुणयित्वा तज्जनिकाया देवताप्रीतेः परिमाणं बुद्धिमद्भिरूहनीयमिति समुदायार्थनिष्कर्षः । वक्ष्यमाणार्थस्य दुरूहत्वादेव वक्ष्य इति प्रतिज्ञापूर्वकं शृण्विति शिष्यस्य सावधानतासम्पादनम् ॥ २४१ ॥

**गङ्गादिसर्वतीर्थेषु यः स्नायात्कोटिजन्मसु ।**

गङ्गादीत्यादिपदेन पुष्करादेः परिग्रहः । '**पुष्कराद्यानि तीर्थानी**'त्यादौ पुष्करस्यैव सर्वतीर्थादित्वेन प्रसिद्धावपि ततोऽप्यादित्वेन गङ्गाया ग्रहणं तस्यास्त्रिलोकगामित्वेन गङ्गापदादुपस्थितौ तत्तल्लोकगततीर्थानामपि सर्वपदेन संग्रहार्थम् । अत एव गङ्गापदं **भविष्योत्तरपुराणे** तथैव निरूप्यते—

**यस्माद्भगीरथो देवि स्वर्गाद्गां त्वामिहानयत् ।**
**अतस्त्वं मुनिभिः सर्वैर्गङ्गेति परिकीर्त्यसे ॥'**

इति । तीर्थान्तरग्रहणे तु भूलोकगतान्येव सर्वतीर्थानि भासेरन् । अत्र प्रतिदिनं श्रद्धया परया सहस्रपरिवत्सरानित्येतत्पदचतुष्टयमुत्तरत्र पठ्यमानं पूर्वत्र सर्वत्रान्वेतव्यम् । कोटिजन्मस्विति तूत्तरत्र सर्वत्रापि । एवं त्रैलोक्यान्तर्गतानां निखिलतीर्थानां मध्ये एकस्मिंस्तीर्थे प्रतिदिनं विधिना परया श्रद्धया स्नानेन सहस्रपरिवत्सरपूर्तिरीदृशमेकं जन्म तादृशकोटिजन्मपर्यन्तमेकतीर्थस्नानजनितं पुण्यम् । तथैव सर्वतीर्थस्नानजनितपुण्यानीत्येषां राशिरेकः ।

**कोटिलिङ्गप्रतिष्ठां तु यः कुर्यादविमुक्तके ॥ २४२ ॥**

'**एकस्मिंस्थापिते लिङ्गे विश्वं संस्थापितं भवे**'दित्यादिभिर्वचनैरितरदेवप्रतिष्ठामपेक्ष्य शिवप्रतिष्ठाया आधिक्यं मन्वान आह—लिङ्गेति । काश्यां तावत्काशीवाराणस्यविमुक्तमन्तर्गृहं चेति चत्वारि स्थानानि बृहज्जाबालादावाम्नातानि । तेषु पूर्व-

पूर्वस्योत्तरोत्तरं व्याप्य प्रञ्चक्रोशवत् उत्तरोत्तरं पुण्यवच्च । तेष्वन्तर्गृहमतीवोत्तमम् । तद्धि परमशिवस्य शरीरमेव । शरीरशरीरिणोश्चाभेदान्नित्यत्वाच्च–

**'अविशब्देन पापानि कथ्यन्ते द्विजसत्तम ।**
**तैर्मुक्तं न मया व्यक्तमविमुक्तमतः स्मृतम् ॥'**

इति **लिङ्गपुराणोक्तस्य** द्विविधस्यापि निर्वचनस्यान्तर्गृह एव मुख्यतयोपपत्तावपि तद्व्यापकस्थानविशेषनिरूढलक्षणया प्रयोगबाहुल्यात्पण्डितपामरसाधारण्येनान्तर्गृहस्य मुख्यमविमुक्तत्वमिति ज्ञानाभावादज्ञातं सदविमुक्तमन्तर्गृहमेवेति ज्ञापयन्नाह– अविमुक्तके इति । अज्ञातार्थे कप्रत्ययः । अन्तर्गृह इत्यर्थः । अन्तर्गृह इत्यनुक्तिरुक्तनिर्वचनस्मारणेन पुण्यातिशयवत्त्वद्योतनाय । ततश्चान्तर्गृहे सहस्रपरिवत्सरपर्यन्तं प्रतिदिनं परया श्रद्धया कोटिलिङ्गानि यः प्रतिष्ठापयति तदेकजन्मजनितं पुण्यं तस्य कोटिसंख्यागुणनेन जातो राशिर्द्वितीयः ॥ १४२ ॥

**कुरुक्षेत्रे तु यो दद्यात्कोटिवारं रविग्रहे ।**
**कोटिं सौवर्णभाराणां श्रोत्रियेषु द्विजन्मसु ॥ २४३ ॥**

करुणाकृष्टो देशस्तरन्तुकारन्तुकयोर्मध्यवर्ती कुरुक्षेत्रमित्युच्यते । रविग्रहे सूर्योपरागे ।

**'सर्वत्र सर्वदा सर्वं गृह्णन्मुच्येत कर्हिचित् ।**
**उपरागे कुरुक्षेत्रे गृह्णन्विप्रो न मुच्यते ॥'**

इत्यादिना **महाभारतादौ** तत्र प्रतिग्रहीतुः प्रायश्चित्ताभावोक्त्या फलानन्त्यं दाने । यद्यपि **बृहस्पतिस्मृतौ– 'त्रीण्याहुरतिदानानि गावः पृथ्वी सरस्वती'**त्युक्तं तथापि तेष्वपि सुवर्णसाध्यत्वात्तद्दानस्यैवाधिक्यमभिप्रेत्याह–सौवर्णेति । भारो नाम विंशतिस्तुलाः । तुला नाम पलशतम् । **'तुला स्त्रियां पलशतं भारः स्याद्विंशतिस्तुला'**इति **कोशात्** । श्रोत्रियेषु जन्मसंस्कारविद्याभिः संस्कृतेषु **'त्रिभिः श्रोत्रिय उच्यत'** इति **ब्रह्मवैवर्तात्** । देशकालपात्रदेयश्रद्धाज्ञानगोपनानां क्रियास्वतिशयाधायकत्वात्प्रतिधर्मं कानिचिदनुक्तान्यपि योजनीयानि । ततश्च कुरुक्षेत्रे रविग्रहणे सत्पात्राय श्रद्धादिभिः सौवर्णभारकोटिदानं कोटिगुणितं चेदेकं पुण्यम् । अस्य सहस्रपरिवत्सरसम्ब- न्धिदिनसंख्यया गुणने तस्य पुनर्जन्मकोटिभिर्गुणनेन जातः पुण्यराशिस्तृतीयः ॥ २४३ ॥

**यः कोटिं हयमेधानामाहरेद्गाङ्गरोधसि ।**
**आचरेत्कूपकोटीर्यो निर्जले मरुभूतले ॥ २४४ ॥**

अथेष्टापूर्ते आह–'**तरति ब्रह्महत्यां तरति पाप्मानं योऽश्वमेधेन यजते**' इति विहितः क्रतुविशेषो हयमेधः । गाङ्गरोधसि गङ्गासम्बन्धिनि तीरे । ततश्च गङ्गातीरे श्रोत्रियैर्ऋत्विग्भिः सह साङ्गकोट्यश्वमेधयज्ञजनितपुण्यस्य पूर्ववद्दिनसंख्यया पुनः कोटिसंख्यया च गुणनाज्जातो राशिश्चतुर्थः । कूपेति वापीतडागादेरुपलक्षणम् । मरुरिति देशविशेषस्य संज्ञा । तेन न निर्जलपदानर्थक्यम् । तादृशदेशे कूपादि-कोटिखननजनितपुण्यस्य पूर्ववद्दिनसंख्यया जन्मकोटिसंख्यया च गुणने जातो राशिः पञ्चमः ॥ २४४ ॥

**दुर्भिक्षे यः प्रतिदिनं कोटिब्राह्मणभोजनम् ।**
**श्रद्धया परया कुर्यात्सहस्रपरिवत्सरान् ॥ २४५ ॥**

दुर्लभा भिक्षा यस्मिन्स सकलो देशोऽपि दुर्भिक्षः । तत्र कोटिसंख्यानामुत्त-मब्राह्मणानामुत्तमषड्रसोपेतभोजनदानेन जातस्य पुण्यस्य दिनसंख्यया पुनः कोटि-संख्यया च गुणनाज्जातो राशिः षष्ठः । परिवत्सरानित्यत्यन्तसंयोगे द्वितीया । द्वादशसहस्रवर्षेष्वनवरतमित्यर्थः । संवत्सरपरिवत्सरेदावत्सरेद्वत्सरानुवत्सरशब्दानां प्रभवप्रमाथिखरशोभनराक्षसादिद्वादशद्वादशवर्षविशेषवाचित्वेऽपि प्रकृते सामान्य-मात्रोपलक्षकत्वात् ॥ २४५ ॥

**तत्पुण्यं कोटिगुणितं लभेत्पुण्यमनुत्तमम् ।**
**रहस्यनामसाहस्रे नाम्नोऽप्येकस्य कीर्तनात् ॥ २४६ ॥**

तेषां तीर्थस्नानशिवप्रतिष्ठास्वर्णदानेष्टापूर्तब्रह्मभोजनोत्थानां षण्णां पुण्यराशीनां याः कोटयस्ताभिर्गुणितं पुण्यमुपस्थितत्वात्तमेव पुण्यषट्कमहाराशिं लभेतेत्यर्थः । अयं भावः–षण्णामपि पुण्यराशीनामेकं महाराशिं विभाव्य तं द्विरावृतं कृत्वा स्थलद्वये निक्षिप्य तयोर्मध्ये एकं राशिं कोटिसंख्यया गुणयित्वा तज्जन्यया संख्यया परं राशिं गुणयेत् । तत्र गुण्यस्य राशेरेकसंख्यावच्छिन्नत्वे तस्य गुणनं व्यर्थम् । अतः संख्यान्तरवच्छिन्नत्वस्यावश्यकत्वे सत्युपस्थितत्वात्कोटिरूपैव संख्या गुण्या वाच्या । ततश्च द्वावपि महाराशी प्रातिस्विकं कोटिकोटिगुणितौ कृत्वा जातौ संख्यापिण्डौ पुनः परस्परं गुणयेदिति सिद्ध्यति । तेन च तं महाराशिं कोटिसंख्यया गुणयित्वा जातं पिण्डं पुनः कोटिसंख्ययैव गुणयेदिति फलति । तं महाराशिं समुद्रसंख्यया गुणयेदिति तु निष्कर्षः । समुद्रो नाम कोटिसंख्यायाः कृतिसंज्ञकः समद्विघातः । कोटिगुणिता कोटिरिति यावत् । तदुक्तं वायुपुराणे–

**'सहस्रं तु सहस्राणां कोटीनां दशधा पुनः ।**
**गुणितं चेत्समुद्रं तं प्राहुः संख्याविदो जनाः ॥'**

इति । इदञ्च पुण्यपदस्य गुणकस्थाने गुण्यस्थाने चेति द्विःप्रयोगाल्लभ्यते । पुण्यकोट्येति व्यत्यस्तानुक्तिबलात्कोटिभिर्गुणितमिति बहुवचनान्तेन विग्रह इति च लभ्यते । सर्वमिदं फलमुपक्रमानुसारात्स्तोत्रपाठस्यैवेति भ्रमो माप्रसञ्जीत्यत आह– नाम्नोऽप्येकस्येति ॥ २४६ ॥

**रहस्यनामसाहस्रे नामैकमपि यः पठेत् ।**
**तस्य पापानि नश्यन्ति महान्त्यपि न संशयः ॥ २४७ ॥**

इदानीं पुण्यराशिजनकत्ववत्पापराशिनाशकत्वमप्येकैकस्य नाम्नः फलमित्याह । अपिशब्द उपपातकादेः कैमुतिकन्यायेन वाचकतया वाच्यतया वा समुच्चायकः ॥ २४७ ॥

**नित्यकर्माननुष्ठानान्निषिद्धकरणादपि ।**
**यत्पापं जायते पुंसां तत्सर्वं नश्यति द्रुतम् ॥ २४८ ॥**

तानि च पापानि यद्यपि–

**'विहितस्याननुष्ठानान्निन्दितस्य च सेवनात् ।**
**अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥'**

इति **स्मृतौ** निमित्तत्रैविध्यात्त्रिविधानि प्रतिपाद्यन्ते, तथापीन्द्रियनिग्रहतदभावयोर्विहितप्रतिषिद्धत्वाभ्यां तज्जन्यपापानामुक्तविधयोरेवान्तर्भाव इत्यभिप्रेत्य द्वैविध्येनैव गणयति । तत्तद्वर्णाश्रमभेदेन **श्रुतिस्मृतितन्त्रेषु** विहितान्यकरणे प्रत्यवायफलकानि सन्ध्यावन्दनोपरागस्नानादीनि नित्यकर्माणि । तेनैव नैमित्तिकानामपि संग्रहात् । कलञ्जभक्षणादीनि निषिद्धानि । द्रुतं प्रायश्चित्तान्तरानपेक्षम् ॥ २४८ ॥

एतज्जन्यपुण्यराशेरिवैतन्नाश्यपापराशेरपीयत्ता बुद्धिमद्भिरेवोह्येत्याशयेन शिष्यं पुनरपि सावधानीकुर्वन्नाह सार्धेन–

**बहुनात्र किमुक्तेन शृणु त्वं कलशीसुत ।**
**अत्रैकनाम्नो या शक्तिः पातकानां निवर्तने ॥ २४९ ॥**
**तन्निवर्त्यमघं कर्तुं नालं लोकाश्चतुर्दश ।**

कलशीति । जातिलक्षणो ङीष् । तन्निवर्त्यं तया शक्त्या नाश्यं अघं पापं नालं न समर्थाः लोकाः जनाः चतुर्दश चतुर्दशभुवनगताः समस्तभुवनगताः । समस्ताः प्राणिनः प्रतिक्षणमासुप्तेरामृतेश्च कोटिकोटिजन्मभिरुच्चावचानि पापानि कुर्वन्ति चेद्यावान्पापराशिः स्यात्ततोऽप्यनवधिकोऽधिक एकैकनाम्नो निवर्त्यस्तस्य सहस्रगुणनेन सम्पूर्णस्तोत्रपाठफलत्वमित्यूह्यमिति भावः ॥ २४९-४९$\frac{1}{2}$ ।

यस्तावच्छ्रीविद्योपासक ईदृशं पापनाशनोपायमनादृत्य स्मार्तानि प्रायश्चित्तानि चिकीर्षति तस्यैतदनादरणजन्यः पापराशिस्तैरप्यनपोद्य आपततीति वृश्चिकभयात्पलायमानस्य क्रुद्धाशीविषमुखे स्वात्मगूहनाय प्रवृत्तिवदुपहसनीयतां निदर्शनालङ्कारेण ध्वनयन्नाह—

**यस्त्यक्त्वा नामसाहस्रं पापहानिमभीप्सति ॥ २५० ॥**
**स हि शीतनिवृत्त्यर्थं हिमशैलं निषेवते ।**

य इति । अभीप्सति पापहानिमुद्दिश्य प्रायश्चित्तान्तरं कुरुते । निषेवत इत्यस्य वा सेवितुमिच्छतीत्यर्थः । वाक्यार्थयोरैक्यारोपानुगुण्यात् । अथवा प्रायश्चित्तान्तरचिकीर्षायामेव हिमवत्पर्वतसेवनैक्यारोपेण प्रायश्चित्तक्रियायास्तु सदृशी क्रिया नास्त्येवेति तत्कर्तुर्मूर्खतातिशयो ध्वन्यः ॥ २५०-२५०$\frac{१}{२}$ ।

**भक्तो यः कीर्तयन्नित्यमिदं नामसहस्रकम् ॥ २५१ ॥**

नन्वेवं सति प्रायश्चित्तशास्त्राणामानर्थक्यमित्याशङ्क्यां परिहरन्प्रीतिविशेषपरिमाणमुपसंहरति—**भक्त इति** । भक्तः उपासकः । नित्यं यावज्जीवम् । इदं पूर्वोक्तविततिरूपक्रमविशिष्टत्वेन बुद्धिस्थम् ॥ २५१ ॥

**तस्मै श्रीललितादेवी प्रीताभीष्टं प्रयच्छति ।**

प्रीता प्रीतिविशेषयुक्ता सती । अबीष्टम् उक्तपुण्यराशिजननपापराशिनाशनोभयरूपम् ।

अत्रेदं बोध्यम्— इदं विशेषाच्छ्रीदेव्या इति प्रीतिविशेषजनककर्मोपक्रमावसरे पाठे चत्वारि विशेषणान्युल्लिखितानि—उपासककर्तृकत्वं सम्पूर्णस्तोत्रकर्मकत्वं यावज्जीवं क्रियमाणत्वं प्रातःस्नानादिप्रधानचतुष्टयसाहित्यं चेति । तान्येव चास्मिन्नुपसंहारश्लोकेऽपि पुनः परामृष्टानि । उपक्रमोपसंहारयोरैकरूप्यादिमानि विशेषणानि विवक्षितान्येव । अविवक्षायां प्रमाणाभावात् । तत्र प्रथमेन विशेषणेन प्रायश्चित्तशास्त्राणां वैयर्थ्यं निरस्तम् । तेषामनुपासकेषु सावकाशत्वेन तत्परतयैव व्यवस्थोपपत्तेः । द्वितीयेन त्वेकैकनाममात्रपाठेनात्मानं कृतकृत्यं मन्यमाना निरस्ताः । एकैकनामपाठस्य पार्थक्येन प्रयोगस्य निष्प्रमाणत्वेन तस्येदृशमहाफलजनकत्वे मानाभावात् । न च **'नाम्नोऽप्येकस्य कीर्तना'**दिति वचनमेव राजसूयान्तर्गतावेष्टेरिव पृथक्प्रयोगे मानाभावात् । न च **'नामैकमपि यः पठेत्'**, **'नाम्नोऽप्येकस्य कीर्तनात्'** इत्यादीनि प्रकरणस्थान्येव वचनानि पृथक्प्रयोगे प्रमाणमिति वाच्यम् । उपक्रमोपसंहाराभ्यामेकवाक्यत्वे सिद्धे तन्मध्यपठितानामीदृशवचनानामवयवद्वारावयविन्येव तात्पर्यस्य जातेष्टिवाक्य-

मध्यपठिताष्टाकपालादिवाक्यन्यायेन सिद्धेः। यत्रैकस्यापि नाम्न एतावत्फलम्, किमु वक्तव्यं तत्र सम्पूर्णस्तोत्रस्य तावत्फलं भवतीति कैमुतिकन्यायेन स्तोत्रप्रशंसोपपत्तेः, अपिशब्दस्वारस्येन तथा प्रतीतेश्च। यद्वा एकस्य नाम्न एतावत्फलमित्युक्ति-रेतत्सहस्रगुणितस्य स्तोत्रफलत्वसिद्ध्यर्था न तु पार्थक्येन फलवत्त्वसिद्ध्यर्थापि। उभयत्र तात्पर्ये वाक्यभेदप्रसङ्गात्। अत एव **'एकं वृणीत'** इत्यादेः **'त्रीन्वृणीत'** इत्येतदुपपादनार्थतायाः स्वीकारात्। एकाक्षरादिषोडशाक्षरान्तनाम्नां तुल्यफलकत्वा-योगाच्च। तथात्वे इतरवैयर्थ्यादिदोषाणां स्पष्टत्वात्। तृतीयेन तु विशेषणेनानियमेन कतिपयदिवसपर्यन्तपाठादेव तादृशफललिप्सा निरस्ता। **'जन्ममध्ये सकृच्चापि य एवं पठते सुधी'**रिति वचनस्याप्येकवाक्यमध्यपठितत्वेनापिशब्दस्वारस्याच्चोक्तरीत्या द्वयी गतिरूह्या। चतुर्थेन विशेषणेनाग्नेयादीनां षण्णां परस्परसाहित्याभावे फलानुत्पत्ति-वदिहापि तथेति सूचितम्।

इयांस्तु विशेषः– आग्नेयादीनां दर्शपूर्णमासवाक्येन सहितानामेकफलसाधनत्वा-वगमादन्यतमाभावेऽपि फलोत्पत्तिरेव न भवति। इह तु सहस्रनामपाठाभावेऽप्यन्येभ्यः प्रधानेभ्यस्तत्तत्फलान्युत्पत्तुमर्हन्त्येव। नं च प्रधानान्तरसाहित्याभावमात्रेण सहस्रनाम-पाठस्य नैष्फल्यं कथं सुवचमिति वाच्यम्। ईदृशप्रयोगजन्यफलविशेषस्य प्रमाणा-भावादनुत्पत्तावपि नामस्मरणजन्यफलान्तराणां वचनान्तरादधिगतानां सम्भवेन नैष्फल्यायोगादिति दिक्।

इदानीमुपास्तिशरीरघटकत्वादप्येतदावश्यकमित्याहार्धेन–

**अकीर्तयन्निदं स्तोत्रं कथं भक्तो भविष्यति ॥ २५२ ॥**

अकीर्तयन्निति। उपासकानामुपास्यदेवताप्रीतिजननमपेक्ष्य पुरुषार्थान्तराभावा-ज्जनककर्मण्यनादरे कथं भक्तता। अपितु न कथञ्चिदपीत्यर्थः। अयं भावः–

**'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥'**

इति **स्मृत्युक्तानां** चतुर्विधानां भक्तानां मध्ये आर्तानां पापनिवृत्त्यर्थम्, जिज्ञासुभक्तानां निष्कामानामपि चित्तशुद्ध्यर्थम्, अर्थार्थिभक्तानामर्थसिद्ध्यर्थम्, ज्ञानिभक्तानां लोक-संग्रहार्थम्, कीर्तनस्यावश्यकत्वाद्भजकतावच्छेदकशरीरघटकं नामकीर्तनम्। तदिदं **'महापातकिनां त्वार्ता'**वित्याद्यधिकरणेषु **भक्तिमीमांसाभाष्ये** स्पष्टमिति ॥ २५२ ॥

इदानीमुक्तविशेषणचतुष्टये तृतीयविशेषणाशक्तान्प्रति पक्षान्तरमनुकल्प्यमाह द्वाभ्याम्–

**नित्यं संकीर्तनाशक्तः कीर्तयेत्पुण्यवासरे।**
**संक्रान्तौ विषुवे चैव स्वजन्मत्रितयेऽयने ॥ २५३ ॥**

नित्यमिति। पुण्यवासरे कपिलाषष्ठ्यर्धोदयादिदिवसे। वक्ष्यमाण- संक्रान्त्यादेरेव वा सामान्येन कीर्तनमिदम्। विषुवे मेषतुलाराश्योः सूर्यप्रवेशदिने। स्वजन्मत्रितये स्वस्य स्वभार्यायाः स्वपुत्रस्य च जन्मनक्षत्रेषु, स्वस्य जन्मकालीनं नक्षत्रं तत्पूर्वपरनक्षत्रे द्वे इत्येवं त्रितयें वा, स्वस्य जन्मनक्षत्रमारभ्य गणनायां प्रथमदशमैकोनविंशनक्षत्रत्रयदिवसेषु वा, स्वजन्मदिवसदीक्षादिवस-पूर्णाभिषेक-दिनत्रये वा। एवं व्याख्यावैचित्र्यस्थले यथासम्प्रदायं व्यवस्था। '**तन्त्राणां बहुरूपत्वात्कर्तव्यं गुरुसम्मत**'मिति वचनात्। अयने कर्कमकरयोः सूर्यप्रवेशदिने। संक्रान्त्यैव सिद्धे विषुवायनयोर्ग्रहणं गोबलीवर्दन्यायेन पुण्यतरत्वद्योतनेनात्यावश्य-कताद्योतनाय वा, तत्तत्संक्रमणेभ्यः पूर्वं कतिपयैर्दिवसैस्तत्तदयनं **ज्योतिःशास्त्रे** प्रसिद्धं तदेव वेहायनपदेन विवक्षितम्॥ २५३॥

**नवम्यां वा चतुर्दश्यां सितायां शुक्रवासरे।**
**कीर्तयेन्नामसाहस्रं पौर्णमास्यां विशेषतः॥ २५४॥**

नवम्यां वेति वाकारोऽष्टमीसंग्रहार्थः। सितायामिति नवम्यादिषु तिसृष्वन्वेति। चतुर्दश्यामेव वा शुक्लपक्षीयायामित्यर्थः। अत्र चकाराद्यावज्जीवं प्रत्यहं कीर्त-नाशक्तस्यैतेषु दिवसेषु समुच्चित्य कीर्तनम्। अत्राप्यशक्तश्चेदन्यतमं दिवसं परित्यजेदिति द्योतनाय वाकारः। अन्यतमस्य परित्यागपक्षेऽपि पौर्णमासी न परित्याज्येति द्योतयन्नाह–विशेषत इति। यदि च नवम्यादितिथिषु जन्मनक्षत्रं संक्रान्तिः शुक्रवारश्च भवति तदा तन्त्रेण सकृदेव नामसाहस्रपाठ इत्यादिकं न्यायविद्भिरूहनीयम्॥ २५४॥

इयता प्रबन्धेन रहस्यतमत्वं ललिताप्रीतिकरत्वं चेति विशेषणद्वयं विविच्य इतोऽपि विस्तरेण तदेव विशेषणद्वयं विवेचयितुकामस्तयोः प्रथमस्य शरीरघटकेषु फलेषु रोगप्रशमनादेः प्रथमं निर्दिष्टत्वाद्रोगशमनादिचतुष्टयफलकं काम्यं प्रयोगं प्रथममाह द्वाभ्याम्–

**पौर्णमास्यां चन्द्रबिम्बे ध्यात्वा श्रीललिताम्बिकाम्।**

**पौर्णमास्यामिति**। पौर्णमासीशब्दः शुक्लपक्षस्य चरमरात्रिपरः। '**दर्शादृष्टे**'त्यनुवाके तादृशरात्रिमानत्वेन परिगणनात्। तेनास्मिन्प्रयोगे रात्रिव्यापिनी तिथिर्ग्राह्येति सिद्ध्यति। '**कर्मणो यस्य यः कालस्तत्कालव्यापिनी तिथि**'रिति वचनात्,

**'यां तिथिं समनुप्राप्य उदयं याति भास्करः।**
**सा तिथिः सकला ज्ञेया स्नानदानव्रतादिषु॥'**

इति वचनस्य मुहूर्तमात्रसत्त्वेऽपि **'दिने गौरीव्रतं पर'** इत्यादिविध्यन्तरशेषत्वेन प्रकृते तदनुपयोगात् उभयत्रैकदेशव्याप्तौ परा । वस्तुतस्तु तत्तत्तिथिनित्यामन्त्रजपार्चादौ तान्त्रिकैरुदयकालव्यापिन्येव तिथिर्गृह्यते । वचनमपि लिख्यते—**'तिथिरौदयिकी ग्राह्या तिथिनित्यार्चनादिष्वि'**ति । तेन यत्र दिवैव पौर्णमासी समाप्ता तस्यास्तिथेश्चित्रा-देवत्यत्वात्पौर्णमासीत्वे सिद्धे **'दर्शादृष्टे'**त्यनुवाकस्यापि तत्तद्देवत्यतिथिसम्बन्धि-रात्रिमात्रोद्देशेन नामविधानपरत्वेन तद्रात्रेरेव पौर्णमासीसंज्ञोपपत्तेः, **'यां तिथि'**मिति वचनस्य गौरीव्रतकालविधिंप्रतीवेदृशविधिंप्रत्यपि शेषतायाः सुवचत्वादौदयिक्येव तिथिरिह ग्राह्या । उदयद्वयव्यापित्वे तु दिनद्वयमपि वैकल्पिकः काल एव । तिथिनित्यार्चने तथैव स्वीकारात् । अत एव यत्रोदयो चतुर्दश्यल्पतरा ततः पौर्णमासी प्रवृत्ता सत्युदयान्तरात्पूर्वमेव समाप्यते तत्र तद्दिन एव चित्रार्चनवदयं प्रयोगोऽपि कर्तव्य इति दिक् । चन्द्रबिम्बे चन्द्रस्य पूर्णमण्डले । तत्र हि सादाख्यैका कला सदातनी त्रिपुरसुन्दरीरूपा । अन्याः पञ्चदशकला वृद्धिह्रासभागिन्यः । ताश्च कामेश्वर्यादिचित्रान्ततिथिनित्यापञ्चदशकस्वरूपाः । अतस्तासां परिपूर्तौ षोडश-नित्याभिस्तत्किरणदेवताभिरणिमादिभिश्च योगाच्चन्द्रमण्डलं प्रत्यक्षश्रीचक्रात्मकं सम्पद्यते । अनेनैवाशयेन **'चन्द्रमण्डलमध्यगे'**त्यादीनि नामानि । अत एव शालग्राम-बाणलिङ्गादौ हरिहरयोरत्यन्तानवरतसान्निध्यप्रयुक्तावावाहनाभाववदिहापि त्रिपुर-सुन्दर्यास्तथा सन्निधानादावाहनं तन्मुद्राश्च न प्रदर्श्याः । ध्यात्वा पूर्वोक्तावयववै-शिष्ट्येन सावरणत्वरूपलोकातीतत्वेन च विचिन्त्य ललिताम्बिकापदेनैव कर्मणो निर्देशात्तस्य चोक्त**पाद्मवचना**द्युक्तनिर्वचनानुसारेण तत्रैव पर्यवसानात् ।

**पञ्चोपचारैः संपूज्य पठेन्नामसहस्रकम् ॥ २५५ ॥**

पञ्चसंख्यैरुपचारैः गन्धपुष्पधूपदीपनैवेद्यैः संपूज्य **'तद्योऽहं सोऽसौ योऽसौ सोऽहं तत्त्वमेव त्वमेव त'**दित्यादि श्रुत्युक्तरीत्या परस्परप्रतियोगिकत्वरूपसम्यक्त्वेन स्वात्म-देवतयोरैक्यं विभाव्यम् । एतदेव ह्युपचारान्प्रति प्रधानम्—

**अश्वमेधसहस्राणि वाजपेयशतानि च ।**
**ललितापूजनस्यैते लक्षांशेनापि नो समाः ॥**
**स दाता स मुनिर्यष्टा स तपस्वी स तीर्थगः ।**
**यः सदा पूजयेद्देवीं गन्धपुष्पानुलेपनैः ॥'**

इति **पद्मपुराणीये** विधिवाक्ये पूजायाः फलसंयोगदर्शनात् । उपचाराणां तु फलवदफलन्यायेन तदङ्गत्वम् । अत एव **'गन्धपुष्पानुलेपनै'**रिति **'पञ्चोपचारै'**रिति च

तृतीया। यानि च पाद्म एव **'गन्धानुलेपनं कृत्वा ज्योतिष्टोमफलं लभे'**दित्यादीनि तत्तदुपचारेषु फलश्रवणानि तानि तु पर्णतान्यान्येनार्थवादः। यानि तु–

**'चन्दनागरुकर्पूरैः सूक्ष्मपिष्टैः सकुङ्कुमैः।**
**आलिप्य ललितां लोके कल्पकोटीर्वसेन्नरः॥'**

इत्यादीनि वचनानि तानि गोदोहनवदङ्गाश्रितगुणफलसम्बन्धविधानार्थानि। अथवा **'अन्तर्यागबहिर्यागौ गृहस्थः सर्वदाचरे'**दित्यादिना पूजाद्वैविध्यावगमादैक्यभावनमन्तर्याग एव। बाह्यपूजा तु गन्धपुष्पादीनां निवेदनात्मको मानसः संकल्प एव। तेषु गन्धादेः करणत्वादङ्गत्वम्। **'गन्धादीनि निवेदये'**दित्यादौ सक्तुन्यायेन विनियोगभङ्गः। यन्त्रादिषु गन्धादिप्रक्षेपा उपचारपदवाच्या निवेदनानामङ्गम्। तेषां च षोडशादिसंख्यानां समप्रधानानां यथावचनं साहित्येन फलकरणत्वमित्यादि यथायथमूह्यम्। सर्वासां च पूजानां क्रमपूजा प्रकृतिः। काम्यनैमित्तिकादिपूजान्तरेषु तत एव धर्मातिदेशः। इयं त्वपूर्वैव पूजा। क्लृप्तोपकाराणां पञ्चोपचाराणां प्राकृताङ्गानां पुनः श्रवणेन गृहमेधीयन्यायेन चोदकलोपात्। एषूपचारेषु करणमन्त्रस्तु **'श्रीललिताम्बिकायै नमः'** इत्येवंरूपः। **'विधिशब्दस्य मन्त्रत्व'**मित्यधिकरणन्यायेन कल्पमाने नियमे वैधपद-नियमात्। यद्वा तृतीयकूटमेव करणमन्त्रः **'विद्यातृतीयखण्डेन कुर्यात्सर्वोपचारकानि'**ति **तन्त्रराज**वचनात्। न चास्य प्रकृतिप्रकरणे पाठात्क्रमपूजाङ्गत्वेन चोदकविरहिताया-मपूर्वपूजायां कथं प्राप्तिरिरिति वाच्यम्। प्रधानभूतायाः पूजाया अपूर्वत्वेऽपि तदङ्गभूतोपचाराणां प्राकृतोपचारविकृतित्वादितिकर्तव्यताकाङ्क्षायां नामातिदेशस्योप-चाराङ्गत्वेन धर्मप्रापकत्वे बाधकाभावात्। कथमन्यथा गृहमेधीयेऽप्याज्य-भागाङ्गयाज्यानुवाक्यामन्त्राणां प्राप्तिः सङ्गच्छते। अत एवापूर्वेऽप्यवभृथे साङ्गप्रधानार्थस्य प्राकृतहोतृवरणस्याज्यभागाङ्गत्वेन प्राप्तिसम्भवात् **'न होतारं वृणीते'** इति निषेधो युज्यत इत्युक्तं मिश्रैः। एतेन नैवेद्याङ्गाचमनादिकमपि व्याख्यातम्। सम्पूज्येति ल्यप्प्रत्ययेन पूजनकरणकभावनायाः पाठकरणकभावनाङ्गत्वं विधीयते। पठेदित्यनेन तु पाठकरणिका प्रधानभावना। **'वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेते'**ति वाक्ये भावनाविशिष्टभावनान्तरविधिवत्पूजनकरणक- भावना-रूपाङ्गोत्तरकालिकेन नामसहस्रवता पाठेन रोगनाशादिरूपमिष्टं भावये- दित्यर्थः। अत्र च ध्यात्वेति पदस्य पुनरन्वयात्तत्रत्यत्वाप्रत्ययस्य **'मुखं व्यादाय स्वपिती'**त्यादाविव समान- कालिकत्वार्थकतया शत्रन्ते पर्यवसानाद्ध्यायन्पठेदिति सम्प्रदायः॥ २५५॥

**सर्वे रोगाः प्रणश्यन्ति दीर्घमायुश्च विन्दति।**
**अयमायुष्करो नाम प्रयोगः कल्पनोदितः॥ २५६॥**

इष्टं विशिनष्टि–सर्वे रोगा इति। नश्यतिरिह ध्वंसप्रागभावादिसाधारणा-भावमात्रपरः। दीर्घायुष्यं अपमृत्युकालमृत्युद्वयाभावौ। चकारात्सम्पदां ग्रहणम्। तेन

रोगसामान्याभावविशिष्टसम्पन्नचिरतरजीवित्वं भाव्यं सिद्ध्यति । तेन रोगिण इव नीरोगस्यापि रोगप्रागभावपरिपालनोद्देशेनास्मिन्प्रयोगेऽधिकारः सिद्धः । संकल्पव्यवहारादावुपयोगित्वेन नामधेयं प्रदर्शयति–अयमायुष्कर इति । करोतीति करः पचाद्यच् । आयुषः कर आयुष्करः । कस्कादेराकृतिगणत्वाद्विसर्गस्य षत्वम् । नामेत्यव्ययं संज्ञाकृतप्रसिद्ध्यर्थकम् । कल्पनोदितः कल्पे **कल्पसूत्रे परशुराम**कृते नोदितः सूचितः । कल्पसूत्राणां सर्वेषामितस्ततो विप्रकीर्णपरशाखापठिताङ्गजातोपसंहारेण प्रयोगविधिकल्पनार्थत्वात्तत्र नित्यार्चादिकतिपयप्रयोगकथनेनेतरे प्रयोगास्तत्रानुक्ता अपि सूचिता एवेत्यर्थः । यद्वा कल्पसूत्रतुल्येषु तन्त्रेषु नोदितः कण्ठरवेणोक्तः । अथवा कल्पनेन भाव्यकरणयोः कार्यकारणभावकल्पनेन उदितः समर्थितः । यद्वा कल्पेऽपि प्रलयकालेऽपि नोदितो विहितः । प्रलयाव्यवहितपूर्वकालीनैः साधकैरुत्तरत्र संघातमरणनिश्चयेऽपि दीर्घायुःकामनया कृतोऽयं प्रयोगः प्रलयकालेऽपि तान् रक्षतीत्यर्थः । अथवा अयमायुष्कर इत्याकारको नाम्नां प्रयोगः प्रयुज्यमानता । व्यवहार इति यावत् । कल्पनयावयवशक्तिकल्पनया योगरूढिकल्पनया वोदित उक्तः । तेन न्यायतौल्यादुत्तरेऽपि प्रयोगा ज्वरहरादिनामका ऊह्याः । तत्फलं तु संकल्पादावुपयोग इति सिद्ध्यति ।

अथास्य स्पष्टतरः प्रयोगविधिरुच्यते– चन्द्रतारादिबलविशिष्टे उदयव्यापिपौर्णमासीतिथावहन्येव यथाधिकारं वैदिकं तान्त्रिकञ्च नैत्यकं कर्म समाप्योपोषितः सायाह्ने पुनः स्नात्वा सायंसध्यां वैदिकीं तान्त्रिकीं च नित्यपारायणान्तां निर्वर्त्य सम्यगुदिते पूर्णचन्द्रे शुचौ देशे समन्त्रकमासनं प्रसार्य पूर्वाभिमुखस्तस्मिन्नुपविश्याचम्य मूलेन प्राणानायम्य देशकालौ संकीर्त्य ममान्यस्य वामुकशर्मणोऽमुकगोत्रस्य नीरोगत्वसम्पत्तिदीर्घायुःसिद्ध्यर्थं श्रीललितासहस्रनामस्तोत्ररूपमालामन्त्रस्य सकृत्पठनेनायुष्करं प्रयोगमहं करिष्य इति संकल्य चन्द्रमण्डलं पश्यन्नुन्मीलितलोचन एव तन्मध्ये साङ्गां सावरणां सतिथिनित्यां सगुरुपङ्क्ति त्रिपुरसुन्दरीमवयवशो ध्वात्वा स्वाभिन्नां विभाव्य सः '**श्रीललिताम्बिकायै नमः गन्धान्समर्पयामी**'त्येवंरूपैर्मन्त्रैः प्रत्यक्षान्गन्धपुष्पधूपदीपनैवेद्योपचारान्प्रकृतिवत्सलक्षणान्निवेद्यानुक्तमपि ताम्बूलं सम्प्रदायवशान्निवेद्य चन्द्रमण्डले देवीं पश्यन्नेव प्राथमिकान्पञ्चाशच्छ्लोकान्पठित्वा ऋष्यादिन्यासत्रयं विधाय ध्यानश्लोकं पठित्वा यथाधिकारं प्रणवमुच्चार्य सुव्यक्ताक्षरमर्थानुसन्धानपुरःसरमत्वरन्सहस्रनाममन्त्रं '**श्रीमाते**'त्यादि '**ललिताम्बिके**'त्यन्तं पठित्वान्ते पुनः प्रणवमुच्चार्यर्ष्यादिन्यासत्रयं कृत्वोत्तरभागं तथैव पठित्वा जपं देवीवामहस्ते जलक्षेपपुरःसरं गुह्येति यथालिङ्गं समर्प्य देवीं स्वात्मत्वेन परिणमय्य चन्द्रबिम्बाद् दृष्टिमवतार्याचम्योत्थाय सामायिकान्सन्तर्प्यायमायुष्करः प्रयोगः साङ्गो भवतु तेन च त्रिपुरसुन्दरी प्रीयतामिति तदाशिषो गृहीत्वा स्वयमपि भुञ्जीतेति । नित्यकर्माणि कुर्वतामेव नैमित्तिकेष्वधिकारः ।

उभयानि कुर्वतामेवेदृशेषु काम्येष्वधिकार इति तु तन्त्रान्तरसिद्धोऽर्थो न विस्मर्तव्यः । अस्य कर्मण आवृत्तिरपि क्रियमाणा न दुष्यतीति तूक्तमेव प्राक् ॥ २५६ ॥

एवं सर्वरोगप्रशमनमिति विशेषणचतुष्टयं विविच्य क्रमप्राप्तं सर्वज्वरार्तिशमनं प्रयोगं विवेचयति—

**ज्वरार्तं शिरसि स्पृष्ट्वा पठेन्नामसहस्रकम् ।**
**तत्क्षणात्प्रशमं याति शिरस्तोदो ज्वरोऽपि च ॥ २५७ ॥**

ज्वरेणार्तं पीडितं स्पृष्ट्वा हस्तं ददान एव तत्क्षणात्सद्यः शिरसस्तोदो व्यथा । ज्वरप्रयुक्तपीडामात्रोपलक्षणमिदम् ।

प्रयोगविधिस्तु—ज्वराख्यनिमित्तोद्भवदिवसे कृताह्निकः शुचौ देशे इत्यादि-संकल्पान्तं कुर्यात् । संकल्पे यथालिङ्गमूहः । ज्वरहरं प्रयोगमिति नामोल्लेखः । ततः स्वदक्षिणभागे उदङ्मुखं ज्वरार्तं निवेश्य भस्मना मन्त्रेण वा स्नापयित्वा पूर्वभागं पठित्वा ज्वरार्तस्य शिरसि हस्तं दत्त्वा तं तथैव स्पृशन्नेव मध्यभागं पठित्वा हस्तं निष्कास्योत्तरभागं पठित्वा ब्राह्मणभोजनादिकं कुर्यात् । स्वार्थप्रयोगे तु स्वशिरस्येव हस्तदानम् । यावत्फलोदयमावृत्तिरपि सम्प्रदायसिद्धा, '**आवृत्तिरसकृदुपदेशात्**' इत्यधिकरणन्यायसिद्धा च । आवृत्तिपक्षे प्रथमभागं पठित्वा मध्यभागमेव यथासंकल्पमावर्त्य चरमभागं पठेदिति विशेषः । एवमुत्तरत्र प्रयोगविधिरूह्यः ॥ २५७ ॥

ज्वरादिसाधारण्येन रोगमात्रहरं प्रयोगान्तरमाह—

**सर्वव्याधिनिवृत्त्यर्थं स्पृष्ट्वा भस्म जपेदिदम् ।**
**तद्भस्मधारणादेव नश्यन्ति व्याधयः क्षणात् ॥ २५८ ॥**

सर्वेति । सर्वे च ते व्याधयश्च, सर्वेषां व्याधय इति वा । स्पृष्ट्वा स्पृशन्नेव । इदं नामसहस्रं तस्य मन्त्रितस्य भस्मनो धारणादेव उद्धूलनमात्रात् ॥ २५८ ॥

अथ क्रमप्राप्ते दीर्घायुष्यप्रदायकमित्यत्रोक्ते ग्रहविषबाधानाशने उद्दिश्य द्वौ प्रयोगावाह द्वाभ्याम्—

**जलं संमन्त्र्य कुम्भस्थं नामसाहस्रतो मुने ।**
**अभिषिञ्चेद् ग्रहग्रस्तान् ग्रहा नश्यन्ति तत्क्षणात् ॥ २५९ ॥**

संमन्त्र्य कुम्भमुखे हस्तं क्षिपन्नेव स्तोत्रं पठित्वा । मुने अगस्त्य । अभिषिञ्चेत्स्नापयेत् । मन्त्रितेनैव जलेनेति शेषः । ग्रहाः बालग्रहाद्याः पिशाचा दुष्टस्थानीया नवग्रहाश्च तैर्ग्रस्तान् । पीडया मुमूर्षुकृतान् ॥ २५९ ॥

**सुधासागरमध्यस्थां ध्यात्वा श्रीललिताम्बिकाम् ।**
**यः पठेन्नामसाहस्रं विषं तस्य विनश्यति॥ २६० ॥**

श्रीपुरं यत्र यत्रास्ति तत्र तत्रैकः सुधाह्रदोऽस्ति । सगुणब्रह्मोपासकप्राप्यायामपराजिताख्यनगर्यामरण्याख्यौ द्वौ सुधाह्रदौः स्तः । ब्रह्मरन्ध्रेऽप्येकोऽस्ति । तेषां मध्ये विद्यमानत्वेन यथाधिकारं ध्यात्वा ध्यायन्मनसाभ्यर्च्येति शेषः । विषं स्थावरजङ्गमोभयरूपम् । अयञ्च प्रयोगः प्रायेण न व्यधिकरणफलकः ॥ २६० ॥

पुत्रप्रदमपुत्राणामित्यंशं क्रमप्राप्तत्वाद्विवेचयति–

**वन्ध्यानां पुत्रलाभाय नामसाहस्रमन्त्रितम् ।**
**नवनीतं प्रदद्यात्तु पुत्रलाभो भवेद् ध्रुवम् ॥ २६१ ॥**

वन्ध्यानामिति । अप्रजा-मृतप्रजास्त्रीप्रजा-काकवन्ध्यानां संग्रहाय वन्ध्यानामिति बहुवचनम् । पुत्रलाभायेति पुत्रशब्दोऽपत्यमात्रवचनः । '**पुमांस एव मे पुत्रा जायेरन्नि**'-त्यत्र पुमांस इति विशेषणस्वारस्यात् । '**पौत्री मातामहस्तेने**'ति **मनुस्मृति**प्रयोगाच्च । पुत्रीशब्दात्तद्धितस्वीकारे पौत्रेयीति रूपापत्तेः । अथवा पुत्राश्च दुहितरश्चेति विग्रहे '**भ्रातृपुत्रौ स्वसृदुहितृभ्या**'मित्येकशेषे पुत्रा इत्येव रूपं तेषां लाभः पुत्रलाभस्तस्मै । तेन कन्येच्छूनामप्यस्मिन्प्रयोगेऽधिकारः । '**प्रदद्यात् तमस्मै भक्षं प्रयच्छे**'दित्यत्र व्यवधारण कल्पनया तेन यजेतेत्यर्थवदिहापि वन्ध्या भक्षयेदित्यर्थः । तेन वन्ध्याया गुरूपास्तिलाभे स्वयमपि मन्त्रयित्वा प्राश्नीयादिति सिद्ध्यति । पुत्राणां दुहितॄणां च लाभो ध्रुवं निश्चयेन भवेत् ॥ २६१ ॥

इदानीं पुरुषार्थप्रदायकमिति विशेषणं क्रमप्राप्तत्वात्पञ्चत्रिंशद्भिः श्लोकैर्विवेचयितुकामस्तदन्तर्गते त्रिवर्गे चरमस्यापि पुत्रप्रदप्रयोगेणेह प्रथमं स्त्रीद्वारोपस्थितत्वात्तत्प्राप्तिफलकं वनिताकर्षणप्रयोगमाह सार्धेन–

**देव्याः पाशेन सम्बद्धामाकृष्टामङ्कुशेन च ।**
**ध्यात्वाभीष्टां स्त्रियं रात्रौ पठेनानामसहस्रकम् ॥ २६२ ॥**

देव्या इति । अत्र राज्ञः पुरुष इत्यादाविव देव्याः शब्दमर्यादया गुणत्वेनान्वयेऽप्यर्थतः प्राधान्यादभीप्सितां स्त्रियं पाशेन सम्यग्बद्धामङ्कुशेन कर्षन्तीं देवीं ध्यायन्पठेदित्यर्थः । मन्त्रजपमात्रे तद्देवताध्यानस्यावश्यकत्वेन प्राप्तत्वात्तदाश्रयेण गुणफलसम्बन्धमात्रविधानार्थत्वादस्य वाक्यस्य । न च पठनाश्रयेण पाशाकृष्टस्त्रीध्यानरूपगुणः फलाय विधीयतामिति वाच्यम् । तथापि देवीध्यानस्य विध्यन्तरप्राप्तस्य निरपवादत्वेन फलाय विधीयमानस्य ध्येयरूपगुणस्य विषयितासम्बन्धेन ध्यानाश्रितस्यैव सामञ्जस्यात् । ध्यानपाठयोरेककालीनत्वादिविप्रकृष्टसम्बन्धस्या-

प्रयोजकत्वेनाश्रयाश्रयिभावसम्बन्धायोग्यत्वात् । रात्रौ रात्रिमभिव्याप्य । पठेत् आवर्ययेत् ॥ २६२ ॥

**आयाति स्वसमीपं सा यद्यप्यन्तःपुरं गता ।**

अन्तःपुरं शुद्धान्तं गता यद्यपि तथापि तादृशादपि स्थालत्समीपमायातीत्यन्वयः । नन्वभीष्टा स्त्री किमिह स्वीया परकीया वा । आद्ये यद्यप्यन्तःपुरं गतेति विरुध्यते । तेन राजमहिषीप्रतीतेः । न च राजकर्तृक एवायं प्रयोगोऽस्तु । राजसूयादिवाक्य इवाधिकारिविशेषाश्रवणात् तस्यान्तःपुरे दुःसाध्यताया अभावेनाकार्षणवैयर्थ्याच्च । न च कौतुकार्थं प्रवृत्तिरस्तु । यद्यपीति स्वारस्येन दुःसाध्यताप्रतीत्या कुतुकिनोऽधिकाराभावप्रतीत्या अकुतुकिनोऽधिकाराभावाप्रतीतेः । अन्त्यधर्मस्य विधिविहितत्वायोग इति चेन्न । स्वस्त्रिया एव बलात्काररहरणादिना निमित्तेन दुःसाध्यतायामेतद्विधिसार्थक्यात् । अस्ति हि **हनुगुण्ठपीठमहात्म्ये** इतिहासः—नारायणाख्यस्य मुनेः चन्द्रवदनाख्या भार्या शक्रात्मजेन सेतुराजेनापहृता मुनिना देवीमाराध्यैव पुनरानीतेति । अथवा परकीयाकर्षणस्य धर्माविरोधेनैव फलान्तरं कल्प्यम् । अस्तु वा सम्भोगार्थमेवाकर्षणम् । तथापि तस्य भावनायां भाव्यत्वेनैवान्वयान्न विधेयत्वम् । तदुक्तं **तन्त्रवार्तिके**—

**'फलांशे भावनायाश्च प्रत्ययो न विधायकः ।**
**वक्ष्यते जैमिनिश्चात्र तस्य नित्यार्थलक्षणा ॥**

इति । विहितत्वाभावाच्च न परकीयाभिलाषस्य धर्मत्वम् । तत्करणीभूते प्रकृतप्रयोगे तु श्येनयाग इव धर्मत्वम् । यानि तु **'सर्वासामेव योषाणां कौलिकः प्रथमः पति**'रित्यादीनि **श्यामारहस्यकारै**र्लिखितानि वचनानि तदर्थनिष्कर्षरीत्या तु धर्मत्वं गुरुमुखादेवावगन्तव्यम् ॥

अत्र त्रिवर्गे मध्यमस्य कामानन्तरमुपस्थितत्वात्तत्फलकेषु भूरिषु प्रयोगेषु राजाकर्षणमाह सार्धद्वयेन—

**राजाकर्षणकामश्चेद्राजावसथदिङ्मुखः ॥ २६३ ॥**

राजेति । चेदित्यनेनाकर्षणकामनायां सत्यां तदुद्देशेन प्रयोगकरण एवेदं फलं सिद्ध्यति । उत्तरत्र वक्ष्यमाणानि तु षट्कर्माणि तत्तदुद्देशेन प्रयोगकरणेऽप्यानुषङ्गिकाणि सत्यकामस्यापि सिद्ध्यन्तीति सूचितम् । राज्ञ आवसथो गृहं स्वासनस्थलाद्यस्यां दिशि वर्तते तदभिमुख इत्यर्थः । सामान्यविधानात्प्रागुदङ्मुखत्वयो प्राप्तयोरयमपवादः ॥ २६३ ॥

**त्रिरात्रं यः पठेदेतच्छ्रीदेवीध्यानतत्परः ।**
**स राजा पारवश्येन तुरङ्गं वा मतङ्गजम् ॥ २६४ ॥**

**आरुह्य याति निकटं दासवत्प्रणिपत्य च ।**
**तस्मै राज्यं च कोशं च दद्यादेव वशंगतः ॥ २६५ ॥**

त्रिरात्रमित्यत्यन्तसंयोगे द्वितीया । त्रिरात्रपदं चाहोरात्रपरम् । त्रिरात्रमाशौच-मित्यादौ तथा दर्शनात् । तेन नित्यकर्मापि सङ्कोच्य लौकिकमप्यावश्यकमात्रमेव कृत्वानवरतमिदं चतुर्विंशतिप्रहरपर्यन्तं पठेदिति सिद्ध्यति । अत एवावृत्तिसंख्याया नियमः । श्रीदेवीध्याने राजानं पाशेन बध्वाङ्कुशेनाकर्षन्त्याः पूर्वोपस्थिताया देव्या ध्याने तत्पर आसक्तः । न चैवं पूर्वप्रयोगेण गतार्थता । तत्रैका यामचतुष्टयात्मिका रात्रिरेव कालः प्राङ्मुखोदङ्मुखत्वयोर्नियमश्च वैकल्पिकः । अत्र तु त्रयोऽहोरात्राः कालः राजगृहदिङ्मुखत्वनियमश्चेति विशेषता । वस्तुतस्तु कालत एवानयो-र्वैलक्षण्यम् । आकृष्यमाणदिङ्मुखत्वस्याकर्षणमात्रे आवश्यकतायास्तन्त्रान्तरसिद्ध-त्वात् । तथा च **वामकेश्वरतन्त्रे**–

**'तदाशाभिमुखो भूत्वा त्रिपुरीकृतविग्रहः ।**
**बध्वा तु क्षोभिणीमुद्रां विद्यामष्टशतं जपेत् ॥**

इत्यारभ्य **'भ्रमन्तीं भावयेन्नारीं योजनानां शतैरपि'** इत्यन्तम् । **नित्यातन्त्रे**ऽपि कुरुकुल्लापटले– **'विद्यां त्रयोदशार्णां तु तद्दिग्वक्त्रस्त्रिभिर्दिनैः ।स्त्रियमाकर्षये'**दित्यादि । **ज्ञानार्णवे**ऽपि–**'तदाशाभिमुखो भूत्वा स्वयं देवीस्वरूपक'** इत्यादि । एवं **दक्षिणामूर्ति-संहितादिक**मुदाहार्यम् । यो येन मनसोद्दिष्टः स एव राजेत्यर्थः । चोरवदेकाकी नायातीति द्योतनाय तुरङ्गं वेत्यादि । तस्मै प्रयोक्त्रे वशंगतः तदाज्ञापरवशः सन् ॥ २६४-२६५ ॥

अर्थाकर्षणेन वशीकरणादिषट्कर्मणामुपस्थितत्वात्तत्प्रयोगानाह सप्तभिः–

**रहस्यनामसाहस्रं यः कीर्तयति नित्यशः ।**
**तन्मुखालोकमात्रेण मुह्येल्लोकत्रयं मुने ॥ २६६ ॥**

रहस्येति । नित्यशः नित्यकर्माविरोधेन । यावज्जीवमनवरतम् । मुखालोक मात्रेणेति मात्रपदेन मोहनोद्देश्यकत्वं प्रयोगे व्यावर्त्यते । तेन संकल्पे **'लोकत्रय-मोहनार्थ'**मित्युल्लेखो न कार्यः । मुह्येत् वशंवदं भवेत् ॥ २६६ ॥

इत आरभ्योत्तरोत्तरमल्पायासान्प्रयोगान्विवक्षुस्तत्र मारणमाह–

**यस्त्विदं नामसाहस्रं सकृत्पठति भक्तिमान् ।**
**तस्य ये शत्रवस्तेषां निहन्ता शरभेश्वरः ॥ २६७ ॥**

यस्त्विति । सकृत्पठति नित्यश इत्यनुवर्त्य यावज्जीवं प्रतिदिनमेकवारं पठति । शरभेश्वरस्तदाख्यः शिवस्यावतारः । नृसिंहावतारस्य विष्णोरपनयनायेति **लैङ्गे**

**कालिकापुराणादौ** च प्रसिद्धम् । नारसिंहप्रयोगपरावर्तनाय शरभसालुवाख्यमन्त्रप्रयोगास्तन्त्रेषु प्रसिद्धतराः। तेन विष्णोरपि मारक इति मारकेषूक्तमत्वादिह स एवास्मिन्कर्मणि गृहीतः । तेनेदं ध्वनितं भवति । ईदृशोऽपि बलवान्देवः प्रस्थानान्तरशीलोऽपि श्रीविद्योपासकेनैदंपर्येणानुपासितोऽप्यनेनाविदितोऽप्येतच्छत्रूपसंहाराय स्वयमेव यतते । तस्मात्तन्मात्रोपासकानपेक्ष्य ललितोपासकस्य निरवधिकं माहात्म्यमिति । अन्यथा **'तस्य ये शत्रवः सद्यो नश्यन्ति स्वत एव ते'** इत्येव ब्रूयात् । एवमुत्तरत्रापि प्रत्यङ्गिरादिपञ्चकग्रहणे ध्वनिर्विज्ञेयः ॥ २६७ ॥

**यो वाभिचारं कुरुते नामसाहस्रपाठके ।**
**निवर्त्य तत्क्रियां हन्यात्तं वै प्रत्यङ्गिरा स्वयम् ॥ २६८ ॥**

यो वेति । अभिचारम् अदृष्टद्वारकवैरिमरणसाधनक्रियां श्येनयागादिरूपां निवर्त्य परावर्त्य पराङ्मुखीकृत्येति यावत् । प्रत्यङ्गिरा अथर्वणभद्रकालीदेवता । **अथर्वणवेदमन्त्रकाण्डे** शौनकशाखायां द्वात्रिंशदृचः । पिप्पलादशाखायां त्वष्टाचत्वारिंशदृचस्तदीया आम्नायन्ते । तत्प्रयोगाश्च **नारदतन्त्रे** प्रसिद्धाः ॥ २६८ ॥

**ये क्रूरदृष्ट्या वीक्ष्यन्ते नामसाहस्रपाठकम् ।**
**तानन्धानकुरुते क्षिप्रं स्वयं मार्ताण्डभैरवः ॥ २६९ ॥**

क्रूरया क्रोधरक्तया दृष्ट्या । मार्ताण्डभैरवो नाम शिवस्यैवावतारः कर्णाटकदेशे प्रेमपुरे जातो महाराष्ट्रदेशेऽतीव विस्तृतो **भैरालतन्त्रे** ( **रुद्रयामले** ) यस्य मन्त्राः प्रयोगाश्च प्रसिद्धाः ॥ २६९ ॥

**धनं यो हरते चोरैर्नामसाहस्रजापिनः ।**
**यत्र कुत्र स्थितं वापि क्षेत्रपालो निहन्ति तम् ॥ २७० ॥**

यश्चोराणामधिपतिः । चोरैः करणकारकैः । क्षेत्रपालः दारुकासुरवधार्थं कालिकावतारोत्तरं तद्वधेऽपि तस्याः कोपशान्तिमजातामालोक्य शिव एव बालो भूत्वा तत्स्तनपानमिषेण क्रोधाग्निं पपौ । सोऽयं क्षेत्रपालावतारो **लैङ्गे** प्रसिद्धस्तन्मन्त्राश्च तन्त्रेषु धृताः । तं चोरराजं तन्नाशेन चोराणामुच्चाटनमर्थसिद्धमिति ॥ २७० ॥

**विद्यासु कुरुते वादं यो विद्वान्नामजापिना ।**
**तस्य वाक्स्तम्भनं सद्यः करोति नकुलीश्वरी ॥ २७१ ॥**

विद्यासु चतुर्दशसु । वादपदं जल्पवितण्डयोरुपलक्षणम् । **ऋग्वेदे** आरण्यके नकुलीवागीश्वर्या[1] मन्त्रः समाम्नातः । भगवता **परशुरामेणापि कल्पसूत्र** उद्धृतः । **प्रपञ्चसारा**दावेतस्य योगाः प्रसिद्धाः ॥ २७१ ॥

---

1. नकुलीमन्त्रश्च– 'ओष्ठापिधाना नकुली दन्तैः परिवृत्ता पविः ।
सर्वस्यै वाच ईशाना चारुमामिह वादयेत् ॥' इति ।

**यो राजा कुरुते वैरं नामसाहस्रजापिनः ।**
**चतुरङ्गबलं तस्य दण्डिनी संहरेत्स्वयम् ॥ २७२ ॥**

चतुरङ्गबलं हस्त्यश्वरथपादातरूपं सैन्यम् । दण्डिनी दण्डनाथा या वाराही **तन्त्रेषु** प्रसिद्धा । संहरेत् सैनिकानां परस्परविद्वेषणेन कतिपयानामुच्चाटनेन नाशनेन च सम्भूयैककार्यकारित्वाभावो बलसंहारस्तं कुर्यात् । एवं षट्कर्माण्युक्तानि तानि च '**शान्तिर्वश्यं स्तम्भनं च विद्वेषोच्चाटमारण**'मिति **शाबरचिन्तामणा**वुक्तानि । अत्रान्यान्येवोच्यन्ते परन्तु तेषां यथायथान्योऽन्यमन्तर्भावो द्रष्टव्यः । तदुक्तं **तन्त्रराजे**–

**'रक्षा शान्तिर्जपो लाभो निग्रहो निधनं तथा ।**
**षट्कर्माणि तदंशत्वादन्येषामपृथक्स्थितिः ॥**

इति । अन्तर्भावप्रकारस्तल्लक्षणानि च विस्तरभयान्नोच्यन्ते तानि **सौभाग्यरत्नाकरे** त्रयोविंशे तरङ्गे द्रष्टव्यानि ॥ २७२ ॥

अथार्थप्रदावेव द्वौ प्रयोगावाह द्वाभ्याम्–

**यः पठेन्नामसाहस्रं षण्मासं भक्तिसंयुतः ।**
**लक्ष्मीश्चाञ्चल्यरहिता सदा तिष्ठति तद्गृहे ॥ २७३ ॥**

यः पठेदिति । सकृदित्यनुवर्तते । षण्मासपर्यन्तं प्रत्यहं सकृद्यः पठेत्तद्गृहे सदा यावज्जीवं लक्ष्मीस्तिष्ठति । चाञ्चल्यं हि लक्ष्म्याः स्वभावः । स्वभावो दुरतिक्रम इति हि प्रसिद्धिः । तादृशमपि दोषं परित्यज्येत्यर्थः ॥ २७३ ॥

**मासमेकं प्रतिदिनं त्रिवारं यः पठेन्नरः ।**
**भारती तस्य जिह्वाग्रे रङ्गे नृत्यति नित्यशः ॥ २७४ ॥**

मासमेकमिति षट्कापवादः । त्रिवारमिति तु सकृदित्यस्यापवादः । एकदैव त्रिः पठेत्सन्ध्याभेदेन वेत्यविशेषः । भारती सरस्वती । अथवा भा प्रतिभा रतिरभिरुचिरास्था च । क्तिजन्तान्ङीषि रतीति रूपम् । जिह्वाग्रमेव रङ्गं नृत्यभूमिरिति रूपकं नृत्यान्तरानुगुण्याय । घोषणगुणनिकापूर्वावलोकनपाठनादिकमनपेक्ष्यैव सर्वा अपि विद्या अविस्मृतास्तिष्ठन्ति । अध्ययनं त्वपेक्षितमेव । विद्याप्राप्तौ गुरोरेवासाधारणकारणत्वादिति भावः ॥ २७४ ॥

सिंहावलोकनन्यायेन पुनः कामप्रदं प्रयोगमाह–

**यस्त्वेकवारं पठति पक्षमेकमतन्द्रितः ।**
**मुह्यन्ति कामवशगा मृगाक्ष्यस्तस्य वीक्षणात् ॥ २७५ ॥**

पक्षमिति मासापवादः। एकवारमिति त्रिरावृत्तेः। अतन्द्रितो निद्राप्रमीलादि-रहितः। इदञ्च च सर्वत्राप्यावश्यकमप्यस्मिन्प्रयोगेऽत्यावश्यकमिति द्योतनायोक्तम्, तेन च निशीथेऽयं प्रयोग इत्यपि सूचितम्। तस्य तत्कर्तृकात्तत्कर्मकाद्वा अत्र मात्रपदाभावेन संकल्पे स्त्रीणां वशीकरणार्थमित्युल्लेखः कार्य इति ध्वन्यते ॥ २७५ ॥

एवमर्थकामावुक्त्वा धर्मप्रदान्प्रयोगान्बहुभिः प्रकारैर्वक्तुमुपक्रममाणः प्रथमप्रयत्न-साध्यं धर्ममाह–

**यः पठेन्नामसाहस्रं जन्ममध्ये सकृन्नरः।**
**तद्दृष्टिगोचराः सर्वे मुच्यन्ते सर्वकिल्बिषैः ॥ २७६ ॥**

य इति। जन्ममध्य इत्यनेन यावज्जीवषण्मासैकमासैकपक्षाणां पक्षाणामपवादः। एकवारमित्यस्यैवानुवृत्त्या सिद्धावपि मण्डूकप्लुत्या त्रिवारपदानु- वृत्तिशङ्का मा प्रसाङ्क्षीदिति सकृदित्यनेन प्रतिप्रसवः। तद्दृष्टिगोचराः तत्कर्तृकचाक्षुषप्रत्यक्षविषयाः सर्वे प्रणिन इति शेषः ॥ २७६ ॥

अथ दानक्रियासम्प्रदानकारकनिष्ठपात्रताशरीरघटकत्वेन धर्मप्रदत्वमाह चतुर्भिः–

**यो वेत्ति नामसाहस्रं तस्मै देयं द्विजन्मने।**
**अन्नं वस्त्रं धनं धान्यं नान्येभ्यस्तु कदाचन ॥ २७७ ॥**

य इति। देयमित्यत्र ललितोपासकेनेति शेषः। श्रीदेवीप्रीतिमिच्छतेत्युत्तर-ग्रन्थानुसारात्। तेनानुपासकेनान्येभ्योऽपि देयं सम्प्रदानत्वाविशेषादिति सिद्ध्यति। **'प्रवृत्ते शाम्भवीचक्रे सर्वे वर्णा द्विजातय'** इति **कुलार्णव**वचनेन ब्राह्मणधर्मातिदेशो न **श्रुतिस्मृति**प्राप्तसम्प्रदानत्वविषयः, अपितु यागसमयेऽस्पृश्यतादिधर्ममात्रपर इत्याशयेनाह–द्विजन्मन इति। ब्राह्मणायेत्यर्थः। अन्नमित्यादिदेयमात्रोपलक्षणम्। अन्येभ्यः सहस्रनामस्वनादरशीलेभ्य उपासकाभासब्राह्मणेभ्यः कदाचन **श्रुतिस्मृति**-विहितार्त्विज्यश्राद्धादिकालेऽपि न दद्यादित्यर्थः। तत्राप्युपास्तिपरा एवावश्यका इत्याशयः ॥ २७७ ॥

**श्रीमन्त्रराजं यो वेत्ति श्रीचक्रं यः समर्चति।**
**यः कीर्तयति नामानि तं सत्पात्रं विदुर्बुधाः ॥ २७८ ॥**

मन्त्रराजं श्रीविद्याम्। अत्र त्रयाणां समुच्चये सत्पात्रताम्, अन्यतमाभावे तारतम्यम्, त्रयाणामप्यभावे पात्रत्वाभावश्चेति न्यायत एव सिद्ध्यति।

तदयं निष्कर्षः– सम्प्रदानतावच्छेदकानामेषां त्रयाणां विशेषणानां मध्ये एकैक-विशेषणकास्त्रयो द्विद्विविशेषणका अपि त्रयस्त्रिविशेषणक एकस्त्रयाभाववानन्य इत्यष्टविधा ब्राह्मणाः प्रस्तारसीत्या भासन्ते यद्यपि तथापि चक्रराजार्चकत्वस्य

मन्त्रराजवेत्तृत्वव्याप्यत्वेन तन्मन्त्रविशेषणको न सम्भाव्यते । अत एव च मन्त्रेतरविशेषणद्वयमात्रकोऽपि खपुष्पमेव । तेन षाड्विध्यमेव ब्राह्मणानाम् । तेषु त्रिगुणक उत्तमः, द्विगुणकौ मध्यमौ । तयोरपि मध्ये मन्त्रवेत्तृत्वचक्रार्चकत्व-रूपगुणद्वयशालीनमपेक्ष्य मन्त्रवेत्तृत्व- नामकीर्तनरूपगुणद्वयशाली श्रेष्ठः, एकगुणकौ कनिष्ठौ । तयोरपि मध्ये मन्त्रवेदन- मात्रगुणको वरीयान् । नामकीर्तनमात्र-गुणकः कनिष्ठतरः । मन्त्रराहित्ये नामकी– र्तनेऽधिकाराभावेनानधिकारिनिष्ठस्य गुणस्यापि शूद्राधीतवेदवाक्यन्यायेनाप्रयोजकत्वात् । अभावत्रयवांस्तु नैव पात्रमिति विवेकः ॥ २७८ ॥

**तस्मै देयं प्रयत्नेन श्रीदेवीप्रीतिमिच्छता ।**
**यः कीर्तयति नामानि मन्त्रराजं न वेत्ति यः ॥ २७९ ॥**

तस्मै सत्पात्राय प्रयत्नेनापि तस्मा एव देयम् । उत्तमालाभे मध्यमायापि देयमित्यादिरर्थो न्यायलब्धोऽपि विधिरेव । तदुक्तं **पुलस्त्यस्मृतौ**–

**अदृष्टार्थो विधिः प्रोक्तो दृष्टार्थश्च द्वितीयकः ।**
**उभयार्थस्तृतीयस्तु न्यायमूलश्चतुर्थकः ॥'**

इति । इममेवार्थं वदन्नान्येभ्यस्तु कदाचनेत्यंशं विशदयति

**'न कीर्तयति नामानि मन्त्रराजं न वेत्ति यः ।**
**पशुतुल्यः स विज्ञेयस्तस्मै दत्तं निरर्थकम् ॥'**

अत्र च त्रिगुणत्रिगुणकातिरिक्तान्पञ्चापि य इत्यनेनोद्दिश्य पशुतुल्यत्वं विधित्सितं तेषां च त्रिगुणत्वावच्छिन्नप्रतियोगिताभाववत्त्वेनानुगमः । एकगुणक-द्विगुणकेष्वपि व्यासज्यवृत्तिधर्मावच्छिन्नप्रतियोगिताकस्य तस्य सुलभत्वात् । स चाभाव उद्देश्यतावच्छेदकः पूर्वार्धेन निरूपितः । तत्र यद्यपि द्वयोरेव गुणयोरभाव उट्टङ्कितः प्रतीयते तथापि पात्रलक्षणे त्रयाणां विशेषणानामुपादानात्तदनुसारेण पशु-लक्षणेऽपि त्रयाणामभाव एव विवक्षितः परन्तु व्यापकाभावेन व्याप्याभावोऽर्थायात इत्याशयेन चक्रराजं नार्चतीत्यंशः कण्ठरवेणोक्तः । मन्त्रवेदनस्य चक्रार्चकत्वव्याप-कत्वात् ॥ २७९ ॥

**पशुतुल्यः स विज्ञेयस्तस्मै दत्तं निरर्थकम् ।**
**परीक्ष्य विद्याविदुषस्तेभ्यो दद्याद्विचक्षणः ॥ २८० ॥**

पशुतुल्य इति पशुश्च पशुश्चेति विग्रहेणैकशेषे ताभ्यां तुल्य इति समासः । तत्रैकः पशुशब्दश्चतुष्पात्परः । अन्यश्च निरूढलक्षणया **'विद्याविहीनः पशु'**रिति प्रसिद्धपशुपरः । विद्या च श्रीविद्यैव । तदुक्तं **ब्रह्माण्डपुराण** एव–

न शल्पादिज्ञानयुक्ते विद्वच्छब्दः प्रयुज्यते ।
मोक्षैकहेतुविद्यावान्यः स विद्वानितीर्यते ॥
मोक्षैकहेतुविद्या च श्रीविद्यानात्र संशयः ।

इति । ततश्चोद्दिष्टानां पञ्चानां मध्ये त्रयाणां विद्यावत्त्वेऽपि चक्रार्चननामकीर्तनयोरधिकारसत्वेऽप्यकरणाद्विद्यमानाप्यविद्यमानप्रायैव विद्येति तेषां तादृशपशुतुल्यता । नाममात्रपाठिनो भावत्रयवतश्च चतुष्पात्पशुतुल्यतेति विवेकः । तस्मै दत्तं तत्सम्प्रदानकं दानम् । भावे क्तः । निरर्थकं अर्थरहितम् । अर्थशब्दस्तरतमभावापन्नः फलव्यक्तीराचष्टे । तेन विशिष्टफलाभावः फलसामान्याभावश्चेति पात्रतारतम्येनान्वयितव्यम् । एवमुक्तार्थवैपरीत्ये दण्डं निपात्योपक्रान्तं निगमयत्यर्धेन । तस्मादिति शेषः । विद्याविषये विद्वत्त्वं नाम याथातथ्येनोपास्तिशालित्वम् । तच्च ललितार्चननामकीर्तनसाहित्ये सत्येव सम्पद्यत इति गुणत्रयशीलतां परीक्ष्य तेभ्यो दद्यादित्यर्थः । तेभ्य इति पञ्चमी वा । तेषामेव सत्पात्रत्वादन्येषां तदभावात्पात्र एव दानविधानादन्यत्र तन्निषेधादिति हेतुभ्य इत्यर्थः । अस्मिन्पक्षे न शेषः पूरणीयः । विद्याविदामेव सम्प्रदानत्वमिति नियमस्तु परीक्षाया दृष्टार्थत्वबलादेव सेत्स्यति ॥ २८० ॥

श्रीमन्त्रराजसदृशो यथा मन्त्रो विद्यते ।
देवता ललितातुल्या यथा नास्ति घटोद्भव ॥ २८१

त्रयाणां च गुणानां परस्परमुपमानोपमेयभावेनोपमानान्तरविरहद्वारात्युत्तमत्वं ध्वनयंस्तेषां सत्पात्रतावच्छेदकतायां कथन्ताशङ्कामपाकरोति सार्धेन । अत्र यथातथेत्यनयोर्वैपरीत्येनाप्यन्वयो द्रष्टव्यः ॥ २८१ ॥

रहस्यनामसाहस्रतुल्या नास्ति तथा स्तुतिः ।
लिखित्वा पुस्तके यस्तु नामसाहस्रमुत्तमम् ॥ २८२ ॥

इदानीमनुपासकस्याप्येतत्स्तोत्रं धर्मप्रदमित्याह । यस्तु यः कश्चिदपि उपासकोऽनुपासको वेत्यर्थः । अनुपासकस्य नामकीर्तनेऽधिकाराभावेऽपि तत्पुस्तकार्चनेऽधिकारस्य निराबाधत्वात् ॥ २८२ ॥

समर्चयेत्सदा भक्त्या तस्य तुष्यति सुन्दरी ।
बहुनात्र किमुक्तेन शृणु त्वं कुम्भसम्भव ॥ २८३ ॥
नानेन सदृशं स्तोत्रं सर्वतन्त्रेषु विद्यते ।
तस्मादुपासको नित्यं कीर्तयेदिदमादरात् ॥ २८४ ॥

सदा यावज्जीवं तस्य अनुपासकस्यापि किमुतोपासकस्येति भावः । यद्यप्यनेनैव न्यायेन पुस्तकार्चनेनापि तुष्यति किमुत कीर्तनेनेति कैमुतिकन्यायेन कीर्तन एव तात्पर्यम् । तस्मात्कीर्तयेदित्युत्तरत्रोपसंहारो युज्यत इति सुवचम्, तथापि **'स्वाध्यायोऽध्येतव्य'** इति वचनेऽध्ययनपदस्य गुरुमुखोच्चारणानूच्चारणे शक्तत्वेऽपि तत्करणकार्थज्ञानभाव्यकभावनाविधानपरत्ववदिहापि नामानि कीर्तयेदिति विधेरप्यर्थ-ज्ञानपर्यन्तता निर्विवादा । तेन–

**'अप्येकं नाम यो वेत्ति धात्वर्थनिगमादिभिः ।**
**सोऽपि श्रीललितालोके कल्पकोटीर्वसेन्नरः ॥'**

इति **देवीपुराणे,**

**'अनधीतमविज्ञातं निगदेनैव पठ्यते ।**
**अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥'**

इति **स्मृत्यन्तरेषु** च वचनान्यर्थज्ञानाज्ञानयोः प्रशंसानिन्दापराणि सङ्गच्छन्ते । अर्थज्ञानान्तसामर्थ्याभावे तु निगदमात्रपरापि सा भावना भवितुमर्हति । **'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी'**ति न्यायात् । अत एव **'योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मे'**ति श्रुतावर्थज्ञानप्राप्यफले सकलत्वविशेषणेन शब्दज्ञानमात्रेण किञ्चिद्विकलं फलमस्तीति ज्ञापितम् । ततश्च तुल्यन्यायेण शब्दपाठेऽप्यसमर्थस्य पुस्तकसंग्रहमात्रमपि न्यायलभ्यम् । उच्चारणस्य जन्मान्तरे अर्थज्ञानप्रदत्ववत्पुस्तकसंग्रहस्याप्युच्चारणप्रदत्वं जन्मान्तरे सम्भवतीति सुवचम् । अत एव **तन्त्रराजादि**ष्वसम्प्रदायेनाङ्गहीनापि कृतोपासना जन्मान्तरे साङ्गसम्प्रदाय-शुद्ध्यै कल्पत इत्युक्तम् । तेन पुस्तकार्चनमात्रमपि धर्म एव । स चानुपास-कस्याप्यनिषिद्धत्वाज्जन्मान्तरे उपासनाप्राप्त्यर्थं कर्तव्य एव । उपासकस्य तु नामपाठेऽप्यसमर्थस्य नाम पठेदिति विधेर्यावच्छक्तिपरिपालनायावश्यकतम एव । न च **'कुलपुस्तकानि गोपये'**दिति **कल्पसूत्रो**क्तविधिविरोधादनुपासकस्य कथं पुस्तकार्च-नेऽधिकार इति वाच्यम् । तस्यार्थज्ञानविदूषकदुर्जनपरत्वेन भाविकोपासनेच्छु-सज्जनपरत्वाभावात् । तथासत्यदृष्टार्थतापत्तेरित्यन्यदेतत् । उपासकानां तु नामपाठ-शक्तानां पुस्तकार्चनमात्रं वावश्यकमिति तु निराबाधमेव । अयं च न्याय एतदर्थ-ज्ञानोपायभूतभाष्याध्ययनेऽपि तुल्य इत्याशयेन ग्रन्थान्तेऽ**स्माभि**र्वक्ष्यते ।

**'अम्ब त्वत्पदयोः समर्पितमिदं भाष्यं त्वया कारितं**
**त्वन्नामार्थविकासकं तव मुदे भूयादथ त्वां भजन् ।**
**यो नैनत्परिशीलयेन्न च पठेद्यः पुस्तकस्यापि वा**
**संग्राहं न करोति तस्य ललितोपास्तिर्वृथा जायताम् ॥'**

इति । एवमनुपासकानामपि रक्षकम्, उपासकान् रक्षेदिति किमु वक्तव्यमित्याशयेन मध्य एव निगमयति सार्धेन ॥ २८३–२८४ ॥

अथात्युत्कृष्टधर्मप्रदं पूर्वोक्तराशिषट्कादिक्रमेण बुद्ध्याप्यपरिच्छेद्यफलकं योगमाह चतुर्भिः–

**एभिर्नामसहस्रैस्तु श्रीचक्रं योऽर्चयेत्सकृत् ।**
**पद्मैर्वा तुलसीपुष्पैः कह्लारैर्वा कदम्बकैः ॥ २८५ ॥**

एभिरिति । नामसाहस्रैरिति बहुवचनं नाम्नां प्रत्येकं करणत्वद्योतनाय । लक्षपूजादौ पुनःपुनरावृत्तिध्वननार्थं च । नामानि प्रातिपदिकानि सहस्रं येषु श्रीमात्रे नम इत्यादिललिताम्बिकायै नम इत्यन्तेषु चतुर्थीनमोन्तमन्त्रेषु तैर्नामसाहस्रैरिति वा । सम्प्रदायाच्च पुष्पप्रक्षेपावृत्तिः । तेन **'चतुर्लक्ष्यणुभिर्वक्त्रं'**, **'चतुर्भिरभ्रिमादत्त'** इत्यादाविव समुच्चयो माभूत् । अत्र पद्मकह्लारोत्पलानां परस्परवैलक्षण्यमवान्तरजातिभेदेनोह्यम् । तुलस्याः पुष्पैः फुल्लमञ्जरीभिः न तु तत्पत्रैः । सुन्दरीविषये तुलसीनिषेधस्यैतद्बलादेव पत्रपरत्वौचित्यात् । अत एव स्पष्टमुक्तं **नीलातन्त्रे**–

**'नानोपहारबलिभिर्नानापुष्पैर्मनोरमैः ।**
**अपामार्गदलैर्भृङ्गैस्तुलसीदलवर्जितैः ॥**
**पूजनीया सदा भक्त्या नृणां शीघ्रफलाप्तये ।'**

इति । यत्तु तत्रैव–

**देवीपूजा सदा शस्ता जलजैः स्थलजैरपि ।**
**विहितैश्च निषिद्धैर्वा भक्तियुक्तेन चेतसा ॥'**

इति । तत्र निषिद्धस्वीकारो भक्त्यावश्यकत्वध्वननाय । **'पुष्पाणामप्यलाभे तु तत्पत्रैरर्चयेच्छिवा'**मिति **कालीपुराण**वचनं नित्यकर्मपरम् । काम्ये कर्मणि प्रतिनिध्यभावस्य षष्ठाधिकरणसिद्धत्वात् । सुन्दरीविषये तुलसीनिषेधस्यैतद्बलादेव पत्रपरत्वौचित्यात्पत्रान्तरपरं च । पद्मादिषु तु सुसदृशत्वात् पूरणायकह्लारादीनां ग्रहणं युज्यते । विष्णुना नेत्रकमलस्य तत्पूरणार्थमुपादानस्य **लिङ्गपुराणे** कथनाल्लिङ्गात् । कदम्बकैः अविशेषाद्द्विविधैरपि ॥ २८५ ॥

**चम्पकैर्जातिकुसुमैर्मल्लिकाकरवीरकैः ।**
**उत्पलैर्बिल्वपत्रैर्वा कुन्दकेसरपाटलैः ॥ २८६ ॥**

जाति कुसुमैरित्यत्र **'ङ्यापोः संज्ञाछन्दसोर्बहुल'**मिति ह्रस्वः । जाती मालती । मल्लिका विचकिलम् । करवीरं हयमारः । कुन्दं माध्यम् । केसरं काश्मीरम् । पाटलं श्वेतरक्तं बिलपुष्पसदृशम् ॥ २८६ ॥

**अन्यैः सुगन्धिकुसुमैः केतकीमाधवीमुखैः ।**
**तस्य पुण्यफलं वक्तुं न शक्नोति महेश्वरः ॥ २८७ ॥**

सुगन्धिपदमहिफेनाहिदुर्गन्धिकुसुमानामेव निरासाय । निर्गन्धानामपि जपादीनां रक्तानां देवीप्रियत्वात् । **'गन्धस्येदुत्पूतिसुसुरभिभ्य'** इति समासान्तम् । माधवी वासन्ती । मुखपदेन पुन्नागंबकुलादीनां ग्रहणम् । एतेषामप्यवान्तरतारतम्यमादित्य-पुराण-कालिका- पुराणयोर्द्रष्टव्यम् । फेत्कारिणीतन्त्रे तु विशेषः–

**पुष्पं वा यदि वा पत्रं फलं नेष्टमधोमुखम् ।**
**दुःखदं तत्समाख्यातं यथोत्पन्नं तथार्पयेत् ॥**
**अधोमुखार्पणं नेष्टं पुष्पाञ्जलिविधिं विना ॥**
**लक्षपूजादिषु पुनः पुष्पमेकैकमर्पयेत् ।**
**समुदायेन चेत्पूजा लक्षपुष्पार्पणं न तत् ॥'**

इति । अत्र हिः द्वन्द्ववत्तदपवादकैकशेषोपि साहित्यार्थकः । **'एकादशप्रयाजान्यजती'** त्यत्र सहितेष्वेवैकादशत्वस्य निवेशो न प्रातिस्विकमिति सिद्धान्तात् । ततश्च सुगन्धि-कुसुमैरित्येकशेषवशान्मल्लिकाकरवीरयोः केतकीमाधव्यादीनां च द्वन्द्ववशाच्च समुच्चयेन करणत्वं मा प्रसाङ्क्षीदिति तदपवादाय पूर्वश्लोकयोर्वाकारः । सोऽपि च प्रतिपुष्पमन्वयितव्य इति ध्वनयितुं द्विस्त्रिः प्रयुक्तः । तथा च निरपेक्षकरण-ताबोधकतृतीयाविभक्तयोऽपि व्रीहियवन्यायेनानुगृहीता भवन्ति । महेश्वरः पञ्चप्रेतेषु चतुर्थः तस्याप्यसर्वज्ञत्वाद्वक्तुमसामर्थ्ये पूर्वोक्तराशिषट्कादिगुणनोपायेन मनुष्याणां ज्ञातुं वक्तुं च सामर्थ्याभावः कैमुतिकन्यायेन सिद्ध इति फलस्यानवधिकत्व-ध्वनिः ॥ २८७ ॥

अत एव सर्वज्ञैकपरिच्छेद्यमित्याह–

**सा वेत्ति ललितादेवी स्वचक्रार्चनजं फलम् ।**
**अन्ये कथं विजानीयुर्ब्रह्माद्याः स्वल्पमेधसः ॥ २८८ ॥**

**सेति** । ब्रह्मादीनामज्ञातृत्वे परिकरालङ्कारेण हेतुगर्भं विशेषणम् । स्वल्पमेधस इति स्वल्पा मेधा धारणात्मिका बुद्धिर्येषां ते । **'नित्यमसिच् प्रजामेधयो'**रिति समासान्तः । ननु राशिषट्कवेद्यफलकं कठिनतरं प्रयोगमपेक्ष्यास्य पुष्पार्पणप्रयोगस्य सुलभत्वेन ततोऽप्यनवधिफलकत्वे कठिनतरप्रयोगे कस्यापि प्रवृत्त्ययोगादननुष्ठान-लक्षणमप्रामाण्यं प्रसज्येतेति चेत् भ्रान्तोऽसि । कठिनतरप्रयोगस्यानिशनित्यादि-पदघटितविधिबोध्यत्वेनाकरणे प्रत्यवायबोधनेन नित्यत्वात् । नित्याकरणे

आयुष्करादिपुष्पार्पणादिकाम्यप्रयोगेष्वधिकाराभावस्योक्तत्वात् । नित्यस्यापि वचन-बलात्काम्यत्वं त्वग्निहोत्रादिन्यायेन न विरुद्धमिति न प्रवृत्तिपराहतता ।

अथ प्रयोगविधौ विशेषः— चक्रार्चनारम्भ एवापरिमितपुण्यप्राप्त्यर्थममुक-कुसुमैर्देवीं पूजयिष्यामीति संकल्प्य प्रसन्नपूजोत्तरं पूर्वभागं पठित्वा न्यासत्रयं कृत्वा प्रणवमुच्चार्य द्वितारांद्यैर्नमोन्तैश्चतुर्थ्यन्तनाममन्त्रैः 'ह्रींश्रींश्रीमात्रेनमः' इत्यादि-रूपैरेकैकं पुष्पमेकैकमन्त्रान्ते यथोत्पन्नं तथा बिन्दौ विनिक्षिप्य विजातीयपुष्पामिश्रणेन सजातीयैरेव संख्यां पूरयित्वा तदन्ते प्रणवमुच्चार्य न्यासत्रयं कृत्वा फलश्रुतिं पठित्वा पूजाशेषं समापयेदिति ॥ २८८ ॥

इत्थमियता प्रबन्धेन त्रिवर्गप्रदत्वमुक्त्वा क्रमप्राप्तं चतुर्थपुरुषार्थप्रदायकत्वमने-कधा दिदर्शयिषुः प्रथमं कैवल्याख्यपञ्चममुक्तिप्रदं प्रयोगमाह द्वाभ्याम्—

**प्रतिमासं पौर्णमास्यामेभिर्नामसहस्रकैः ।**
**रात्रौ यश्चक्रराजस्थामर्चयेत्परदेवताम् ॥ २८९ ॥**

प्रतीति । प्रतिपौर्णमासीति विहाय प्रतिमासमित्युक्तिर्यावज्जीवमित्यर्थबोधाय । तस्यापि प्रयोजनमुत्तरत्र यावज्जीवार्थकप्रतिमासपदानुवृत्तिः । एभिः पूर्वोक्तान्यतमैः कुसुमैः ॥ २८९ ॥

**स एव ललितारूपस्तद्रूपा ललिता स्वयम् ।**
**न तयोर्विद्यते भेदो भेदकृत्पापकृद्भवेत् ॥ २९० ॥**

सकृदर्चनस्य ललितैकवेद्यफलकत्वे पुनःपुनरावृत्तार्चनस्य ललितैकरूपत्वं फलं न्यायलब्धमेवाह—स एवेति । परस्परप्रतियोगिकतादात्म्यबोधनायोद्देश्यविधेयभाववैप-रीत्येनाप्याह—तद्रूपेति । वास्तविकभेदे सत्यप्युपमेयोपमालङ्कारेणाप्येषोक्तिः सुसमर्थेति भ्रमं निरस्यति—न तयोरिति । देवीभक्तयोरित्यर्थः । भेदः वास्तविक इति शेषः । नात्र तृतीयसदृशव्यवच्छेदोऽपि तु तादात्म्यमेवेति भावः । वास्तव एव भेदोऽस्त्वित्याग्रहिणं दण्डयति—भेदकृदिति । देवीभक्तौ परस्परप्रतियोगिकसत्यभेदवन्तौ । मर्त्यामर्त्यत्व-पूज्यपूजकभावादिरूपविरुद्धधर्माधिकरणत्वादित्यादिभेदसाधकानुमानप्रयोक्तेत्यर्थः । अद्वैतप्रतिपादकशास्त्रविरोधेन प्राण्यङ्गत्वहेतुकाशुचित्वानुमानप्रयोक्तृवदुपहसनीयता-माह—पापकृदिति । हेत्वाभासप्रयोगकृतत्वाच्छास्त्रविरुद्धत्वाच्च पापिष्ठ इत्यर्थः । मरणभ्रमोऽपि— '**न तस्य प्राणा उत्क्रामन्त्यत्रैव समवलीयन्त**'इति श्रुत्यैव निरस्त इति भावः ॥ २९० ॥

अथेतोऽपि सुलभं चतुर्विधमुक्तिफलकं प्रयोगमाह—

**महानवम्यां यो भक्तः श्रीदेवीं चक्रमध्यगाम् ।**
**अर्चयेन्नामसाहस्रैस्तस्य मुक्तिः करे स्थिता ॥ २९१ ॥**

महानवम्यामिति । यावज्जीवार्थकं प्रतिमासपदं रात्रिपदं चानुवर्तनीयम् । नवरात्रस्य चरमदिवसद्वयं महानवमीत्युच्यते । तच्च शिवशक्तिसामरस्यरूपम् । तत्र सर्वजातीयानां देवीपूज- नेऽधिकारः । तथाहि—नवरात्र द्विविधं शारदं वासन्तं चेति । **'शरत्काले महापूजा क्रियते या च वार्षिकी'** इति **मार्कण्डेयपुराण**स्थवचने वार्षिकीति पदस्य वर्षस्य वत्सरस्यादौ भवेति साम्प्रदायिकैर्व्याख्यानात्, चकारादुभयोः समुच्चयस्य स्वरसतोऽवगमात्, चातुर्मासाख्यवर्षर्तौ भवेति व्याख्यायाः शरदो वर्षर्तुत्वापादिकायाः क्लिष्टत्वात्, प्रतिवर्षं क्रियमाणेति व्याख्यायामपि विशेषणवैयर्थ्यात्, **'वासन्ते नवरात्रेऽपि पूजयेद्रक्त- दन्तिका'**मिति **रुद्रयामले** स्पष्टं नवरात्रद्वैविध्यकथनाच्च । **देवीभागवते** तृतीयस्कन्धे कामबीजोपासकं सुदर्शनं प्रति देवीवाक्यम्—

**'शरत्काले महापूजा कर्तव्या मम सर्वदा ।**
**नवरात्रोत्सवं राजन्विधिवत्परिकल्पय ॥**
**चैत्रे चाश्वयुजे मासि त्वया कार्यो महोत्सवः ।**
**नवरात्रे महाराज मम प्रीतिविधायकः ॥'**

इत्यादि । **सौभाग्यरत्नाकरे** त्वाषाढपौषयोरपि नवरात्रमुक्तम् । तत्र शारद- नवरात्रस्याष्टमीनवम्यौ महापूर्वे । तदुक्तं **कालिकापुराणे**—

**'आश्विनस्य तु शुक्लस्य या भवेदष्टमी तिथिः ।**
**महाष्टमीति सा प्रोक्ता देवा प्रीतिकरी परा ॥**
**ततोऽनु नवमी या स्यात्सा महानवमी स्मृता ।**
**सा तिथिः सर्वलोकानां पूजनीया शिवप्रिया ॥'**

इति । **धौम्योऽपि**—

**'आश्विने मासि शुक्ले तु या स्यान्मूलेन चाष्टमी ।**
**सा महत्यष्टमी ज्ञेया तत्र देवी कृतालया ॥'**

**ब्रह्माण्डपुराणे**ऽपि—

**'कन्यासमाश्रिते भानौ या स्यान्मूलेन चाष्टमी ।**
**सा महत्यष्टमी ज्ञेया न मुग्धानवमीयुता ॥'**

मूलयोगोक्तिस्तु सम्भवाभिप्राया । तेन पूर्वाषाढायुतापि महाष्टम्येव—

**'मूलऋक्षसमायुक्ता पूजनीया प्रयत्नतः ।**
**मूलाभावेऽपि कर्तव्या यदि स्यात्तोयसंयुता ॥'**

इति वचनात् । तोयं पूर्वाषाढा । अस्या एव नक्षत्रद्वयान्यतरयोगे महानवमीत्यपि संज्ञान्तरम् । तदुक्तं **नृसिंहप्रासादे**—

**'आश्वयुक्शुक्लपत्रे तु याष्टमी मूलसंयुता ।**
**पूर्वयाषाढया सार्धमृक्षद्वययुतापि वा ॥**
**सा महानवमी नाम त्रैलोक्येऽपि सुदुर्लभा ।'**

इति । **भविष्योत्तरे**ऽपि—

**'कन्यागते सवितरि शुक्लपक्षेऽष्टमीयुता ।**
**मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ॥**

इति । **विश्वरूपाचार्यै**रपि—

**'आश्वयुक्शुक्लपक्षे तु याष्टमी मूलसंयुता ।**
**यदि स्याद्रविविद्धापि सा महानवमी स्मृता ॥'**

इति । अत्राष्टमीमूलाभ्यां संयुता या तिथिः सा महानवमीति व्याख्यया नवम्येव महानवमीत्यर्थ इति केचित् । तदुक्तं **भविष्योत्तरा**दिवचनविरोधादनादेयम् । सप्तमीवेधबोधकरविविद्धापदस्य रविवासरयुक्तेत्यर्थवर्णनापत्तेश्च । अनयोश्च परस्परविद्धत्वमपि प्रशस्तम् । तदुक्तं **विष्णुधर्मोत्तरे**—

**'अष्टम्या नवमी युक्ता नवम्या चाष्टमी युता ।**
**अर्धनारीश्वरप्राया उमामाहेश्वरी तिथिः ॥'**

इति । **भोजराजीये**ऽपि—

**'अष्टम्यां पूजयेद्रुद्रो नवम्यां शक्तिरिज्यते ।**
**उमाया नवमी प्रोक्ता हरस्य तिथिरष्टमी ॥**
**द्वयोर्योगे महापुण्या उमामाहेश्वरीतिथिः ।'**

तत्रैव सप्तमीवेधाभावो नवमीविद्धाष्टमीग्रहणे हेतुरुक्तः—

**न दिवा न निशापि च विष्टिहता न च सप्तमि शल्यलवोपहता ।**
**यदिवाष्टमिशेषभवा नवमी विबुधैरपि पूज्यतमा नवमी ॥'**

इति । विष्ट्या सप्तमिशल्यलवेन चोपहता न कार्या । अष्टमीशेषे नवमी चेत्सुराणामपि पूज्या अवमी च न भवतीत्यर्थः । अयमेव प्रकारो वासन्तनवरात्राष्टमीनवम्योर्निर्णयेऽपि । **नवरात्रप्रदीपे** तथाभिधानात् । **विश्वरूपाचार्यै**रपि नवरात्रद्वयं प्रकम्य—

**'अष्टमीनवमीयुग्मे शिवक्षेत्रे महोत्सवः ।**
**शिवशक्त्योः सामरस्यात्पक्षयोरुभयोरपि ॥'**

इत्युक्तेः। शारदो वासन्तश्चेति नवरात्रस्य द्वौ पक्षौ तयोरुभयोरपीति तदर्थात्। अष्टम्यां च देवीपूजोक्ता देवीपुराणे–

**'आश्वयुक्शुक्लनवमी त्वष्टमी मूलसंयुता।**
**सा महानवमी तस्यां जगन्मातरमर्चयेत्॥'**

इति। नवम्यां चोक्ता भविष्योत्तरपुराणे–

**'नवम्यां श्रीसमायुक्ता देवैः सर्वैः सुपूजिता।**
**जघान महिषं दुष्टमवध्यं देवतादिभिः॥**
**लब्ध्वाभिषेकं वरदा शुक्ले चाश्वयुजस्य तु।**
**तस्मात्सा तत्र सम्पूज्या नवम्यां चण्डिका बुधैः॥**
**महत्त्वं हि यतः प्राप्ता अत्र देवी सरस्वती।**
**अतोऽर्थं महती प्रोक्ता नवमीयं सदा बुधैः॥'**

इति। इयं च पूजा निशीथ एव।

**'आश्विने मासि मेघान्ते महिषासुरमर्दिनीम्।**
**देवीं च पूजयित्वा ये अर्धरात्रेऽष्टमीषु च॥'**

इति देवीपुराणात्। शक्तिरहस्येऽपि–

**कन्यासंस्थे रवावीशां शुक्लाष्टम्यां प्रपूजयेत्।**
**सोपवासो निशार्धे तु महाविभवविस्तरैः॥'**

इति। विश्वरूपाचार्यैरपि–

**अष्टमीरात्रिमासाद्य पूजां गृह्णाति पार्वती।**
**निशार्धे पूजिता देवी वैष्णवी पापनाशिनी॥**
**तस्मात्सर्वप्रयत्नेन ह्यष्टम्यां निशि पूजयेत्।'**

इति। यत्तु भविष्योत्तरे–

**'तत्राष्टम्यां भद्रकाली दक्षयज्ञविनाशिनी।**
**प्रादुर्भूता महाघोरा योगिनीकोटिभिः सह॥'**
**अतोऽर्थं पूजनीया सा तस्मिन्नहनि मानवैः।'**

इति वचनं तत्राहःपदमहोरात्रपरम्। एतद्बलादष्टम्यामहन्येव पूजनमिति त्वन्धानां प्रलापः। नवम्यां तु दिवैव पूजयेदित्यप्याहुः। इदञ्च पूजाद्वयं प्रत्येकमुत्पन्नमपि परस्परसापेक्षमेव फलजनकम्।

**'अष्टम्यां च नवम्यां च जगन्मातरमम्बिकाम्।**
**पूजयित्वाश्विने मासि विशोको जायते नरः॥'**

इति **भविष्योत्तर**वचनेनैकप्रयोगतासूचनात् । '**अष्टमीनवमीयुग्मे**' इति पूर्वोक्तवचनाच्च । अत एव नवरात्रात्कर्मान्तरमिदमिति सिद्धान्तः । अस्यां च पूजायां सर्वजातीयानामधिकारः । तदुक्तमेतत्कर्मोपक्रम एव **भविष्योत्तरे**-

**'पूजनीया जनैर्देवी स्थाने स्थाने पुरे पुरे ।**
**गृहे गृहे शक्तिपरैर्ग्रामे ग्रामे वने वने ॥**
**स्नातैः प्रमुदितैर्हृष्टैर्ब्राह्मणैः क्षत्रियैर्विशैः ।**
**शूद्रैर्भक्तियुतैर्म्लेच्छैरन्यैश्च भुवि मानवैः ।**
**स्त्रीभिश्च कुरु शार्दूल तद्विधानमिदं शृणु ॥'**

इत्यादि । शक्तिपरैश्चण्डीपरायणैः । म्लेच्छैः शबरकिरातपुलिन्दादिभिः । अन्यैरनुलोमप्रतिलोमजैः । परन्तु स्वकुलाचारमनुरुध्यैव पूजयेत् । तदुक्तं **व्रतखण्डे**-

**'यस्य यस्य हि या देवी कुलमार्गेण संस्थिता ।**
**तेन तेन च सा पूज्या बलिगन्धानुलेपनैः ॥**
**नैवेद्यैर्विविधैश्चैव पूजयेत्कुलमातरम् ॥'**

इति । नन्वेवं निर्णीतायामपि महानवम्यां तस्य शब्दस्य कालपरत्वेन प्रकृतविधौ कस्य कालस्य महानवमीपदेनोपादानम् । उक्तरीत्याष्टमीनवम्योर्महानवमीत्वात् । यदापि दर्शपूर्णमासनवरात्रादिपदवत्कर्मपरोऽयं महानवमीशब्दस्तदाष्टमीनवमी पूजाद्वयस्यैककर्मत्वेऽपि तस्य वासन्तशारदभेदेन द्वैविध्यात्प्रकृते कस्य कर्मण उपादानम् । न चोभयोरप्युपादानम् । एकधाधिकरणे वैधपदस्यानियतानेकार्थपरताया निरस्तत्वादिति चेत् ।

अत्र ब्रूमः–महानवमीशब्दस्य कर्मपरत्वे एकस्यैवाग्निहोत्रस्य सायंप्रातर्भेदेनावृत्तिवद्वसन्तशरद्भेदेनावृत्तिमात्राङ्गीकारेणानेकार्थत्वाभावात् । कालपरत्वे तु चत्वारोऽपि काला इह विधौ गृह्यन्ते । एकधाधिकरणे ह्यनियतैकार्थकस्यैव निरासो न पुनर्नियतानेकार्थकस्येत्यदोषात् कथमन्यथैकस्य मन्त्रस्यानेकार्थेषु विनियोगः । न च विधिगतस्यैव पदस्यानेकार्थता न युक्तेति परिभाषास्ति । '**न कलञ्जं भक्षये**'दिति विधिवाक्येऽपि कलञ्जपदस्य बहुधा व्याख्यानदर्शनात् । आन्त्रपरत्वेन भङ्गापरत्वेन कण्ठशोधकौधपरत्वेन चेति । तस्माद्यावज्जीवमेतेषु चतुर्ष्वपि दिवसेषु चक्रमध्ये बिन्दुस्थानं गच्छतीति तादृशीं श्रीदेवीं त्रिपुरसुन्दरीं यः कश्चन भक्तः स्वस्वकुलानुसारेणार्धरात्रे सहस्रनामभिः पूजयति तस्य चतुर्विधापि मुक्तिः कर एव स्थिता । अतिसुलभेत्यर्थः । तत्रैकदिनेऽर्चकस्य सालोक्यमात्रम्, दिनद्वये चेत्सारूप्यमपि, दिनत्रये चेत्सामीप्यमपि, चतुर्ष्वपि दिवसेषु चेत्सायुज्य-

---

1. 'क्षत्रियैर्नृपैः । वैश्यैः शूद्रैर्भक्तियुक्तैर्म्लेच्छैरन्यैश्च मानवैः ॥' इति पाठान्तरम् ।

मिति तारतम्यं तु न्यायत एव लभ्यत इति विविच्य नोक्तम् । अथवा अष्टमीनवमीतिथियुग्मे क्रियमाणकर्मण एकत्वेऽपि नवरात्रचातुर्विध्येन मुक्तिचातुर्विध्यं योज्यमिति दिक् ॥ २९१ ॥

एवं पार्थक्येन भोगमात्रफलकान्मोक्षमात्रफलकांश्च प्रयोगानुक्त्वा भोग–कैवल्योभयफलकं प्रयोगमाह–

**यस्तु नामसहस्रेण शुक्रवारे समर्चयेत् ।**
**चक्रराजे महादेवीं तस्य पुण्यफलं शृणु ॥ २९२ ॥**

यस्तुनामेति त्रिभिः । नाम्नां सहस्रेणेत्येकं पदम् । नामेति प्रसिद्ध्यर्थकमव्ययं वा । सहस्रपदमेव प्रकरणान्नामसहस्रपरमित्यपि सुवचम् । शुक्रवारे प्रतिशुक्रवारं यावज्जीवार्थकपदानुवृत्त्या तथैव पर्यवसानात् ॥ २९२ ॥

**सर्वान्कामानवाप्येह सर्वसौभाग्यसंयुतः ।**
**पुत्रपौत्रादिसंयुक्तो भुक्त्वा भोगान्यथेप्सितान् ॥ २९३ ॥**

इह भूलोक एव । तेनैतज्जन्यपुण्यस्यात्युत्कटत्वं सूचितम् । '**अत्युत्कटैः पुण्यपापैरिहैव फलमश्नुत**' इति वचनात् । सर्वैः सन्ततिसम्पत्त्यारोग्यविद्याबलादिरूपैः सौभाग्यैः सम्यग्युतः । पुत्रपौत्रादीत्यादिपदेन नप्त्रादिबन्धुभृत्याप्तपरिग्रहः । सर्वसौभाग्यपदेनैव सिद्धे पुनरेतेषां ग्रहणं भोगक्रियांप्रति साहित्येन कर्तृत्वद्योतनार्थम् । पुत्रादिभिः सह भोगान्भुक्त्वेत्यर्थः ॥ २९३ ॥

**अन्ते श्रीललितादेव्याः सायुज्यमतिदुर्लभम् ।**
**प्रार्थनीयं शिवाद्यैश्च प्राप्नोत्येव न संशयः ॥ २९४ ॥**

अन्ते देहपातोत्तरम् । देवयानमार्गेण गत्वेति शेषः । सायुज्यातिदुर्लभत्वविशेषणत्वं कैवल्यत्वद्योतकम् । शिवाद्यैः प्रार्थनीयमिति तु ब्रह्मणा सह मुक्तिरिति ध्वनयितुम् । तथा च **कौर्मे**–

**'ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ।**
**परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥'**

इति । अत्र परस्येतिशब्दो ब्रह्मायुः परः ।

**'ब्रह्मणः पूर्णमायुर्यद्वर्षाणां शतकं मतम् ।**
**तत्परं नाम तस्यार्धं परार्धमभिधीयते ॥'**

इति वचनात् । एतदनुसारेण प्रकृतेऽप्यन्तपदस्य परस्यान्त इति व्याख्यापि युज्यते । तावत्पर्यन्तं मोक्षे विलम्बस्यादोषत्वात् । भोगमोक्षोभयफलके प्रयोगे ऐहिकभोगोत्तर–

मामुष्मिकभोगस्यावश्यकत्वात् । अत एव भोगानितिपदमप्यैहिकामुष्मिकभोगद्वयपरं व्याख्येयम् । तादृशद्विविधभोगयोरेव पुत्रादिसाहित्यं न पुनर्मोक्षेऽपि स्वस्वरूपमात्रावस्थानरूपे तस्मिंस्तदसम्भवादिति मन्तव्यम् ॥ २९४ ॥

इदानीमीदृशफलापेक्षयाधिकस्याभावादस्मिन्नेव फले पूर्वस्मादल्पदिनसाध्यं प्रयोगान्तरमाह—

**यः सहस्रं ब्राह्मणानामेभिर्नामसहस्रकैः ।**
**समर्च्य भोजयेद्भक्त्या पायसापूपषड्रसैः ॥ २९५ ॥**

यः सहस्रमिति । द्वाभ्याम् । इह यावज्जीवपदादेरनुवृत्तिः । '**एवं यः कुरुते भक्त्या जन्ममध्ये सकृन्नर**' इत्यादिभिश्चोदकतः प्राप्तैर्विधिभिरेव निराकाङ्क्षीकृतवान् । ब्राह्मणानां विद्याविदुषामेव नान्येषाम् । '**तदधीते तद्वेदे**'ति ब्रह्मपदादणि तथैव सिद्धेः । पायसं पयोबहुलमत्यल्पतण्डुलकं परमान्नम् । अपूपाः पिष्टविकाराः पूरिकादयो बहुविधाः भोजनकुतूहलादिसूदशास्त्रीयग्रन्थेषु विविच्य वर्णिताः षट्संख्या रसा येषु तैः सितानिम्बादिभिस्तन्मिश्रितैरन्यैश्च पदार्थैः । तिक्तस्यापि कारवेल्लफलादेर्भक्षणीयत्वात्षड्रसैरित्युक्तम् ॥ २९५ ॥

**तस्मै प्रीणाति ललिता स्वसाम्राज्यं प्रयच्छति ।**

स्वस्य साम्राज्यमत्यन्ताभेदः कैवल्यमित्यर्थः । इदञ्च '**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्चे**'त्यौपनिषदानामधिकरणमनुरुध्योक्तम् । वस्तुतस्तु साम्राज्यशब्दो जगद्व्यापारस्यैव रूढ्याभिधायकः तत्प्रदत्वमेव चेह विवक्षितम्, श्रुतहानाश्रुतकल्पनयोरभावात् । अत एव पूर्वप्रयोगादेतस्य फलाधिक्यमपि । विद्याविदुषां ब्राह्मणानां सहस्रस्याशीराशेरीदृशमेव हि फलं योग्यं भवति । न चैवं सत्यनेकैर्भक्तैर्यौगपद्येनेदृशप्रयोगानुष्ठाने सर्वेषामेकस्मिन्काल एव जगद्व्यापारे स्वातन्त्र्यस्यावश्यकतया '**परस्परवैमत्याज्जगद्विलोपापत्ति**रिति तदधिकरणोक्तो दोषः प्रसज्यत इति भेतव्यम् । सृज्यमानप्राणिकर्मानुसारेणैव भगवतः प्रवृत्तिरिति तैरेवाङ्गीकारात् । अन्यथा वैषम्यनैर्घृण्यापत्तेरपरिहार्यत्वात् । तथा च **ब्रह्मसूत्रम्**— '**वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथाहि दर्शयती**'ति । ततश्च कर्मानुसारेण जायमाना प्रवृत्तिर्बहूनां समनस्कानामप्येकरूपैव सम्भवेदति न वैमत्यम् । न च परस्परेच्छानुसारेण व्याप्रियमाणानां स्वातन्त्र्यभङ्गः । स्वेच्छानुसारिप्रवृत्तिमत्त्वरूपस्वातन्त्र्यस्य सर्वेष्वविघातात् । अत एव **वासिष्ठरामायणे** कुन्ददन्तोपाख्याने माथुराणामष्टानां भ्रातॄणां सप्तद्वीपाया एकस्या एव भुवो युगपदाधिपत्यमम्बावरलब्धं वर्णितं सङ्गच्छते । सृज्यमानप्राणिकर्मानुसारेणापतत आर्थिकस्येच्छासंवादस्य तदविघातकत्वात् । न चेश्वरस्य स्वाभाविकं जगत्साम्राज्यं न शक्रादिपदवत्कर्मजन्यमिति कथमन्यस्य स्वभावोऽन्यं गच्छेदिति वाच्यम् । ईश्वरस्य

स्वाभाविकमप्यन्यस्य कर्मजन्यमित्यङ्गीकारे बाधकाभावात् सालोक्यादिफलेषु तथादृष्टत्वाच्च । एतेन नित्यसिद्धमीश्वरं प्रकृत्यैव जगदुत्पत्त्यादेराम्नानात्तन्त्रोपासकानामसन्निहितत्वान्न जगद्व्यापारकर्तृत्वं सम्भवतीति परास्तम् । उपासकानामधिकारस्यागन्तुकत्वेन नित्यसिद्धाधिकारकथनप्रकरणे प्रकृतत्वात्सन्निहितत्वयोर्युक्तत्वात् । श्रूयते चोपासकानां साम्राज्यम्– '**आप्नोति स्वाराज्यम् । सर्वमस्मै देवा बलिमावहन्ति । तेषां सर्वेषु लोकेषु कामचारो भवती**'त्यादिश्रुतिषु । । न चैतत्सावग्रहसाम्राज्यपरम्, सङ्कोचे मानाभावात् । न च' **आप्नोति मनसस्पति**'मित्युत्तरश्रुत्येश्वरस्य प्राप्तव्यत्वेन परिशेष एव प्रमाणमिति वाच्यम् । स्वाराज्यरूपेश्वरासाधारणधर्मप्राप्तौ सत्यामभेदेन धर्मिप्राप्तिरेव भवतीत्याशयेन तस्या अपि **श्रुतेरस्मद**नुकूलत्वात् । एवं '**वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिर्भवती**'त्यादयः **श्रुतयः** सर्वा अप्यत्रैवानुकूला नौपनिषदानाम् । स्पष्टमेव चाथर्वणशौनकशाखीया उपासकस्य विश्वसृष्ट्यादिविधायकत्वमामनन्ति । '**सर्वं सर्वस्य जगतो विधाता भर्ता हर्ता विश्वरूपत्वमेती**'ति । अथ तादृश उपासकधौरेय ईश्वराद्भिद्यते न वा । भवन्मतेऽपि सायुज्याख्यां चतुर्थीं मुक्तिं गतः कैवल्याख्यां पञ्चमीं मुक्तिं प्रेप्सुर्भिद्यते न वा । न चास्मन्मते तस्य जगद्व्यापाराभावेन तत्सत्त्वासत्त्वाभ्यां भेद इति वाच्यम् । अस्मन्मतेऽपि जगद्व्यापारवत्त्वेपि समनस्कत्वाऽमनस्कत्वाभ्यां भेदसम्भवात् । न चोक्ताथर्वणमन्त्रप्रथमार्धर्चे '**परिस्रुता हविषा** [पा] **वितेन प्रसङ्कोचे । गलिते वैमनस्क**' इत्यत्र विमनस्कत्वोक्तिरुपासकस्योच्यत इति वाच्यम् । सङ्कोचे प्रगलिते सतीत्युक्त्या '**घृणा शङ्का भयं लज्जे**'त्यादि**कुलार्णवो**क्तपाशाष्टकस्य चित्तवृत्तिविशेषरूपस्यानुदयप्रयुक्तत्वेन तदुक्तेर्गौणत्वात् । यच्च **भोगामात्रसाम्यलिङ्गाच्चे**'ति सूत्रे तैः **श्रुति**रुपन्यस्यते–'**तथैतां देवतां सर्वाणि भूतान्यवन्त्येवंविदं सर्वाणि भूतान्यवन्ति ते नो एतस्यै देवतायै सायुज्यं सलोकतां जयती**'ति, सापि भेदव्यपदेशपरा सत्युक्तमर्थमेव साधयति । किञ्च अधिकारः सुखसाधनं न वा । अन्त्ये सर्वलोकानां स्वर्गाद्यधिकारसाधनीभूतेषु कर्मसु प्रवृत्त्यनापत्तिः । आद्ये जगद्व्यापारस्याप्यधिकारत्वाविशेषेण सुखसाक्षात्काररूपभोगमात्रसाम्यादेव लिङ्गान्निरवग्रहमैश्वर्यमुपासकस्य सिद्ध्यतीति कथं तेन हेतुना तदभावः साध्यत इति विचारयतराम् । न चैकोऽधिकारः कथं युगपद्बहूनामुपकाराय स्यादिति वाच्यम् । सत्रयागे एकस्यैव प्रक्षेपस्य बहुयजमानोपकारकत्वस्य एकस्यैव ब्रह्मलोकस्य युगपदनेकोपासकोपकारतायाश्च दर्शनात् । न चेयं षष्ठीमुक्तिरापद्यतेति वाच्यम् । इष्टत्वात् । युक्तं चैतत् । सालोक्यादिसायुज्यान्तमुक्तिषूत्तरोत्तरोत्कर्षवत्तदुत्तरभूमिकारूपत्वेन कैवल्यानन्तरपूर्वत्वेन चास्या न्यायसिद्धत्वात् । ननु पञ्चविधा मुक्तिरिति तान्त्रिकव्यवहारस्य का गतिरिति चेत् । **सूतसंहितादिषु** '**मुक्तिश्चतुर्विधा ज्ञेये**'त्यादिव्यवहाराणां भवन्मते या गतिः सैव कैवल्यसायुज्ययोः । अवान्तरभेदाविवक्षयेति चेत् सावग्रह-

निरवग्रहयोरपि तदविवक्षयेति तुल्यम् । तस्मात्सिद्धमुपासकानां सृष्टिस्थितिलय-कर्तृत्वम् । अत एव **शैवतन्त्रे**–'**चित्तस्थितिवच्छरीरकरणबाह्येष्विं**ति सूत्रे **वार्तिककारैरुक्तम्**–

**'एवं स्वानन्दरूपस्य शक्तिः स्वातन्त्र्यलक्षणा ।**
**यथेष्टं भावनिर्माणकारणीभवति स्फुटम् ॥'**

इति । '**स्थितिलयौ**'इति सूत्रेऽप्येवम् । '**स्वशक्तिप्रचयो विश्वमिति** सूत्रेऽपि–

**शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तु महेश्वरः ।**
**इत्यागमदिशा विश्वं स्वशक्तिप्रचयो यथा ॥**
**शिवस्य तत्समस्यापि तथास्य परयोगिनः ।'**

तत्सर्वमभिप्रेत्याह–

**न तस्य दुर्लभं वस्तु त्रिषु लोकेषु विद्यते ॥ २९६ ॥**

न तस्येति । उपनिषदुक्तसर्वोत्तमोपासनाशीलस्यापि '**संकल्पादेवास्य पितरः समुत्तिष्ठन्ती**'त्याद्युच्चावचफलभोगिनोऽप्येकं दुर्लभं वस्तु जगत्साम्राज्यं वेदान्तिना-माशास्यमवशिष्यत एव अस्य तु तदपि सुलभमेवेत्यर्थः । अत एवाति-रहस्यत्वादेतदितिकर्तव्यता नैतत्प्रकरणे निर्दिष्टा अपितु त्रिशतभोजनप्रकरण एव धर्मान्कथयित्वा तेषामिह वाचनिकोऽतिदेशः कृतः । तदुक्तं तत्प्रकरण एव **ब्रह्माण्डपुराणे**–

**'रहस्यनामसाहस्रभोजनेऽप्येवमेव हि ।**
**आदौ नित्याबलिं कुर्यात्पश्चाद्ब्राह्मणभोजनम् ॥ '**

इति । अस्यार्थः–पूर्वं नित्याबलित्रिशतभोजनाख्यकर्मणोर्यथा पौर्वापर्यमुक्तम् एवमेव नित्याबलिसहस्रभोजनयोरपीति । अत्रेदं विचार्यते–एवं हि **ब्रह्माण्डपुराणे** स्मर्यते–'**महाषोडशिकारूपान्विप्रानादौ तु भोजये**'दिति षोडशब्राह्मणभोजनात्मकं कर्म विधाय '**अभ्यक्तान्गन्धतैलेन स्नातानुष्णेन वारिणे**'त्यादिना च तदितिकर्तव्यतां प्रतिपाद्य '**एवं नित्याबलिं कुर्यादादौ ब्राह्मणभोजन**'मिति वचनेनास्य कर्मणो नित्याबलिरिति संज्ञां प्रदर्श्य '**त्रिशतैर्नामभिः पश्चाद्ब्राह्मणान्क्रमशोऽर्चये**'दिति त्रिशतभोजनाख्यं कर्मान्तरं विधाय तत्पश्चात् '**तैलाभ्यङ्गादिकं दद्याद्विभवे सति भक्तित**' इत्यादिना चोच्चावचान्यङ्गानि विधाय.–

**'एवं यः कुरुते भक्त्या जन्ममध्ये सकृन्नरः ।**
**तस्यैव जन्म सफलं मुक्तिस्तस्य करे स्थिता ॥'**

इति फलविधिपूर्वकमुपसंहृतम् । तत्र संशयः किं नित्याबलित्रिशतभोजने समप्रधाने उत्तरत्रिशतभोजनस्य नित्याबलिरङ्गमिति । यदि समप्राधान्यं तदा प्रकृतौ कालार्थसंयोगमात्रार्थकादादिपदादनङ्गस्य त्रिशतभोजनविकारे सहस्रभोजने नित्याबलेरग्नीषोमीयविकारेष्वाग्नेययागस्येव नातिदेशः । अङ्गाङ्गिभावे तु भवत्यतिदेश इति ।

तत्र पूर्वपक्षः—श्रुतिलिङ्गादेरङ्गताबोधकस्यादर्शनात्समप्राधान्यमेव द्वयोर्वक्तव्यम् । न च '**एवं नित्याबलिं कुर्यादादौ ब्राह्मणभोजनम् । त्रिशतैर्नामभिः पश्चा**'दिति पौर्वापर्यविधानात् '**वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेते**'त्यत्रेवाङ्गाङ्गिभावसिद्धिरिति वाच्यम् । वाजपेयस्य फलवत्त्वेन प्राधान्यात्तत्प्रकरणे पठितस्य बृहस्पतिसवस्य तदङ्गत्वसम्भवेऽपि प्रकृते द्वयोरपि फलसंयोगाभावेन प्रकरणिनो निश्चयाभावेनाङ्गाङ्गिभावे विनिगमनाविरहात् विश्वजिन्न्यायेन फलकल्पनस्योभयोरप्याकाङ्क्षाविशेषेण तुल्यतया '**दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेते**'तिवत्कालार्थस्येव संयोगस्य सिद्धेः । न च '**एवं यः कुरुते भक्त्ये**'ति वाक्येन त्रिशतभोजनेन विधेरानन्तर्यात्फलवत्त्वे बोधिते नित्याबलेः फलवदफलन्यायेन नामनहोमानामिवाङ्गसिद्धिरिति वाच्यम् । तत्र हि '**वैश्वदेवीं सांग्रहिणीं निर्वपेद्ग्रामकाम**' इत्युत्पत्तिविधावेव फलश्रवणेन सांग्रहण्या आमनहोमाङ्गित्वसिद्धावपि प्रकृते भिन्नवाक्योपात्तस्य फलस्याकाङ्क्षावशाद्वाक्यैकवाक्यतयान्वयस्य वक्तव्यतयोभयोरप्याकाङ्क्षावशात्फलसम्बन्धसिद्धेः । '**एवं यः कुरुत**' इत्यत्रैवंपदेनोभयोरनुवादसम्भवात् आनन्तर्यस्योभयाकाङ्क्षातो दुर्बलत्वात् वाचःक्रमवर्तित्वेनावर्जनीयत्वाच्च । अत एवोक्तं '**आनन्तर्यमचोदने**'ति । किञ्च नित्याबलिप्रकरणे विहितानां गन्धतैलाभ्यङ्गादिपायसफलादिनिवेदनान्तानामङ्गानामनुवादेन विभवपरत्वेन व्यवस्थाविधिस्त्रिशतभोजनप्रकरणे श्रूयमाणः परो वादसापेक्ष इति तन्निर्वाहायानयोः प्रकृतिविकृतिभावकल्पनया नित्याबलिधर्माणां त्रिशतभोजनेऽतिदेशो वक्तव्यः । तेन प्राकृतानां कामेश्वर्यादिनाम्नां वैकृतैः ककाररूपादिनामभिः शरन्यायेन बाधोऽपि सङ्गच्छते । अङ्गस्य हि प्रधानं प्रति प्रकृतित्वमसम्भवि भावनायां हि भाव्यान्वयोत्तरं कारणान्वयस्ततः कथंभावाकाङ्क्षायां धर्माणामन्वय इति भाव्यन्वयात्पाश्चात्योऽङ्गत्वनिर्णयस्ततोपि पश्चादतिदेशः '**अङ्गं सदतिदिश्यत**' इति न्यायादिति स्थितिः । ततश्च त्रिशतभोजनकरणकभावनायां भाव्यकरणयोरन्वयोत्तरं तृतीयक्षणे कथंभावाकाङ्क्षाकाल एव नित्याबलेरङ्गत्वं वदता भाव्याकाङ्क्षा वक्तव्या । तदुत्तरक्षणे परस्पराकाङ्क्षालक्षणेन प्रकरणेनोभयोरङ्गाङ्गिभावे सिद्धे त्रिशतभोजनभावनाया निराकाङ्क्षात्वात्ततोऽपि पश्चात्तानानां नित्याबल्यङ्गानां कथं प्रधानेऽतिदेशसिद्धिः । नहि प्रत्येकं स्वस्ववाक्येंऽशत्रयपरिपूर्णयोः पौर्णमासीवैमृधयोरिव वाक्यान्तरेणाङ्गाङ्गिभावबोधस्तादृशवाक्यादर्शनात् । प्रकरणादङ्गाङ्गिभावस्य तूक्तरीत्या सम्भवात् । न च त्रिशतभोजनविकृतौ सहस्रभोजनेऽतिदेशाल्लिङ्गादेवाङ्गत्वसिद्धिरिति

वाच्यम् । लिङ्गदर्शनमात्रनिर्णयस्यानिर्णायकत्वात् । सहस्रभोजन इतिं सप्तम्या '**तत्र जयाञ्जुहुया**'दितिवदङ्गित्वबोधकतयान्यत्र प्रधानस्यापि नित्याबलेस्तावन्मात्रं प्रत्येवाङ्गत्वमिति बोधनेनाप्यतिदेशवाक्योपपत्तेश्च । **बृहस्पतिसवे** तथा दर्शनात् ।

**इयांस्तु विशेषः**–तत्र प्रकरणान्तराद्भेदः । अत्र तु त्रिशतीप्रकरण एव दूरस्थानुवादेन द्वादशोपसत्त्ववन्नित्याबलेरङ्गत्वविधानात् '**सन्निधौ त्वविभागा**'दिति न्यायेन न भेद इति । तस्मान्नित्याबलित्रिशतभोजनयोः समप्राधान्यमेवेति । सिद्धान्तस्तु–फलविधिवाक्यस्य नित्याबलिवाक्येन सहान्वयस्तूभयाकाङ्क्षामात्राद्वक्तव्यः । त्रिशतभोजनवाक्येन तु सहानन्तर्येणोभयाकाङ्क्षया चेति झडिति तेनैव सहान्वये नित्याबलेः फलवदफलन्यायेन प्रधानोपकारकत्वेनैव भाव्याकाङ्क्षानिवृतौ न फलवाक्येनान्वय इति प्रकरणिनिश्चयो निराबाधः । एवं च नामत्रिशतीप्रकरणे कामेश्वर्यादिनामान्तराणां प्रयोगकथनस्यासमञ्जसतापि निरस्ता भवति । न च नित्याबलेस्त्रिशतभोजनंप्रति प्रकृतित्वमप्यावश्यकम् । '**तैलाभ्यङ्गादिकं दद्याद्विभवे सति भक्तित**' इति वाक्ये तैलाभ्यङ्गादेरेव त्रिशतभोजनाङ्गत्वेन विधेयत्वात् । '**अभ्यक्तान्गन्धतैलेने**'यादिवाक्यानां त्ववान्तरप्रकरणान्नित्याबल्यङ्गत्वेनैव विधायकतया तदनुवादेन विभवपरत्वेन व्यवस्थामात्रविधायकत्वाङ्गीकारे त्रिशतब्राह्मणानां तैलाभ्यङ्गादेरनापत्तेः प्रापकाभावात् व्यवस्थायाः पुरोवादानुसारेण नित्याबलावेव सिद्धेः । न च चोदकतः प्राप्तिः प्रकृतिविकृतिभावस्याधुनाप्यसिद्धेः । एतद्बलादेव साधने त्वन्योन्याश्रयः । न चैवं विभववाक्येऽभ्यङ्गविधिस्तदनुवादेन व्यवस्थाविधि- श्चेति वाक्यभेदः । '**आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी**'ति न्यायेन विभवे सत्येव तत्सामर्थ्यस्य न्यायलभ्यतया तदंशेऽनुवादात् । काम्येऽपि यथाशक्त्युपबन्धस्य तान्त्रिकैः फलतारतम्यविधया स्वीकारात् । प्रकृतिविकृतिभावस्वीकारेऽपि वा न प्राकरणिकमङ्गत्वं ब्रूमः । येनोक्तरीत्या विरोध आपद्येत । अपि त्वादिपश्चाद्वाक्येनैवाङ्गत्वं वैमृधपूर्णमासयोरिव विधीयते इत्यदोषः । तस्मान्नित्याबलिस्त्रिशतभोजनं प्रत्यङ्गमेवेति । न चैवमतिदेशवाक्य एवमेवेत्यनेनैव सर्वाङ्गातिदेशे सिद्धे पुनः '**आदौ नित्याबलिं कुर्या**'दिति वाक्यवैयर्थ्यम् । एवं पदस्य सन्निहिततैलाभ्यङ्गादिसन्निपत्योपकारकाङ्क्षमात्रपरत्वभ्रमनिरासाय तद्विवरणार्थत्वादिति दिक् ।

**अत्रायं प्रयोगविधिः**–प्राणानायम्य देशकालौ संकीर्त्य श्रीमहात्रिसुरसुन्दरीप्रीत्यर्थममुकसंख्याकैर्दिवसै रहस्यसहस्रनामभिः सहस्रब्राह्मणान्पूजयन्भोजयिष्ये तत्पूर्वाङ्गत्वेन नित्याबलिं च करिष्य इति संकल्प्य पुण्याहं वाचयित्वा षोडशब्राह्मणान्निमन्त्रयेत् । तेष्वागतेषु पादान्प्रक्षाल्य गन्धतैलेनाभ्यज्योष्णोदकैः स्नपयित्वासनेषूपवेश्य तिलकेषु

धृतेषु [1]द्वितारादिभिर्नमोन्तैः कामेश्वर्यन्तैः कामेश्वर्यादित्रिपुरसुन्दर्यन्तैश्चतुर्थ्यन्तैर्नामभिर्जातेषु षोडशमन्त्रेष्वेकैकेन मन्त्रेणैकैकस्मिन्ब्राह्मणे एकैकां तिथिनित्यामावाह्य षोडशोपचारैः पदार्थानुसमयरीत्या पूजयेत् । यथा प्रथमब्राह्मणे 'ह्रीँश्रीँकामेश्वर्यै नमः कामेश्वरीं प्रतिपत्तिथिनित्यामावाहयामि स्थापयामि पूजयामि तर्पयामि नमः' इत्यक्षतान् शिरसि निक्षिप्य द्वितीयब्राह्मणे 'ह्रीँश्रीँभगमालिन्यै नमः भगमालिनीं द्वितीयातिथिनित्यामावाहयामि स्थापयामि पूजयामि तर्पयामि नमः' इत्यक्षतान्निक्षिप्य तृतीयादिषोडशान्तेष्वेवमेव नित्यक्लिन्नां भेरुण्डां वह्निवासिनीं वज्रेश्वरीं शिवदूतीं त्वरितां कुलसुन्दरीं नित्यां नीलपताकां विजयां सर्वमङ्गलां ज्वालामालिनीं चित्रां त्रिपुरसुन्दरीं च प्राक्संस्थमुदक्संस्थं वावाह्य पुनरनेनैव प्रवृत्तिक्रमेणासनपाद्यार्घ्याचमनस्नानानि कल्पयित्वा वसनाभरणे प्रत्यक्षे दत्त्वा संस्कृतैः सहेतुकैः सन्तर्प्य गन्धपुष्पधूपदीपान्दत्वा सूपापूपशर्कराज्यपायसफलादिभिर्विशेषान्नैर्भोजयित्वा ताम्बूलदक्षिणानमस्कारप्रार्थनाविसर्जनानि कुर्यात् । आसनादिसर्वोपचारेष्वप्यादौ द्वितारं ततस्तत्तन्मन्त्रास्तदन्ते तत्तन्नामानि चतुर्थीनमोन्तानि तत आसनं समर्पयामि नम इत्याकारकाः करणमन्त्रा ऊहनीयाः । अत्र तैलाभ्यङ्गादिकमावश्यकम् ।
**इति नित्याबलिः ।**

अथः द्वितीये तृतीयादौ वा दिवसेऽप्येवमेव सहस्रं ब्राह्मणान्भोजयेत् । 'ह्रीँश्रीँश्रीमात्रेनमः, ह्रीँश्रीँश्रीमहाराज्ञ्यैनमः' इत्यादयो मन्त्राः । श्रीमातरमावाहयामीत्यादिरावाहने मन्त्रशेषः । आसनं समर्पयामि नम इत्यादय आसनादिषु यथालिङ्गं मन्त्रशेषाः । तैलाभ्यङ्गादिकं विभवशालिनामावश्यकम् अन्येषां तु यथाशक्तीति विशेषः । पूजारम्भे पूर्वभागस्य समाप्तावुत्तरभागस्य च पाठादिकं पूर्ववदेव, परन्तु पदार्थानुसमयोऽपि प्रतिशतं प्रतिपञ्चाशद्वा प्रकारान्तरेण वा । सौकर्याय तर्पणान्तान्पुष्पान्तान्वोपचारान्प्रवृत्तिक्रमेण दत्त्वा धूपदीपान्सहस्रेभ्यो दद्यादित्यपि युज्यते । अश्वप्रतिग्रहनिमित्तकवारुणचतुःकपालपुरोडाशबाहुल्ये तथा दर्शनात् । सहस्रसंख्याकानां ब्राह्मणानां युगपदलाभे तु लब्धमात्रानेव तान्बहुभिर्दिनैर्भोजयन्संख्यां पूरयेत् । संख्यायाः पृथक्त्वनिवेशित्वाविरोधस्य **सहस्रभोजनखण्डव्याख्यानेऽस्माभिः** समर्थितत्वात् तत्समाप्तिपर्यन्तं स्वयं नियमवान्भवेत् । यत्तु प्रकृतौ स्मर्यते–

**'शुक्लप्रतिपदारभ्य पौर्णमास्यवधि क्रमात् ।**
**दिवसे दिवसे विप्रा भोज्या विंशतिसंख्यया ॥**
**दशभिः पञ्चभिर्वापि त्रिभिरेकेन वा दिनैः ।**
**त्रिंशत्षष्टिः शतं विप्राः सम्भोज्यास्त्रिशतं क्रमात् ॥'**

---

1. द्वितीयादिभिः इति पाठः ।

इति । तत्र ब्राह्मणानां त्रिशत्या युगपल्लाभेऽपि प्रत्यहं विंशतिसंख्यानामेव भोजनं मुख्यः कल्पः । पञ्चदश्यामेकैकाक्षरस्यैकैकतिथिनित्यास्वरूपत्वेनैकैकाक्षरघटितानां विंशतिविंशतिनाम्नामपि तत्तद्देवताकत्वेन तत्तत्तिथावेव तत्तद्देवतापूजनस्य युक्तत्वात् । पञ्चदशदिनपर्यन्तं स्वस्यावकाशाभावे सन्त्यन्येऽनुकल्पाः । एवं च सहस्रनामस्वक्षरक्रमाभावेन कतिपयेषां तत्तत्तिथिनित्यादेवताकत्वे मानाभावेन प्राकृतमुख्यकल्पे प्रयोजकस्य तिथ्यक्षरदैवतैक्यस्य विकृतावभावात्तत्प्रयुक्तस्य पञ्चदशभिरेव दिनैः कर्मसमाप्तिरूपस्य नियमस्यातिदेशो न भवति । अत एव सौर्ये चरौ कपालप्रयोजकपुरोडाशस्याभावान्न कपालानामतिदेशः । तस्मादिह सतिसम्भवे प्रयोगविधेर्विलम्बासहिष्णुतयैकस्मिन्नेवाहनि सहस्रभोजनं मुख्यः कल्पः । अनुकल्पेषु प्रकृतौ दशभिः पञ्चभिरित्यनेनैव सिद्धे त्रिंशत्षष्टिरिति पुनर्वचनस्य न्यूनाधिकसंख्यापरिसंख्यार्थकत्वात्प्रत्यहं समसंख्या एव ब्राह्मणा भोजयितव्या इत्यंशस्य विधित्सितत्वावगमेनार्थिकत्वाभावादतिदेशे सिद्धे त्रिदिनपक्षस्य साद्यस्कसारस्वतसत्रयोरग्नि चयनस्येवासम्भवाद्बाधः । शतब्राह्मणानामप्यलाभे तु यथासम्भवं विंशतिदिनादिपक्षाः प्रकृतावनुक्ता अपि न्यायत एवोक्तनियमाविरोधेन लभ्यन्त इति यथायथं पूर्वोत्तरतन्त्रपारदृश्वभिरूहनीयम् । अत्र **बौधायनसूत्रो**क्तसहस्रभोजनेतिकर्तव्यता समुच्चीयत इति तु तद्व्याख्यायामेव निर्णीतमस्**माभिः** ॥ २९६ ॥

एवं पञ्चत्रिंशता श्लोकैः पुरुषार्थप्रदायकत्वदर्शनेन रहस्यतमत्वविवेचने समाप्ते क्रमप्राप्तं '**इदं विशेषाच्छ्रीदेव्याः स्तोत्रं प्रीतिविधायक**'मित्युक्तमर्थं विवेचयति—

**निष्कामः कीर्तयेद्यस्तु नामसाहस्रमुत्तमम् ।**
**ब्रह्मज्ञानमवाप्नोति येन मुच्येत बन्धनात् ॥ २९७ ॥**

निष्काम इति । निष्कामः विषयकामनारहितः । ब्रह्मज्ञानं जीवब्रह्मणोरभेदभ्रमनिवर्तकं महावाक्यजन्यमात्ममात्रविषयकं निर्विकल्पाख्यं चरमवृत्तिरूपमनुभवात्मकं ज्ञानम्, येन प्राप्तेन ज्ञानेन बन्धनादनादिसिद्धाहन्ताममतादिरूपवासनाजालान्मुच्यते । अयं भावः— नामकीर्तनस्य नित्यप्रयोगारम्भे उपात्तदुरितक्षयार्थमित्युल्लेखस्य स्थाने यदि श्रीत्रिपुरसुन्दरीप्रीत्यर्थमित्युल्लिख्येत तावतैव ब्रह्मज्ञानलाभ इति । न च कामनोल्लेखे कथं निष्कामप्रयोगतेति वाच्यम् । विषयकामनोल्लेख एव सकामत्वव्यवहारात् । अत एव शिष्टानां परमेश्वरप्रीत्यर्थमित्युल्लिखिते कर्मणि निष्कामत्वव्यवहारः । दुरितहरप्रयोगस्य त्वनेन प्रसङ्गात्सिद्धिः । '**श्रीमातुः प्रीतये नामसहस्रं यस्तु कीर्तये**'दित्यनुक्त्वा निष्काम इत्युक्तेरीदृशप्रयोगशीलः कदापि विषयकामप्रयोगं न कुर्यादिति ध्वननाय । तदुक्तम्– '**नित्यनैमित्तिकैरेव कुर्वाणो दुरितक्षय**'मिति ॥ २९७ ॥

ननु निष्कामप्रयोगशीलस्यापि प्रमादादिभिः सकामप्रयोगे प्रवृत्तौ किं स्यादत आह–

**धनार्थी धनमाप्नोति यशोऽर्थी प्राप्नुयाद्यशः ।**
**विद्यार्थी चाप्नुयाद्विद्यां नामसाहस्रकीर्तनात् ॥ २९८ ॥**

धनार्थीति । विद्यार्थी वेदशास्त्राद्यपरिमितविद्याकामः न तु श्रीविद्याकामः । तत्प्राप्तेः पूर्वमत्राधिकाराभावेनानधिकरिणा कृतस्यापि प्रयोगस्याकृतत्वेन निष्फलत्वात् प्रत्युतानर्थस्मरणाच्च । विषयकामनासामान्याभावो हि निष्कामत्वम् । मध्ये विषयकामनायाः सकृदप्युदये तु निष्कामत्वमेव व्याहन्येत । बुद्धिचाञ्चल्येनोभयंथापि प्रयोगकरणे तु निष्कामप्रयोगोऽपि कामनायामेवोपक्षीण इति तत्तत्फलान्येवाप्नोति न ब्रह्मज्ञानमिति भावः । अथवा विद्याशब्दो ब्रह्मज्ञानपर एव । अम्बाप्रीत्यर्थमितिवद्ब्रह्मज्ञानप्राप्त्यर्थमित्युल्लेखेऽपि तल्लभ्यत इत्यर्थः । धनयशसोर्ग्रहणं तु दृष्टान्तार्थम् । यथा धनार्थी धनमाप्नोतीत्यादिरर्थः । एतेनोत्तरोत्तरोत्कृष्टफलकप्रयोगप्रस्तावे सर्वोत्तरप्रंयोगानन्तरं धनकामादिप्रयोगकथनमसमञ्जसमिति निरस्तम् ॥ २९८ ॥

ईदृशमिदं स्तोत्रं यं निष्कामप्रयोगमारभ्य ततश्च्युतोऽपि न प्रत्यवैति प्रत्युत यद्यदिच्छति तत्तदाप्नोत्येव । अतः कथमेतेन सदृशमन्यत्स्तोत्रं स्यादित्याह–

**नानेन सदृशं स्तोत्रं भोगमोक्षप्रदं मुने ।**
**कीर्तनीयमिदं तस्माद्भोगमोक्षार्थिभिर्नरैः ॥ २९९ ॥**

नानेनेति । भोगप्रयोगाच्च्युतस्य मोक्षं मोक्षप्रयोगाच्च्युतस्य भोगमुभयापेक्षस्योभयं तत्राप्यादौ भोगं पश्चान्मोक्षं प्रददातीत्यर्थः । **ब्रह्माण्डपुराणे**ऽप्युक्तम्–

**'तस्मादशेषलोकानां त्रिपुराराधनं विना ।**
**न स्तो भोगापवर्गौ तु यौगपद्येन कुत्रचित् ॥**
**तन्मनास्तद्गतप्राणस्तद्याजी [1]तद्गतेहकः ।**
**तदात्मैक्येन कर्माणि कुर्वन्मुक्तिमवाप्स्यसि ॥**
**एतद्रहस्यमाख्यातं सर्वेषां हितकाम्यया ।'**

इति । अथवा पूर्वश्लोकस्य ब्रह्मज्ञानप्रदत्वव्याख्यापक्षे तत्साधनवैराग्यप्रदत्वमनेन श्लोकेनोच्यते । भोगेभ्यो विषयाभिलाषेभ्यो मोक्षो मोचनं तद्वासनात्यागस्तं प्रददातीत्यादिरर्थः । उक्तञ्च **अष्टावक्रगीतायाम्–मुक्तिमिच्छसि चेत्तात विषयान्विषवत्त्यजे'**ति ॥ २९९ ॥

---

1. तद्रहस्यकः इति पाठः ।

किं बहुना तन्त्रोक्तकर्मसु भराभावेन ये श्रौतस्मार्तकर्मस्वेवातीवाचरणादरणशीलास्तेषामप्येतदुपकारकमित्याह–

**चतुराश्रमनिष्ठैश्च कीर्तनीयमिदं सदा ।**
**स्वधर्मसमनुष्ठानवैकल्यपरिपूर्तये ॥ ३०० ।**

चतुरेति । ब्रह्मचारिगृहस्थवानप्रस्थयतयस्तत्तदवान्तरभेदाश्चतुराश्रमनिष्ठास्तैः स्वस्वधर्माणां सम्यग्यथाशास्त्रमनुष्ठाने क्रियमाणे यदवश्यंभवि वैकल्यं वैगुण्यं तस्य परिपूर्तये समाधानायेति तादर्थ्ये चतुर्थी । चतुराश्रमिणां यानि यानि कर्माणि **श्रुतिस्मृति**विहितानि तानि तानि सर्वाणि सर्वाङ्गोपसंहारसमर्थस्यैव फलप्रदानि । सर्वाङ्गोपसंहारश्च प्रायेणाधुनिकानामशक्यतमः । तदिद**मस्माभिः** प्रदर्शितं **शिवस्तवे**–

**'स्वामिन्नङ्गेषु सर्वेष्वपि सुविरचितेष्वेव कर्माणि किञ्चि–**
**त्तुच्छं यच्छन्ति नो चेन्निरयदुरवटे संशयं वासयन्ति ।**
**मन्त्रैर्यन्त्रार्थबोधान्गुरुकुलनियमान्देशकालार्थशोधा–**
**द्राढं गूढं च तत्त्वात्कथमतिकठिनोपेयुषी शेमुषी नः ॥'**

इति । ततश्च दुरवगाहाङ्गलोपस्यावश्यकतया तज्जनितपापनिरासद्वारा साद्गुण्यसम्पादनायेदं सर्वेषामावश्यकमिति भावः । उक्तञ्च **देवीभागवते** तृतीयस्कन्धे देवान्प्रति भगवत्या–

**'मन्नामोच्चारणात्सर्वे मखेषु सकलेषु च ।**
**सदा तृप्ताश्च सन्तुष्टा भविष्यध्वं सुराः किल ॥'**

इत्थञ्च संयोगपृथक्त्वन्यायेनास्य क्रत्वर्थपुरुषार्थोभयरूपतासिद्धिः ॥ ३०० ॥

*अथ परिभाषायां विंशतिश्लोकान् व्याचष्टे–*

***नामस्मरणावश्यकतोक्तिः सार्धत्रयोदशश्लोकैः ।***
***उपसंहारः सार्धैः पञ्चभिरेकेन सूतोक्तिः ॥ ३९ ॥***

*अत्र चरमश्लोकस्यैकस्य सूतोक्तिरूपताकथनेन ततः पूर्वेषां हयग्रीवोक्तिरूपतैवेति द्योतितम् **'दशभूः सार्धनृपाला'** इति वक्तृनिर्णायकश्लोके चरमस्थाने हयग्रीवस्यैव कथनात् तत्परत एतदवधिपर्यन्तमन्यस्य कस्यापि वक्तृत्वेन परिगणनाभावाच्च । तत्रैवाध्युष्टमित्युक्तिस्तु पूर्वभागाभिप्रायेणेत्यविरोधः ॥ ३९ ॥*

नन्वङ्गलोपप्रतिसमाधानाय प्रायश्चित्तान्यपि तत्र तत्रैव विहितानीति तैरेव साद्गुण्यसिद्धौ किमनेन सहस्रनामस्तोत्रेणेत्यत आह–

**कलौ पापैकबहुले धर्मानुष्ठानवर्जिते ।**
**नामानुकीर्तनं मुक्त्वा नृणां नान्यत्परायणम् ॥ ३०१ ॥**

कलाविति । पापैकबहुले चतुष्पादस्य धर्मस्य पादत्रये पापेन लुप्ते । मुक्त्वेति विनार्थकमन्वयान्तरमखण्डं न तु क्त्वाप्रत्ययान्तम् । मोचनकर्तृकक्रियान्तराभावेन तथात्वायोगात् । स्थितानामिति शेषपूरणेनायनक्रिययैव वा समाधेयम् । नामान्य-नादृत्य स्थितानां स्वस्वसाङ्गकर्मानुष्ठानतः पततामित्यर्थः । अन्यत् **श्रुतिस्मृतितन्त्रो**दितं प्रायश्चित्तं न परायणं नाश्रयः । न वैकल्यपरिपूरकमिति यावत् । नामानुकीर्तनं तु भवति तथा—

**'प्रायश्चित्तान्यशेषाणि तपःकर्मात्मकानि वै ।**
**यानि तेषामशेषाणां कृष्णानुस्मरणं परम् ॥**
**यत्कृत्यं तन्न कृतं यदकृत्यं कृत्यवत्तदाचरितम् ।**
**उभयोः प्रायश्चित्तं शिव तव नामाक्षरद्वयं कथितम् ॥**
**किमन्येन मुनिश्रेष्ठाः प्रायश्चित्तेन कर्मणा ।**
**प्रायश्चित्तमघौघस्य देवीनामानुकीर्तनम् ॥'**

इत्यादिवचनात् । किञ्च अत्र तृतीयवचने प्रायश्चित्तस्य कर्मणेति विशेषणे-नैतत्सूचितम्— प्रायश्चित्तानामपि कर्मविशेषरूपत्वात्तेषामपि साङ्गानामेव फल-जनकत्वं वाच्यम् । साङ्गता तूक्तरीत्या दुःशकैव । तत्रापि प्रायश्चित्तान्तरग-वेषणेऽनवस्था । न च नामस्मरणस्यापि प्रायश्चित्तरूपकर्मत्वाविशेषात्साङ्गतायै प्रायश्चित्तान्तरगवेषणं तुल्यमिति वाच्यम् ।दुरवगाहाङ्गान्तरनिरपेक्षस्यैव नामस्मरण-मात्रस्य पापापनोदकत्वात् । तदुक्तं **विष्णुभागवते**—

**'साङ्केत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।**
**वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥'**

इति । साङ्केत्यं पुत्रादिनाम । स्तोभोऽर्थहीनः शब्दः । **शिवरहस्ये**ऽपि—

**'अवशेनापि यन्नाम्नः कीर्तनान्मुच्यते नरः ।**
**स कथं न महादेवः सेव्यते बुद्धिशालिभिः ॥'**

इति । **देवीभागवते** तृतीयस्कन्धे—

**'अस्पष्टमपि यन्नाम प्रसङ्गेनापि भाषितम् ।**
**ददाति वाञ्छितानर्थान्दुर्लभानपि सर्वथा ॥'**

इति । **शक्तिरहस्ये**ऽपि—

**'मदात्प्रमादादुन्मादाद्दुःस्वप्नात्स्खलनादपि ।**
**कथितं नाम ते गौरि नृणां पापापनुत्तये ॥'**

इति । मदः सुरापानादिजन्यः । प्रमादोऽनवधानता । उन्मादो भूताद्यावेशः । उत्स्वप्नो निद्रादशायामभिलापः । स्खलनं किञ्चिद्वक्तुं प्रवृत्तस्य मुखात्तदतिरिक्तशब्दनिःसरणम् । किञ्च अस्ति हि **महाभाष्ये** प्रसिद्धः कूपखानकन्यायः – तृषानिवृत्तिपङ्कलेपनिरास-फलकस्य कूपस्य खननेऽपि जायेत एव तृषापङ्कलेपौ तावपि सिद्धकूपे तज्जन्यजलेन नश्यत एवेति राजन् ङस् पुरुष सु इत्याकारकापशब्दप्रयोगजन्यं पातकं तज्जन्यराजपुरुषेति परिनिष्पन्नरूपप्रयोगेण नश्यतीति स्वीकारात् । तेन न्यायेन प्रकृतेऽपि नामस्मरणनाश्यतावच्छेदकपांपत्वावच्छिन्नत्वाविशेषान्नामस्मरणाङ्गलोपजन्य-पातकस्यापि तेनैव नामस्मरणेन नाश इति नानवस्था । अनेनैवाशयेन ग्रन्थान्ते-ऽस्माभिर्वक्ष्यते–

**तथाप्यन्तः सन्तः सदयहृदयानाममहिमा–**
**ष्यपूर्वस्तस्मान्मे न खलु खलपापोभयभयम् ।'**

इति । अपूर्वः स्वाङ्गलोपजनितपातकनिवर्तकरूपः । पूर्वं प्रायश्चित्तादिकर्मसु क्वाप्यक्लृप्त इति तदर्थः । न च श्रौतस्मार्तादिप्रायश्चित्तसाङ्गतायै नामकीर्तन-स्योपयोगोऽस्त्विति वाच्यम् । तद्धेतोरेवास्तु तद्धेतुत्वं किं तेनेति न्यायविरोधात् । तदिदं सर्वमुक्तमास्माकीनशिवस्तवे–

**'वेधा वैधापराधानपि शिव बहुधा तान्समाधातुमाधा–**
**त्प्रायश्चित्तानि वित्ताधिपजनसुविधेयानि वैषम्यभाञ्जि ।**
**कच्छेऽपच्छेदमाप्ते पुनरपि यजनं पूर्णयज्ञान्तराये**
**त्वेकाल्याज्येन पूर्णाहुतिरिति बहुशस्तत्त्वमेतन्न जाने ॥**
**कृत्यस्याकरणेऽप्यकृत्यकरणेऽप्युक्तं पुराणादिषु**
**प्रायश्चित्तगणे परं शिवशिवेत्युच्चारणं भक्तितः ।**
**कृत्वा कर्म महेश तत्प्रतिसमाधानाय चेत्त्वत्स्मृतिः**
**सादावेव कृता न तारयति किं तस्मात्त्यजामि क्रियाः ॥'**

इति । कर्मणः समाधानाय प्रायश्चित्तं तस्यापि समाधानान्तरं प्रति समाधानमित्यर्थः । तस्मान्नामानुकीर्तनमेव परायणमिति भावः ॥ ३०१ ॥

ननु नामकीर्तनसामान्यस्य पापक्षयजनकत्वे प्रकृते किमायातमित्याशङ्क्य सर्वेषां पुण्यवन्नाम्नामविशेषेण पापनाशकत्वेऽपि तमोहराणां खद्योताग्निचन्द्रसूर्यादीनां तेजसामिवास्ति तारतम्यं तत्रैवैतदेव सर्वातिशायीति कथनाय सारालङ्कारेण भूमिकाभेदान्वर्णयति–

**लौकिकाद्वचनान्मुख्यं विष्णुनामानुकीर्तनम् ।**
**विष्णुनामसहस्राच्च शिवनामैकमुत्तमम् ॥ ३०२ ॥**

लौकिकादिति। लौकिकादित्यध्युष्टैः घटपटादिशब्दप्रयोगेऽप्य- स्त्येव पुण्यम्। **'एकः शब्दः सम्यग्ज्ञातः सुष्ठुप्रयुक्तः स्वर्गे लोके कामधुग्भवती'**ति वचनात् तादृशशब्द-सहस्रोच्चारणमपेक्ष्य विक्रमार्कादिपुण्यश्लोकमनुजवाचकस्यैकस्य शब्दस्योच्चारणं विशिष्टफलदम्। उक्तञ्च **विष्णुभागवते**—

**'ध्रुवं ब्रह्मऋषीन्सप्त पुण्यश्लोकांश्च मानवान्।**
**उत्थायापररात्रान्ते प्रयताः सुसमाहिताः॥**
**स्मरन्ति मम रूपाणि मुच्यन्ते तेंऽहसोऽखिलात्।'**

इत्यादि, तादृशनामसहस्रकीर्तनमपेक्ष्येति लौकिकाद्वचनादित्यस्यार्थः। विष्णुना-मेति विष्णूनां नामेति विग्रहः। अनन्तसंख्यानां विष्णूनां मध्ये यस्य कस्यचि-दन्यतमस्यापि नामैकवचनादेकमपीत्यर्थः। अनुकीर्तनमित्यस्यानुकीर्त्यमानमित्यर्थः। अनुसृतं कीर्तनं यस्येति विग्रहात्। इदं च पदं शिवनामादिषूत्तरत्राप्यनुवर्तते। शिवानां नाम रुद्रेश्वरशिवमहेश्वरसदाशिवानां नाम। **वातुलशुद्धे** तत्त्वभेदपटले—

**'शिवमेकं विजानीयात्सादाख्यं पञ्चधा भवेत्।**
**महेश्वरो महासेनः पञ्चविंशतिभेदवान्॥'**

इत्यादिनान्यत्र च तद्भेदा उक्ता अनुसन्धेयाः। अयं भावः— विष्णूनामानन्त्येष्वेकैव भूमिका। रुद्रादीनां तूत्तरोत्तरं भूमिका भिद्यन्ते। तास्वप्येकैकस्यां रुद्रादेरानन्त्यमेवेति द्योतनाय विष्णुपदसमानयोगक्षेमगुणिवाचकम्। **'महेश्वरो महासेनः पञ्चविंशतिभेदक'** इत्यादिनान्यत्र च तद्व्यूहा उक्ता अनुसन्धेयाः। रुद्रपदमनुक्त्वा सर्वानुस्यूतं शिवपदं प्रयुक्तम्। तेन विष्णुनाम ततः परं रुद्रनाम ततः परमीश्वरीनामेत्याद्या भूमिका उन्नेयाः।

इयांस्तु विशेषः— विष्णूनां तरतमभावापन्नत्वेनानन्त्याद्यथाकथञ्चिदपि तन्नामो-च्चारणं समानफलकमेव। शिवानां तु तरतमभावेनाप्यानन्त्यात्परस्परनामसा-ङ्कर्याच्च तादृशतादृशभूमिकापदार्थानुसन्धानपुरःसरं कीर्त्यमानं नाम तथातथो-त्तममिति। अथवा विष्णुरप्यादित्यादिगणान्तर्गतत्वादिरीत्याप्यनन्तविध एवेति तथापि नामसङ्करेऽर्थानुसन्धानत एव विशेषो वेदितव्यः। तत्तदसाधारणशब्दास्तु यथाकथ-ञ्चित्कीर्त्यमाना अप्युत्तमा एव। अत एव परशिवे शिवादिशब्दा मुख्या इत्युक्तं **सूतसंहितायाम्**—

**नामानि सर्वाणि तु कल्पितानि स्वमायया नित्यसुखात्मरूपे।**
**तथापि मुख्यास्तु शिवादिशब्दा भवन्ति संकल्पनया शिवस्य॥'**

इति । विष्णुनामभ्यो रुद्रादिनाम्नामुत्तमत्वमपि । तत्रैव यमं प्रति **शतानन्दमुने-**वाक्यम्—

**'शिवरुद्रादिशब्दान्यो विशिष्टान्वेद मानवः ।**
**नारायणादिशब्देभ्यस्तं त्वं परिहर प्रभुम् ॥'**

इति । पराशरपुराणेऽपि—

**देवताभ्यः समस्ताभ्यः स्रष्टा ब्रह्मा परः स्मृतः ।**
**ब्रह्मणश्च महाविष्णुर्वरिष्ठः सर्वपालकः ॥**
**विष्णोरपि परः साक्षाद्रुद्रः संहारकारकः ।'**

इति । सूतगीतायामपि—

**'त्रिषु रुद्रो वरिष्ठः स्यात्ततोमायी परः शिवः ।**
**मायाविशिष्टात्सर्वज्ञात्साम्बः सत्यादिलक्षणः ॥**
**वरिष्ठो मुनयः साक्षाच्छिवो नात्र विचारणा ।**
**शिवाद्वरिष्ठो नैवास्ति मया सत्यमुदीरितम् ॥'**

इति । अत्र मायीतिपदेनेश्वरशिवमहेश्वरसदशिवा अभेदेन गृहीताः ।

**'ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ।**
**एते पञ्च महाप्रेताः पादमूले व्यवस्थिताः ॥'**

इतीश्वराद्भेदेन मध्ये सदाशिवस्य कीर्तनात् ।

**'शिवात्मके महामञ्चे महेशानोपबर्हणे ।**
**अतिरम्यतले तत्र कशिपुश्च सदाशिवः ॥**
**भृतकाश्च चतुष्पादा महेशश्च पतद्ग्रहः ।**
**तत्रास्ते परमेशानी महात्रिपुरसुन्दरी ॥'**

इति **भैरवयामले** कामेश्वरातिरिक्तानां षण्णां कीर्तनात् । भृतका भृत्याः । द्रुहिणहरिरुद्रेश्वरा इति तदर्थात् **बहुरूपाष्टकप्रस्ता**रादिष्वप्येवमेव । साम्बा इत्यस्य त्रिपुरसुन्दर्यभिन्नः कामेश्वरशिवोऽर्थः सत्यादिलक्षण इति । तानि च **कौर्मे**—

**'सत्यं सर्वगतं सूक्ष्मं कूटस्थमचलं ध्रुवम् ।**
**योगिनस्तत्प्रपश्यन्ति महादेव्याः परं पदम् ॥**
**आनन्दगं परं ब्रह्म केवलं निष्कलं परम् ।**
**परात्परतरं तत्त्वं शाश्वतं शिवमव्ययम् ॥**
**अनन्तप्रकृतौ लीनं देव्यास्तत्परमं पदम् ।**
**शुभ्रं निरञ्जनं शुद्धं निर्गुणं दैन्यवर्जितम् ॥**
**आत्मोपलब्धिविषयं देव्यास्तत्परमं पदम् ।'**

इति । एवं स्थितेऽप्येतेषां नामतो रूपतश्चावान्तरभेदे तत्त्वत ऐक्यान्नाम्नामपि साङ्कर्यात्तत्प्रतिपादकपुराणानां पार्थक्याभावाच्च शिवनामैकमित्येवोक्तम् । अनेनैवाशयेन **शक्तिरहस्यादौ**–

**'चतुर्युगसहस्राणि ब्रह्मणो दिनमुच्यते ।**
**पितामहसहस्राणि विष्णोरेका घटी मता ॥**
**विष्णोर्द्वादशलक्षाणि निमेषार्धं महेशितुः ।**
**दशकोट्यो महेशानां श्रीमातुस्त्रुटिरूपका ॥'**

इत्यादौ विष्णुदेव्योर्मध्ये महेश एवोक्तः । ननु विष्णोरुत्कर्षप्रतिपादकानि वचनानि **विष्णुपुराण-विष्णुभागवत-बृहन्नारदीयादिषु** भूयांस्येव दृश्यन्त इति चेत् । सत्यं दृश्यन्ते, परन्तु तानि परत्वेन सह तात्त्विकैक्याभिप्रायेणेत्यविरोधः । तदप्युक्तं **पराशरोपपुराणे**–

**'वैणवेषु पुराणेषु योऽपकर्षस्तु दृश्यते ।**
**रुद्रस्यासौ हरस्यास्य विभूतेरेव केवलम् ॥'**

इति । तथा **सूतसंहितायाम्**–

**'विष्णुप्रजापतीन्द्राणामुत्कर्षं शङ्करादपि ।**
**प्रवदन्तीव वाक्यानि श्रौतानि प्रतिभान्त्यपि ॥**
**तानि तत्त्वात्मना तेषामुत्कर्षं प्रवदन्ति हि ।**
**विष्णुप्रजापतीन्द्रेभ्यो रुद्रस्योत्कर्षमास्तिकाः ॥**
**वदन्ति यानि वाक्यानि तानि सर्वाणि हे द्विजाः ।**
**प्रवदन्ति स्वरूपेण तथा तत्त्वात्मनापि च ॥**
**नैवं विष्ण्वादिदेवानामिति तत्त्वव्यवस्थितिः ।'**

इति । अत्र रुद्रपदेन साम्बः कामेश्वर उच्यते । विष्ण्वादिदेवानामित्यादिपदेन विष्णुदेव्योर्मध्यपातिनः सर्वेऽपि शिवा उच्यन्ते । तेषां चेयत्तातिरहस्यत्वा-द्गुरुमुखैकवेद्या । न चैवं सति विष्ण्वादेरविनाशित्वबोधकवचनजातिविरोधः । तस्यापि तत्त्वदृष्ट्यैव. **'अहं मनुरभवं सूर्यश्चे'**त्यादिवामदेववचनवदुपपत्तेः । **अस्मदाद्यपेक्षया** चिरतरजीवित्वेन स्वरूपतोप्युपपत्तेश्च । तदुक्तं **मत्स्यपुराणे**– 1

**'शतायुः पुरुषो यस्तु सोऽनन्तः स्वल्पजन्मनः ।**
**जीवतो योऽमृतश्चाग्रे तस्मात्सोऽमर उच्यते ॥**
**अदृष्टजन्मनिधनेष्वेवं विष्ण्वादयो मताः॥'**इति । ॥ ३०२ ॥

एवं कामेश्वरस्याधिक्ये सिद्धे तदभेदादेव तच्छक्तेर्देव्याः पूर्वेभ्य उत्तमत्वं सिद्धमेव । परस्परमपि **'शक्त्या विना शिवे सूक्ष्मे नाम धाम न विद्यत'** इत्यादि-

तन्त्रवचनेषु '**शिवः शक्त्या युक्तो यदि भवति शक्तः प्रभवितु**'मित्यादिना **सौन्दर्यलहर्यां** च कथयितुं युक्तक्त्यैव सर्वानुभवसिद्धया शिवोत्कर्षस्य शक्तिमूलकत्वे सिद्धे '**तद्धेतोरेवास्त्वि**'ति न्यायेनाम्बाया एव सर्वोत्तमत्वं सिद्ध्यतीत्याशयेनाह–

**शिवनामसहस्राच्च देव्या नामैकमुत्तमम् ।**
**देवीनामसहस्राणि कोटिशः सन्ति कुम्भज ॥ ३०३ ॥**

शिवेति । देव्यास्त्रिपुरसुन्दर्याः परशिवाभिन्नाया नामेत्यसमस्तोक्तिर्देव्यानन्त्य-भ्रमनिरासाय । तेन **वातुलशुद्धतन्त्रे**–

**शिवस्य तु परा शक्तिः सहस्रांशसमुद्भवः ।**
**पराशक्तेः सहस्रांशादादिशक्तिसमुद्भवः ॥**
**आदिशक्तिसहस्रांशादिच्छाशक्तिसमुद्भवः।**
**इच्छाशक्तिसहस्रांशाज्ज्ञानशक्तिसमुद्भवः॥**
**ज्ञानशक्तिसहस्रांशात्क्रियाशक्तिसमुद्भवः।'**

इत्यादिनोक्तानां पराशक्त्यादीनां नामग्रहणम् । देव्याश्च सर्वोत्तमत्वं त्रैपुरेषूप-निषत्कदम्बेषु निवेदयन् देवतायै महत्यै इत्येवासकृद्व्यवहाराच्छिवाद्युत्पादकत्व-श्रवणाच्च स्पष्टमेव । कर्मकाण्डेऽपि प्रसङ्गाद्देवतान्तरानुवादप्रसक्तौ सत्यामन्येषां देवानां तत्तदसाधारणसंज्ञयैवानुवादप्रायपाठे '**महत्यै वा एतद्देवतायै रूपं महतीमेव तद्देवतां प्रीणाती**'त्यादिव्यवहाराच्च । **रूद्रयामले**ऽपि–

**'अनेकजन्मपुण्यौघैर्दीक्षितो जायते नरः ।**
**तत्राप्यनेकभाग्येन शिवविष्णुपरायण : ॥**
**तत्राप्यनेकपुण्यौघैः शक्तिभावः प्रजायते ।**
**महोदयेन तत्रापि सुन्दरीभावतां व्रजेत् ॥**
**तत्रापि च तुरीयाख्या भाग्यैरन्तर्गता भवेत् ।**
**नामसङ्कीर्तनं तस्यास्तत्राप्यतिसुदुर्लभम् ॥**
**यत्र जन्मनि सा नित्या प्रसन्ना नामकीर्तनात् ।**
**जीवन्मुक्तिर्भवेत्तत्र कर्तव्यं नावशिष्यते ॥'**

इति । एवं **स्मृति**ष्वपि–

**'ब्रह्मणो हृदयं विष्णुर्विष्णोरपि शिवः स्मृतः ।**
**शिवस्य हृदयं सन्ध्या तेनोपास्या द्विजातिभिः ॥'**

इति **कश्यपादि**वचनैः **कौर्म-पाद्म-स्कान्दा**दिनिखिलपुराणेषु च तत्र तत्र **देवी-कालिका-ब्रह्माण्ड-मार्कण्डेया**दिपुराणेषु बहुशः **शक्तिरहस्य-देवीभागवत**तृतीयस्कन्धादिषु

चैदंपर्येण सर्वत्र **ज्ञानार्णव-कुलार्णवा**दितन्त्रेषु त्वपरिमिततया वर्णितमिति तद्वेदितॄणां स्पष्टमिति नेह प्रतन्यते ॥ ३०३ ॥

**तेषु मुख्यं दशविधं नामसाहस्रमुच्यते ।**
**रहस्यनामसाहस्रमिदं शस्तं दशस्वपि ॥ ३०४ ॥**

तेषु कोटिषु । दशविधम्– 'एते दशस्तवा गङ्गाश्यालका बालरासभा' इत्यभियुक्तैः संगृहीतप्रकारदशकवत् । अत्र गङ्गाद्यक्षरदशकं सहस्रनामदशकस्याद्याक्षररूपम् ।

**मद्वयं भद्वयं चैव ब्रत्रयं व चतुष्टयम् ।**
**अनापलिङ्गकूस्कं च पुराणानि पृथक्पृथक् ॥'**

इति **देवीभागवत**स्थश्लोक इव '**नामैकदेशे नामग्रहण**'मिति न्यायसिद्धम् । चरमो भकारो ह्रस्व एव । दीर्घपाठस्तु बहुवचनप्रयुक्तः । ततश्च–

**'गङ्गा भवानी गायत्री काली लक्ष्मीः सरस्वती ।**
**राजराजेश्वरी बाला श्यामला ललिता दश ॥'**

इति तदर्थः । त्रिपुरसुन्दर्या एव तन्त्रभेदेन सहस्रनामदशकमस्तीत्यप्याहुः । शस्तं प्रशस्तम् ॥ ३०४ ॥

उपसंहरति–

**तस्मात्सङ्कीर्तयेन्नित्यं कलिदोषनिवृत्तये ।**
**मुख्यं श्रीमातृनामेति न जानन्ति विमोहिताः ॥ ३०५ ॥**

तस्मादिति । कलिप्रयुक्तो दोषः स्वस्वधर्मसमनुष्ठानवैकल्यं तस्य निवृत्तयेऽङ्गादिपरिपूर्तये । वैकल्यञ्च च नाङ्गलोप एव अपि तु प्रधानलोपोऽपि । प्रधानविकल्पत्वाविशेषात्, कलिप्रयुक्तदोषत्वाविशेषाच्च । सोऽपि च प्रायेणाधुनिकानां सर्वेषां कर्मठमन्यानामपरिहरणीय एव । देवतोद्देशेन द्रव्यन्त्यागरूपस्य यागस्य मानससङ्कल्पविशेषात्मकत्वेनाग्नय इदं नममेत्यादिस्पष्टतरशब्दाभिलापमात्रेण तस्या जायमानत्वात् । एवं सन्ध्यावन्दनपदवाच्यं प्रधानं '**असावादित्यो ब्रह्मे**'ति मन्त्रार्थानुसन्धानमादित्यावच्छिन्नचैतन्यस्य सवात्मचैतन्येन सहाभेदभावनारूपम् । तच्च शिष्टानां रहस्याभिज्ञानामपि कादाचित्कमेव न सार्वत्रिकमिति प्रधानलोपः सर्वेषामपरिहार्यः । न च तेषामङ्गवैगुण्यनिमित्तकप्रायश्चित्तानुष्ठानेन समाधानम् । अङ्गमात्रलोप एव तेषां विधानात् । प्रधानलोपे तु पुनः करणमेवेति सिद्धान्तात् । इदं तु नामकीर्तनमुभयस्मिन्नपि निमित्ते समाधायकमिति ततोऽप्यस्योत्कर्षः सिद्धः । नन्वेवं सति प्रायश्चित्तशास्त्राणां कर्मकाण्डस्य च वैयर्थ्यमित्याशङ्क्याह–**मुख्येति** । मायामोहितचित्तानामल्पदेवतास्वेव महत्त्वबुद्ध्युदयेन तत्तदुपासने प्रवृत्तिः '**मायोपनेत्रप-**

**रिगूहितनेत्रकस्य लेखो महानिव विभाति यदल्पकोपि'त्यस्माभिः शिवस्तवे** कथनात् । ततश्च तादृशचेतोवृत्त्यानन्त्याद्यस्यैव पुंसो यत्रैव रुचिस्तदुद्देशेनैव तानि शास्त्राणि प्रवृत्तानि । दृश्यते च लोकेऽपि कस्यचित्स्थूले गुरुभूत एवोपाये रुचिः कस्यचिल्लघुभूत एवेति । ततश्च तादृशसमस्तजनानुजिघृक्षया तानि तानि शास्त्राणि भगवत्यैव कृतानीति नानर्थक्यम् । सहस्रनामपाठे प्रणाडिकया रुच्युत्पादकत्वादपि सार्थक्यमिति तु गूढोऽभिसन्धिः । लघूपाये सत्यपि गुरूपाये जनानां प्रवृत्तिस्तु तत्तत्कर्मानुसारिव्यामोहादेवेति भावः ॥ ३०५ ॥

**विष्णुनामपराः केचिच्छिवनामपराः परे ।**
**न कश्चिदपि लोकेषु ललितानामतत्परः ॥ ३०६ ॥**

श्रौतस्मार्तकर्मस्वेव रतानां बहुजन्मभिस्तादृशकर्मजन्यपुण्यपरिपाकेन विष्णुनामसु प्रीतिर्बहूनां सम्भवतीत्याशयेनाह–विष्ण्विति । तादृशविष्णुनामकीर्तनेन कतिपयैर्जन्मभिः शिवनामस्वपि कतिपयेषां प्रीतिः सम्भवतीत्याशयेनाह–शिवनामपरा इति । शिवस्य तु द्वित्रिचतुरादिभूमिकाभेदेन बहुविधत्वात्तत्र सतोऽपि परस्परतारतम्यस्य दुरवगाहत्वाद्बहुभिरपि जन्मभिः प्रयत्नत उत्तरां कक्ष्यामधिरूढा अपि मध्य एवावतिष्ठमाना भासन्ते । शिवकक्ष्येयत्तानिर्णयस्य रहस्यत्वेनाप्रसिद्धत्वात् । अतो बहुतरजन्मभिर्बहुपुण्यसम्भारैश्च लभ्यत्वाद्रहस्यतरेषु देवीनामसु प्रीतिर्दुर्लभतरा पर्यवस्यति । अत एवोक्तं **ब्रह्माण्डपुराणे**–

**'यस्य नो पश्चिमं जन्म यदि वा शङ्करः स्वयम् ।**
**तेनैव लभ्यते विद्या श्रीमत्पञ्चदशाक्षरी ॥'**

इति । अत्र शङ्कराणां क्रमेणाभेदानुसन्धानरूपोपासनया चरमशङ्करतादात्म्यापन्नो यदि वा शङ्कर इत्यनेन कथ्यते । तादृशी च दशा दुर्लभतरैव । या च दुर्लभतरा सा प्रायेणाविद्यमानप्रायेवेत्याशयेनाह–न कश्चिदपीति । लोकेषु मनुष्येषु देवेषु दानवादिषु च ॥ ३०६ ॥

इदानीं गूहितमभिप्रायं स्फोटयति–

**येनान्यदेवतानाम कीर्तितं जन्मकोटिषु ।**
**तस्यैव भवति श्रद्धा श्रीदेवीनामकीर्तने ॥ ३०७ ॥**

येनेति । अन्यासां विष्णुरुद्रेश्वरादीनां देवतानां नाम प्रातिस्विकं जन्मकोटिषु येन कीर्तितं तस्यैव कक्ष्याक्रमेणोत्तरोत्तरदेवतातादात्म्याच्चरमशिवतादात्म्यापन्नस्यैव

विरलतमस्य कस्यचित्पुरुषधौरेयस्य श्रीदेवीनामकीर्तनविषयकश्रद्धाङ्कुरोदयो नान्येषामिति भावः ॥ ३०७ ॥

नन्वीदृशदेवीनामकीर्तनविशिष्टजन्मबाहुल्ये किं प्राप्यमित्याशङ्क्य जन्मान्तरमेवासम्भवित्वेन सदृष्टान्तं निरस्यति–

**चरमे जन्मनि यथा श्रीविद्योपासको भवेत् ।**
**नामसाहस्रपाठश्च तथा चरमजन्मनि ॥ ३०८ ॥**

चरम इति । अस्मिन्नंशे उपमानान्तराभावाद्देवीनाम्नो देवीमन्त्र एवोपमानमित्याशयेन यथा श्रीविद्योपासक इत्युक्तम् । उपासकशब्द उपास्तिपरः । श्रीविद्येति भिन्नपदम् । गुरुदेवतामन्त्रात्मनामैक्यभावनासिद्धिमदभिप्रायेणोपासकपदं तस्या विशेषणम् । तादृश्या एव चरमे जन्मनि लाभात् '**यस्य नो पश्चिमं जन्मे**'त्यादि **ब्रह्माण्डपुराण**वचनात् । अथवा नामसाहस्रस्य पाठो यस्मिन्निति व्यधिकरणबहुव्रीहिणोत्तरपदमेव वा पाठकपरम् । उपासकपाठयोरुपमानोपमेयतावच्छेदकयोर्मन्त्रनाम्नोरप्युपमानोपमेयभावः फलति ॥ ३०८ ॥

**यथैव विरला लोके श्रीविद्याचारवेदिनः ।**
**तथैव विरलो गुह्यनामसाहस्रपाठकः ॥ ३०९ ॥**

श्रीविद्यामन्त्रमात्रलाभो नोपास्तिः । तस्य सुलभोपायेन पुस्तकादिनापि सम्भवात् । अपि तु तद्विषयकबाह्यान्तरभेदभिन्नयावदाचारपरिज्ञानपूर्वकमनुष्ठानम् । तच्च विरलतरम् । अत एवोक्तं **शक्तिरहस्ये– 'कौलिके गुरवोऽनन्ता'** इति । श्रौतस्मार्ताचारविषयकग्रन्थानां बहूनामुपलम्भेन तद्विषयकयावज्ज्ञानवतामपि पुरुषाणां बहूनां लाभादेकेनैव गुरुणा द्वित्रैर्वा शिष्यमनोरथपूर्तिः । एतदाचारास्तु सामस्त्येन न क्वापि ग्रन्थेषूपनिबध्यन्ते । उपनिबन्धे प्रत्युत योगिनीशापाम्नानात् । अत एवोत्तर**चतुःशत्यां 'कर्णात्कर्णोपदेशेन सम्प्राप्तमवनीतल'** इत्युक्तं न तु पुस्तकात्पुस्तकान्तरमिति । तस्माद्गुरुमुखेभ्य एव समस्ताचारज्ञानलाभ इति तदाशयः । एतदाशयेनैव–

**'मधुलुब्धो यथा भृङ्गः पुष्पात्पुष्पान्तरं व्रजेत् ।**
**ज्ञानालुब्धस्तथा शिष्यो गुरोर्गुर्वन्तरं श्रयेत् ॥'**

इत्यभ्यनुज्ञा '**पूर्णाभिषेककर्ता यो गुरुस्तस्यैव पादुके**'ति व्यवस्था च सङ्गच्छते । ततश्च मन्त्रमात्रस्य विरलत्वेऽपि स नात्रोपमानमपि तु यावदाचारवेदनमेव तथा विरलतमत्वादित्याशयेनोक्तमेवार्थं द्रढयति–यथैवेति । विरला विरलतमा इत्यर्थः ॥ ३०९ ॥

**मन्त्रराजजपश्चैव चक्रराजार्चनं तथा ।**
**रहस्यनामपाठश्च नाल्पस्य तपसः फलम् ॥ ३१० ॥**

एवं प्रत्येकं विरलानां त्रयाणामेकत्र मेलनमतीव दुर्लभमिति न्यायसिद्धमेवार्थमाह–मन्त्रेति । अपितु निरवधिकस्येति शेषः । नकारेणैवायं समासो नाल्पस्येति न तु नञ् ॥ ३१० ॥

**अपठन्नामसाहस्रं प्रीणयेद्यो महेश्वरीम् ।**
**स चक्षुषा विना रूपं पश्येदेव विमूढधीः ॥ ३११ ॥**
**रहस्यनामसाहस्रं त्यक्त्वा यः सिद्धिकामुकः ।**
**स भोजनं विना नूनं क्षुन्निवृत्तिमभीप्सति ॥ ३१२ ॥**

एवं देवताप्रीतिकरत्वं सर्वकामपूरकत्वं चास्यान्वयमुखेनोक्त्वा व्यतिरेकमुखेन निदर्शनालङ्काराभ्यां द्रढयति–अपठन्निति द्वाभ्याम् । स्पष्टोऽर्थः ॥ ३११–३१२ ॥

**यो भक्तो ललितादेव्याः स नित्यं कीर्तयेदिदम् ।**
**नान्यथा प्रीयते देवी कल्पकोटिशतैरपि ॥ ३१३ ॥**

भक्ततावच्छेदकमप्येतदेवेत्यन्वयव्यतिरेकाभ्यामाह–य इति । यो नित्यं सङ्कीर्तयेत्स एव भक्तो नान्य इत्यर्थः । 'ये यजमानास्त ऋत्विज' इत्यत्रेव यत्तदोर्वैपरीत्येनान्वयः ॥१३ ॥

**तस्माद्रहस्यनामानि श्रीमातुः प्रयतः पठेत् ।**
**इति ते कथितं स्तोत्रं रहस्यं कुम्भसम्भव ॥ ३१४ ॥**

नामसाहस्रपाठविधिं निगमयंस्तत्फलकथनमुपसंहरति–तस्मादिति । प्रयतः शुचिः ॥ ३१४ ॥

उत्तरत्र सम्प्रदायप्रवर्तनप्रकारं शिक्षयति–

**नाविद्यावेदिने ब्रूयान्नाभक्ताय कदाचन ।**
**यथैव गोप्या श्रीविद्या तथा गोप्यमिदं मुने ॥ ३१५ ॥**

नेति । भक्तायापि विद्यावेदनरहिताय तत्सहितायाप्यभक्ताय न ब्रूयात् । तथा गोप्यं श्रीविद्या यथा तदभाववते न प्रदर्श्यते तथेदं तद्वतेपि न प्रदर्श्यं किमुत तदभाववत इति भावः ॥ ३१५ ॥

**पशुतुल्येषु न ब्रूयाज्जनेषु स्तोत्रमुत्तमम् ।**
**यो ददाति विमूढात्मा श्रीविद्यारहिताय तु ॥ ३१६ ॥**

अत एव निषेधत्यर्धेन–पश्विति । पशवश्च द्विविधाः पूर्वमुक्ताः । निषेधोल्लङ्घने दण्डमाह–य इति । यश्च गृह्णातीति चकारलभ्योऽर्थः ॥ ३१६ ॥

**तस्मै कुप्यन्ति: योगिन्यः सोऽनर्थः सुमहान्स्मृतः ।**
**रहस्यनामसाहस्रं तस्मात् संगोपयेदिदम् ॥ ३१७ ॥**

तस्मै दात्रे विद्यारहिताय ग्रहीत्रे च । **'क्रुधद्रुहेर्ष्यासूयार्थानां यंप्रति कोप'** इति सम्प्रदानसंज्ञा । गोपनीयतामुपसंहरत्यर्धेन–रहस्येति । रहस्येत्यादिविशेष्यं हेतुगर्भम् । तेन परिकराङ्कुरालङ्कारः । तस्मात् अनधिकारिणोर्दातृग्रहीत्रोरनर्थप्रदत्वात् रहस्यत्वाच्च गोपयेदित्यर्थः ॥ ३१७ ॥.

**स्वतन्त्रेण मया नोक्तं तवापि कलशोद्भव ।**
**ललिताप्रेरणादेव मयोक्तं स्तोत्रमुत्तमम् ॥ ३१८ ॥**

ननु यद्विद्यावतेऽपि गोप्यं तन्मह्यं त्वया कथं प्रदर्शितमित्याशङ्कमानमगस्त्यं समाधत्ते हयग्रीवः–स्वतन्त्रेणेति । स्वतन्त्रेण पराप्रेरितेन । कलशीति जातिलक्षणो ङीष् । तत्प्रयोगश्च श्लेषेण देवीपुत्रबोधनाय । तदप्युपास्तिबलेन देवीपुत्रभावपर्यन्तां पदवीमुपारूढे वात्सल्येन ललिताम्बाप्रेरणावश्यंभावध्वननाय । **'कलं शुके कलौ जीर्णे कलो नादेऽतिमञ्जुल'** इति **यादव**बलात्कले शुके नादे वा शेत इति कलशी देवी । सर्वोत्तमत्वाद्वा । **'सर्वोत्तमे चोत्तमाङ्गे कुम्भे च कलशध्वनि'**रिति **रभसः** । ललिताप्रेरणादेव तत्प्रवर्तनाया अनुल्लङ्घनीयत्वात् । अधिकारिविषय एव तत्प्रेरणस्य जायमानत्वाच्च । तेनोपासकाभासायैव न प्रदर्श्यमिति भावः ॥ ३१८ ॥

**कीर्तनीयमिदं भक्त्या कुम्भयोने निरन्तरम् ।**
**तेन तुष्टा महादेवी तवाभीष्टं प्रदास्यति ॥ ३१९ ॥**

त्वं तु नोपासकाभासः अपि तु पूर्णोऽधिकारीति ध्वननाय प्रवर्तयति । त्वयेति शेषः । निरन्तरमभेदानुसन्धानपूर्वकम् । न चात्र नामकीर्तनविधिरसकृच्छ्रूयमाणोऽभ्यांसात्कर्माणि भिन्द्यादेवेत्येकस्यैवैतावन्ति फलानीति वर्णनमयुक्तमिति वाच्यम् । भावनाभेदमात्रेणापि तदुपपत्तेः फलस्यानुपादेयत्वेन तद्विशेषोद्देशेन कर्मण एव पुनःपुनर्विधानेऽप्यन्यपरत्वेन तादृशस्य पुनःश्रवणस्याभ्यासरूपत्वाभावात् । **'अपः प्रणयती'**ति विधेरर्थवादवैचित्र्यार्थं षड्वारं श्रवणेऽपि कर्मभेदानङ्गीकारात् । अनुपादेयगुणसाचिव्येऽप्यसन्निधेरभावेन प्रकरणान्तरस्यापि शङ्कितुमयोगाच्चेति दिक् ॥ ३१९ ॥

## सूत उवाच

**इत्युक्त्वा श्रीहयग्रीवो ध्यात्वा श्रीललिताम्बिकाम् ।**
**आनन्दमग्नहृदयः सद्यः पुलकितोऽभवत् ॥ ३२० ॥**

प्रहृष्टो वचनं प्राहेत्यादिनोपक्रान्तमेकेन श्लोकेनोपसंहरति भगवान्सूतः । आनन्दे स्वात्मानन्दे मग्नं विषयान्तरसञ्चाररराहित्येन तदेकप्रवणं हृदयं चित्तं यस्य सः । पुलका आनन्दजन्यरोमाञ्चा अस्य सञ्जाता इति पुलकितः । तारकादित्वादितच् ॥ ३२० ॥

**इति श्रीब्रह्माण्डपुराणे ललितोपाख्याने हयग्रीवागस्त्यसंवादे ललिता-सहस्रनामस्तोत्रं नाम षट्त्रिंशोऽध्यायः ॥**

*अथ परिभाषायां स्वग्रन्थमुपसंहरति—*

***इति परिभाषामण्डलमुदितं नरसिंहयज्वना विदुषा ।***
***सत्सम्प्रदायगमकं शिवभक्तानन्दनाय शिवम् ॥ ४० ॥***

*मण्डलशब्दश्चत्वारिंशत्संख्यात्मकसमूहपरः । विदुषा विद्याष्टादशकविदा श्रीविद्योपासकेन च । शिवयोर्भक्तानां सत्सम्प्रदायं दुर्लभतरमन्वेषमाणानामानन्दनाय । शिवं मङ्गलरूपमिति सर्वं शिवम् ॥ ४० ॥*

**इति भास्कररायेण कृते सौभाग्यभास्करे ।**
**जाता फलश्रुतिः श्लोकैः क्षमाख्या द्वादशी कला ॥ १२ ॥**

---

### ग्रन्थकृत्प्रशस्तिः

**श्रीविश्वामित्रवंश्यः शिवभजनपरो भारती सोमपीथी**
**काश्यां गम्भीरराजो बुधमणिरभवद्भास्करस्तस्य सूनुः ।**
**मोदच्छायामितायां शरदि शरदृतावाश्विने कालयुक्ते**
**शुक्ले सौम्ये नवम्यामतनुत ललितानामसाहस्रभाष्यम् ॥ १ ॥**
**श्रुतिस्मृतिन्यायपुराणसूत्रकोशागमश्रीगुरुसम्प्रदायात् ।**
**निश्चित्य निर्मथ्य कृतापि टीका शोध्यैव सद्भिर्मयि हार्दवद्भिः ॥ २ ॥**
**प्रमादो मेऽवश्यं भवति मतिमान्द्यादलसतः**
**पदार्थन्यायानामपि दुरवगाहत्वनियमान् ।**
**परं त्वन्तः सन्तः सदयहृदया नाममहिमा-**
**प्यपूर्वस्तस्मान्मे न खलु खलपापोभयभयम् ॥ ३ ॥**

अम्ब त्वत्पदयोः समर्पितमिदं भाष्यं त्वया कारितं
त्वन्नामार्थविकासकं तव मुदे भूयादथ त्वां भजन् ।
यो नैनत्परिशीलयेन्न च पठेद्यः पुस्तकस्यापि वा
संग्राहं न करोति तस्य ललिते माभूद्भवत्यां मतिः ॥ ४ ॥
नामैकं मामनयन्नामसहस्राम्बुधेः परं पारम् ।
जलबिन्दुर्भवजलधेर्येषां ते मे जयन्ति गुरुचरणाः ॥ ५ ॥

॥ इति श्रीमत्पदवाक्यप्रमाणपारावारपारीणधुरीणसर्वतन्त्रस्वतन्त्र-श्रीमद्गम्भीरराय-दीक्षितसूरिसूनुना भारत्युपाख्येन भास्कररायेण भासुरानन्दनाथेति-दीक्षानामशालिना प्रणीतं सौभाग्यभास्कराख्यं ब्रह्माण्डपुराणीय-श्रीललितारहस्यनामसहस्रभाष्यं सम्पूर्णम् ॥

## सम्पूर्णोऽयं ग्रन्थः



## परिशिष्टम्-१

# छलार्णसूत्रव्याख्या[1]

॥ श्रीगणेश्वरललिताभ्यां नमः ॥

श्रीभास्कराख्यरायः कृतवान्नामानि सुन्दरीदेव्याः ।
कचटतपयशाद्यर्णैश्छलार्णवाख्यात्परम्परावगतम् ॥ १ ॥
तन्नामार्याविवृतिं वितनोति बुद्धिराजवरवरेण्यः ।
सद्विद्वदमुख्यैः सन्धेयनामसङ्कीर्त्यै ॥ २ ॥

इह खलु साम्प्रदायिकसामयिकसंशयनिवृत्तये श्रीमज्ज्ञानपरिवृढभास्करराज(य)-कृतरहस्यनामसंख्याकारिकाविवृतिं कर्तुं प्रतिजानीते । तत्र प्रथममुद्धारज्ञानार्थं परिभाषाश्लोकः–

कचटतपयशवर्गैरिह पिण्डान्त्याक्षरैरङ्काः ।
नञभवशून्यं ज्ञेयं तथा स्वरे कथितमिदमिति च ॥

कादि ९, टादि ९, पादि ५, यादि ८ इति सङ्केतः । वररुचिपरिभाषाकृतः सम्प्रदायात् ज्ञेयः । शेषं सर्वं गुरुमुखादवगन्तव्यम् ।

---

1. सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य हस्तलिखितानुभागे ८५३७६ संख्याका एका मातृका छलार्णसूत्रव्याख्येति नाम्ना प्राप्यते । इयं व्याख्या बुद्धिराजवरेण्यनाम्नः कस्यापि लेखकस्य नाम्ना उल्लिखिता दृश्यते । इयं व्याख्या भास्कररायकृतव्याख्यायां सम्भाव्यमानान् सन्देहान् निराकर्तुं विरचिता इति प्रतीयते, किन्तु नाम्नां कतिपयस्थलेषु भेदोऽप्यस्ति येषामुल्लेखोऽधस्ताद् दीयते । पाठकानां सौविध्याय ग्रन्थस्यास्य प्रथमपरिशिष्टे सन्निविष्टा अस्ति ।

| श्लो. सं. | सौभाग्यभास्करे | छलार्णसूत्रव्याख्यायाम् |
|---|---|---|
| ८८ क. | कौलिनी+कुलयोगिनी | कौलिनीकुलयोगिनी |
| १५२ ख. | महावीरेन्द्रवरदा | महावीरा+इन्द्रवरदा |
| १५५ क. | चतुर्वक्त्रमनोहरा | चतुर्वक्त्रा+मनोहरा |
| १८१ क. | इच्छाशक्तिज्ञानशक्ति-क्रियाशक्तिस्वरूपिणी | इच्छाशक्ति+ज्ञानशक्ति+क्रियाशक्ति+स्वरूपिणी |
| २०२ ख. | कामधुक्+कामरूपिणी | कामधुक्कामरूपिणी |
| २०६ क. | ब्रह्म+जननी | ब्रह्मजननी |
| २०६ ख. | प्रचण्डा+आज्ञा | प्रचण्डाज्ञा |
| २०६ ख. | प्रकटाकृतिः | प्रकटा+आकृतिः |
| २११ ख. | काष्ठा+अकान्ता | काष्ठाकान्ता |
| २२७ क. | धरा+धरसुता | धराधरसुता |

**[1]श्रीनाथो जयति गुणीनवचरणस्त्रिंशदर्धाभः ।**

[अस्यार्थः]-श्रीनाथेति । गुरुनाथस्मरणात्मकं सम्प्रदायप्रवृत्तये मङ्गलं कृतवानित्यर्थः । गुणीत्यनेन कादि नव टादिनवेत्यादिसङ्केतेन त्रिपञ्चात्मिकासंख्यानेन त्रिवर्णात्मकं पञ्चवर्णात्मकं च नाम ज्ञेयम् । श्रीमात्रे, श्रीमहाराज्ञ्यै इति सिद्धम् । नवचरणेत्यनेन । नवपादरूपाणि नामानि ज्ञेयानि । श्रीमत्सिंहासनेश्वर्यै इत्यादि पञ्चतन्मात्रसायकेत्यन्तं नव नामानि ज्ञेयानि । त्रिंशदर्धेत्यनेन त्रिंशत्संख्याकानि अर्धश्लोकात्मकानि ज्ञेयानि । तानि च निजारुणेत्यादीन्द्रगोपेत्यन्तानि । भ इत्यनेन गूढगुल्फेति चतुरक्षरं एकं नाम ज्ञेयम् । अनेनार्धश्लोकेन द्विचत्वारिंशन्नामानि भवन्ति फलितम् । तत्र कारिका-'श्रीनाथेत्यर्धपद्ये च द्विचत्वारिंशदाह्वयः' । मूलं तु-

**एकार्धत्रयदेहोभूमदहारीत[2] सप्तपाल्लेशः ॥ १ ॥**

अस्यार्थः-एकार्धेति । एकशब्देन एकं नाम । कूर्मपृष्ठजयिष्णुप्रपदान्वितायै इति । अर्धत्रयशब्देन नखदीधितीत्यादि सिञ्जानमणिमञ्जीरेत्यन्तानि अर्धश्लोकात्मिकानि त्रीणि नामानि ज्ञेयानि । देहो इत्यनेन कचटतपयवर्गसङ्केतेन देकारेण अष्टवर्णात्मकं नाम । होकारेणाष्टवर्णात्मकं नाम । भूमदेति । भूवर्णेन चतुर्वर्णात्मकं नाम । मकारेण पञ्चवर्णात्मकं नाम । दकारेणाष्टवर्णात्मकं नाम । हेति अष्टाक्षरम् । रेति द्व्यक्षरम् । तेति षडक्षरम् । एकं सप्तपादिति । सप्तपादित्यनेन सप्तचरणरूपाणि नामानि ज्ञेयानि । तानि च सुमेरुमध्यशृङ्गस्थेत्यादि सुधासागरमध्यस्थेत्यन्तान्यवधेयानि । लेश इति । त्र्यक्षरमेकम् । पञ्चाक्षरमेकम् । अस्मिन्नुत्तरार्धे त्रिचत्वारिंशन्नामारभ्यं त्रिषष्टिपर्यन्तमेकविंशतिनामानि भवन्तीत्युत्तरार्द्धके उभयदलं मिलित्वा त्रिषष्टिर्नामानि भवन्ति ॥ १ ॥

मूलम् -

**अर्धचतुर्विंशतितनु[3]दाहोद्भवजो गुणो दशपात् ।**

अस्यार्थः-अर्धेति । चतुर्विंशत्यर्द्धश्लोकात्मकानि नामानि । देवर्षिगणेत्यादिशक्तिकूटैकतेत्यन्तानि । तनुदेति । तनुदाहोद्भवजो इत्यादि गुणो इत्यन्तं नव नामानि । ६।१०।८।८।४।४।८।३।५-नवनामानि । दशपादिति । पुनर्दशनामानि चरणात्मकानि । एवं पूर्वार्धसमयाचारेत्यादि तडिल्लेत्यन्तं दश भवन्ति । सम्भूय त्रिचत्वारिंशन्नामानि भवन्ति ।

---

1. मन्त्राद्यो जयतीति पाठान्तरम्-मूलपुस्तके ।
2. रीतुस-मातृकापाठः ।
3. तनुदोद्भव···गुणगणो-मू पु. ।

मूलम्–

**दम्भावहगोमेदाभावे**[1] **हि चतुर्गुणा गुणैर्गङ्गा** ॥ २ ॥

अस्यार्थः–दम्भावहगोमेदाभावे हीति दशसंख्याकानि नामानि । ८।४।४।८।३। ५।८।४।४।८– षट्चक्रेत्यादिभक्तिसौभाग्यदेत्यन्तं भवति । चतुरिति । ४।४।४।४– भक्तिप्रियेत्यादिभयापहेत्यन्तं भवन्तीत्यर्थः । गुणा गुणैर्गङ्गा इति प्रतिवर्णैः ३।५।३।५। ३।३– षट्नामानि भवन्ति । एवं दर्भेत्यादिश्लोकसमाप्तिपर्यन्तं विंशतिः । २०। 'स्युः सम्भूय द्वितीयार्द्धे नामानि खलु विंशतिः '। एवमुभयदले श्लोके त्रिषष्टिसंख्याकानीत्यलम् ॥ २ ॥

मूलम्–

**राजा चतुर्बलेन्द्रो भूत्वा बलिरागमा**[2] **द्विदश** ।

अस्यार्थः–रेति । २ । जेति । ८ । शरच्चन्द्रनिभाननेति । चतुरिति । ४।४।४।४। चत्वारि नामानि । बलेति । ३।३। द्रो । २ । भूत्वा ४।४। बली । ३।३। रागमेति । २।३।५। द्विदशेति । नित्यमुक्तेत्यादिनिरीश्वरेत्यन्तम् । ४।४।४।४।४।४।४।४।४।४।४।४। 'अष्टाविंशतिनामानि अर्द्धश्लोके भवन्ति हि' ।२८।

मूलम्–

**गुणगणागौणां**[3] **गणगो मार्गे मार्गे मृगेण भवेत्** ॥ ३ ॥

अस्यार्थः–३।५।३।५।३।५।३।५।३।५।३।५।३।५।३।५।४।४– अष्टादश नामानि नीरोगेत्यादि संशयघ्नीत्यन्तानि ज्ञेयानि । **सम्भूय** तृतीयश्लोके षट्चत्वारिंशत् नामानि भवन्ति ॥ ३ ॥

मूलम्–

[4]**गणभुविगोमृगशृङ्गे मूलमघाभोगगौरवाभावे** ।

अस्यार्थः–३।५।४।४।३।५।३।५।३।५।३।५।४।४।३।३।२।४।४।४–विंशतिनामानि ज्ञेयम् । 'अहो विंशतिनामानि पूर्वार्द्धेऽत्र भवन्ति हि' ।२०।

मूलम्–

**स्थूणाङ्गमहान्तो** [5]**द्विर्मवदूषिताव चतुर्विभजेष्टौ** ॥ ४ ॥

---

1. वेह–मू. पु. ।
2. मान्–मू. पु. ।
3. गौण्यं–मू. पु. ।
4. गुण–मू. पु. ।
5. द्विर्भवदूषितवाक्चतुर्विभाऽजोष्टौ–मू. पु. ।

अस्यार्थः–स्थूणामिति । स्थूणा इत्यत्र संयुक्ताक्षरैरन्त्यग्रहणात् । थकारो ग्राह्यः । तेन सप्ताक्षरं नाम ज्ञेयम् । दुराचारशमनीति सिद्धम् । ७।५।३।५।८।६।५।५।४।४। ८।६।६।४।४।४।४।४।४।४।८।४।४।४।४।४।४।४।४– एवमेकोनत्रिंशत् । सम्भूय चतुर्थश्लोके एकोनपञ्चाशन्नामानि भवन्ति । तुर्येत्युभयोर्दलयोर्नामसंख्यया । ४९ । 'नवचत्वारि कथितानीति विद्धिरिहैव हि' ।। ४ ।।

मूलम्–

**भुवि हि चतुर्देहा[1]र्द्धचतुष्पराद्धं भवेदविभो ।**

अस्यार्थः–४।४।८।४।४।४।४।८।८।१६।८।८।८।८।१६।४।४।८।४।४–एवं विंशतिनामानि । 'अत्र विंशतिनामानि पूर्वार्द्धे हि भवन्ति च' ।२०।

मूलम्–

**पादत्रयगुणदोद्धिर्गौणार्होद्विर्विभागशरवीरः ।। ५ ।।**

अस्यार्थः–८।८।८।३।५।८।८।८।३।५।८।८।८।४।४।३।५।२।४।२– एवं विंशतिनामानि ।

'अत्र विंशतिनामानि(नी)त्युत्तरार्द्धे भवन्ति हि ।
सम्भूय चत्वारिंशद्धि नामानि दलयोः खलु ।। ५ ।।

मूलम्–

**दिविभारतभूवीताडघमृदुजङ्गमभोवादार्धदिवा ।**

अस्यार्थः–८।४।४।२।६।४।४।६।३।४।४।८।८।३।५।४।४।८।१६।८।४– एवमेकविंशतिनामानि ।२१। 'एकविंशतिनामानि श्लोकार्धे च भवन्ति हि' ।

मूलम्–

**वाच्चतुरङ्घ्रिद्व्यर्धात्फलमूलं तदेव वादबलम् ।। ६ ।।**

अस्यार्थः–वादिति । पञ्चमीविकारानन्तरमित्यर्थः । ४।८।८।८।८।१६।१६।६।२। ३।५।३।६।८।४।४।८।३।३–सम्भूयैकोनविंशति नामानि भवन्ति ज्ञेयम् । एवमुभयदलयोश्चत्वारिंशन्नामानि भवन्ति । 'चत्वारिंशच्च दलयोर्नामानि कथितानि वै' । ४० ।। ६ ।।[2]

मूलम्–

**राजतरेखितलिङ्गैरहरतौद्विर्विभूरतौ रेतः ।**

1. हार्धं चतुष्पदार्थं भवेदविभौ–मू. पु. ।
2. इतः परम् 'षष्ठश्लोकः'–मा.पाठः ।

अस्यार्थः–२।८।६।२।२।६।३।३।२।८।२।६।४।४।४।४।२।६।२।६–सम्भूय विंशतिनामानि । 'अत्र विंशतिनामानि पूर्वार्धे कथितानि हि' ।२०।

मूलम्–

**हालामदभुविरक्तोगुणदम्भोवाजिगीर्णो द्विः ॥ ७ ॥**

अस्यार्थः–८।३।५।८।४।४।२।६।३।५।८।४।४।८।३।५।४।४– सम्भूयोत्तरार्द्धेऽष्टादशनामानि । 'अष्टादशात्र नामानि[नी]त्युत्तरार्द्धे कृतानि वै' । पूर्वोत्तरार्द्धयोरष्टत्रिंशन्नामानि भवन्ति । ३८॥ ७ ॥[1]

मूलम्–

**मृगजोद्वि बालः खे जीवाभं पञ्चपादार्धः ।**

अस्यार्थः–५।३।८।८।८।३।३।२।८।४।४।८।८।८।८।८।१६– सम्भूयार्द्धश्लोके सप्तदशनामानि । आद्यर्द्धे सप्तदशनामानि मन्त्रिभिः । १७ ।

मूलम्–

**गुणभूवरतेजोर्द्धारतिगुणलेशो दहेद्व्रणं दुरितम् ॥ ८ ॥**

अस्यार्थः–३।५।४।४।२।६।८।१६।२।६।३।५।३।५।८।८।३।५।८।२।६– एकविंशतिनामानि । उत्तरार्द्धे सम्भूयोभयदलयोरष्टत्रिंशन्नाम ।

मूलम्–

**द्वे द्वे द्वे द्वित्तमोहदभुविदोहैर्दभवल मम गुहंलमोहैः ।**

अस्यार्थः–८।८।८।८।६।५।५।८।८।४।४।८।८।८।४।४।३।५।५।३।८।३।५।८– एवं चतुर्विंशति नामानि । 'चतुर्विंशतिनामानि पूर्वार्धे सम्भवन्ति हि' ॥ २४ ॥

मूलम्–

**द्व्यर्धं चतुर्भवगमी भुवि जलशोभा भगो लेखे ॥ ९ ॥**

अस्यार्थः–१६।१६।४।४।४।४।४।४।३।५।४।४।८।३।५।४।४।३।३।२– एवं विंशतिनामानि । 'अत्र विंशतिनामानीत्युत्तरार्द्धे भवन्ति च' । २०। सम्भूयोभयदलयोश्चतुश्चत्वारिंशन्नामानि भवन्ति ॥ ९ ॥[2]

मूलम्–

**दिवि[3]रेखे जाते द्वेमचतुर्गीर्णो विभाति नदी ।**

---

1. अस्य स्थाने 'सप्तमश्लोकः' – मा. पाठः ।
2. अस्य स्थाने 'नवमश्लोकः' – मा. पाठः ।
3. कूटैकरुदिते द्वे द्विर्द्विर्गीर्णा–मू. पु. ।

अस्यार्थः—८।४।२।२।८।६।५।५।८।८।८।८।३।५।४।४।६।१०।८—अत्रैकोनविंशति नामानि । 'ऊनविंशतिनामानि अत्राद्यर्थे तु संख्यया' । १९ ।

मूलम्

**चत्वारो रूढफलाः[1] शम्भोर्भालांश लिङ्गरदाः ॥ १० ॥**

अस्यार्थः—२।२।२।२।२।४।२।३।५।४।४।३।५।३।३।२।८—एवं सप्तदशनामानि । 'अस्मिन्नर्धे सप्तदशनामानि कथितानि वै' । १७। सम्भूय षट्त्रिंशन्नामानि ।३६ ।।१०।। [2]

मूलम्—

**गलफलशोभावेगः शम्भोर्वेदे चतु[3]र्होढः ।**

अस्यार्थः—३।३।२।३।५।४।४।३।५।४।४।८।४।४।४।४।८।४— एवमष्टादशनामानि । 'अष्टादशात्र नामानि कथितानि मनोषिभिः' ॥ १८ ॥

मूलम्—

**भूर्द्विस्ताद्रा[4]जाकौ मोदाङ्गणवासतोन[5]तोधर्मः ॥ ११ ॥**

अस्यार्थः – ४।८।८।६।२।८।११।५।८।३।५।४।७।६।१०।६।४।५— इत्यष्टादशनामानि । 'उत्तरार्द्धे त्वष्टादशनामानि कथितानि च' । १८। सम्भूय षट्त्रिंशन्नामानि ।३६।। ११ ।।[6]

मूलम्—

**पञ्चपदी भाविचतुष्पदी[7] विभो देव शंभोर्वाक् ।**

अस्यार्थः – ८।८।८।८।८।४।४।८।८।८।८।४।४।८।४।५।४।४—एवं अष्टादशसंख्याकानीत्यर्थः । 'अष्टैकानि भवन्ति हि' ॥ १८ ॥

मूलम्—

**चतुरङ्घ्रिवशो पञ्चाङ्घ्रिभवे[8]वद्वेकं चतुष्पदं च मम ॥ १२ ॥**

---

1. लं शम्भुर्भोजो बली राजा – मू. पु. ।
2. इतः परम् 'दशमश्लोकः'- मा. पाठः ।
3. र्होमः –मू.पु. ।
4. जैको – मू. पु. ।
5. नतिह्रत – मू. पु. ।
6. इतः परम् 'एकादशश्लोकः'- मा.पाठः ।
7. दी द्विचरणीव – मू. पु. ।
8. तेद्वे–मू. पु. ।

अस्यार्थः–८।८।८।८।४।५।८।८।८।८।८।४।४।४।१२।८।८।८।८।६।५।५– सर्वम् ।२२ ।

'अत्रोत्तरार्द्धेयद्येहि नामानि द्वे च विंशतिः ।
सम्भूय चत्वारिंशच्च नामानि कथितानि वै' ।२२ ।४०।। १२।।[1]

मूलम्–

**होदाराः फलरेखारम्भा विवादे तमोंऽशोस्ति ।**

अस्यार्थः– ८।८।२।२।३।२।२।२।४।४।४।८।६।५।५।६– एवं सर्वं १६ नामानि । 'त्रयोदशेऽत्र पूर्वार्धे नामानि स्युः षडिन्दुकम्' । षोडश ज्ञेयम् ।

मूलम्–

**खेदो देहे भीष्मदेवे वा त्र्यङ्घ्रिलिङ्गफले ॥ १३ ॥**

अस्यार्थः–२।८।८।८।४।५।८।४।४।८।८।८।३।३।२।३– एवं षोडश [नामानि] । 'षोडशात्राभिधानानि उत्तरार्द्धे त्रयोदशे' । सम्भूयोभयदलयोर्द्वात्रिंशन्नामानि भवन्तु । १६ । ३२।। १३।।

मूलम्–

**शम्भोर्भाले मज्जज्जीवाभेदाच्चरे त्र्यङ्घ्रि ।**

अस्यार्थः– ५।४।४।३।५।८।८।४।४।८।६।२।८।८।८– एवं पञ्चदशनामानि । एवं चतुर्दशश्लोके नामान्येकं च पञ्च च ।

मूलम्–

**भव दृढभण्डो मन्दो गौणार्धं भूः शिलाषाढे ॥ १४ ॥**

अस्यार्थः–४।४।८।४।४।३।५।८।३।५।१६।४।५।३।६।४–एवं षोडशनामानि । 'एकत्रिंशत्तु नामानि पूर्वोत्तरदलद्वये' । १६।३१।।१४।।

मूलम्–

**भेदभुवि त्र्यङ्घ्रिभवो गुणगणजार्द्धं विभजेर्द्धम् ।**

अस्यार्थः–४।८।४।४।८।८।८।४।४।३।५।३।५।८।१६।४।४।८।१६– एवं एकोनविंशतिः । एवं पञ्चदशश्लोके एकोनविंशतिसंख्यया ।

मूलम्–

**भर्गो रोगोणैको मूलगुरोर्दण्डमुण्डे शिलाम् ॥ १५ ॥**

अस्यार्थः–४।३।२।३।५।११।५।३।३।२।८।३।५।३।५।३ – एवं षोडशः ।

---

1. इतः परम् 'द्वादशश्लोकः'–मा. पाठः ।

'एवं पञ्चदशश्लोके पञ्चत्रिंशत्तु संख्यया ।
दलद्वये च नामानि कथितानि मनीषिभिः' ॥ १९ । १६ ॥ १५ ॥

मूलम्–

**मन्दिरचिरतां विभवः शैवो मार्गो महार्हतोनुगुणः ।**

अस्यार्थः–५।८।२।६।२।६।४।४।४।५।४।५।३।५।८।८।६।१०।३।५–एवं विंशतिः । 'षोडशेऽस्मिन् पूर्वदले शून्यं द्वे स्युस्ततोभिधाः ।'

मूलम्–

**गुणलीला[1]रिभावश्चतुर्विभेदो भवेदेव ॥ १६ ॥**

अस्यार्थः– ३।५।३।३।२।४।४।४।४।४।४।४।४।८।४।४।८।४ –एवं अष्टादश ।

'षोडशेऽष्टादशैव स्युर्नामानीत्युत्तरदले ।
सम्भूयाष्टत्रिंशतेश्च विज्ञेया नाम कोविदैः' । २०।१८।।१६।।

मूलम्–

**भू(रे ?)गीर्णाबलखेदालं बारं भाविभोर्वदेद्भावम् ।**

अस्यार्थः– ४।३।५।३।३।२।८।३।३।२।४।४।४।४।८।४।४–एवं सप्तदश ।

'एवं सप्तदशश्लोके नामानीति नगेन्दुयुक् ।
अर्धे पूर्वे सुरुचिरे ज्ञेयं मन्त्रविशारदैः ।।'

मूलम्–

**हस्ती द्विर्वद्वैकं वा भजते वातूलमन्दमृगात् ॥ १७ ॥**

अस्यार्थः– ८।६।५।५।४।१२।४।४।८।६।४।६।३।५।८।५।३–एवं सप्तदश । 'सम्भूय चतुस्त्रिंशद्भिः श्लोके सप्तदशेरितम्' ।१७।१७।३४।।१७।।

मूलम्–

**देहगुणोद्भवलेशाद्द्विस्तेरूपं दिवाभूरि ।**

अस्यार्थः– ८।८।३।५।४।४।३।५।८।८।६।२।१– यै इति । साध्वीत्यत्र सामान्य-नपुंसकवत् । साधुने इति ज्ञेयम् । पीलुनेत्यादिवत् । ८।४।४।२- एवं सप्तदश । 'अस्मिन्नष्टादशश्लोके पूर्वार्द्धे सप्तभूमिकैः ।'

मूलम्–

**वारि गणे भावि गुणास्त्रिपदलताभावजववादाः ॥ १८ ॥**

अस्यार्थः–४।२।३।५।४।४।३।५।८।८।८।३।६।४।४।८।४।४।८–एवं एकोन-विंशतिः । 'षटत्रिंशच्चैव नामानि सम्भूयोत्तरपूर्वयोः' ।१७।१९।।१८।।

1. लार्द्रीभावार्ध विभेदा-मू. पु. ।

मूलम्–

**गौः शिवे विरते चतुरङ्घ्रितनुर्द्विश्चतुर्बलं नेतुः ।**

अस्यार्थः–३।५।४।४।२।६।८।८।८।८।६।१०।८।८।४।४।४।४।३।३।१०।६– एवं द्वाविंशतिः । 'एकोनविंशे पूर्वार्धे नामानि द्वे च विंशतिः ।'

मूलम्–

**द्विर्मे[1]मेगगमातारोज चतुर्भावजलमदद्भावैः ॥ १९ ॥**

अस्यार्थः–५।५।५।३।३।५।६।२।८।४।४।४।४।४।४।८।३।५।८।४।४– एवं एकविंशतिः ।

'एकोनविंशेऽर्धदले उत्तरे विंशतिश्च भूः ।
नाम्ना तूभयपक्षे त्रिचत्वारिंशतिसंख्यया ॥' २२।२१॥१९॥

मूलम्–

**गुणभावे गीर्णे द्विश्चतुर्ह[2]दोभू भुजां भवाङ्गमखे ।**

अस्यार्थः–३।५।४।४।३।५।८।८।४।४।४।४।८।८।४।४।८।४।४।३।५।२– एवं द्वाविंशतिः । 'श्लोके विंशति पूर्वार्द्धे द्वाविंशत्संख्यकानि वै ।'

मूलम्–

**वरगुणचतुर्विभाजां खलभ(म)दभावां तरङ्ग[3]शिवभावाः ॥ २० ॥**

अस्यार्थः–४।२।३।५।४।४।४।४।४।४।८।२।३।४(५)।८।४।४।६।२।३।५।४-।४।४–एवं चतुर्विंशतिः ।

'उत्तरार्धे विंशतिमे नामानि स्युश्चतुर्द्वयम् ।
सम्भूय दलयोश्चैव षट्चत्वारिंशत्सु संख्यकम्' ॥२२।२४।४६॥२०॥

मूलम्–

**[4]भोगगिरौ विभज चतुर्गुणदं गोमृदुचतुर्मातांशार्द्धम् ।**

अस्यार्थः– ४।३।३।२।४।४।८।४।४।४।४।३।५।८।३।५।८।४।४।४।४।५।६ । ५।१६ – एवं पञ्चविंशतिः ।

'एकविंशतिपूर्वार्धे नामान्यत्र भवन्ति हि ।
पञ्चविंशतिसंख्यानि कथितानि वराणि च ॥'

---

1. मे गङ्गामाता रजश्चतु–मू. पु. ।
2. हृदां विभुगुणे भावा-मू. पु. ।
3. ङ्गखिल- मू. पु. ।
4. गुरुगीर्णे- मू. पु.

मूलम्—

**द्विर्गुण[1]गणस्तवैतां चतुःखचरतां दहेद्रुचिं रोषात् ॥ २१ ॥**

अस्यार्थः – ८।८।३।५।३।५।६।४।६।८।८।८।८।२।६।२।६।८।८।२।६।२।६–एवं त्रयोविंशतिः ।

'एकविंशत्युत्तरार्धे त्रयोविंशतिसंख्यया ।
नामान्युभयदलयोरष्टचत्वारिसंख्यया ॥' २५।२३।४८॥२१॥

मूलम्—

**चतुरर्धं भवेदेवो वदं विभेदं विभागमार्गेण ।**

अस्यार्थः–४।४।४।४।१६।४।४।८।४।४।८।४।४।८।४।४।३।५।३।५–एवं विंशति ।
'द्वाविंशेऽस्मिन् हि पूर्वार्धे सन्ति नामानि विंशतिः ।'

मूलम्—

**[2]गौणच्चरङ्गमतिः खलु शम्भोर्वादं चरे त्र्यङ्घ्रिः ॥ २२॥**

अस्यार्थः–३।५।६।२।३।५।६।२।३।५।४।४।८।६।२।८।८।८–एवं अष्टादश ।
'एवमष्टत्रिंशतिर्वै नामानीत्युभयत्र च' ।२०।१८।३८॥२२॥

मूलम्—

**खेचरता द्विर्भवदा देहे [3]गैत्रैका भवेद्द् देवी ।**

अस्यार्थः – २।६।२।६।८।८।४।४।८।८।८।३।१३।४।४।८।४–एवं सप्तदश ।
'त्रयोविंशे सप्तदशनामान्यर्धे हि पूर्वके ।'

मूलम्—

**भगणे चतुर्गुणा भूर्भवभालशतेन गोमेदा ॥ २३ ॥**

अस्यार्थः–४।३।५।४।४।४।४।३।५।४।४।४।४।३।५।६।१०।३।५।८–एवं विंशतिः ।

'त्रयोविंशे तूत्तरार्धे विंशतिर्नाम संख्यया ।
उभयोर्दलयोः सप्तत्रिंशत्प्रोक्तमशेषतः ॥' १७।२०।३७॥२३॥

---

1. णगुणितां लिखितां चतुः -मू. पु. ।
2. गौणतरङ्ग -मू.पु. ।
3. चैका-मू. पु. ।

मूलम्–

[1]**गुणगणितुरगेण चतुजहरात चतुर्हलेशंदिः ।**

अस्यार्थः–३।५।३।५।६।२।३।५।४।४।४।४।८।२।६।४।४।४।४।८।३।५।८–एवं त्रयोविंशतिः ।

'चतुर्विंशे पूर्वदले त्रयोविंशतिसंख्यया ।
नामानि कथितानीति मन्त्रशास्त्रविचक्षणैः ॥'

मूलम्–

[2]**त्रिर्मर्दौ द्विर्भवज भवद्गुरुवर्गं तं नवचरणम् ॥ २४ ॥**

अस्यार्थः–३।५।८।८।४।४।८।४।४।३।२।४।३।६।८।८।८।८।८।८।८।८।८–एवं त्रयोविंशतिः ।

'चतुर्विंशेति सुश्लोके त्रयोविंशतिसंख्यया ।
उत्तरार्द्धे तु नामानि षट्चत्वार्यनुक्रमात् ॥' २३।२३।४६।।२४।।

मूलम्–

**शैवं ततोऽनुशिष्टं ज्ञेयं गुहेमं सुपरिपूर्णम् ।**

[अस्यार्थ]ः–शैवमिति । शिवायाः सुन्दर्या **इदं** शैवम् । ततोऽनुशिष्टं तेषां नाम्नां मध्येऽनुशिष्टमुर्वरितम् ।३।८।५। **सुपरिपूर्णं** सम्यक् प्रकारेण परिनाय सर्वतो नामानि पूर्णम् । पूर्णानीत्यर्थः । एवं त्रीणि नामानि ।

'अत्रार्द्धमात्रा सुश्लोके त्रीणि नामानि संख्यया ।
एतैर्युक्तानि सम्भूय सहस्रैः परिपूर्णता ॥'

॥ इति छलार्णसूत्रे पञ्चमखण्डे श्रीललितासहस्रनामभाष्यविवरणं सम्पूर्णम् ॥

॥ श्रीरस्तु ॥



---

1. गुणगणरविं खगेशं चतुर्हरन्तं चतुर्दृढामोदम्- मू. पु. ।
2. गुणहृदि विभज भवादुगुरुवर्गं च नवचरणं गदन्तमिति- मू. पु. ।

परिशिष्टम्-२

# श्रीललितासहस्रनामानुक्रमणी (अकारादिक्रमेण)

| नाम | क्र. सं. | श्लो. सं. | नाम | क्र. सं. | श्लो. सं. |
|---|---|---|---|---|---|
| बन्धमोचनी | ५४६. | १६२ ख. | भक्तिवश्या | १२० | ९३. क. |
| बन्धिन्यादिसमन्विता | ५११. | १५६ क. | भगमालिनी | २७७ | ११६ क. |
| बन्धु(बर्ब)रालका | ५४७. | १६२ ख. | भगवती | २७९. | ११६ क. |
| बन्धूककुसुमप्रख्या | ९६४. | २२८ क. | भगाराध्या | ७१५. | १९० क. |
| बलिप्रिया | ६७७. | १८३ ख. | भण्डपुत्रवधोद्युक्त० | ७४. | ८० क. |
| बहिर्मुखसुदुर्लभा | ८७१. | २१३ ख. | भण्डसैन्यवधोद्युक्त० | ७२. | ७९ ख. |
| बहुरूपा | ८२४. | २०६ क. | भण्डासुरवधोद्युक्त० | ६५. | ७५ ख. |
| बाला | ९६५. | २२८ क. | भण्डासुरेन्द्रनिर्मुक्त० | ७९. | ८२ ख. |
| बिन्दुतर्पणसन्तुष्टा | ९७४. | २२९ ख. | भद्रप्रिया | ११५ | ९२ ख. |
| बिन्दुमण्डलवासिनी | ३८०. | १३४ क. | भद्रमूर्तिः | ११६ | ९२ ख. |
| बुधार्चिता | ८२५ | २०६ क. | भयापहा | १२१ | ९३ क. |
| बृहती | ६७३ | १८३ ख. | भवचक्रप्रवर्तिनी | ८४३ | २०८ ख. |
| बृहत्सेना | ६७९ | १८४ क. | भवदावसुधावृष्टिः | ७४२. | १९४ क. |
| बैन्दवासनी | ९०५ | २१८ ख. | भवनाशिनी | १७५. | ९९ ख. |
| ब्रह्म | ८२२ | २०६ क. | भवरोगघ्नी | ८४२. | २०८ ख. |
| ब्रह्मग्रन्थिविभेदिनी | १००. | ८९ क. | भवानी | ११२. | ९२ क. |
| ब्रह्मरूपा | २६५. | ११४ ख. | भवारण्यकुठारिका | ११४ | ९ क. |
| ब्रह्माणी | ८२१. | २०६ क. | भाग्याब्धिचन्द्रिका | ७४६. | १९५ क. |
| ब्रह्मात्मैक्यस्वरूपिणी | ६७२. | १८३ क. | भानुमण्डलमध्यस्था | २७५. | ११६ क. |
| ब्रह्मानन्दा | ६७६. | १८३ ख. | भालस्था | ५९३. | १७० ख. |
| ब्रह्मोपेन्द्रमहेन्द्रा० | ८३. | ८४ ख. | भावज्ञा | ८४१. | २०८ ख. |
| ब्राह्मणी | ६७४. | १८३ ख. | भावनागम्या | ११३. | ९२ क. |
| ब्राह्मी | ६७५. | १८३ ख. | भावाभावविवर्चिता | ६८०. | १८४ क. |
| भक्तचित्तकेकिघना० | ७४. | १९५ ख. | भाषारूपा | ६७८. | १८४ क. |
| भक्तिनिधिः | ५३७. | १६६ क. | भुवनेश्वरी | २९४. | १२० क. |
| भक्तमानसहंसिका | ३७२. | १३२ ख. | भूमरूपा | ६६६. | १८२ ख. |
| भक्तसौभाग्यदायिनी | ११७. | ९२ ख. | भेदनाशिनी | १७९. | १०० क. |
| भक्तहार्दतमोभेद० | ४०४. | १३९ क. | भैरवी | २७६. | ११६ क. |
| भक्तिगम्या | ११९. | ९३ क. | भोगिनी | २९३. | १२० क. |
| भक्तिप्रिया | ११८. | ९३ क. | मङ्गलाकृतिः | ९३३. | २२३ ख. |
| भक्तिमत्कल्पलतिका | ३५३. | १२९ क. | मज्जासंस्था | ५२४. | १५९ क. |

| नाम | क्र. सं. | श्लो. सं. | नाम | क्र. सं. | श्लो. सं. |
|---|---|---|---|---|---|
| महासना | २२९. | १०७ क. | मूलप्रकृतिः | ३९७. | १३७ ख. |
| महासाम्राज्यशालिनी | ५८२. | १६८ ख. | मूलमन्त्रात्मिका | ८८. | ८७ क. |
| महासिद्धिः | २२४. | १०६ ख. | मूलविग्रहरूपिणी | ८४०. | २०८ क. |
| मही | ७१८. | १९० क | मूलाधाराम्बुजारूढा | ५१४. | १५७ क. |
| महेशी | ९३२. | २२३ ख. | मूलाधारैकनिलया | ९९. | ८९ क. |
| महेश्वरमहाकल्प० | २३२. | १०८ क. | मृगाक्षी | ५६१. | १६५ ख. |
| महेश्वरी | ७५०. | १९६ क. | मृडप्रिया | २११. | १०४ ख. |
| महैश्वर्या | २२०. | १०६ क. | मृडानी | ५६४. | १६५ ख. |
| माणिक्यमुकुटाकार० | ४०. | ६८ ख. | मृणालमृदुदोर्लता | ५७९. | १६८ क. |
| माता | ४५७. | १४६ ख. | मृत्युदारुकुठारिका | ७४९. | १९५ ख. |
| मातृकावर्णरूपिणी | ५७७. | १६७ ख. | मृत्युमथनी | १८१. | १०० ख. |
| माध्वीपानालसा | ५७५. | १६७ ख. | मेदोनिष्ठा | ५०९. | १५६ क. |
| मानवती | ९३१. | २२३ ख. | मेधा | ५३८. | १६१ ख. |
| माया | ७१६. | १९० क. | मेरुनिलया | ७७५. | १९९ ख. |
| मार्ताण्डभैरवाराध्या | ७८५. | २०१ क. | मैत्र्यादिवासनालभ्या | ५७०. | १६६ ख. |
| मालिनी | ४५४. | १४६ ख. | मोहनाशिनी | १६३. | ९८ क. |
| माहेश्वरी | २०८. | १०४ ख. | मोहिनी | ५६२. | १६५ ख. |
| मांसनिष्ठा | ५००. | १५४ क. | यजमानस्वरूपिणी | ८८३. | २१५ ख. |
| मित्ररूपिणी | ५६५. | १६५ ख. | यज्ञकर्त्री | ८८२. | २१५ ख. |
| मिथ्याजगदधिष्ठाना | ७३५. | १९३ क. | यज्ञप्रिया | ८८१. | २१५ ख. |
| मुकुन्दा | ८३८. | २०८ क. | यज्ञरूपा | ७६९. | १९८ ख. |
| मुक्तिदा | ७३६. | १९३ क. | यशस्विनी | ४७४. | १४८ ख. |
| मुक्तिनिलया | ८३९. | २०८ क. | याकिन्यम्बास्वरूपिणी | ५३४. | १६१ क. |
| मुक्तिरूपिणी | ७३७. | १९३ क. | युगन्धरा | ६५७. | १८० ख. |
| मुखचन्द्रकलङ्काभ० | १६. | ५६ ख. | योगदा | ६५४. | १८० ख. |
| मुख्या | ५६३. | १६५ ख. | योगानन्दा | ६५६. | १८० ख. |
| मुग्धा | ८३८. | २१३ क. | योगिनी | ६५३. | १८० ख. |
| मुद्गौदनासक्तचित्ता | ५१९. | १५८ क. | योग्या | ६५५. | १८० ख. |
| मुनिमानसहंसिका | ८१६. | २०५ क. | योनिनिलया | ८९५. | २१७ ख. |
| मूर्ता | ८१३. | २०५ क. | योनिमुद्रा | ९८२. | २३१ क. |
| मूलकूटत्रयकलेवरा | ८९. | ८७ क. | रक्तवर्णा | ४९९. | १५४ क. |

●

परिशिष्टम्-३

# ग्रन्थ-ग्रन्थकाराणां सूची

●

